भावोऽवसानसंज्ञः स्यात्। २८ परः सन्निकर्षः संहिता। (१-४-१०९) वर्णानामतिशयितः सन्निधिः संहितासंज्ञः स्यात्। २९ सुप्तिङन्तं पदम्। (१-४-१४) सुबन्तं तिङन्तं च पदसंज्ञं स्यात्। ३० हलोऽनन्तराः संयोगः।

---

मुच्चारणाभावः, सः अन्त्यवर्णः अवसानसंज्ञक इत्यर्थः फलति, तदभिप्रेत्य व्याचष्टे—**वर्णानामित्यादिना**। यस्मिन्नुच्चारिते सति वर्णान्तराणाम् उच्चारणाभावः स अन्त्यवर्णः अवसानसंज्ञक इत्यध्याहारेण विवरणं योज्यम्। यद्वा वर्णानामुच्चारणाभावः विरामः। भावे घञ्। स च किंचिद्वर्णोच्चारणोत्तरकालिक एव गृह्यते, व्याख्यानात्। अस्मिन् पक्षे किंचिद्वर्णोच्चारणोत्तरं वर्णान्तराणामुच्चारणाभावः अवसानमिति विवरणयोजना। तत्र प्रथमपक्षे खरवसानयोरित्यत्र खरि परतः रेफस्य विसर्गः, अवसाने तु रेफे स्थानिनीति योज्यम्। खरवसानयोरित्येकापि सप्तमी विषयभेदाद्भिद्यते। द्वितीयपक्षे तु अभावस्यापि बुद्धिकृतं परत्वं बोध्यम्। **परः संनिकर्षः**। परः अतिशयितः 'दूरानात्मोत्तमाः पराः' इत्यमरः। सन्निकर्षः सामीप्यम्—अर्धमात्राधिककालव्यवधानाभावः, अर्धमात्राकालव्यवधानस्य अवर्जनीयत्वात्। तदेतदभिप्रेत्याह—**अतिशयित इत्यादिना**। **सुप्तिङन्तं पदम्**। सुप् इति स्वौजसमौडिति सूत्रे सु इत्यारभ्य सुपः पकारेण प्रत्याहारः। न तु सप्तमीबहुवचनस्यैवात्र ग्रहणम्, व्याख्यानात्। सुप् च तिङ् च सुप्तिङौ, तौ अन्ते यस्य तत् सुप्तिङन्तं शब्दरूपमिति शब्दशास्त्रप्रस्तावाल्लभ्यते, अन्तशब्दश्च प्रत्येकं संबध्यते, तदाह—**सुबन्तमित्यादिना**। **हलोऽनन्तराः संयोगः**। अन्तरशब्दोऽत्र व्यवधाने वर्तते। 'अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये' इत्यमरः। व्यवधानं च विजातीयेनैव। अविद्यमानम् अन्तरं व्यवधानं येषामिति विग्रहः। नञोऽस्त्यर्थानामिति विद्यमानपदस्य लोपः। तदाह—**अज्भिरित्यादिना**। तत्र हलौ च हलश्च हल इत्येकशेषः। तेन द्वयोरपि संयोगसंज्ञा लभ्यते। ततश्च शिक्षेत्यत्र 'गुरोश्च हलः' इत्यप्रत्ययः सिध्यति[1]। अत्र च समुदायस्यैव संयोग-

---

**वसानम्**। विरमणं विरामः, भावे घञ्। शब्दानुशासनप्रस्तावादाह—**वर्णानामिति**। संज्ञाप्रदेशाः 'वावसाने' इत्यादयः। अभावस्यापि बुद्धिकृतं पौर्वापर्यमस्त्येव, यथोच्चरितप्रध्वंसिनां नित्यविभूनां वा वर्णानाम्। यद्वा विरम्यतेऽनेनेति विरामः, बाहुलकात्करणे घञ्। यदुच्चारणोत्तरं वर्णान्तरं नोच्चार्यते, सोऽन्त्यवर्णः अवसानसंज्ञ इत्यर्थः। अस्मिंस्तु पक्षे 'खरवसानयोः' इत्येकापि सप्तमी विषयभेदाद्भिद्यते—खरि परे रेफस्य विसर्गः, अवसाने च (परे) रेफे स्थानिनीति। **सुप्तिङन्तं पदम्**। अत्रान्तग्रहणम् 'अन्यत्र संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति' इति ज्ञापनार्थम्।

---

१ 'सिध्येत' क।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

( १-१-७ ) अज्भिरव्यवहिता हलः संयोगसंज्ञाः स्युः। ३१ ह्रस्वं लघु। ( १-४-१० ) ३२ संयोगे गुरु। ( १-४-११ ) संयोगे परे ह्रस्वं गुरुसंज्ञं स्यात्। ३३ दीर्घं च। ( १-४-१२ ) दीर्घं च गुरुसंज्ञं स्यात् ॥

॥ इति संज्ञाप्रकरणम् ॥

---

संज्ञा, महासंज्ञाकरणात्, व्याख्यानाच्च। न तु प्रत्येकम्। तथा सति सुदृषत्प्रासाद इत्यत्र पकारसन्निधौ तकारस्य संयोगत्वापत्तौ संयोगान्तलोपापत्तेः। यत्र तु बहवो हलः श्लिष्टाः, तत्रापि द्वयोर्द्वयोः संयोगसंज्ञा, न तु बहूनामेवेति शब्देन्दुशेखरे स्पष्टम्। **ह्रस्वं लघु।** ह्रस्वं लघुसंज्ञं स्यादित्यर्थस्य स्पष्टत्वान्न व्याख्यातम्। अत एव निर्देशाद् ह्रस्वशब्दो नपुंसकलिङ्गोऽपि। **संयोगे गुरु।** ह्रस्वमित्यनुवर्तते। तदाह—**संयोगे पर इत्यादिना।** **दीर्घं च।** संयोग इति नानुवर्तते। दीर्घमपि गुरुसंज्ञकमित्यर्थः। **इति संज्ञाप्रकरणमिति।** सन्धिकार्योपयोगिप्रथमाध्यायस्थसंज्ञानिरूपणं समाप्तमित्यर्थः।

इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमायां संज्ञाप्रकरणं समाप्तम् ॥

---

तेन 'ईदूदेद् द्विवचनं प्रगृह्यम्' इति न द्विवचनान्तस्य प्रगृह्यत्वम्। अन्यथा कुमार्योरगारं कुमार्यगारमित्यत्र प्रकृतिभावः स्यात्। कथं तर्हि प्रातिपदिकसंज्ञायां कृत्तद्धिताभ्यां तदन्तग्रहणमिति चेत्। अत्राहुः—'कृत्तद्धित–' इति सूत्रे अर्थवद्ग्रहणमनुवर्तते, तत्सामर्थ्यात्तदन्तग्रहणमिति। **हलोऽनन्तराः संयोगः।** लघ्वर्थमेकाक्षरायां संज्ञायां कर्तव्यायां संयोग इति महासंज्ञाकरणमन्वर्थसंज्ञाविधानार्थं संयुज्यन्तेऽस्मिन्समुदाये वर्णा इति। तेनात्र समुदाये वाक्यपरिसमाप्तिः, न तु गुणवृद्ध्यादिसंज्ञावत्प्रत्येकम्। तथा हि सति दृषद्भिर्तीत्यत्र बकारसंनिधौ दकारस्य संयोगत्वात्संयोगान्तलोपः स्यात्, निर्यायादित्यत्र यकारः संयोग इति 'वान्यस्य संयोगादेः' इत्येत्वं स्यात्। सिद्धान्ते तु 'अचो रहाभ्याम्–' इति द्वित्वे सत्यपि तस्यासिद्धत्वादेत्वमत्र न भवति। हल इति जातौ बहुवचनम्, 'जात्याख्यायामेकस्मिन्बहुवचनम्–' इति वचनात्, तेन द्वयोरपि संयोगसंज्ञा भवतीति शिक्षेत्यादौ 'गुरोश्च हलः' इत्यप्रत्ययः सिध्यति। यत्र बहवो हलः संश्लिष्टास्तत्र द्वयोर्बहूनां चाविशेषेण संज्ञेति स्थितमाकरे। यदि तु बहूनामेव स्यात्तर्हि गोमान्करोति इत्यत्र मतुपस्तकारस्य संयोगान्तलोपो न स्यादिति दिक्। हलः किम्, तितउभ्याम्। अत्र 'तनोतेर्डउः सन्वच्च' इति डउप्रत्ययः, सन्वद्भावाद् द्वित्वं, 'सन्यतः' इति इत्वं च, व्यस्तोच्चारणसामर्थ्याद् गुणाभावः। यदि ह्यचोरप्यनन्तरयोः संयोगसंज्ञा स्यात्तर्हि इह 'संयोगान्तस्य–' इत्युकारलोपः स्यात्। अनन्तरा इति किम्, पनसम्। यदीह सकारमकारयोः संयोगसंज्ञा स्यात्तर्हि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# अथ परिभाषाप्रकरणम् । २ ।

**३४ इको गुणवृद्धी । ( १-१-३ )** गुणवृद्धिशब्दाभ्यां यत्र गुणवृद्धी विधीयेते तत्र 'इकः' इति षष्ठ्यन्तं पदमुपतिष्ठते। **३५ अचश्च । (१-२-२८)** ह्रस्वदीर्घप्लुतशब्दैर्यत्राज्विधीयते तत्र 'अचः' इति षष्ठ्यन्तं पदमुपतिष्ठते।

---

**इको गुणवृद्धी ।** इक इति षष्ठ्यन्तशब्दः स्वरूपपरः, नपुंसकलिङ्गः, प्रथमैकवचनान्तः। सोर्लुका लुप्तत्वाद् अत्वसन्तस्येति दीर्घो न। इकस्-शब्द इत्यर्थः। उपतिष्ठत इति शेषः। 'वृद्धिरादैच्' 'अदेङ् गुणः' इत्यतो वृद्धिरिति गुण इति चानुवर्तते। इतिशब्दोऽध्याहार्यः। यत्र विधीयेते तत्रेत्यप्यध्याहार्यम्। गुणो वृद्धिरित्युचार्य यत्र गुणवृद्धी विधीयेते तत्र इक इति षष्ठ्यन्तं पदमुपतिष्ठत इति योजना। तदाह— **गुणवृद्धिशब्दाभ्यामित्यादिना । उपतिष्ठत इति ।** संगतं भवतीत्यर्थः। उपाद्देवपूजासंगतिकरणेत्यात्मनेपदम्। सोऽयं पदोपस्थितिपक्षो भाष्यादौ सिद्धान्तितः। 'सार्वधातुकार्धधातुकयोः', 'मिदेर्गुणः' इत्याद्युदाहरणम्। इक इत्यस्यान्वयप्रकारस्तु तत्र तत्र स्पष्टीभविष्यति। 'यत्र विधीयेते' इत्युक्त्या वृद्धिर्यस्याचामित्याद्यनुवादे इक इति नोपतिष्ठते। अनुवादे परिभाषाणामनुपस्थितेः। 'त्यदादीनामः' इत्यादावपि नेदमुपतिष्ठते, तत्र गुणवृद्धिशब्दयोरश्रवणात्। **अचश्च ।** अच इत्यपि षष्ठ्यन्तशब्दः

---

'स्कोः-' इति सलोपः स्यात्। इति तत्त्वबोधिन्यां संज्ञाप्रकरणम्।

**अथ परिभाषा । इको गुणवृद्धी ।** यत्र साक्षात्स्थानी न निर्दिष्टः 'सार्वधातुकार्धधातुकयोः' 'सिचि वृद्धिः-' इत्यादौ, तत्रैवेयं परिभाषा प्रवर्तते, न तु 'अचो ञ्णिति' इत्यादौ, स्थानिनिर्देशात्। **गुणवृद्धिशब्दाभ्यामिति ।** एतच्च पूर्वसूत्राभ्यां गुणवृद्धिपदे अनुवर्त्य गुणो वृद्धिरिति ये गुणवृद्धी इति योजनया लभ्यते। तेनेह न 'त्यदादीनामः' इमम्, 'दिव औत्' द्यौः। **विधीयेते इति ।** यत्र त्वनुवादो 'वृद्धिर्यस्याचामादिः-' इत्यादौ, तत्रेक इति षष्ठ्यन्तं नोपतिष्ठते। अनुवादे परिभाषाणामनुपस्थितेरिति भावः। 'अनुवादे परिभाषाणाम्' इत्यस्यानूद्यमानविशेषणेष्वित्यर्थः। अनुपस्थितौ लिङ्गं फलं च 'उदीचामातः स्थाने-' इत्यत्र स्फुटीकरिष्यते। **षष्ठ्यन्तमिति ।** सूत्रे षष्ठ्यन्तस्यानुकरणाच्छब्दस्वरूपपरतया नपुंसकत्वात्सोर्लुकि 'अत्वसन्तस्य-' इति दीर्घो नेति भावः। **पदमिति ।** तच्च संभवति सामानाधिकरण्ये इगन्तस्याङ्गस्येत्यादिक्रमेण संबध्यते। 'मिदेर्गुणः' 'मृजेर्वृद्धिः' इत्यादौ तु सामानाधिकरण्यासंभवान् मिदिमृज्योरवयवस्येक इति संबध्यते। **अचश्च । ह्रस्वदीर्घेत्यादि ।** एतच्च 'ऊकालोऽज्झ्रस्वदीर्घप्लुतः' इति सूत्राद् अज्झ्रस्वदीर्घप्लुत इत्यनुवर्त्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

**३६ आद्यन्तौ टकितौ।** ( १-१-४६ ) टित्कितौ यस्योक्तौ तस्य क्रमादाद्यन्तावयवौ स्तः। **३७ मिदचोऽन्त्यात्परः।** ( १-१-४७ ) 'अचः' इति

---

स्वरूपपरः, पूर्वसूत्रे इक इतिवत्। ऊकालोऽजित्यतः 'अच् ह्रस्वदीर्घप्लुतः' इत्यनुवर्तते। 'इति यत्र विधीयते' इत्यध्याहार्यम्। फलितमाह—**ह्रस्वेत्यादिना**। 'दिव उत्' इत्यादौ तु नेदं प्रवर्तते, ह्रस्वादिशब्दानामश्रवणात्। 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इत्याद्युदाहरणम्। श्रीपम्। नेह—सुपाद् ब्राह्मणकुलम्। **आद्यन्तौ टकितौ।** आदिश्च अन्तश्च आद्यन्तौ, टश्च क् च टकौ, टकारादकार उच्चारणार्थः, टकौ इतौ ययोस्तौ टकितौ। द्वन्द्वान्त इच्छब्दः प्रत्येकं संबध्यते। टित्कितौ आद्यन्तावयवौ स्तः। कस्येत्याकाङ्क्षायां यस्य तौ विहितौ तयोरित्यर्थाल्लभ्यते[२]। तदाह—**टित्किताविल्यादिना**। क्रमादिति यथासंख्यसूत्रलभ्यम्। टित् आद्यवयवः, कित् अन्तावयव इत्यर्थः। नन्वेवं सति मिलितयोरेकत्रान्वयाभावात् कथमिह द्वन्द्व इति वाच्यम्, प्रथमतः समुदायरूपेण परस्परं[३] युगलयोरन्वयबोधमादाय द्वन्द्वप्रवृत्तौ सत्यां यथासंख्यसूत्रपर्यालोचनया

---

ह्रस्वो दीर्घः प्लुत इति योऽजिति योजनया लभ्यते। ह्रस्वेत्यादि किम्, 'दिव उत्' द्युभ्याम्, 'अष्टन आ विभक्तौ' अष्टौ। 'अष्टाभ्य औश्' इत्यत्र कृतात्वनिर्देशाज्झापकाज्जश्शसोर्विषये प्रवर्तमानस्य 'अष्टनः—' इत्यात्वस्याच्स्थानिकत्वे सति नैतत्सिद्ध्येदिति दिक्। **षष्ठ्यन्तं पदमिति**। तच्च सति संभवे सामानाधिकरण्येनैव संबध्यते, न वैयधिकरण्येन। तेन 'ह्रस्वो नपुंसके—' इत्यजन्तप्रातिपदिकस्यैव ह्रस्वः। श्रीपम्। नेह—सुवाग् ब्राह्मणकुलम्। 'शमामष्टानां दीर्घः' इत्यत्र तु सामानाधिकरण्यासंभवात् शमादीनामच इति संबध्यते, तेन शाम्यतीत्यादि सिद्धम्। 'वाक्यस्य टेः प्लुतः' इत्यत्र सामानाधिकरण्यसंभवेऽपि टेर्ग्रहणसामर्थ्यात् टेरवयवस्याचः प्लुत. इति व्याख्यायते। अन्यथा 'अलोऽन्त्यस्य' 'अचश्च' इति परिभाषाभ्याम् एहि कृष्णेत्यादिवाक्यान्त्यस्याचः प्लुतसिद्धौ किमनेन टेर्ग्रहणेन। तेन 'आयुष्मानेधीन्द्रवर्म३न्' इत्यादि सिध्यतीति दिक्। **आद्यन्तौ टकितौ**। भविता, 'आर्धधातुकस्येट्'। पाययति, 'शाच्छासाह्वा—' इत्यादिना युक्। पुरस्तादपवादन्यायेन स्थानेयोगत्वस्यायमपवादः। 'प्रत्ययः' 'परश्च' इत्यनेन तु परत्वादयं बाध्यते। तेन 'चरेष्टः', 'गापोष्टक्' इत्यादयः परा एव भवन्ति। **मिदचोऽन्त्यात्परः**। स्थानेयोगत्वस्य 'प्रत्ययः' 'परश्च' इति परत्वस्य चायमपवादः। यशांसि, वनानि, 'नपुंसकस्य झलचः' इति नुम्। रुणद्धि,

---

१ 'अच्' इति नास्ति 'क'। २ 'तस्येत्यर्थाल्लभ्यते' इत्युचितं वक्तुम्। यद्वा 'कयोरित्याकाङ्क्षायां ययोस्तौ विहितौ तयोः' इत्याद्युचितं स्यात्। ३ 'परस्परयुगलयोः' 'क'।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

षष्ठ्यन्तम्। अचां मध्ये योऽन्त्यस्तस्मात्परस्तस्यैवान्तावयवो मित्स्यात्। ३८ षष्ठी स्थानेयोगा। (१-१-४९) अनिर्धारितसम्बन्धविशेषा षष्ठी स्थानेयोगा बोध्या।

---

पुनः प्रत्येकान्वयोपपत्तेः। 'एचोऽयवायावः' इत्यादावप्येवमेव गतिः। लोके त्वेवंजातीयकप्रयोगः असाधुरेवेति भाष्यादिषु स्पष्टम्। अत्रैव यथासंख्यसूत्रोपन्यासो युक्तः। 'आर्धधातुकस्येड् वलादेः' भविता, 'ङ्णोः कुक् टुक् शरि' प्राङ्क्षष्ठः-इत्याद्युदाहरणम्। 'पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान्' इति 'षष्ठी स्थानेयोगा' इत्यस्यानन्तरस्यैवायमपवादः, 'प्रत्ययः, परश्च' इत्यनेन तु परत्वादिदं बाध्यते। तेन 'चरेष्टः' 'गापोष्टक्' इत्यादयः परा एव भवन्ति।

**मिदचोऽन्त्यात्परः**। मकार इत् यस्य स मित् अन्त्यादचः परो भवतीत्यर्थे 'शे मुचादीनाम्' इत्यादाविदं न प्रवर्तेत, तत्रान्त्यस्याचोऽभावात्। अत आह—**अच इति षष्ठ्यन्तमिति**। 'यतश्च निर्धारणम्' इत्यनेनेति शेषः। अच इत्येकत्वमविवक्षितम्। तदाह—**अचां मध्य इत्यादिना**। **अन्तावयव इति**। एतच्च आद्यन्तावित्यतः अन्तग्रहणानुवृत्त्या लभ्यते, आद्यन्तशब्दैकदेशस्यान्तशब्दस्य तन्मात्रे स्वरितत्वप्रतिज्ञाबलेनानुवृत्तिसंभवात्। आदिग्रहणमनुवर्त्य परादित्वाभ्युपगमे तु वारीणीति बहुवचने 'सर्वनामस्थाने चासंबुद्धौ' इति नान्ताङ्गस्य विहितो दीर्घो न सिध्येत्। अभक्तत्वे तु वहंलिह इत्यत्र 'वहाभ्रे लिहः' इति खशि, 'अरुर्द्विषत्' इति मुमि, तस्य 'मोऽनुस्वारः' इति मान्तस्य पदस्य विहितोऽनुस्वारो न स्यात्। वस्तुतस्तु यस्य समुदायस्य मिद्विहितः तस्याचां मध्ये योऽन्त्यस्तस्मात्परः, तस्य समुदायस्य अन्तावयव इति व्याख्येयम्। अत एव 'समुदायभक्तो मित्' इति भाष्यं संगच्छते। समासाश्रयविधौ मूलकारश्च वक्ष्यति—'अङ्गस्य नुंविधानात् तद्भक्तो हि नुम्' इति।

---

'रुधादिभ्यः श्नम्'। ननु पूर्वयोगवदयमपि पुरस्तादपवादन्यायेन स्थानेयोगमात्रस्यापवादोऽस्त्विति चेन्न। बाध्यसामान्यचिन्तामाश्रित्य स्वविषये प्राप्तं सर्वं बाध्यते इतीहाभ्युपगमात्। अन्यथा श्नमो मित्करणं व्यर्थं स्यात्। नच श्रवणार्थ एव मकारः स्यादिति वाच्यम्, 'तृणह इम्' इति निर्देशात्। **अचां मध्य इति**। सूत्रे जात्यभिप्रायेण 'अचः' इत्येकवचनमिति भावः। अचां मध्य इति किम्, मुञ्चति। लुम्पति। 'अन्त्यादचः परो मित्स्यात्' इति प्राचो व्याख्यायां नैतत्सिध्येत्। 'शे मुचादीनाम्' इत्यत्रान्त्यस्याचोऽसंभवेन मित्परिभाषाया अनुपस्थितिप्रसङ्गात्। अन्ये तु अचोऽन्त्यात्परो मित्स्यादिति व्यत्यासेन योजयित्वा प्राचो व्याख्यानमपि कथंचित्समर्थयन्ते। पूर्वसूत्राद् अन्त इत्यनुवर्तते, एकदेशे स्वरितत्वप्रतिज्ञानाद् अतो व्याचष्टे—**अन्तावयव इति**। तेन वारीणीत्यादावङ्गस्य नान्तत्वेन दीर्घः सिद्धः। परादित्वे स न सिध्येत्। अभक्तत्वे

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

**षष्ठी स्थानेयोगा** । स्थानं प्रसङ्ग इति वक्ष्यति । तस्मिन् वाचकतया योगो यस्याः सा स्थानेयोगा, निपातनात् सप्तम्या अलुक् । स्थानेन योगो यस्या इति वा विग्रहः। निपातनादेत्वम् । 'इको यणचि' इत्यादौ षष्ठी स्थानरूपसम्बन्धार्थिकेत्यर्थः । लोके तावदेकशतं षष्ठ्यर्थाः—आर्था यौना मौखाः स्रौवाश्च । शब्दस्य शब्देन त्रय एव संबन्धाः—आनन्तर्यं सामीप्यं प्रसङ्गश्चेति । तत्रान्यतमार्थनिर्धारणार्थमिदं सूत्रमिति भाष्यम् । ततश्च 'इको यणचि' इत्यादौ इक इति षष्ठ्या स्थानमुच्यते । तस्मिन् प्रकृत्यर्थे इक् निरूपकतयाऽन्वेति । अचि परतः इकः प्रसङ्गे यण् स्यादिति । विवरणवाक्ये त्वस्मिन् इक इति षष्ठी निरूपकतायामिति न पुनरुक्तिः शङ्क्या । यथा—देवदत्तस्यावयवः पाणिरिति । 'ऊदुपधाया गोहः' इत्यत्र तु गोह इति षष्ठी न स्थानार्थिका, उपधापदसमभिव्याहारेण अवयवषष्ठीत्वनिर्धारणात्, परिभाषाणां च अनियमे नियमनार्थमेव प्रवृत्तेः । तदेतदाह—**अनिर्धारितेत्यादिना** । अनिर्धारितः सम्बन्धविशेषः यस्या इति विग्रहः। तदेवमुदाहृतप्रकृतभाष्यरीत्या 'इको यणचि' इत्यादौ षष्ठी स्थानरूपसंबन्धविशेषार्थिकेति स्थितम् । मतुप्सूत्रभाष्ये तु अनन्तरादयो न षष्ठ्यर्था इति स्थितम् । एवं सति स्थाने इति सप्तम्यन्तपदेन योगो यस्या इति विग्रहे स्थाने इति सप्तम्यन्तस्यानुकरणम् । षष्ठीश्रुतौ स्थाने इति सप्तम्यन्तं पदमुपतिष्ठत इति फलति । स्थानेन[1] स्थानपदार्थेन योगो यस्या इति तृतीयान्तविग्रहे तु अध्याहृतस्थानपदार्थनिरूपितसंबन्धार्थिकेत्यर्थः । 'अस्तेर्भूर्भवतीति सन्देहः स्थाने अनन्तरे समीपे इति' इत्यादिप्रकृतसूत्रभाष्यस्य तु अस्तेरनन्तरे इत्यध्याहृतानन्तरादिपदार्थनिरूपितसम्बन्धी षष्ठीत्येवार्थः । अनन्तरादीनां षष्ठ्यर्थत्वं तु नास्त्येवेति प्रौढमनोरमायां हलन्त्यमिति सूत्रे स्थितम् । तद्व्याख्याने च शब्दरत्ने शब्देन्दुशेखरे च बहुधा प्रपञ्चितम् । अनिर्धारितेति किम्—'ऊदुपधाया' इत्यत्र गोह इति षष्ठ्याः स्थानार्थकत्वं मा भूत् । सति तु तत्रापि स्थानार्थकत्वे, गोहोऽन्त्यस्य

---

तु वहंलिह इत्यत्र 'वहाभ्रे लिहः' इति खशि, 'अरुर्द्विषत्—' इति मुमि मोऽनुस्वारो न स्यात्, अपदान्तत्वादिति भावः । यत्तु कैश्चिदुक्तम्भक्तत्वे वारीणीति दीर्घो न स्यादिति, तत् 'तदादिग्रहणं स्यादिनुमर्थम्' इति अङ्गसंज्ञासूत्रस्थवार्तिकेनैव दूषितप्रायम् । **षष्ठीस्थानेयोगा** । स्थानेन योगोऽस्या इति विग्रहः, निपातनादेत्वम् । षष्ठ्याः संबन्धमात्रवाचित्वेऽपीह शास्त्रे या षष्ठी सा स्थानेयोगा बोध्या । किमविशेषेण, नेत्याह **अनिर्धारितसंबन्धविशेषेति** । अनिर्धारितेति किम्, 'ऊदुपधाया गोहः', 'शास इदङ्हलोः' इत्यादावुपधासंनिधानेनावयवषष्ठीत्वे निर्णीते गोहः शास इत्यादौ मा भूत्। सति हि तत्रापि स्थानेयोगत्वे गोहिशासिस्थाने धातुमात्रस्योपधायाश्च स्थाने ऊदितौ

---

१ 'स्थानेनार्थेन' क । २ 'इति' इति नास्ति 'क'।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्थानं च प्रसङ्गः। **३६ स्थानेऽन्तरतमः।** (१-१-५०) प्रसङ्गे सति सदृशतम आदेशः स्यात्। 'यत्रानेकविधमान्तर्यं तत्र स्थानत आन्तर्यं बलीयः' (प १४)।

---

उपधामात्रस्य च ऊत् स्यात्। ननु स्थानशब्द आधारवाची लोके प्रसिद्धः, यथा शिवस्थानं कैलासः, विष्णुस्थानं वैकुण्ठ इत्यादौ। एवं च इको यणचीत्यादौ षष्ठ्याः स्थानार्थकत्वे प्रकृत्यर्थस्य तत्र निरूपकत्वेन अभेदेन वा अन्वये सति 'इकोऽधिकरणे यण् स्यात्' इति, 'इगधिकरणको यण् स्यादिति' वा अर्थः स्यात्। तत इको निवृत्तिर्न स्यादित्यत आह—**स्थानं च प्रसङ्ग इति।** क्वचिदाभिचारेष्टौ 'दर्भाणां स्थाने शरैः प्रस्तरितव्यम्'इत्यत्र स्थानशब्दस्य प्रसङ्गे दर्शनादिति भावः। एवं च तत्र यथा शरैर्दर्भा निवर्तन्ते, तद्वत् 'इको यणचि' इत्यादावपि यणादिभिरिगादयो निवर्तन्ते। तत्र च यः प्रसक्तो निवर्तते, स स्थानीति व्यवह्रियते, यो निवर्तयति स आदेश इति।

**स्थानेऽन्तरतमः।** स्थानं प्रसङ्ग इत्युक्तम्। अन्तरशब्दोऽत्र सदृशपर्यायः, अतिशायितोऽन्तरः अन्तरतमः। तदाह—**प्रसङ्गे सतीत्यादिना।** एकस्य स्थानिन अनेकादेशप्रसङ्गे सति यः स्थानार्थगुणप्रमाणतः स्थानिना सदृशतमः, स एवादेशो भव-

---

स्यातामिति दिक्। **स्थानं च प्रसङ्ग इति।** न चास्य प्रसङ्गार्थकत्वे विवदितव्यम्। 'दर्भाणां स्थाने शरैः प्रस्तरितव्यम्' इत्युक्ते दर्भाणां प्रसङ्ग इति प्रतीतेः। एवं च 'इको यणचि' इत्यादाविगुच्चारणप्रसक्तौ यणुच्चारणीय इत्याद्यर्थः संपद्यते। **स्थाने। सदृशतम इति।** अर्थात्प्राप्यमाणानां मध्य एव। अतएव गङ्गोदकमित्यत्र त्रिमात्र ओकारो न। इह स्थाने इत्यनुवर्तमाने पुनः स्थानग्रहणादन्योऽपि वाक्यार्थः संमतः। ताल्वादिरूपे स्थाने योऽन्तरतमस्तत्प्रयुक्तान्तर्यवानिति यावत्। स तु प्राप्यमाणानां मध्ये स्यादिति, तदेतदाह—**यत्रानेकविधमिति।** स्थानार्थगुणप्रमाणतश्चतुर्विधमित्यर्थः। स्थानतो यथा—दध्यत्र। तालुस्थानस्येकारस्य तालुस्थानो यकारः। अर्थतो यथा—वातण्ड्ययुवतिः, वतण्डशब्दात् 'वतण्डाच्च' इति गोत्रापत्ये यञ्। तस्य 'लुक् स्त्रियाम्' इति लुक्। शार्ङ्गरवादित्वान्ङीन्। वतण्डी चासौ युवतिश्चेति विग्रहे 'पोटायुवति-' इत्यादिना समासः, 'पुंवत्कर्मधारय-' इत्यतिदिश्यमानः पुंशब्दो वतण्डापत्यवाचिनो वतण्डीशब्दस्य तदपत्यवाची वातण्ड्यशब्दो भवति,न तु वतण्डादिः। गुणतो यथा—वाग्घरिः। घोषवतो नादवतो महाप्राणस्य तादृश एव घकारः। प्रमाणतो यथा—अमुम् अमू अमून्, 'अदसोऽसेः-' इत्यनेन ह्रस्वस्य ह्रस्वो दीर्घस्य दीर्घ उकारः। तमब्ग्रहणं किम्, वाग्घरिरित्यत्र 'झयो होऽन्यतरस्याम्' इति पूर्वसवर्णे क्रियमाणे महाप्राणत्वसाम्येन द्वितीयो नादवत्त्वसाम्येन तृतीयश्च मा भूत्।

---

१ हेतौ तृतीया। कर्तरि तृतीयायां तु 'निवर्त्यन्ते' इत्युचितं स्यात्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

**४० तस्मिन्निति निर्दिष्टे पूर्वस्य।** ( १-१-६६ ) सप्तमीनिर्देशेन विधीयमानं कार्यं वर्णान्तरेणाऽव्यवहितस्य पूर्वस्य बोध्यम्। **४१ तस्मादित्युत्तरस्य।** ( १-१-६७ ) पञ्चमीनिर्देशेन क्रियमाणं कार्यं वर्णान्तरेणाऽव्यवहितस्य परस्य ज्ञेयम्। **४२ अलोऽन्त्यस्य।** ( १-१-५२ ) षष्ठीनिर्दिष्टस्यान्त्यस्याल आदेशः स्यात्।

---

तीत्यर्थः। अत्र स्थानशब्देन ताल्वादिस्थानं विवक्षितम्। गुणशब्देन प्रयत्नः। प्रमाणशब्देन एकद्विमात्रादिपरिमाणम्। तत्र स्थानतो यथा—दध्यत्र। तालुस्थानकस्य इकारस्य तालुस्थानको यकारः। अर्थतो यथा—'तृज्वत्क्रोष्टुः' इति क्रोष्टुशब्दस्य उकारान्तस्य तृजन्त आदेशो भवन् अर्थसाम्यात् क्रोष्टृशब्द एव तृजन्त आदेशो भवति। गुणतो यथा–वाग्घरिः। अत्र हकारः स्थानी घोषनादसंवारमहाप्राणप्रयत्नवान्। तस्य गकारसवर्णो भवन् चतुर्थो घकारो भवति, तस्य हकारेण स्थानिना घोषनादसंवारमहाप्राणप्रयत्नसाम्यात्। ककारस्तु न भवति, तस्य श्वासाघोषविवाराल्पप्राणप्रयत्नकत्वात्। तथा खकारोऽपि द्वितीयो न भवति, तस्य महाप्राणप्रयत्नसाम्येऽपि श्वासाघोषविवारप्रयत्नभेदात्। तथा तृतीयोऽपि गकारो न भवति, तस्य घोषनादसंवारप्रयत्नसाम्येऽपि अल्पप्राणप्रयत्नभेदात्। अत एव ङकारो न भवति। नन्वत्र हकारस्य खकारो द्वितीयः कुतो न स्यात्, तस्य स्थानिना हकारेण श्वासाघोषविवारप्रयत्नभेदे सत्यपि

---

किंतु नादवान् महाप्राणश्चतुर्थो घ एव यथा स्यादिति। **बलीय इति।** तेन चेता स्तोतेत्यत्र प्रमाणत आन्तर्यवानकारो नेति भावः। **तस्मिन्निति।** सप्तम्यन्तानुकरणमिदम्। निःशब्दो नैरन्तर्यपरः। दिशिरुच्चारणक्रियः। अचि यणित्युक्ते व्यवहितेऽव्यवहिते च सति प्राप्तमव्यवहिते एवेति, पूर्वस्य परस्य च प्राप्तं पूर्वस्यैवेति च नियम्यते। अव्यवहितस्येति तु फलितार्थकथनम्। पूर्वस्यैवेति किम्, दध्युदकम्। अत्रोकारस्य मा भूत्। अव्यवहितस्यैवेति किम्, अग्निचिदत्र सोमसुदत्र। व्यवधानं चात्र वर्णकृतमेव निषिध्यते, न तु कालकृतम्। संहिताधिकाराज्ज्ञापकात्। अन्यथा निर्दिष्टग्रहणादेवासंहितायां यणाद्यप्रसङ्गात्किं तेन संहिताधिकारेणातो व्याचष्टे—**वर्णान्तरेणेति।** एवं च संहिताधिकारबहिर्भूतविधयः कालव्यवायेऽपि संभवन्ति। तेनाग्नाविष्णू इत्यादाववग्रहेऽपि 'आनङ् ऋतो द्वन्द्वे' 'देवताद्वन्द्वे च' इत्यादिना उत्तरपदे परतो विहिता आनङादयो भवन्तीति दिक्। **तस्मादिति।** उत्तरस्येति किम् 'तिङ्ङतिङः' इति निघात उत्तरस्यैव यथा स्यात्, अग्निमीळे। नेह—ईळे अग्निम्। **अव्यवहितस्येति।** एतच्च निर्दिष्टग्रहणानुवृत्त्या लभ्यते। तेन उत्संस्थानम्, उत्संस्तम्भनमित्यादौ 'उदस्था–' इति पूर्वसवर्णो न प्रवर्तते। **अलोऽन्त्यस्य।** स्थानषष्ठीनिर्दिष्टस्य य उच्यते सोऽन्त्यस्यालः स्थाने स्यादित्यर्थः। 'त्यदादीनामः' सः,

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

महाप्राणप्रयत्नसाम्यसत्त्वात्। तथा तृतीयो वा गकारः कुतो न स्यात्, तस्य स्थानिना हकारेण अल्पप्राणप्रयत्नभेदेऽपि घोषनादसंवारप्रयत्नसाम्यसत्त्वात्। अत एव ङकारो वा कुतो न स्यादिति चेन्न, तमब्ग्रहणेन उक्तातिप्रसङ्गनिरासात्। अतिशयितो ह्यन्तरः, अन्तरतमः। अतिशयितं च प्रयत्नतः सादृश्यं हकारेण घकारस्यैव, उभयोरपि घोषनाद-संवारमहाप्राणात्मकप्रयत्नचतुष्टयसाम्येन सादृश्यातिशयसत्त्वात्। खकारस्य महाप्राणप्रयत्न-साम्येऽपि घोषनादसंवारप्रयत्नविरहात्। गङयोः घोषनादसंवारप्रयत्नसाम्येऽपि महाप्राण-प्रयत्नविरहात्। प्रमाणतो यथा—'अदसोऽसेर्दादुदोमः' इति ह्रस्वस्य उकारः, दीर्घस्य ऊकारः।

---

यः। स्थानषष्ठीति किम्, 'आर्धधातुकस्येट्' इति तृच ऋकारात्पूर्वो मा भूत्। इदं च 'षष्ठी स्थाने—' इत्यनुवृत्त्या लभ्यते। अल इति किम्, 'पदस्य' इत्यधिकृत्य विधी-यमानं 'वसुस्रंसु—' इति दत्वं परमानडुद्भ्यामित्यादावन्त्यस्य पदस्य मा भूत्। **ङिच्च। अयमपीति**। 'अवङ् स्फोटायनस्य' गवाग्रम्। 'अनङ् सौ' सखा। **परस्य यदिति**। 'तस्मादित्युत्तरस्यादेः' इति न सूत्रितम्, आदेरित्यंशस्य सर्वादेशबाधक-त्वापत्तेः। सिद्धान्ते तु परत्वात्सर्वादेशत्वं बाधकमित्यनुपदमेव वक्ष्यति। **आदेर्बो-ध्यमिति**। आदेरलो बोध्यमित्यर्थः। अल इति ह्यनुवर्तते। **अनेकाल्**। 'अस्तेर्भूः' बभूव। ननु 'निर्दिश्यमानस्यादेशा भवन्ति' इत्यनेकालादेशस्य सर्वादेशत्वं सिध्यति, तत्किमनेनानेकाल्ग्रहणेन। न च 'अलोऽन्त्यस्य' इत्यन्त्यस्य स्यादिति शङ्क्यम्। 'ङिच्च' इत्यस्य नियमार्थत्वाभ्युपगमात्। उच्यते—अनेकाल्ग्रहणाभावे रामैरित्यादा-वैसादेशः 'आदेः परस्य' इति मकारस्यैव स्थाने स्यान्न तु सर्वस्य स्थाने इति दिक्। शित उदाहरणम् 'इदम इश्' इतः। **इत्यादाविति**। आदिशब्देन 'अतो भिस ऐस्' इत्यादि गृह्यते। **परत्वादिति**। अत एव 'आदेः परस्य' इति पृथक् क्रियत इत्युक्तम्॥ ननु 'अनेकाल्शित्सर्वस्य' इत्यतः प्रागेव 'तस्मादित्युत्तरस्यादेः' इति पठ्यताम्, किमनेन पृथक् सूत्रकरणेन। न चैवं 'तस्मिन्निति निर्दिष्टे—' इत्यतो निर्दिष्ट-ग्रहणं नात्रानुवर्तेतेति वाच्यम्, तस्यापि सूत्रस्य प्राक् पठने बाधकाभावेन निर्दिष्टग्र-हणानुवृत्तिसिद्धेः। मैवम्। ब्राह्मणा अष्टौ इत्यत्र अष्टाभ्यः पूर्वयोरपि जश्शसोरौश्-प्रसङ्गात्, यथाश्रुतसूत्राभ्युपगमे तु 'उत्तरस्य' इत्यंशः प्रवर्तत एवेति नायं दोषः प्रसज्यत इति॥ अत्र केचिन्निष्कर्षमाहुः—'अनेकाल्शित्—' सूत्रात् प्रागेव वर्णला-घवाय 'तस्मादित्युत्तरस्यादेः' इति सूत्रिते परत्वात्सर्वादेशेन आदेरित्यंशवदविशेषादु-त्तरस्येत्यंशस्यापि बाधितत्वाद्वाक्यसंस्कारपक्षे 'ब्राह्मण अस् अष्टन् अस्' इति स्थिते 'अष्टाभ्यः—' इत्यस्य दिग्योगे पञ्चमीत्वाद् व्याप्तिन्यायेन अष्टनोऽङ्गात्पूर्वयोरपि जश्श-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नन्वेवमपि चेता स्तोतेत्यत्र इकारस्य उकारस्य च 'सार्वधातुकार्धधातुकयोः' इति गुणो भवन् प्रमाणत आन्तर्यवानकारः कुतो न स्यादित्यत आह—यत्रेति। तेन इकारस्य एकारः, उकारस्य ओकारश्च गुणो भवति, स्थानसाम्यात्। न त्वकारः, स्थानभेदात्। नच इकारेण एकारस्य उकारेण ओकारस्य च कथं स्थानसाम्यम्, एकारस्य

सोरौश् स्यात्। व्याप्तिन्यायस्तु 'प्राग्रीश्वरान्निपाताः' इति पठितेऽपि प्रत्यासत्तिन्यायेन 'अधिरीश्वरे' इति सूत्रावधिकत्वसिद्धौ 'ईश्वरे तोसुन्कसुनौ' इति सूत्रावधिकत्वनिराकरणाय रेफविशिष्टग्रहणं कुर्वता सूत्रकृतैव ज्ञापितः। ततश्च सर्वादेशेन 'उत्तरस्य' इत्यंशस्याबाधनार्थं निर्दिष्टग्रहणानुवृत्त्यर्थं च 'तस्मिन्निति–' इति सूत्रात्परत्र कृते तु 'आदेः' इत्यस्य सर्वादेशबाधकत्वं स्यात्। तथा च 'अतो भिस ऐस्' इत्याद्यादेश आदेरेव स्यात्, 'अनेकाल्–'सूत्रस्य 'अस्तेर्भूः' इत्यादौ चरितार्थत्वात्। यथान्यासे तु 'उत्तरस्य' इत्यंशः प्रवर्तत एवेत्यष्टाभ्यः परयोरेव जश्शसोरौश् स्यात्, न तु पूर्वयोः। तथा 'तस्मादित्युत्तरस्यादेः' इति न सूत्रितमित्यादिमनोरमाग्रन्थस्याप्ययमेवाशय इति। अन्ये तु यथाश्रुतसूत्रनिराकरणपरतयैव मनोरमां योजयन्ति। तद्यथा—न सूत्रितमित्यस्य 'अनेकाल्शित्–' सूत्रात्प्राङ् न सूत्रितमिति नार्थः। आदेरित्यंशस्य सर्वादेशबाधकत्वापत्तेरित्याद्यग्रिमग्रन्थविरोधात्, किं तु तद्ग्रन्थानुकूल्याय 'स्वं रूपम्–' इति सूत्रात्प्राङ् न सूत्रितमित्यर्थोऽभ्युपेयः। एवं च 'अनेकाल्–' सूत्रात् प्राक् सूत्रिते तु नास्त्येव दोष इति मनोरमाग्रन्थाशयः। एवं स्थिते निर्दिष्टग्रहणानुवृत्तिलाभाय 'तस्मिन्निति निर्दिष्टे–' इति सूत्रं 'तस्मादित्युत्तरस्यादेः परस्य' इत्यस्मात्प्रागेव पठनीयम्। अष्टनोऽङ्गात्पूर्वयोरप्यौश् स्यादित्युक्तदोषस्तु इत्थं परिहरणीयः। 'तस्मादित्युत्तरस्यादेः परस्य' इत्यत्र 'आदेः' इति पृथग्वाक्यम्। तत्र 'उत्तरस्य' इत्यनुवर्तते। सा च स्थानषष्ठी, 'षष्ठी स्थाने' इत्यस्य प्राप्तेः। तत्र चायमर्थः—पञ्चमीनिर्देशेन यत्कार्यं तदुत्तरसंबन्धि, उत्तरस्य स्थाने यद्विधीयते तदादेर्भवतीति। इत्थं वाक्यभेदेन व्याख्यानाश्रयणात् 'अनन्तरस्य' इति न्यायेन 'आदेः' इत्यंश एव सर्वादेशेन बाध्यते, न तूत्तरस्येत्यंशोऽपि, इति नास्त्येव पूर्वोक्तदोषः। वाक्यभेदेन व्याख्यानं तु 'उत्तरस्यादेः' इत्यसमस्तन्यासकरणेन ज्ञाप्यते। अन्यथा 'उत्तरादेरिति न सूत्रितम्' इति वदेत्। किं च 'अष्टाभ्य औश्' इत्यस्य दिग्योगे पञ्चमीत्वेन पूर्वपरसाधारणतया अष्टनोऽङ्गाज्जश्शसोरित्युक्तेऽप्यष्टनोऽङ्गसंज्ञानिमित्तभूतौ यौ जश्शसौ तावेव शीघ्रोपस्थितिकावित्यष्टन्शब्दादुत्तरयोरेव औश् स्यात्, न तु पूर्वयोरिति दिक्। **स्वरितेनाधिकारः।** अत्रेत्थंभूतलक्षणे तृतीया। अधिकारो विनियोगः। कियद्दूरमधिकार इत्यत्र तु व्याख्यानमेव शरणम्। यथा–आ सप्तमाध्यायपरिसमाप्तेरङ्गाधिकारः, न तु प्रागभ्या-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ओकारस्य च कण्ठस्थानाधिक्यादिति वाच्यम् । यावत्स्थानसाम्यस्य सावर्ण्य-प्रयोजकत्वेऽपि आन्तरतम्यपरीक्षायां कथञ्चित् स्थानसाम्यस्यैव प्रयोजकत्वात् । अत्र सूत्रे पूर्वसूत्रात् स्थानेग्रहणमनुवर्तते, एकदेशे स्वरितत्वप्रतिज्ञाबलात् । तृतीयान्तं च विपरिणम्यते । अनुवर्त्यमानश्चायं स्थानशब्दः पूर्वसूत्रे प्रसङ्गपरोऽप्यत्र ताल्वाद्यन्यतम-स्थानपरः, शब्दाधिकाराश्रयणात् । अन्तरतम इत्यपि तेन संबध्यते । ततश्च स्थाने-नान्तरतम इति वाक्यान्तरं संपद्यते । सति संभवे ताल्वादिस्थानत एवान्तरतमो भवतीत्यर्थः । ततश्च यत्रानेकविधमान्तर्यं तत्र स्थानत एवान्तर्यं बलीय इति भवति । **तस्मिन्निति निर्दिष्टे** । इको यणचीत्यत्र अचि इकः यण् स्यादित्यवगतम् । तत्र अचो वर्णान्तराधिकरणत्वं न संभवतीति सतिसप्तम्याश्रयणीया । अचि सति इको यण् स्यादिति । तत्र व्यवहिते अव्यवहिते च इको यण् प्राप्तः । ततश्च समिधमित्यत्र धकारव्यवहिते अकारे सत्यपि मकारादिकारस्य यण् स्यात् । तथा अचि सति पूर्वस्य परस्य वा इको यण् प्राप्तः । ततश्च दध्युदकमित्यत्र इकारे अचि उकारस्य परस्यापि इको यण् स्यात् । तत्र 'अव्यवहित एव अचि भवति न व्यवहिते'[1], 'पूर्वस्यैव भवति न परस्य' इत्येतदर्थमिदमारभ्यते । तस्मिन्निति न तच्छब्दः स्वरूपपरः । तथा सति 'तस्मिन्नणि च युष्माकास्माकौ' इत्यादावेव प्रवर्तेत। न तु 'इको यणचि' इत्यादौ। किन्तु 'इको यणचि 'इत्यादिसूत्रगतस्य अचीत्यादिसप्तम्यन्तपदस्य तस्मिन्नित्यनुकरणम् । इती-त्यनन्तरं गम्येऽर्थे इति शेषः । निरिति नैरन्तर्ये । दिशिरुच्चारणे । एवं च 'इको यणचि' 'रायो हलि' इत्यादिसूत्रेषु अचि हलि इत्येवं सप्तम्यन्तपदगम्येऽर्थे अकारादौ दध्यत्र सुध्युपास्य इत्यादिप्रयोगदशायां निर्दिष्टे अव्यवहितोच्चारिते सति पूर्वस्य कार्यं भवति, न तु व्यवहितोच्चारिते, नापि परस्येति फलितोऽर्थः । व्यवधानं च वर्णान्तर-कृतमेव निषिध्यते, न तु कालकृतम् । 'इको यणचि' इत्यादौ कालकृतव्यवधानस्य संहिताधिकारादेव निरासलाभात्, तत्र कालकृतव्यवधानस्याप्यनेनैव सूत्रेण निरासे संहिताधिकारस्य वैयर्थ्यापातात् । एवं च ये संहिताधिकारबहिर्भूताः 'आनङृतो द्वन्द्वे' 'देवताद्वन्द्वे च' इत्यादय उत्तरपदे परत आनङादिविधयः, ते सर्वे अग्नाविष्णू इति—अग्ना-विष्णू इत्याद्यवग्रहे कालव्यवधानेऽपि भवन्ति । एतत्सर्वमभिप्रेत्य पर्यव-सन्नार्थमाह—**सप्तमीनिर्देशेनेत्यादिना** । इति सूत्राक्षरानुयायी पन्थाः । 'अति-शायने तमप्' इत्यत्र तु नेयं परिभाषा प्रवर्तते, सप्तम्यन्तातिशायनपदार्थस्य शब्दरूप-त्वाभावेनाव्यवहितोच्चारितत्वरूपेणनिर्दिष्टत्वासंभवात्[2]। न चैवमपि 'कर्तृकर्मणोः कृति' इत्य-त्रापि अस्याः परिभाषायाः प्रवृत्तौ कर्तृषष्ठी कर्मणि षष्ठी च 'कृष्णस्य कृतिः', 'जगतः

१ 'न व्यवहिते' इति नास्ति 'क' । २ 'च्चारितत्वनिर्दिष्टत्वाभवात्' 'क' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

४३ ङिच्च। ( १-१-५३ ) अयमप्यन्त्यस्यैव स्यात्। '—सर्वस्य' ( सू ४५ )

---

कर्ता कृष्णः' इत्यत्रैव स्यात्, न तु 'कृतिः कृष्णस्य' 'कर्ता जगतः' इत्यत्र इति वाच्यम्। लक्ष्यानुरोधेन क्वचिदेवंजातीयकेषु अस्याः परिभाषाया अप्रवृत्तिरिति श्नान्न-लोप इति सूत्रे भाष्ये प्रपञ्चितत्वात्। वस्तुतस्तु भाष्यानुसारेण अत्र सूत्रे निर्दिष्टग्रहणं संहिताधिकारसूत्रं च विफलमेवेति 'इको यणचि' इत्यत्र वक्ष्यते। **तस्मादित्युत्तरस्य।** 'द्व्यन्तरुपसर्गेभ्योऽप ईत्' 'उदः स्थास्तम्भोः पूर्वस्य' इत्यादिसूत्रगतपञ्चम्यन्तस्यानु-करणं तस्मादिति। इतिशब्दानन्तरं गम्येऽर्थे इति शेषः। निर्दिष्टे इत्यनुवर्तते। निरिति नैरन्तर्ये। दिशिरुच्चारणे। द्व्यन्तरित्यादिसूत्रेषु पञ्चम्यन्तगम्येऽर्थे द्व्यन्तरा-दिशब्दे निर्दिष्टे अव्यवहितोच्चारिते[1] सत्येव ततः परस्यैव ईत्वं भवति, न तु व्यवहि-तोच्चारिते व्यादिशब्दे, नापि ततः पूर्वस्य[2] भवतीति नियमार्थमिदम्। तदाह—**पञ्च-मीनिर्देशेनेत्यादिना।** उत्तरस्य किम्—'तिङ्ङतिङः' इति निघात उत्तरस्यैव भवति—'अग्निमीळे'। नेह 'ईळे अग्निम्'। अव्यवहिते किम्—उत् प्रस्थानम्। उदः स्थास्तम्भोरिति पूर्वसवर्णो न भवति।

**अलोऽन्त्यस्य।** अलिति प्रत्याहारो वर्णपर्यायः। अल इति षष्ठ्यन्तम्। 'षष्ठी स्थानेयोगा' इत्यतः षष्ठी, स्थाने इत्यनुवर्तते। तच्च षष्ठीति प्रथमान्तं तृती-यान्ततया विपरिणम्यते। निर्दिष्टस्येति शेषः। स्थाने इत्यनन्तरं विधीयमान इति शेषः। स्थाने विधीयमान आदेशः षष्ठीनिर्दिष्टस्य यः अन्त्यः अल् तस्य स्यादित्यर्थः। तदाह—**षष्ठीत्यादिना।** त्यदादीनामः—यः सः। आदेश इति किम्—'आर्धधा-तुकस्येट्' तृचः ऋकारात् पूर्वो मा भूत्। अल इति किम्—पदस्येत्याधिकृत्य विधीयमानं वसुस्रंस्विति दत्वं परमानडुद्भ्यामित्यत्र अन्त्यस्य कृत्स्नस्य पदस्य मा भूत्। **ङिच्च।** ङकार इत् यस्य स ङित्। अलोन्त्यस्येत्यनुवर्तते। तदाह—**अयमपीति।** ङिदपी-त्यर्थः। अवङ् तातङ् अनङ् इत्यादिरादेश उदाहरणम्। नन्वलोऽन्त्यस्येति पूर्वसूत्रे-णैव सिद्धे किमर्थमिदमित्यत आह—**सर्वस्येति।** 'अनेकाल्शित् सर्वस्य' इति वक्ष्यमाणस्य सर्वादेशत्वविधेरयं विधिरपवादः। अपोद्यते बाध्यते अनेनेति अपवादः। बाहुलकः करणे घञ्। 'येन नाप्राप्ते यो विधिरारभ्यते स तस्यापवादः' इत्यपवादलक्ष-णम्। अप्राप्तेति भावे क्तः। येनेति कर्तरि तृतीया। द्वौ नञावावश्यकत्वं बोधयतः। यत्कर्तृकावश्यकप्राप्तौ सत्यां यो विधिरारभ्यते, स आरभ्यमाणविधिः तस्य अवश्यप्रा-प्तस्य अपवादः बाधक इति तदर्थः। अयं च न्यायसिद्धः। अवङादयो हि ङित आदेशाः सर्वे अनेकाल एव। तेषु चानेकाल्विशेषेषु विधीयमानेन ङितामन्त्यादेशत्वेन

---

१ नास्ति 'क'। २ 'पूर्वस्यैव' इति 'क'।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इत्यस्यापवादः। **४४ आदेः परस्य।** ( १-१-५४ ) परस्य यद्विहितं तत्तस्यादेर्बोध्यम्। 'अलोऽन्त्यस्य' ( सू ४२ ) इत्यस्यापवादः। **४५ अनेकाल्शित्**

---

स्वविषये अवश्यं प्राप्तम् अनेकाल्सामान्येन विहितं सर्वादेशत्वं बाध्यते, विशेषविहितत्वान्निरवकाशत्वाच्च। विशेषशास्त्रं हि विशेषेषु झटिति प्रवर्त्तते, विशेषाणां स्वशब्देनोपात्तत्वात्। सामान्यशास्त्रं तु सामान्यमुखेन विशेषेषु प्रवर्तत इति तस्य तेषु मन्दप्रवृत्तिः। अतो विशेषशास्त्रं प्रबलम्। उक्तं च भट्टवार्तिके।

'अवश्यमेव सामान्यं विशेषं प्रति गच्छति।
गतमात्रं च तत्तेन विशेषे स्थाप्यते ध्रुवम्॥' इति।

किं च यदि ङिच्चेति शास्त्रम् अनेकाल्विशेषेषु ङित्सु न प्रवर्तेत, तर्हि तदनर्थकमेव स्यात्। 'अनेकाल्शित्सर्वस्य' इत्यस्य तु ङित्सु अप्रवृत्तावपि नानर्थक्यम्, 'तस्थस्थमिपां तान्तंतामः' 'अस्तेर्भूः' इत्यादिष्वनेकाल्षु अङित्सु तस्य सावकाशत्वात्। अतो विशेषशास्त्रं प्रबलमिति। **आदेः परस्य। परस्येति।** द्व्यन्तरुपसर्गेभ्योऽप ईदित्यादौ तस्मादित्युत्तरस्येति परिभाषया परस्य नियमितं कार्यं यत्, तत् तस्यादेरेव भवति। न त्वलोऽन्त्यस्येति तदन्तस्येत्यर्थः। तदाह—**अलोन्त्यस्येत्यस्यापवाद इति।** तत्र अल इत्यप्यनुवर्तनीयम्। तेन द्वीपमित्यत्र ईत्वं पान्तसमुदायस्य न भवतीति।

**अनेकाल्शित् सर्वस्य।** न एकः अनेकः, अनेकः अल् यस्य सः अनेकाल्, शकार इत् यस्य स शित्, अनेकाल्च शित् चेति समाहारद्वन्द्वः। **स्पष्टमिति।** अनुवर्तनीयपदान्तराभावादिति भावः। 'अस्तेर्भूः' इत्याद्युदाहरणम्। ननु अस्धातोर्भूर्भवतीत्युक्ते कृत्स्नस्यैवादेशः प्राप्त इति किमर्थमिदं सूत्रमारभ्यत इत्यत आह—**अलोऽन्त्यसूत्रापवाद इति।** अलोन्त्येति सूत्रैकदेशानुकरणम्। अनुकरणत्वादेव नापशब्दः, अधिरीश्वर इति सूत्रैकदेशस्य प्राग्रीश्वरान्निपाता इति ग्रहणलिङ्गात्। स्यादेतत्—अष्टन्शब्दाज्जसि शसि च 'अष्टन आ विभक्तौ' इति आत्वे अष्टा अस् इति स्थिते, 'अष्टाभ्य औश्' इति कृताकाराद् अष्टनः परयोर्जश्शसोर्विधीयमान औशादेशः 'अलोऽन्त्यस्य' इति बाधित्वा 'आदेः परस्य' इत्यादेरकारस्य प्राप्तः, अनेकाल्त्वाच्च सर्वादेशः प्राप्तः। एवम्[1] 'अतो भिस ऐस्' इत्यादावपि। तत्र कतरच्छास्त्रं बाध्यम्, कतरच्च प्रवर्तत इत्यत्र किं विनिगमकमित्यत आह—**अष्टाभ्य औशित्यादाविति।** आदिना 'अतो भिस ऐस्' इत्यादिसंग्रहः। अष्टाभ्य औशित्यादौ आदेः परस्येत्येतदपि परत्वादनेन बाध्यत इत्यन्वयः। 'अस्तेर्भूः' इत्यादौ अनेकाल्शिदित्यनेन यथा अलोऽन्त्यस्येति बाध्यते, तथा 'अष्टाभ्य औश्' इत्यादौ आदेः परस्येत्येतदपि बाध्यत

---

१ 'एवञ्च' इति 'क'।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्वस्य। ( १-१-५५ ) स्पष्टम्। 'अलोन्त्य' सूत्रापवादः। 'अष्टाभ्य औश्' ( सू ३७२ ) इत्यादौ 'आदेः परस्य' ( सू ४४ ) इत्येतदपि परत्वादनेन बाध्यते।
४६ स्वरितेनाधिकारः। ( १-३-११ ) स्वरितत्वयुक्तं शब्दस्वरूपमधिकृतं बोध्यम्। 'परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः' ( प ३९ )। 'असिद्धं

---

इत्यर्थः। ननु 'अस्तेर्भूः' इत्यादौ अलोऽन्त्यस्येति प्राप्ते सत्येवानेकाल्शिदित्यारम्भाद् येन नाप्राप्तिन्यायेनापवादत्वात्तेन तत्रालोऽन्त्यस्येत्यस्य बाधो युज्यते, आदेः परस्येत्यस्य तु अनेकाल्शित्सर्वस्येति नापवादः, 'अस्तेर्भूः' इत्यादावादेः परस्येत्यप्राप्तावपि तत्प्रवृत्तेरित्यत आह—**परत्वादिति**। 'विप्रतिषेधे परं कार्यम्' इति तुल्यबलविरोधे परप्राबल्यस्य वक्ष्यमाणत्वादिति भावः। 'आदेः परस्य' इत्यस्यावकाशः 'द्व्यन्तरुपसर्गेभ्योऽप ईत्' इत्यादिः। 'अनेकाल्शित् सर्वस्य' इत्यस्यावकाशः 'अस्तेर्भूः' 'इदम इश्' इत्यादिः। अतस्तुल्यबलत्वमुभयोः। **स्वरितेनाधिकारः**। अधिकारः व्यापृतिः। यथा लोके अधिकृतो ग्रामेऽसाविति व्यापृत इति गम्यते। शब्दस्य च उत्तरसूत्रेष्वनुवृत्तिरेव व्यापृतिः, स्वरितेन स्वरविशेषेण अधिकारः उत्तरत्रानुवृत्तिरूपव्यापारः प्रत्येतव्यः। यत् पदं शास्त्रकृता स्वरिताख्यस्वरविशेषविशिष्टमुच्चारितं तदुत्तरसूत्रेष्वनुवर्तनीयमिति यावत्। फलितमाह—**स्वरितत्वयुक्तमित्यादिना**। आनुनासिक्यवत् स्वरितोच्चारणमपि प्रतिज्ञागम्यम्। अनुवृत्तावुत्तरावधिस्तु व्याख्यानादेवावगन्तव्यः। यद्यपि निवृत्तिवदनुवृत्तिरपि व्याख्यानादेव भविष्यतीति किं सूत्रेण, तथापि भाष्ये एतत्प्रयोजनं[1] बहुधा प्रपञ्चितम्।

**परनित्येति**। परादीनां मध्ये पूर्वपूर्वापेक्षया उत्तरमुत्तरं शास्त्रं बलवत्तरमित्यर्थः। उत्तरोत्तरमित्यत्र 'आनुपूर्व्ये द्वे वाच्ये' इति द्वित्वम्। 'कर्मधारयवदुत्तरेषु'

---

सविकारेभ्य एवेत्यादि। यद्वा स्वरित इति सप्तम्यन्तम्, स्वरिते दृष्टे अधिकारो निवर्तत इत्यर्थः। कः स्वरितोऽधिकारार्थः, कश्च तन्निवृत्त्यर्थ इत्यत्र तु व्याख्यानमेव शरणम्। नन्वेवं व्याख्यानादेवानुवृत्त्यननुवृत्ती स्तः, किमनेन सूत्रेणेति चेत्, अत्राहुः—अर्थान्तरसंग्रहायेदं सूत्रं कृतम्। तथाहि—अधि आधिकः कारोऽधिकारः, अधिकं कार्यं गौणेपि शास्त्रप्रवृत्तिरित्यर्थः। तथा च गौणमुख्यन्यायो यत्र नेष्यते अपादानाधिकरणादौ, तत्र स्वरितः पाठ्यः। किंच अधिकः कारः कृतिरियं यत्पूर्वः सन् परं बाधते। तथा च 'नुमचिरतृज्वद्भाविभ्यो नुट्—' इत्यादिवक्ष्यमाणपूर्वविप्रतिषेधाः सर्वे संगृहीता भवन्ति। तत्र स्वरितपाठेनैव गतार्थत्वादिति। **परनित्येति**। परात् नित्यं यथा—'तुदादिभ्यः शः' तुदति। 'रुधादिभ्यः श्नम्' रुणद्धि। परमपि लघूपधगुणं बाधित्वा

---

१ 'तत्प्रयोजनम्' इति 'क'।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

बहिरङ्गमन्तरङ्गे ' ( प २१ ) ' अकृतव्यूहाः पाणिनीयाः ' ( प ५७ )। निमित्तं विनाशोन्मुखं दृष्ट्वा तत्प्रयुक्तं कार्यं न कुर्वन्तीत्यर्थः ॥

इति परिभाषाप्रकरणम् ॥

---

इति कर्मधारयवद्भावात् सुपो लुक्। बलवच्छब्दात् ' द्विवचनविभज्योपपदे तरबीयसुनौ ' इति ईयसुन्। ' विन्मतोर्लुक् ' इति मतुपो लुक्। परापेक्षया नित्यान्तरङ्गापवादाः, नित्यापेक्षयापि अन्तरङ्गापवादौ, अन्तरङ्गापेक्षयापि अपवादाः, इत्येवं क्रमेण पूर्वपूर्वापेक्षया उत्तरोत्तरबलवत्त्वमिति फलितोऽर्थः। परं विप्रतिषेधसूत्राद् बलवद्। परान्नित्यं यथा—तुदति, अत्र ' तुदादिभ्यः शः ' इति शप्रत्ययं बाधित्वा परत्वाद् लघूपधगुणः प्राप्तः, स च शप्रत्यये प्रवृत्ते सति न प्रवृत्तिमर्हति। शप्रत्ययस्तु कृते अकृतेऽपि लघूपधगुणे प्रवृत्तिमर्हतीति स नित्यः। कृताकृतप्रसङ्गी यो विधिः, स नित्य इति हि तल्लक्षणम्। अतो नित्यः शप्रत्ययः लघूपधगुणं बाधित्वा प्रथमं प्रवर्तते। ततः 'सार्वधातुकमपित्' इति शस्य ङित्त्वात् 'क्ङिति च' इति निषेधान्न गुणः। अक्लृप्ताभावकस्य नित्यशास्त्रस्याभावकल्पनापेक्षया क्लृप्ताभावकस्यानित्यशास्त्रस्यैव तत्कल्पनं युज्यत इति नित्यस्य बलवत्त्वे बीजम्। परादन्तरङ्गं यथा—उभये देवमनुष्याः। अत्र प्रथमचरमेति परमपि विकल्पं बाधित्वा सर्वादीनीति नित्यैव सर्वनामसंज्ञा भवति, तस्याः विभक्तिनिरपेक्षत्वेन अन्तरङ्गत्वात्। अल्पापेक्षमन्तरङ्गमिति हि तल्लक्षणम्। तस्य बलवत्त्वे बीजमाह—**असिद्धं बहिरङ्गमन्तरङ्गे**। अन्तरङ्गशास्त्रे प्रसक्ते बहिरङ्गशास्त्रम-

---

नित्यत्वात् शश्नमौ। तथा धिनवाव, धिनवाम। परमपि 'लोपश्चास्यान्यतरस्यां म्वोः' इत्युकारलोपं बाधित्वा नित्यत्वाद् 'आडुत्तमस्य—' इत्याट्। परादन्तरङ्गं यथा—उभये देवमनुष्याः। इह 'प्रथमचरम—' इति परमपि विकल्पं बाधित्वा 'सर्वादीनि—' इति सर्वनामसंज्ञा, विभक्तिनिरपेक्षत्वेनान्तरङ्गत्वात्। तथा—स्रवतेः 'णिश्रि—' इति चङि द्वित्वे उपधागुणादन्तरङ्गत्वादुवङ्, असुस्रुवत्। परादपवादो यथा—परमपि 'अनेकाल्—' इति सर्वादेशं बाधित्वा 'ङिच्च' इत्यन्तादेशः। दध्ना दध्ने, 'अस्थिदधि—' इत्यनङ्। नित्यादन्तरङ्गं यथा—ग्रामणिनी कुले। नित्यमपि 'इकोऽचि—' इति नुमं बाधित्वा 'ह्रस्वो नपुंसके—' इति ह्रस्वः। कृते तु नुमि अनजन्तत्वाद् ह्रस्वो न स्यात्। अन्तरङ्गादपवादो यथा—दैत्यारिः, श्रीशः। परमपि सवर्णदीर्घं बाधित्वा अन्तरङ्गत्वादाद् गुणे यणि च प्राप्तेऽपवादत्वात्सवर्णदीर्घः। तथा उन्न्यौ उन्न्यः, सुल्वौ सुल्वः इत्यत्रान्तरङ्गत्वादियङि उवङि च प्राप्तेऽपवादत्वाद् 'एरनेकाचः—' इति 'ओः सुपि' इति च यण्। यद्यपवादोऽन्यत्र चरितार्थस्तर्हि परान्तरङ्गाभ्यां बाध्यत एव। तथाहि—'ङिच्च' इत्येतदनन्यार्थङकारयुक्तेष्वनङादिषु चरितार्थत्वात्तातङि न प्रवर्तते, किंतु परेण अने-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विद्यमानं प्रत्येतव्यमित्यर्थः। इयं तु परिभाषा 'वाह ऊठ्' सूत्रे भाष्ये स्थिता। परादपवादो यथा—दध्ना। 'अस्थिदधि' इत्यनङ्, इह परमप्यनेकालिति सर्वादेशं बाधित्वा 'ङिच्च' इत्यन्तादेशः, तस्य येन नाप्राप्तिन्यायेन तदपवादत्वात्। अपवादस्य बलवत्त्वे बीजं तु अनुपदमेवोक्तम्। नित्यादन्तरङ्गं यथा—ग्रामणिनी कुले। इह नित्यमपि 'इकोऽचि' इति नुमं बाधित्वा 'ह्रस्वो नपुंसके' इति ह्रस्वः। प्रथमतः कृते नुमि अनजन्तत्वाद् ह्रस्वो न स्यात्। अन्तरङ्गादपवादो यथा—दैत्यारिः, श्रीशः। परमपि सवर्णदीर्घं बाधित्वा अन्तरङ्गत्वाद् आद्गुणे यणि च प्राप्ते अपवादत्वात् सवर्णदीर्घः। **अकृतव्यूहाः पाणिनीयाः**। न कृतः अकृतः, अकृतः व्यूहः प्रकृतिप्रत्ययविवेचनं यैस्ते[1] अकृतव्यूहाः पाणिनिशिष्या इत्यक्षरार्थः। तर्हि सर्वस्य शास्त्रस्य वैयर्थ्यमित्यतोऽध्याहृत्य व्याचष्टे—**निमित्तमित्यादिना**। सेदुष इत्याद्युदाहरणम्। तच्च शब्दाधिकारे सेदिवस् शब्दनिरूपणावसरे मूल एव स्पष्टीभविष्यति। इयं परिभाषा निर्मूला निष्फला चेति परिभाषेन्दुशेखरे स्पष्टम्।

इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां
बालमनोरमायां परिभाषाप्रकरणं समाप्तम्॥



कालिशत्—' इत्यनेन बाध्यते—जीवतात्, भवतात्। अयजे इन्द्रम्, ग्रामे इह, सर्वे इत्थम्। अत्र अयजइ इन्द्रम्, ग्रामइ इह, सर्वइ इत्थमिति स्थिते अन्तरङ्गेण गुणेन सवर्णदीर्घो बाध्यते। तस्य समानाश्रये दैत्यारिः, श्रीश इत्यादौ चरितार्थत्वात्। **असिद्धमिति**। तेन पचावेदमित्यादौ 'एत ऐ' इत्यैत्वं न। **अकृतव्यूहा इति**। अकृतकार्या इत्यर्थः। एवं तर्हि सर्वस्य शास्त्रस्य वैयर्थ्यं स्यादत आह—**निमित्तं विनाशोन्मुखं दृष्ट्वेति**। लोकसिद्धार्थकथनमेतत्। यद्वा अक्षरार्थेनाप्येतत्कथनम्। ऊह्यते तर्क्यत इत्यूहः कार्यम्, विशिष्टो य ऊहो व्यूहो विनाशोन्मुखनिमित्तकं कार्यम्, अकृतो व्यूहो यैस्ते अकृतव्यूहा इति। यद्यपि 'कृतमपि शास्त्रं निवर्तयन्ति' इति परिभाषान्तरं पठ्यते फलं च तुल्यम्, तथापि अकृतव्यूहा इत्येव लघु, 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्' इति न्यायादिति भावः। **न कुर्वन्तीति**। यथा 'निषेदुषीम्' इत्यादौ क्वसोरिटमन्तरङ्गत्वात्प्राप्तमपि भाविना संप्रसारणेन वलादित्वं नङ्क्ष्यतीत्यालोच्य न कुर्वन्तीत्यर्थः।

॥ इति तत्त्वबोधिन्यां परिभाषाप्रकरणम्॥

१ 'येषाम्' 'क'।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# अथाच्सन्धिप्रकरणम् । ३ ।

४७ इको यणचि । ( ६-१-७७ ) इकः स्थाने यण् स्यादचि संहितायां विषये । 'सुधी उपास्यः' इति स्थिते । स्थानत आन्तर्यादीकारस्य यकारः । 'सुध्य् उपास्यः' इति जाते[1] । ४८ अनचि च । ( ८-४-४७ ) अचः

---

**इको यणचि** । इक इति षष्ठी । अतः षष्ठी स्थानेयोगेति परिभाषया स्थान इति लभ्यते । स्थानं प्रसङ्ग इत्युक्तम् । वर्णानां वर्णान्तराधिकरणत्वासम्भवाद् अचीति सतिसप्तमी । तस्मिन्निति निर्दिष्टे पूर्वस्येति परिभाषया वर्णान्तराव्यवहितोच्चारितेऽचि सति पूर्वस्येति लभ्यते । एवं च अचि परत इत्यर्थलभ्यम् । संहितायामित्यधिकृतम् । ततश्चार्धमात्राधिककालव्यवधानाभावो लभ्यते । एवं च फलितमाह—**इकः स्थान इत्यादिना** । इदं च सूत्राक्षरानुसारिप्राचीनमतानुसारेण । संहितायामिति सूत्रभाष्ये तु सामीपिकात्मकौपश्लेषिकाधिकरणे अचीति सप्तमीं तस्मिन्नित्यनेनाश्रित्य संहिताधिकारः प्रत्याख्यातः । इत्थं हि तत्र भाष्यम्—'अयं योगः शक्योऽवक्तुम् । कथम् ? अधिकरणं नाम त्रिप्रकारं व्यापकमौपश्लेषिकं वैषयिकमिति । शब्दस्य तु शब्देन कोऽन्योऽभिसंबन्धो भवितुमर्हति, अन्यदत उपश्लेषात् । इको यणचि—अच्युपश्लिष्टस्येति । तत्रान्तरेण संहिताग्रहणं संहितायामेव भविष्यति इति । उप-समीपे श्लेषः-संबन्धः उपश्लेषः, तत्कृतमधिकरणमौपश्लेषिकम्' सामीपिकमिति यावत् । एवं च अच्समीपवर्तिन इक इति फलति । सामीप्यं च कालतो

---

**अथाच्सन्धिः । इको यणचि** । प्रत्याहारग्रहणेषु तद्वाच्यवाच्ये निरूढा लक्षणा । 'यू स्त्र्याख्यौ' 'ल्वादिभ्यः' इति च निर्देशात् । तेन इक्शब्देन षट्षष्टिर्गृह्यन्ते, यण्शब्देन चत्वारः । भाव्यमानस्याणः सवर्णाग्राहकत्वात् । एवं चेह यणि तद्वाच्यवाच्ये लक्षणा तु न शङ्क्यैव, भाव्यमानस्याणः सवर्णवाचकत्वाभावेन यण्वाच्ययकारादिवाच्यानामभावात् । अतो नास्ति यथासंख्यम् । न च लक्ष्यार्थबोधात्पूर्वभाविनं शक्यार्थज्ञानमादाय यथासंख्यमास्त्विति वाच्यम् । एवमपि तृतीयचतुर्थाभ्यामृकारऌकाराभ्यां प्रत्येकं त्रिंशदुपस्थितौ ऌवर्णानां रेफादेशस्य ऋवर्णानां लादेशस्य च प्रसङ्गात् । तस्मादिह 'स्थानेऽन्तरतमः' इति सूत्रेणैवेष्टसिद्धिरित्यभिप्रेत्यानुपदं वक्ष्यति—'स्थानत आन्तर्यात्' इति । **अचीति** । कस्मादचि पर इत्याकाङ्क्षायामर्थादिक इति संबध्यते । **संहितायां विषय इति** । दध्यत्रेत्यादौ कार्यिनिमित्तयोर्यदा अतिशयितसंनिधिर्विवक्ष्यते तदैव यण् भवतीति भावः । **अनचि च** ।

---

१ 'स्थिते' 'क' 'ख' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वर्णतश्च व्यवधानाभावः। एवं च असंहितायामुक्तसामीप्याभावादेव यणभावसिद्धेः संहिताधिकारो न कर्तव्य इति भाष्यार्थः। एवं च तुल्यन्यायात्[1] तस्मिन्निति निर्दिष्टे पूर्वस्येत्यत्राप्यौपश्लेषिकाधिकरणे सप्तमी। ततश्च अचीत्यादिसप्तम्यन्तार्थे अकारादावुच्चारिते सामीप्यसम्बन्धेन विद्यमानस्य पूर्वस्य कार्यं स्यादित्यर्थः फलति। नत्वव्यवहितोच्चारिते इत्यव्यवहितत्वविशेषणमुच्चारिते देयम्, सामीपिकाधिकरणसप्तम्यैव तल्लाभात्। सामीप्यस्य च तत्र कालतो वर्णतश्च व्यवधानाभावात्मकत्वात्। एवं च तत्र नैरन्तर्यार्थं निर्ग्रहणं न कर्तव्यम्। इदं च 'स्नुक्रमोः' इति सूत्रे, 'तत्र च दीयते' इति सूत्रे च कैयटे स्पष्टम्। अधिकरणत्रैविध्यं तु कारकाधिकारे आधारोऽधिकरणमित्यत्र स्पष्टीकरिष्यते।

**सुधी इति**। ध्यै चिन्तायामिति धातोः 'ध्यायतेः सम्प्रसारणं च' इति क्विपि यकारस्य सम्प्रसारणे इकारे पूर्वरूपे 'हलश्चेति' दीर्घे च धीशब्दः। सुष्ठु ध्यायन्तीति सुधियः। सु शोभना धीर्येषामिति वा सुधियः। सुधीभिरुपास्य इति विग्रहः। 'कर्तृकरणे कृता बहुलम्' इति समासः। 'सुपो धातुप्रातिपदिकयोः' इति भिसो लुक्। सुधी उपास्य इति स्थिते ईकारस्य यकार इत्यन्वयः। प्रत्याहारेषु तद्वाच्यवाच्येषु लक्षणा नाज्झलाविति सूत्रे प्रपञ्चिता। तत्स्फोरणाय ईकार उदाहृतः। ननु ईकारस्य वरलाः[2] कुतो न स्युः, यणत्वाविशेषादित्यत आह—**स्थानत आन्तर्यादिति**। तालुस्थानकत्वसाम्यादीकारस्य स्थाने 'स्थानेऽन्तरतमः' इति यकार एव भवति; न तु वरलाः, भिन्नस्थानकत्वादित्यर्थः। अत एव 'यथासंख्यमनुदेशः समानाम्' इति सूत्रे भाष्यम्—'किमिहोदाहरणम्। इको यणचि। दध्यत्र। मध्वत्र। नैतदस्ति। स्थानेऽन्तरतमेनाप्येतत् सिद्धम्' इति। स्थानेऽन्तरतम इति सूत्रभाष्ये तु 'किमिहोदाहरणम्। इको यणचि। दध्यत्र। मध्वत्र। नैतदस्ति। संख्यातानुदेशेनाप्येतत् सिद्धम्' इत्युक्तम्। यथासंख्यसूत्रेणेत्यर्थः। नन्विह यणशब्देन निरनुनासिका यवला रेफश्चेति चत्वारो गृह्यन्ते, यणो भाव्यमानतया तेन सवर्णानां ग्रहणाभावात्। गुणानाम् अभेदकत्वेऽपि यवलाः षट् रेफश्चेति सप्त गृह्यन्ते। इक्शब्देन तु षट्षष्टिर्गृह्यत इति विषमसंख्याकत्वात् कथमिह यथासंख्यसूत्रप्रवृत्तिरिति चेन्न, इक्त्वयणत्वादिना[3] अनुगतीकृतानां समत्वात्। ननु ऋऌवर्णाभ्यां प्रत्येकं त्रिंशदुपस्थितौ ऌवर्णानां रेफादेशस्य ऋवर्णानां लादेशस्य च प्रसङ्ग इति न यथासंख्यसूत्रेण निर्वाह इति चेत्, शृणु—ऋत्वावच्छिन्नस्य रेफो भवति, ऌत्वावच्छिन्नस्य लकारो भवतीति यथासंख्यसूत्राल्लभ्यते। ऋत्व-

१ 'तुल्यन्यायत्वात्' क। २ 'वरला वा' क। ३ 'इत्व-यत्वादिना' इति समुचितः पाठः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

परस्य यरो द्वे वा स्तो न त्वचि । इति धकारस्य द्वित्वम् । ४९ **स्थानिवदादेशोऽनल्विधौ । (१-१-५६)** आदेशः स्थानिवत्स्यात्, न तु स्थान्यलाश्रयविधौ ।

---

जातिश्च न लृवर्णेषु, लृत्वजातिश्च न ऋवर्णेषु । ऋलृवर्णयोः सावर्ण्यविधिबलात्तु ऋत्वम् लृकारे, लृत्वम् ऋकारे च आरोप्यते कार्यार्थम् । एवं च वास्तवम् ऋत्वं लृत्वं च आदायात्र यथासंख्यप्रवृत्तिर्निर्बाधेत्यास्तां तावत् ।

**सुध् य् इति स्थिते इति** । धकारस्य द्वित्वमिति वक्ष्यमाणेनान्वयः । केन सूत्रेणेत्यत आह—**अनचि च** । 'यरोऽनुनासिकेऽनुनासिको वा' इत्यतः 'यरः' इति षष्ठ्यन्तं 'वा' इति चानुवर्तते । 'अचो रहाभ्यां द्वे' इत्यतः 'अचः' इति पञ्चम्यन्तं 'द्वे' इति चानुवर्तते । न अच् अनच्, तस्मिन् अनचीति न पर्युदासः । तथा सति 'नञिवयुक्तमन्यसदृशे तथा ह्यर्थगतिः' इति न्यायेन अज्भिन्ने हलीत्यर्थः स्यात् । तथा सति लाघवाद्धलीत्येव वदेत् । रामात्—इत्याद्यवसानेषु च द्वित्वं न स्यात् । अतः अचि न भवतीत्यसमर्थसमासमाश्रित्य प्रतिषेधपरं वाक्यान्तरम् । तदाह—**अचः परस्येत्यादिना । इति धकारस्येति** । अनेन सूत्रेण धकारस्य द्विरुच्चारणमित्यर्थः । धकारस्य उकारादचः परत्वादच्परकत्वाभावाच्चेति भावः । ननु सुध् य् इत्यत्र ईकारस्थानिकस्य यकारस्य स्थानिवद्भावेनाच्त्वाद् अच्परकत्वात् कथं धकारस्य द्वित्वमिति शङ्कां हृदि निधाय तस्य स्थानिवद्भावप्रापकं सूत्रमाह—**स्थानिवदादेशः** । गुरुस्थानापन्ने गुरुपुत्रादौ स्थानापत्त्या तद्धर्मलाभो[1] लोकतः सिद्धः । कुशादिस्थानापन्नेषु शरादिषु च वैदिकन्यायसिद्धः । इह तु शास्त्रे स्वं रूपं शब्दस्येति वचनात्

---

**यरो द्वे वेति** । 'यरोऽनुनासिके–' इति सूत्राद्यरो वेति चानुवर्तते । 'अचो रहाभ्याम्–' इति सूत्रादचो द्वे इति च, तदाह—**अचः परस्येत्यादि** । एवं चात्र वाग्रहणानुवृत्त्यैवेष्टसिद्धेः 'त्रिप्रभृतिषु शाकटायनस्य' 'सर्वत्र शाकल्यस्य' दीर्घादाचार्याणाम्' इति च सूत्रत्रयं नारम्भणीयमिति भावः । अच इति किम्, तादात्म्यमित्यादौ मस्य द्वित्वं मा भूत् । 'अनचि' इति यदि पर्युदासः स्यात्ततो 'नञिवयुक्तमन्यसदृशे तथा ह्यर्थगतिः' इति न्यायादज्भिन्नेऽच्सदृशे वर्णे हलीत्यर्थः स्यात्, ततो लाघवाद् हलीत्येव वदेत्, तस्मात् प्रसज्यप्रतिषेध इत्याह—**नत्वचीति** । एवं चावसानेऽपि द्वित्वं भवति । वाक्, वाक्क् । **स्थानिवदादेशो** । आदेशे कृते स्वरूपभेदात्स्थानिप्रयुक्तकार्याणामप्रवृत्तावतिदेश आरभ्यते । 'अस्तेर्भूः' । आर्धधातुके विवक्षिते धात्वादेशो धातुवत्, तेन 'अचो यत्' इत्यादिधातुप्रत्ययाः । भव्यम्, बभूव । 'किमः कः' अङ्गादेशोऽङ्गवत् । तेन इनादेशदीर्घैस्भावाः । केन, काभ्याम्, कैः । आदेशग्रहणं किमर्थम्,

---

१ 'धर्मलाभो' क ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्थानिधर्मा आदेशेषु न प्राप्नुयुरिति तत्प्राप्त्यर्थं स्थानिवदादेश इत्यारब्धम्। स्थानं प्रसङ्ग इत्युक्तम्। यस्य स्थाने अन्यद्विधीयते तत् स्थानि। येन विधीयमानेन अन्यत् प्रसक्तं निवर्तते स आदेशः। स्थानिना तुल्यः स्थानिवत्। 'तेन तुल्यम्' इति वतिप्रत्ययः। आदेशः स्थानिना तुल्यो भवति, स्थानिधर्मको भवतीति यावत्। अलिति वर्णपर्यायः। विधीयत इति विधिः कार्यम्। अलाश्रयो विधिः अल्विधिः, न अल्विधिः अनल्विधिः। अलाश्रयभिन्ने कार्ये कर्तव्ये इति प्रतीयमानोऽर्थः। अलाश्रयकार्ये कर्तव्ये स्थानिवन्न भवतीति फलितम्।

अलाश्रयेति सामान्यवचनाद् अला विधिः, अलः परस्य विधिः, अलो विधिः, अलि विधिश्चेति सर्वसंग्रहः। अला विधौ यथा—व्यूढोरस्केन। अत्र 'विसर्जनीयस्य सः' इति विसर्गस्थानिकस्य सकारस्य विसर्गत्वमाश्रित्य अड्व्यवाय इति णत्वं प्राप्तं न भवति। अलः परस्य विधौ यथा—द्यौः। 'दिव औत्' इति वकारस्थानिकस्य औकारस्य स्थानिवद्भावेन हल्त्वात् ततः परस्य सोर्हल्ङ्यादिलोपः प्राप्तो न भवति। अलो विधौ यथा—द्युकामः। दिव उदिति वकारस्थानिकस्य उकारस्य स्थानिवद्भावेन वकारत्वाद् 'लोपो व्योर्वलि' इति लोपः प्राप्तो न भवति। अलि विधौ यथा—क इष्टः। यजेः क्तः। अत्र यकारस्थानिकसंप्रसारणस्य इकारस्य स्थानिवद्भावेन हश्त्वात् 'हशि च' इत्युत्वं प्राप्तं न भवति। अल् चेह स्थानिभूतः, स्थान्यवयवश्च गृह्यते। ततश्च आदेशस्य स्थानिभूतो योऽल्, स्थान्यवयवश्च योऽल्, तदाश्रयविधौ न स्थानिवदिति

---

स्थानिवदित्येतावतैव संबन्धिशब्दमहिम्ना तल्लाभात्। यथा 'पितृवदधीते' इत्युक्ते 'पुत्रः' इति गम्यते इति चेदत्राहुः। द्विविध आदेशः प्रत्यक्ष आनुमानिकश्चेति। 'अस्तेर्भूः' इत्यादिः प्रत्यक्षः। 'तेस्तुः' इत्यादिस्त्वानुमानिकः। 'एरुः' इत्यत्र हि इकारेणेकारान्तः स्थानी अनुमीयते, उकारेण चोकारान्त आदेशः। तथा च 'तेस्तुः' इति फलितोर्थः, तत्रासत्यादेशग्रहणे प्रत्यक्षस्यैव ग्रहणं स्यान्न त्वानुमानिकस्य। आदेशग्रहणसामर्थ्यात्तूभयपरिग्रहः, तेन पचत्वित्यादेस्तिङन्तत्वात् पदसंज्ञा सिध्यतीति। ननु 'एरुः' इत्यादि यथाश्रुतमेवास्तु, एकदेशविकृतस्यानन्यत्वात्पदत्वं भविष्यतीति चेन्न। अर्थवत्येव स्थान्यादेशभावविश्रान्तेर्वाच्यत्वात्तस्यैवात्र प्रसङ्गसंभवात्। तथाहि—'षष्ठी स्थानेयोगा' इत्युक्तम्। स्थानं च प्रसङ्गः। स चार्थवतः, अर्थप्रत्ययार्थं शब्दप्रयोगात्। यद्यपि च्लेः सिजादावसंभवीदम्, तथापि सति संभवे अर्थप्रयुक्त एव प्रसङ्गो ग्राह्य इत्यनेनैवादेशग्रहणेनं ज्ञाप्यते। उक्तं च 'सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः। एकदेशविकारे हि नित्यत्वं नोपपद्यते' इति। पदमिहार्थवत्। पद्यतेऽनेनेति व्युत्पत्तेः। यद्यपि सर्वविकारे सुतरां नित्यत्वानुपपत्तिः, तथापीह विकार एव नास्तीति तात्पर्यम्। एतच्च

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अनेनेह यकारस्य स्थानिवद्भावेनाच्त्वमाश्रित्य 'अनचि' ( सू ४८ ) इति द्वित्व-

---

फलति । तत्र स्थानिभूताल्विधौ व्यूढोरस्केनेत्युदाहृतमेव । यथा वा–'धिवि प्रीणने' इति धातोर्लेटि प्रथमपुरुषस्य झेरन्तादेशे 'धिन्विकृण्व्योर च' इति विकरणस्य उकारस्य यणि वकारे सति तस्य स्थानिवद्भावेनार्धधातुकत्वात् स्वतो वलादित्वाच्च इडागमः प्राप्तो न भवति, वकारस्य स्थानिभूतो योऽल् उकारः, तदादेशं वकारम् आर्धधातुकत्वेनाश्रित्य प्रवर्तमानस्य इटः स्थान्यलाश्रयत्वात् । स्थान्यवयवालाश्रयविधौ यथा—प्रतिदीव्य । इह क्त्वादेशस्य य इत्यस्य स्थानिवद्भावेन वलाद्यार्धधातुकत्वाद् इडागमः प्राप्तो न भवति । इडागमस्य वलादित्वविषये स्थान्यवयवभूतालाश्रयत्वात् । तदेतदाह— **आदेशः स्थानिवत्स्यान्नतु स्थान्यलाश्रयविधाविति** । स्थान्यलाश्रयेत्यत्र स्थानीति किम्–रामाय । इह 'सुपि च' इति दीर्घस्य यञादिसुबाश्रयस्य आदेशगतयकाररूपालाश्रयत्वेऽपि तस्मिन् कर्तव्ये यादेशस्य स्थानिवद्भावेन सुप्त्वम्, दीर्घस्य आदेशगतयकाररूपालाश्रत्वेऽपि स्थान्यलाश्रयत्वाभावात् । न च नीञ्धातोर्ण्वुलि अकादेशे वृद्धौ 'नै अक' इति स्थिते, ऐकारस्य स्थानिवद्भावेन ईकारधर्मकत्वादायादेशो न स्यात्, ईकारस्य आयादेशाभावादिति वाच्यम् । इह हि स्थानिप्रयुक्तं यत् कार्यं शास्त्रीयं तदेवातिदिश्यते, ईकारस्य च आयादेशाभावो न शास्त्रविहित इति न तस्य ईकारस्थानिके ऐकारे अतिदेश इत्यास्तां तावत् । **अनेनेति** । उदाहृतेन स्थानिवत्सूत्रेण इह सुध् य् इत्यत्र ईकारस्थानिकस्य यकारस्य स्थानिवद्भावेन अच्कार्यकारित्वमाश्रित्य

---

शब्दकौस्तुभे स्पष्टम् । अनल्विधाविति किम्, यश्चाला विधिः, यश्चालः परस्य विधिः, यश्चालो विधिः, यश्चालि विधिस्तत्र मा भूत् । तत्राला विधौ यथा—व्यूढोरस्केन, अत्र सकारस्य स्थानिवत्त्वेन विसर्गवदट्त्वमाश्रित्य 'अड्व्यवाय—' इति णत्वं प्राप्तम् । अलः परस्य यथा—द्यौः, पन्थाः, इह हल्ङ्यादिलोपो न । अलो विधौ—द्युकामः, 'लोपो व्योर्वलि' इति लोपो न । न चोत्त्वविधिसामर्थ्याल्लोपो न भवेदिति शङ्क्यम्, द्युयानमित्यादौ तस्य सावकाशत्वात् । अलि विधौ—यजेः क्तः, क इष्टः । 'हशि च' इत्युत्वं न । न चेह स्थानिद्भावेन जातेप्युत्वे आद्गुणेऽवादेशे च कृते 'हलि सर्वेषाम्' इति नित्यलोपेन क इष्ट इति रूपं सिध्यत्येवेति वाच्यम् । कयिष्ट इति रूपान्तरासिद्धिप्रसङ्गात् । सिद्धान्ते तु 'भोभगोअघोअपूर्वस्य—' इति यस्य लोपविकल्पे क इष्टः, कयिष्ट इति रूपद्वयमभ्युपगम्यते । अल् चेह स्थान्यवयव एव गृह्यते, तेन रामायेत्यादौ 'सुपि च' इति दीर्घः सिध्यति, तद्विधौ हि यञादित्वमाश्रितम् । यञ् चादेशावयवो न तु

---

१ 'स्थानीभूत' इति 'क' 'ख' । २ 'स्थानिवद्भावेन' इति नास्ति–'क' । ३ 'वलाद्यार्धधातुकविषये' 'क' । ४ 'भूतवलाश्रयत्वात्' 'क' । ५ 'रूपाश्रयत्वेऽपि' 'क' ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न्तादेङोऽति परे पूर्वरूपमेकादेशः स्यात्। हरेऽव। विष्णोऽव। ८७ **सर्वत्र विभाषा गोः।** (६-१-१२२) लोके वेदे चैङन्तस्य गोरति वा प्रकृतिभावः स्यात्पदान्ते। गो अग्रम्, गोऽग्रम्। 'एङन्तस्य' किम्—चित्रग्वग्रम्। 'पदान्ते किम्-गोः। ८८ **अवङ् स्फोटायनस्य।** (६-१-१२३) 'अति' इति निवृत्तम्। अचि परे

---

देशं बाधित्वा पूर्वरूपमेकारः। विष्णो अवेत्यत्र अवादेशं बाधित्वा पूर्वरूपमोकारः। **सर्वत्र विभाषा।** पदान्तादित्यनुवर्तते। 'प्रकृत्यान्तःपादम्' इत्यतः प्रकृत्येत्यनुवर्तते। प्रकृत्या स्वभावेन निर्विकारस्वरूपेण अवतिष्ठत इत्यर्थः। 'यजुष्युरः' इत्यतो यजुषीति निवृत्तम्। तत्सूचनाय सर्वत्रेत्युप्रात्तम्। तेन लोके वेदे चेति लभ्यते। तदाह—**लोक इत्यादि। प्रकृतिभाव इति।** स्वभावेनावस्थानमित्यर्थः। एवं च पूर्वरूपमवादेशश्च न। गो अग्रमिति प्रकृतिभावे रूपम्। पूर्वरूपे गोऽग्रमिति। अत्र एङ इत्यप्यनुवर्तते। ततश्च 'एकदेशविकृतमनन्यवद्भवति' इति न्यायेन चित्रग्वग्रमित्यत्र नातिप्रसङ्गः। हे चित्रगोऽग्रमित्यत्रापि न प्रकृतिभावः, प्रतिपदोक्तस्यैव एङो ग्रहणात्, प्रकृते च ह्रस्वस्य गुण इत्योकारस्य लाक्षणिकत्वात्। **गोरिति।** गो अस् इति स्थिते गो इत्योकारस्य पदान्तत्वाभावान्न प्रकृतिभावः। न चैवमपदान्तत्वाद् 'एङः पदान्ताद्' इति पूर्वरूपमपि दुर्लभमिति वाच्यम्, अत एव ङसिङसोश्चेति तत्र पूर्वरूपारम्भात्। **अवङ् स्फोटायनस्य। अतीति निवृत्तमिति।** एङः पदान्तादित्यत इति शेषः, व्याख्यानादिति

---

ङसोश्च' इत्यस्यारम्भादस्य पदान्तविषयत्वे लब्धे उत्तरार्थं पदान्तादिति स्पष्टप्रतिपत्तये इहैव कृतमिति मनोरमायां स्थितम्। केचित्तु 'पदान्तात्' इत्येतदिहाप्यावश्यकमेव। अन्यथाऽपदान्तादपि स्यात्। 'ङसिङसोश्च' इति सूत्रं तु 'सुप्संबन्धिन्यति परतः पूर्वरूपं चेन्ङसिङसोरेवाति परे' इति नियमार्थं स्यात्। तत्फलं तु हरयः, गुरवः, इः स्मृतो यैस्ते स्मृतयः, इत्यादौ पूर्वरूपाप्रवृत्तिरित्याहुः। एङः किम्, दध्यत्र। पदान्तात्किम्, चयनम्। लवनम्। अचिनवम्। अति किम्, हरयिह। विष्णविहं। तपरः किम्, वायवायाहि। **सर्वत्र विभाषा।** यद्यपीह 'छन्दसि' इति न प्रकृतम्, तथापि 'यजुष्युरः–' इत्यादिप्रक्रमात् छन्दस्येव संभाव्येत। अतः 'सर्वत्र' इत्युक्तम्। तद्व्याचष्टे—**लोके वेदे चेति।** इह एङ इत्यनुवर्त्य एङन्तस्य गोरिति व्याख्येयम्। तेनेह न। चित्रग्वग्रम्। **प्रकृतिभाव इति।** एतच्च 'प्रकृत्यान्तःपादम्' इति सूत्रात्प्रकृत्येत्यनुवृत्त्या लभ्यते। 'नान्तःपादम्' इति पाठे तु 'सर्वत्र विभाषा–' इति सूत्रेण पूर्वरूपमेव विभाषा निषिध्यत इत्यवधेयम्। निषेधविकल्पे विधिविकल्पः फलित इत्याशयेन पूर्वरूपमेव विकल्प्यत इति मनोरमायां स्थितम्। **अवङ् स्फोटायनस्य।** स्फोटोऽयनं परायणं यस्य स स्फोटायनः ... वैयाकरणः। तस्य स्फोटायनस्य। अत्रापि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

**पदान्ते गोरवङ् वा स्यात्। गवाग्रम्। 'पदान्ते' किम्—गवि । व्यवस्थितविभाषया गवाक्षः। ८९ इन्द्रे च। (६-१-१२४) गोरवङ् स्यादिन्द्रे । गवेन्द्रः।**

---

भावः। पदान्तादिति, गोरिति, अचीति चानुवर्तते। स्फोटायनस्य ऋषेः मते अवङ्। अन्यस्य तु न। ततश्च विकल्पः सिद्धः। तदाह—**अचि पर इत्यादिना**। ङिच्चेत्यन्तादेशः। **गवाग्रमिति**। गो अग्रमिति स्थिते गकारादोकारस्यावङ्। गव अग्र इति स्थिते सवर्णदीर्घः। न च अग्रशब्दे अकारमचं परत्वेनाश्रित्य प्रवृत्तः अवङ् कथं तद्विघातकं सवर्णदीर्घं प्रवर्तयति, संनिपातपरिभाषाविरोधादिति वाच्यम्, संनिपातपरिभाषाया अनित्यत्वस्य रामायेत्यत्र वक्ष्यमाणत्वात्। **गवीति**। गो इ इति स्थिते ओकारस्य पदान्तत्वविरहान्नावङ्। नापि पूर्वसूत्राभ्यां प्रकृतिभावपररूपे। किन्तु अवादेशः। अतीत्यनुवृत्तौ तु गवेश इत्यादि न सिध्येत्। **व्यवस्थितेति**। क्वचिद् भवतीत्यंश एव प्रवर्तते, क्वचित्तु न भवतीत्यंश एव, क्वचिदुभयमित्येवं लक्ष्यानुसारेण व्यवस्थया प्रवृत्ता विभाषा व्यवस्थितविभाषा 'सर्वत्र विभाषा गोः' इत्यत्राश्रीयते। ततश्च गवाक्ष इत्यत्र नित्यमवङ् इत्यर्थः। इदं च।

"देवत्रातो गलो ग्राह इतियोगे च सद्विधिः।
मिथस्ते न विभाष्यन्ते गवाक्षः संशितव्रतः॥"

इति शाच्छोरिति सूत्रे भाष्ये स्पष्टम्। **गवाक्ष इति**। गवां किरणानामक्षीवेति विग्रहः। अक्ष्णोऽदर्शनादित्यच्। पुंस्त्वं लोकात्। 'वातायनं गवाक्षः स्यात्' इत्यमरः। **इन्द्रे च**। गोः, अवङ्, अचीत्यनुवर्तते। तदाह—**गोरिति**। विकल्पनिवृत्त्यर्थः पुनरारम्भः। **गवेन्द्र इति**। गो इन्द्र इति स्थिते अवङ्, आद् गुणः।

---

एङन्तस्य गोरिति व्याख्येयम्। अमित्येव सूत्रयितुमुचितम्। विभाषानुवृत्तेः स्फोटायनग्रहणं पूजार्थम्। **अतीति निवृत्तमिति**। अन्यथा गवेशः, गवोद्ध इत्यादि न सिद्ध्येदिति भावः। **अचि पर इति**। अत्राचीत्यनुवर्तते । 'अतीति तु निवृत्तम्' इत्यत्र व्याख्यानमेव शरणम्। **गवाक्ष इति**। गवां किरणानां अक्षीवेति विग्रहः। 'अक्ष्णोऽदर्शनात्' इत्यच् समासान्तः। वातायने रूढोऽयम्। पुंस्त्वं लोकात्। **इन्द्रे च**। आरम्भसामर्थ्यान्नित्यमिदम्। इदं च सूत्रं त्यक्तुं शक्यम्। अन्यार्थं स्वीकृतेन व्यवस्थितविभाषाश्रयणेनैवेष्टसिद्धेरित्याहुः। 'प्लुतप्रगृह्या:—' इति सूत्रादव्यवहितपूर्वः। **'अथ प्रकृतिभावः'** इति पाठो मूलपुस्तकेषु प्रायेण दृश्यते, स चापपाठ एव। 'सर्वत्र विभाषा गोः, इति प्रकृतिभावस्य प्रागेवारब्धत्वादित्येके। अन्ये तु 'अवङ् स्फोटायनस्य' 'इन्द्रे च' इति सूत्रद्वयं प्रकृतिभावप्रकरणे पठितमपि तद्बहिर्भूतमित्यवश्यं वक्तव्यम्, ताभ्यां तदनभिधानात्। न च 'अवङ्—' सूत्रस्य प्रकृतिभावापवादत्वेनोत्सर्गापवादरूपत्वात्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# अथ प्रकृतिभावः। ४।

५० प्लुतप्रगृह्या अचि नित्यम्। ( ६-१-१२५ ) प्लुताः प्रगृह्याश्च वक्ष्यन्ते, तेऽचि परे नित्यं प्रकृत्या स्युः। एहि कृष्ण३ अत्र गौश्चरति। हरी एतौ। 'नित्यम्' इति किम्। 'हरी एतौ' इत्यादावयमेव प्रकृतिभावो यथा स्यात्, 'इको-

---

**अथ प्रकृतिभाव इति**। निरूप्यत इति शेषः। **प्लुतप्रगृह्याः। वक्ष्यन्त इति**। 'दूराद्धूते च' इ इत्यादिना 'ईदूदेद्' इत्यादिना चेत्यर्थः। **प्रकृत्येति**। 'प्रकृत्यान्तःपादम्' इत्यतस्तदनुवृत्तेरिति भावः। प्रकृत्या स्वभावेनावस्थिताः स्युरित्यर्थः। संधयो न भवन्तीति यावत्। **एहि कृष्ण ३ अत्रेति**। 'दूराद्धूते च' इति णकारादकारः प्लुतः। तस्य अकारे न सवर्णदीर्घः। **हरी एताविति**। 'ईदूदेद्' इति रेफादीकारः प्रगृह्यः, तस्य यणादेशो न भवति। 'सर्वत्र विभाषा' इति पूर्वसूत्रे विभाषेत्यस्य अस्वरितत्वादेव निवृत्तिसिद्धेरिह नित्यग्रहणं किंमर्थमिति पृच्छति—**नित्यमिति किमिति**। उत्तरमाह—**हरी एताविति**। नित्यग्रहणे सत्येव हरी एतावित्यादौ 'प्लुतप्रगृह्या अचि' इत्ययमेव केवलः प्रकृतिभावः स्यादित्यर्थः। यथाशब्दो योग्यतायाम्। अयमेव प्रकृतिभावः प्राप्तुं योग्यः। स च नित्यग्रहणे सति प्राप्नुयादित्यर्थः। एवमग्रेऽप्येवंजातीयकेषु। एवशब्दव्यवच्छेद्यं दर्शयति—**इक इति**। 'इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च' इति वक्ष्यमाणो ह्रस्वसमुच्चितः प्रकृतिभावो मा भूत्—न भवेत्। 'माङि लुङ्' सर्वलकारापवादः। अकृते सति नित्यग्रहणे परत्वात् शाकलह्रस्वसहितप्रकृतिभावः प्रसज्येत। नित्यग्रहणे कृते तु तत्सामर्थ्यादेव परमपि शाकलं ह्रस्वसमुच्चित-

---

तत्प्रकरणस्थत्वं सूपपादमित्यवङादेशानुवृत्त्यर्थं तदनन्तरं पठितस्य 'इन्द्रे च' इति सूत्रस्यापीति वाच्यम्। पूर्वरूपापवादत्वस्यापि 'अवङ्–' सूत्रस्य सुवचत्वात्। एतत्प्रकरणपाठस्य गोशब्दानुवृत्त्यर्थतया चरितार्थत्वात्। एवं च स्वलेख्यप्रकृतिभावप्रकरणाद्बहिस्तत् सूत्रद्वयं लिखितं तदनुकूलत्वेन 'सर्वत्र विभाषा–' इति सूत्रमपि तत्रैवेति स्थितस्य गतिर्बोध्येत्याहुः॥

**अच्सन्धौ प्रकृतिभावः। प्लुतप्रगृह्याः**। प्रकृतिभावं प्रति प्लुतो नासिद्धः, प्लुतमनूद्य प्रकृतिभावविधानसामर्थ्यात्। अचि किम्, जानु उ जानू। उञः प्रगृह्यत्वेऽपीह सवर्णदीर्घः। अचीत्यनुवर्तमाने पुनरचिग्रहणमादेशनिमित्ते एवाचि प्रकृतिभावः। तेन इहाप्येकादेशः स्यादेव—जानु उ अस्य रुजति, जानू अस्य रुजति। इह 'मय उञः–' इति पाक्षिके वकारे तु जान्वस्य रुजति। **एहि कृष्णेति**। 'दूराद्धूते च' इति प्लुतः। प्राचा तु कृष्णा ३ एहि इति उदाहृतम्। तदसत्। 'वाक्यस्य टेः–'

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ऽसवर्णे'—(सू ९१) इति ह्रस्वसमुच्चितो मा भूत्। ९१ **इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च।** (६-१-१२७) पदान्ता इकोऽसवर्णेऽचि परे प्रकृत्या स्युर्ह्रस्वश्च वा। अत्र ह्रस्वविधिसामर्थ्यादेव प्रकृतिभावे सिद्धे तदनुकर्षणार्थश्चकारो न कर्तव्य इति भाष्ये स्थितम्। चक्रि अत्र–चक्र्यत्र। 'पदान्ताः' इति किम्। गौर्यौ। 'न समासे' ( वा ३६८४ )। वाप्यश्वः। 'सिति च' ( वा ३६८४ )। पार्श्वम्॥

---

प्रकृतिभावं 'प्लुतप्रगृह्याः' इति केवलः प्रकृतिभावो बाधत इत्यर्थः। **इकोऽसवर्णे।** इक इति षष्ठी 'एङः पदान्ताद्' इत्यतः पदान्तादित्यनुवर्तते। तच्च षष्ठ्यन्ततया विपरिणम्यते। अचीति चानुवर्तते। ततश्च पदान्तस्येकः असवर्णेऽचि परे ह्रस्वः स्यादित्येकं वाक्यम्। चकारात् 'प्रकृत्यान्तःपादम्' इत्यतः प्रकृत्येत्यनुकृष्यते। ह्रस्व इति तत्रापि संबध्यते। ततश्च उक्तो ह्रस्वः प्रकृत्या स्वभावेन अवतिष्ठत इति वाक्यान्तरं संपद्यते। फलितमाह—**पदान्ता इक इत्यादिना।** यदि चकारो न क्रियेत, तर्हि पदान्तस्य इकः असवर्णेऽचि ह्रस्वः स्यादित्येव लभ्यते। तस्य ह्रस्वस्य प्रकृतिभावो न लभ्यते। ततश्च चक्री अत्रेति स्थिते, ईकारस्य ह्रस्वे सति तस्य यणादेशे चक्र्यत्रेत्येव स्यात्। चक्रि अत्रेति ह्रस्वसमुच्चितप्रकृतिभावविशिष्टं रूपं न स्यात्। इष्यते तदपि। अतः प्रकृत्येत्यनुकर्षणार्थश्चकार आवश्यक इति सूत्रकारस्य हृदयम्।

भाष्यकारमतमाह—**अत्र ह्रस्वेति।** अत्र चकारो न कर्तव्यः, प्रकृत्येत्यनुकर्षस्य व्यर्थत्वात्। न च विहितस्य ह्रस्वस्य यणिनवृत्त्यर्थः स इति वाच्यम्, ह्रस्वविधिसामर्थ्यादेव यणो निवृत्तिसिद्धेः। अन्यथा यणमेव विदध्यात्। अतः प्रकृत्येत्यनुकर्षणार्थश्चकारो न कर्तव्य इति भाष्ये स्थितमित्यर्थः। चक्रि अत्रेति ह्रस्वसमुच्चितप्रकृतिभावपक्षे रूपम्। तदभावपक्षे तु यणि चक्र्यत्रेति रूपम्। नचात्र ककारस्य 'स्कोः संयोगाद्योः' इति लोपः शङ्क्यः, 'अचः परस्मिन्' इति यणः स्थानिवत्त्वेन अच्त्वेन पदान्तसंयोगाभावात्। न च 'पूर्वत्रासिद्धे न स्थानिवद्' इति तन्निषेधः शङ्क्यः, 'तस्य दोषः संयोगादिलोपलत्वणत्वेषु' इति वचनात्। **न समासे।** वार्तिकमेतत्। समासे उक्तशाकलविधिर्न भवतीत्यर्थः। **वाप्यश्व इति।** वाप्यामश्व इति विग्रहः। शौण्डादेराकृतिगणत्वात् सुप्सुपेति वा समासः। **सिति च।** सकार इत् यस्य स सित्, तस्मिन् परे उक्तः शाकलविधिर्न भवतीत्यर्थः। **पार्श्वमिति।** पर्शु-पार्श्वास्थि। पर्शूनां

---

इत्यधिकारात्। **ह्रस्वसमुच्चितो मा भूदिति।** अयं भावः—हरी ईशावित्यादौ 'प्लुतप्रगृह्याः–' इत्येतत्सावकाशम्, चक्री अत्रेत्यत्र तु 'इकोऽसवर्णे–' इति। ततश्च हरी एतावित्यत्र परत्वाद् ह्रस्वसमुच्चित एव स्यात्। नित्यग्रहणे तु कृते तत्सामर्थ्यात्

---

१ 'पर्शुः पार्श्वास्थि' इति क।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

९२ ऋत्यकः। ( ६-१-१२८ ) ऋति परेऽकः प्राग्वत्। ब्रह्मऋषिः–ब्रह्मर्षिः। 'पदान्ताः' इत्येव। आर्च्छत्। समासेऽप्ययं प्रकृतिभावः। सप्तऋषीणाम्–सप्तर्षीणाम्।

---

समूहः पार्श्वम्। 'पर्श्वा णस् वक्तव्यः' इति णस्, आदिवृद्धिः, यणादेशः। अत्र पार्शु अ इति स्थिते उक्तः शाकलो विधिर्न भवति। 'ओर्गुणः' तु न, भस्यैव तद्विधानात्। 'सिति च' इति पदत्वेन भत्वबाधात्। 'अचो ञ्णिति' इति वृद्धिरपि न भवति। आदिवृद्ध्या तद्बाधात्। तथा च मूलकारो वक्ष्यति। 'आदिवृद्धिरन्त्योपधावृद्धी बाधते' इति। अत्र 'सिन्नित्यसमासयोः शाकलप्रतिषेधः' इति वार्तिकम्। तदिह द्विधा विभज्य व्याख्यातम्। नचैवं सति वाप्यश्व इत्यत्र कथं शाकलप्रतिषेधः, तत्र समासस्य वैकल्पिकत्वादिति वाच्यम्, भाष्ये नित्यग्रहणस्य प्रत्याख्यातत्वात्।

**ऋत्यकः**। अक इति षष्ठी। 'शाकल्यस्य ह्रस्वश्च' इत्यनुवर्तते। 'असवर्णे' इति निवृत्तम्। 'एङः पदान्ताद्' इत्यतः पदान्तादित्यनुवर्तते। तच्च षष्ठ्यन्ततया विपरिणम्यते। ततः पदान्तस्य अकः ऋति ह्रस्वो वा स्यादित्येकं सम्पद्यते। चकारात् प्रकृत्येत्यनुकृष्यते। उक्तो ह्रस्वः प्रकृत्या अवतिष्ठत इति द्वितीयं वाक्यं संपद्यते। तदाह– **ऋति परे अकः प्राग्वदिति**। **ब्रह्मऋषिरिति**। ब्रह्मा ऋषिरिति स्थिते आकारस्य ह्रस्वः प्रकृतिभावश्च। ततश्च आद् गुण इति रपरः अकारो न भवति। अत्र आकारस्य इक्त्वाभावादिकोऽसवर्णे इत्यप्राप्ते इदं वचनम्। **ब्रह्मर्षिरिति**। उक्तह्रस्वसमुच्चितप्रकृतिभावाभावपक्षे 'आद् गुणः' इति अकारः। रपरत्वम्। 'ऋत्यस्य' इत्येव तु न सूत्रितम्, होतृ ऋकार इत्यत्र प्रकृतिभावार्थमग्रहणस्यावश्यकत्वात्। **पदान्ता इत्येवेति**। पदान्तग्रहणमत्राप्यनुवर्तनीयमेवेत्यर्थः। **आर्च्छदिति**। ऋ गतौ, लङ्, तिप्, शप्। 'पाघ्राध्मा' इति ऋच्छादेशः। 'इतश्च' इति इकारलोपः, 'आडजादीनाम्' इत्याडागमः, 'आटश्च' इति वृद्धिः, आ ऋच्छदिति स्थिते आकारस्य अकः पदान्तत्वाभावान्नोक्तः प्रकृतिभावः। 'न समासे' इति पूर्वसूत्रस्थं निषेधवार्तिकमिह न संबध्यत इत्याह[2]—**समासेऽपीति**। **सप्तऋषीणामिति**। 'दिक्संख्ये संज्ञायाम्'

---

परमपि बाधत इति। **चक्रयत्रेति**। इह 'स्कोः–' इति कलोपो न, यणः कार्यकालपक्षे बहिरङ्गपरिभाषया असिद्धत्वात् स्थानिवद्भावाच्च। 'पूर्वत्रासिद्धे न स्थानिवत्' इति तु नास्ति। तस्य दोषः संयोगादिलोपलत्वणत्वेषु' इति वक्ष्यमाणत्वात्। **पार्श्वमिति**। पर्शूनां समूहः। 'पर्श्वा णस् वक्तव्यः' इति णस्। ओर्गुणस्तु न, 'सिति च' इति पदत्वस्य भत्वापवादत्वात्। **ऋत्यकः**। **ब्रह्म ऋषिरिति**। ननु 'ऋत्यस्य' इत्येव सूत्रमस्तु। दधि ऋच्छतीत्यादौ 'इकोऽसवर्णे' इत्यनेनैव प्रकृतिभावसिद्धेः। मैवम्।

---

१ 'न्तोपधावृद्धी' इति क, ख। २ 'इत्यत आह' क।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

९३ वाक्यस्य टेः प्लुत उदात्तः। (८-२-८२) इत्यधिकृत्य । ९४ प्रत्यभिवादेऽशूद्रे। (८-२-८३) अशूद्रविषये प्रत्यभिवादे यद्वाक्यं तस्य टेः प्लुतः

---

इति समासः। सप्तऋषीणामिति प्रकृतिभावपक्षे रूपम्। तदभावपक्षे तु 'आद् गुणः' इति गुणे रपरत्वे सप्तर्षीणामिति भवति।

अथ 'प्लुतप्रगृह्याः' इति सूत्राकाङ्क्षितप्लुतप्रगृह्ययोर्मध्ये प्रथमोपात्तप्लुतप्रकरणमारभते—**वाक्यस्य टेः**। पदस्येत्यधिकृतम्। वाक्यस्य टेः पदावयवस्य प्लुतो भवति, स च उदात्तो भवतीत्यर्थः। अत्र पदस्येत्यनुवृत्तिः 'नश्छव्यप्रशान्' इत्याद्युत्तरार्था, इहानुवृत्तिविच्छेदे उत्तरत्रानुवृत्तेरसंभवात्। वाक्यस्येत्यभावे पदस्य टेरित्युक्ते यावन्ति वाक्ये पदानि, तावतां टेः प्लुतः प्रसज्येत। वाक्यस्येत्युक्ते तु वाक्यस्य टिरन्त्यस्यैव पदस्य संभवतीति न दोषः। टिग्रहणाभावे प्लुतश्रुत्या 'अचश्च' इति परिभाषया अच इत्युपस्थितौ तस्य वाक्यविशेषणत्वात् तदन्तविधौ अजन्तस्य वाक्यस्येत्यर्थे सति अलोऽन्त्यपरिभाषया वाक्यान्तस्याचः प्लुत इति पर्यवसानाद् ग्रामं गच्छाग्निचि३त् इत्यादिहलन्तवाक्येषु प्लुतो न स्यात्। टिग्रहणे तु तत्सामर्थ्यादेव टिना अचो विशेषणात् टेरवयवस्याचः प्लुत इत्यर्थो लभ्यत इति न दोष इति भाष्ये स्पष्टम्। **इत्यधिकृत्येति**। प्लुतविधय आरभ्यन्त इति शेषः। **प्रत्यभिवादेऽशूद्रे**। 'वाक्यस्य टेः प्लुत उदात्तः' इत्यधिकृतम्। अशूद्र इति च्छेदः। न शूद्रः अशूद्रः, द्विजातिः, तद्विषयः प्रत्यभिवादः—विधिवद् अभिवादयमानं प्रति विधिवदाशीर्वचनम्। भावे घञ्। अस्मिन् प्रत्यभिवादे विषये यद्वाक्यं तस्य टेः प्लुतः स्यात्। स चोदात्त इत्यर्थः।

अभिवादविधिमाह आपस्तम्बः—'दक्षिणं[1] बाहुं श्रोत्रसमं प्रसार्य ब्राह्मणोऽभिवादयीत, उरःसमं राजन्यः, मध्यसमं वैश्यः, नीचैः शूद्रः, 'प्राञ्जलिः' इति। 'तिष्ठन् प्रातरभिवादमभिवादयीतासावहं भोः' इति च। असाविति स्वनामनिर्देशोऽभिमतः। देवदत्तोऽहं भोः इति ब्रुवन् अभिवादम् आशीर्वचनम् अभिवादयीत-वक्तव्यत्वेन विज्ञापयेत्। ततश्च यथावर्णं दक्षिणं बाहुं प्रसार्य 'अभिवादये देवदत्तोऽहं भोः' इति ब्रूयादित्यर्थः। अयमभिवादनप्रकारः।

---

होतृऋकार इत्यत्र प्रकृतिभावार्थमक्ग्रहणस्यावश्यकत्वात्। एतेन 'अकोऽसवर्णे-' इत्येवमेव सूत्रमस्त्विति शङ्काया निरवकाश एव, उक्तदोषानिवृत्तेः। सप्तऋषीणामित्यत्र 'न समासे' इति निषेधापत्तेश्च। 'न समासे' इति निषेधवार्तिकं हि 'इकोऽसवर्णे-' इति सूत्र एव, न तु 'ऋत्यकः' इत्यत्रेति सिद्धान्तः। अत एवाह—**समासेऽप्ययमिति**। एवं च 'ऋलृवर्णयोः' इति पूर्वोक्तो निर्देशः संगच्छते। **प्रत्यभिवादे**। इह प्रत्यभि-

---

१ 'दक्षिणबाहुं' क।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्यात्, स चोदात्तः। अभिवादये देवदत्तोऽहम्। आयुष्मान् भव देवदत्त३। 'स्त्रियां न' (वा ४८६४) अभिवादये गार्ग्यहम्। आयुष्मती भव गार्गि।

---

प्रत्यभिवादनप्रकारस्तु मनुना दर्शितः—

'आयुष्मान् भव सौम्येति विप्रो वाच्योऽभिवादने।

अकारश्चास्य नाम्नोऽन्ते वाच्यः पूर्वाक्षरः प्लुतः॥' इति॥

अत्र नाम्नोऽन्ते इति वचनात् 'आयुष्मान् भव सौम्य' इत्यनन्तरमभिवादयमानस्य नाम संबुद्ध्यन्तं प्रयोक्तव्यमिति स्मृत्यन्तरसिद्धमनुगृहीतं भवति। अस्य नाम्नः अन्ते अकारश्च वाच्यः प्रयोज्यः। तस्मादकारात् पूर्वाक्षरः पूर्वः अच् प्लुतः प्रयोक्तव्य इत्यर्थः। एवं च 'आयुष्मान् भव सौम्य देवदत्त३ अ' इति प्रत्यभिवादवाक्यं संपन्नमिति स्थितिः। अभिवादये देवदत्तोऽहमिति अभिवादवाक्यप्रदर्शनम्। भोः इत्यस्याप्युपलक्षणम्। आयुष्मान् भव देवदत्त३ इति प्रत्यभिवादवाक्यप्रदर्शनम्। अभिवादये इत्यस्य अभिवादमाशीर्वचनं वक्तव्यत्वेन विज्ञापयामीत्यर्थः। भवेत्यनन्तरं सौम्यशब्दस्य देवदत्त इत्यनन्तरमकारस्याप्युपलक्षणम्। अत्र देवदत्तशब्दे तकारादकारस्य प्लुतः। आयुष्मत्त्वस्य विधेयत्वात् संबोधनविभक्त्यभावः। अत्र प्रत्यभिवादवाक्ये शर्मान्तं ब्राह्मणस्येत्यादि न भवति, 'एचोऽप्रगृह्यस्य' इति सूत्रे शर्मादिशब्दं विना केवलस्य नाम्नो भाष्ये उदाहरणाद् उक्तमन्वादिस्मृतिविरोधाच्च। अशूद्र इति किम्? 'कुशल्यसि तुषजक' इति भाष्यम्। एवं च शूद्रविषये आयुष्मान् भवेति न प्रयोक्तव्यमिति गम्यते। 'अशूद्रस्त्र्यसूयकेष्विति वक्तव्यम्' इति वार्तिकम्। शूद्रविषय एव प्लुतप्रतिषेधो न भवति, किंतु शूद्रवत् स्त्रीविषये असूयकविषयेऽपि प्लुतप्रतिषेधो भवतीति वक्तव्यमित्यर्थः। तत्र शूद्रविषये उदाहृतम्। स्त्रीविषये वार्तिकं विभज्यार्थतः संगृह्णाति— **स्त्रियां नेति**। स्त्रीविषयकप्रत्यभिवादवाक्ये उक्तो विधिर्न भवतीत्यर्थः। अभिवादये गार्ग्यहमिति अभिवादनवाक्यप्रदर्शनम्। आयुष्मती भव गार्गीति प्रत्याभिवादवाक्यम्, अत्र न प्लुतः। असूयके तु उदाहरणं भाष्ये स्फुटम्। यद्यपि गार्गीति नाम न भवति, किंतु गोत्रमेव, तथापि भाष्ये गार्गीशब्दोदाहरणादेव अभिवादप्रत्यभिवादवाक्ययोर्नाम्नो गोत्रस्य च विकल्पः। तदाह—**नाम गोत्रं वेति**। अत्र नामशब्देन 'द्वादशेऽहनि पिता नाम कुर्याद्' इति विहितं नामैव गृह्यते। अत एव आयुष्मान् भव दरिडन्नित्यादौ

---

वादशब्देन आशीर्वचनमुच्यते। अशूद्रे किम्, अभिवादये तुषजकोऽहम्। भो आयुष्मानेधि तुषजक। **आयुष्मानेधीति**। अस्तेः सेर्हिः। 'घ्वसोः—' इति एत्वम् 'हुझल्भ्यो हेर्धिः' 'श्नसोरल्लोपः'। **नाम गोत्रं वेति**। गोत्रस्योदाहरणम्—अभिवादये

---

१ 'अभिवादमाशीर्वचनम्—इति विज्ञापयामीत्यर्थः' इति क।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नाम गोत्रं वा यत्र प्रत्यभिवादवाक्यान्ते प्रयुज्यते तत्रैव प्लुत इष्यते । नेह। आयुष्मानेधि। 'भोराजन्यविशां वेति वाच्यम्' (वा ४८६९) आयुष्मानेधि भो३ः। आयुष्मानेधीन्द्रवर्म३न्। आयुष्मानेधीन्द्रपालित३॥ ९५ दूराद् धूते च। (८-२-८४) दूरात्सम्बोधने यद्वाक्यं तस्य टेः प्लुतः स्यात्। सक्तून्पिब देवदत्त३। ९६ हैहेप्रयोगे हैहयोः। (८-२-८५) एतयोः प्रयोगे दूराद्धूते

---

प्लुतो नेति भाष्ये स्पष्टम्। नाम गोत्रं वेति परिगणनस्य प्रयोजनमाह—**नेहेति**। **आयुष्मानेधीति**। अस्तेस्सिप्, हिः, 'ध्वसोः' इत्येत्वम्, हेर्धिः। 'श्नसोरल्लोपः'। अत्र धकारादिकारस्य न प्लुतः, अनामत्वादगोत्रत्वाच्च। **भोराजन्यविशाम्**। भोश्शब्दस्य राजन्यवैश्यवाचकनाम्नोश्च टेः प्लुतो वा स्यादिति वक्तव्यमित्यर्थः। भोस्-शब्दस्य अप्राप्ते इतरयोस्तु नामत्वात् प्राप्ते विभाषेयम्। तत्र भोस्-शब्दे यथा—आयुष्मानेधि भोः। 'आयुष्मानेधि देवदत्त भोः' इति भाष्यम्। अत एव प्रत्यभिवादवाक्यान्ते नाम्नोऽनन्तरं भोश्शब्दस्य, भवशब्देन एधिशब्दस्य च प्रयोगविकल्पो गम्यते। राजन्ये यथा—आयुष्मानेधि इन्द्रवर्म३न्, इन्द्रवर्मन्। वैश्ये यथा—आयुष्मानेधि इन्द्रपालित३, इन्द्रपालित इति भाष्यम्। अत एव भाष्यात् प्रत्यभिवादवाक्ये शर्मान्तं ब्राह्मणस्य वर्मान्तं क्षत्रियस्य पालितान्तं वैश्यस्येति विधयोऽपि प्रवर्तन्त इति गम्यते। उक्तभाष्यमन्वादिस्मृतिविरोधाद्विकल्पः। अत्र भाष्ये 'अपर आह' इत्युक्त्वा 'प्रत्यभिवादे सर्वस्यैव नाम्नो भोश्शब्द आदेशो वक्तव्यः' इति पठित्वा आयुष्मानेधि भोः इत्येतावदेव सर्वत्र प्रत्यभिवादवाक्यमित्युक्तम्।

**दूराद् धूते च**। यत्र प्रदेशे स्थितस्य प्रयत्नोच्चारितं शब्दं बोध्यमानो न शृणोति, किं त्वधिकं प्रयत्नमपेक्षते तद्दूरम्। हूतम्-आह्वानम्, भावे क्तः। सम्बोधनमिह विवक्षितम्। 'वाक्यस्य टेः प्लुत उदात्तः' इत्यधिकृतम्। तदाह—**दूरात्सम्बोधन इत्यादिना**। यदि तु आह्वानमेवात्र विवक्षितं स्यात्, तर्हि 'एहि देवदत्त' इत्यादौ आह्वानवाचकपदे सत्येव स्यात्। सम्बोधनपरत्वे तु तदन्यत्रापि भवतीत्यभिप्रेत्योदाहरति—**सक्तूनिति**। **हैहेप्रयोगे**। है हे इत्यव्यये सम्बोधनद्योतके। तयोः प्रयोगे हैहयोः प्लुतः स्यादित्यर्थः। पूर्वसूत्रेण 'गुरोरनृतः' इत्यनेन च सिद्धे किमर्थमिदमित्याशङ्क्य नियमार्थमिति व्याचष्टे—**हैहयोरेवेति**। हैहयोरेवेति नियमार्थमिति भावः। पाहि है३ राम, पाहि हे३ रामेत्यत्र हैहयोरेव प्लुतः, न तु 'गुरोरनृतः' इत्यन्यस्यापीत्येतद् 'हैहयोः' इत्यनेन लभ्यत इति यावत्। प्रयोगग्रहणाभावे 'वाक्यस्य

---

गार्ग्योऽहम्। भो आयुष्मानेधि गार्ग्य ३ इत्यूह्यम्। **दूराद् धूते चेति**। हूतमाह्वानं

---

१ 'तर्हि वाक्यस्य टेः' इत्यादि क।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यद्वाक्यं तत्र हैहयोरेव प्लुतः स्यात्। है३ राम। राम हे३। ९७ **गुरोरनृतोऽनन्त्यस्याप्येकैकस्य प्राचाम्।** (८-२-८६) दूराद् धूते यद्वाक्यं तस्य ऋद्भिन्नस्यानन्त्यस्यापि गुरोर्वा प्लुतः स्यात्। दे३वदत्त। देवद३ त्त। देवदत्त३। 'गुरोः' किम्। वकारात्परस्याकारस्य मा भूत्। 'अनृतः' किम्। कृष्ण३। एकैकग्रहणं पर्यायार्थम्। इह 'प्राचाम्' इति योगो विभज्यते। तेन सर्वः प्लुतो विकल्प्यते। ९८ **अप्लुतवदुपस्थिते।** (६-१-१२९) उपस्थितोऽनार्ष

---

टेः' इत्यधिकाराद् राम है३ इत्यत्रैव स्यात्। अतः प्रयोगग्रहणम्। ततश्च अनन्त्ययोरपि तयोः प्लुतो भवति। **गुरोरनृतोऽनन्त्यस्य।** 'दूराद् धूते च' इत्यनुवर्तते। वाक्यस्य टेः प्लुत उदात्तः' इत्यधिकृतम्। दूरात् सम्बोधने यद्वाक्यं तत्र सम्बोध्यमानवाचकं यत् पदं तदवयवस्य ऋकारभिन्नस्य अनन्त्यस्य गुरोः प्लुतः स्यात्, अन्त्यस्य तु टेरपि[1] गुरोरगुरोश्च स्यादित्यर्थः। टेः[2] अपिना समुच्चयात्। तदाह—**दूरादित्यादिना।** दे३वदत्तेत्यादिषु[3] सर्वत्र एहीति शब्दः प्रागध्याहर्तव्यः। अन्यथा एकतिङ् वाक्यमिति वाक्यत्वानुपपत्तेः। **पर्यायार्थमिति।** अन्यथा सर्वेषां गुरूणां युगपत् प्लुतः स्यादिति भावः। **इह प्राचामिति।** 'गुरोरनृतोऽनन्त्यस्याप्येकैकस्य' इत्येकम्, प्राचामित्यन्यत्। तत्र प्लुत इत्येव अनुवर्तते। प्राचां मते प्लुतः स्यात्, नान्यमते इति फलति। ततः किमित्यत आह—**तेनेति।** एवं च 'सर्वः प्लुतः साहसमनिच्छता विभाषा वक्तव्यः' इति वार्तिकं न कर्तव्यमिति भावः। प्लुतशास्त्रत्यागात्मकं साहसमनिच्छतेत्यर्थः। प्लुत शास्त्रेषु श्रद्धाजाड्यं विहायेति यावत्।

**अप्लुतवत्।** 'किमिदमुपस्थितं नाम ? अनार्षमितिकरणम्' इति भाष्यम्। अवैदिक इतिशब्द इत्यर्थः। प्लुत इत्यध्याहार्यम्। अवैदिके इतिशब्दे परे प्लुतः अप्लुतवत् स्यादिति फलति। तदाह—**उपस्थितोऽनार्ष इत्यादिना।** अप्लुत-

---

तच्च संबोधनमात्रोपलक्षणमित्याह—**दूरात्संबोधन इति।** उपलक्षणतया व्याख्यानस्य फलमुदाहरति—**सक्तून्पिबेत्यादि। गुरोरनृतः। अनन्त्यस्यापीति।** अत्र वदन्ति। यद्यप्यन्त्यस्य गुरोः प्लुतार्थोऽपिशब्द इति व्याख्यायेत तर्हि गुरुस्थानिकप्लुतानामेव पर्यायता स्यात्तथा च 'दूराद्धूते—' इति लक्षणान्तरेण लघोष्टेः स्थाने विहितेन प्लुतेन सह युगपत् प्रयोगः प्रसज्येत। तस्मादपिशब्दो गुरोरगुरोश्च टेः प्लुतार्थ इत्येव व्याख्यातव्यम्, टेरिति प्रकृतत्वादिति। **दे३वदत्तेति।** वाक्यत्वसंपत्तये अस्यादिरेहीति शब्दो बोध्यः। एवमग्रेऽपि। **सर्वः प्लुतो विकल्प्यत इति।**

---

१ 'टेरपि' इति नास्ति ख। २ वाक्यमिदं नास्ति क। ३ 'देव३दत्तेत्यादिषु' इति क।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इतिशब्दः, तस्मिन्परे प्लुतोऽप्लुतवद्भवति (अप्लुतकार्यं प्रकृतिभावं न करोति) सुश्लोक३ इति-सुश्लोकेति। 'वत्' किम्। अप्लुत इत्युक्तेऽप्लुत एव विधीयेत,

---

वद्भावस्य प्रयोजनमाह—**प्लुतकार्यं प्रकृतिभावं न करोतीति**। अप्लुतकार्यं यणादिकं करोतीति पाठान्तरम्। **सुश्लोक३ इतीति**। तैत्तिरीये सुश्लोक३ इति प्लुतान्तो मन्त्रः पठितः। पदकाले अवग्रहे तस्मात् परत इतिशब्दं पदकाराः पठन्ति। तत्र सुश्लोक३ इति इति स्थिते अप्लुतवद्भावेन प्रकृतिभावाभावे सति आद्गुणे सुश्लोकेतीति भवति। अत्र इतिशब्दः पदकारप्रक्षिप्तत्वादवैदिकः। तदेव सुश्लोकेति इत्युदाहरणं भाष्ये स्थितम्। पदकारास्तु सुश्लोक३ इति सुश्लोक ३ इति इत्येव अवगृह्णन्ति। तदपि संहिताया अविवक्षितत्वान्निर्बाधम्। संहितायामेव यणादिसन्धिविधानात्। **वत्किमिति**। अप्लुतवदित्यत्र वद्ग्रहणस्य किं प्रयोजनमिति प्रश्नः। उत्तरमाह—**अप्लुत इत्युक्त इत्यादिना**। वद्ग्रहणं विहाय 'अप्लुत उपस्थिते' इत्युक्ते प्लुतस्य स्थाने अप्लुत एव विधीयेत। अतः प्लुत एव निवर्तेत। ततश्च अग्नी३ इत्यत्र सम्बोधनप्रथमाद्विवचनान्तस्यानुकरणे प्रगृह्य ईकारः त्रिमात्रो न श्रूयेत। वत्करणे तु प्लुतकार्यस्य प्रकृतिभावस्यैव निवृत्तिर्गम्यते, न तु प्लुतस्यापीति नोक्तदोष

---

एतेन 'द्वैपायनो विरहकातर आजुहाव। पुत्रेति' इति भागवतं व्याख्यातम्। 'प्लुतस्य वैकल्पिकत्वादार्षः प्रयोगः' इति श्रीधराचार्योक्तिस्तु नादर्तव्या। विस्तरस्त्वत्र मनोरमायामनुसंधेयः। **यणादिकं करोतीति**। अत्र नव्याः—यद्येवं अग्नी इति विष्णू इति इत्यत्र प्रगृह्याश्रयं प्रकृतिभावं बाधित्वा परत्वादनेन यणादिकार्यं स्यात्, ततश्च वत्करणप्रयोजनं यणादिकमेव स्यात्, तस्मात् 'प्लुतकार्यं प्रकृतिभावं न करोतीत्यर्थः' इति प्राचां व्याख्यैव ज्यायसी। एवं च 'इको यणचि' इत्यत्र इग्ग्रहणस्य वैयर्थ्यशङ्कापि नास्ति। तथाहि—तत्रेग्ग्रहणाभावेऽपि 'ह्रस्वस्य पिति कृति तुक्' 'दीर्घात्' इत्यतो ह्रस्वदीर्घपदानुवृत्त्या तयोर्यणविधानान्न व्यञ्जनस्य भविष्यति। प्लुतस्य तु प्रकृतिभावेनैव भवितव्यमेव। अयादयोऽपवादा हरय इत्यादौ। उपेन्द्रः कृष्णैकत्वमित्यादौ तु 'आद् गुणः' 'वृद्धिरेचि' इति बाधके भविष्यतः। यथा सत्यपि इग्ग्रहणे श्रीश इत्यादौ सवर्णदीर्घत्वं बाधकम्। अतो नार्थ इग्ग्रहणेन। तथापि एहि करभोरु ३ इति, सुतनु ३ इति, चिनुहि ३ अत्रेत्यादौ 'अप्लुतवदुपस्थिते' 'ई ३ चाक्रवर्मणस्य' इति प्रकृतिभावनिषेधेऽपि आभ्यां यणादिकार्याऽविधानात् प्लुतस्यास्य यण् न स्यात्। ह्रस्वदीर्घपदाननुवृत्तौ तु व्यञ्जनस्य स्यात्। तस्मादिग्ग्रहणं व्यर्थमिति न शक्यते शङ्कितुमित्याहुः॥

---

१ 'प्रकृतिभावस्तु तस्य न निवर्तते' इत्यधिकं क पुस्तके। परं नोचितं प्रतीयते, सन्दर्भशुद्ध्या।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्लुतश्च निषिध्येत। तथाच प्रगृह्याश्रये प्रकृतिभावे प्लुतस्य श्रवणं न स्यात्। अग्नी३ इति। ९९ ई३चाक्रवर्मणस्य। (६-१-१३०) ई३कारः प्लुतोऽचि परेऽप्लुतवद्वा स्यात्। चिनुहि३ इति-चिनुहीति। चिनुहि३ इदम्-चिनुहीदम्। उभयत्र विभाषेयम्। १०० ईदूदेद् द्विवचनं प्रगृह्यम्। (१-१-११) ईदूदेदन्तं द्विवचनं प्रगृह्यसंज्ञं स्यात्। हरी एतौ। विष्णू इमौ। गङ्गे अमू। पचेते

---

इत्यर्थः। **ई३चाक्रवर्मणस्य**। ई३ इति प्लुतस्य लुप्तप्रथमाविभक्तिको निर्देशः। 'उपस्थिते' इत्यस्वरितत्वान्निवृत्तम्। 'अप्लुतवद्' इत्यनुवर्तते। 'इको यणचि' इत्यतः अचीत्यनुवर्तते। चाक्रवर्मणमुनेर्मत ईकारः अचि परे अप्लुतवद्भवति, नत्वन्यमत इत्यर्थः। तदाह—**प्लुतोऽचि परेऽप्लुतवद्वेति। चिनु हि३ इदमिति।** किं मया कर्तव्यमिति पृष्टस्येदं प्रतिवचनम्। चिनु इति लोडन्तम्। 'उतश्च प्रत्ययाद्' इति हेर्लुक्। हि इति त्वव्ययम्। 'विभाषा पृष्टप्रतिवचने हेः' इति तस्य प्लुतः। चिनु इत्यतः प्राग् देवदत्तेत्यध्याहार्यम्। इदमिति तु वाक्यान्तरस्थम्, न तु चिनु इत्येतेन एकवाक्यतामापन्नम्। अन्यथा 'वाक्यस्य टेः' इत्यधिकाराद् हिशब्दे इकारस्य प्लुतो न स्यात्। **उभयत्रेति**। इतिशब्दे परतो नित्यतया प्राप्ते, तदन्यत्र अप्राप्ते चारम्भादुभयत्र विभाषेयमित्यर्थः। विभाषाशब्दस्तु अव्ययमिति न भ्रमितव्यम्, नवेति विभाषायामिति भाष्यप्रयोगात्। विभाष्यते विकल्प्यत इति विभाषा। गुरोश्च हल इत्यप्रत्ययः। टाप्।

**ईदूदेद् द्विवचनम्**। ईच्च ऊच्च एच्चेति समाहारद्वन्द्वः। ईदूदेदिति द्विवचनविशेषणत्वात्तदन्तविधिः। द्विवचनमित्यनेन तु प्रत्ययत्वेऽपि न तदन्तं गृह्यते, 'संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति' इति तन्निषेधात्। तदाह—**ईदूदेदन्तमित्यादिना। हरी एताविति**। अत्र ईकारस्य परादिवत्त्वाश्रयणाद् द्विवचनत्वम्।

---

अन्ये त्विग्ग्रहणस्य प्रयोजनानन्तरमप्याहुः। इको यणेव क्वचिद्यथा स्याद् यदन्यत् प्राप्नोति तन्मा भूत्। किंचान्यत् प्राप्नोति 'इकोऽसवर्णे–' इति शाकलम्। एवं च यदुक्तं 'न समासे' 'सिति च' इति तदनेन संगृहीतं भवतीति। **चिनु हीति**। चिन्विति लोडन्तम्। हीत्यव्ययम्। 'अनन्त्यस्यापि प्रश्नाख्यानयोः' इत्यनेन प्लुतः। **उभयत्र विभाषेयमिति**। इतिशब्दे परतः पूर्वेण प्राप्ते अन्यत्राप्राप्ते चारम्भादिति भावः। **ईदूदेदन्तमिति**। अत्र विशेषणेन तदन्तविध्याश्रयणं किम्, पचेते इमाविति यथा स्यात्। हरी विष्णू इत्यादिष्वेकादेशस्य परादिवद्भावाश्रयेण ईकारादीनां द्विवचनत्वादीदूदेद्रूपं द्विवचनमित्युक्तेऽपि प्रगृह्यत्वं सिध्यतीति बोध्यम्। **द्विवचनमिति**। 'संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति' 'सुप्तिङन्तम्–' इत्यन्तग्रहणाज्ज्ञापकात्तेन कुमा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इमौ । 'मणी वोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम' इत्यत्र स्विवार्थे वशब्दो वाशब्दो वा बोध्यः । **१०१ अदसो मात् । ( १-१-१२ )** अस्मात्परावीदूतौ प्रगृह्यौ स्तः । अमी ईशाः । रामकृष्णावमू आसाते । 'मात्' किम् । अमुकेऽत्र ।

---

प्रगृह्यत्वे सति 'प्लुतप्रगृह्याः' इति प्रकृतिभावान्न यण् । विष्णू इमावित्यत्राप्येवम् । गङ्गे अमू इत्यत्र तु अयादेशो न भवति । ईदूदेदन्तमिति तदन्तविधेः प्रयोजनं दर्शयितुमाह—**पचेते इमाविति** । तदन्तविध्यभावे ईदूदेदात्मकं द्विवचनं प्रगृह्यमिति लभ्येत । एवं सति पचेते इत्यत्र इते इति द्विवचनस्य एद्रूपत्वाभावात् प्रगृह्यत्वं न स्यादिति भावः । ईदूदेदन्तं यद् द्विवचनान्तमिति व्याख्याने तु कुमार्योरगारं कुमार्यगारमित्यत्रातिप्रसङ्गः स्यात् । ईदूदेदन्तं द्विवचनमिति व्याख्याने तु नातिप्रसङ्गः । ओसो द्विवचनस्य ईदूदेदन्तत्वाभावात् । ननु 'मणी वोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम' इति भारतश्लोके मणी इवेति ईकारस्य प्रगृह्यत्वे सति प्रकृतिभावे सवर्णदीर्घो न स्यादित्यत आह—**मणीवोष्ट्रस्येत्यादिना** । 'वं प्रचेतसि जानीयादिवार्थे च तदव्ययम् ।' इति मेदिनी । 'व वा यथा तथैवैवं साम्ये' इत्यमरः ।

**अदसो मात्** । अदस इत्यवयवषष्ठी । अदश्शब्दावयवान्मकारादित्यर्थः । 'ईदूद्' इति 'प्रगृह्यम्' इति चानुवर्तते । मादिति दिग्योगे पञ्चमी । परशब्दोऽध्याहार्यः । तदाह—**अस्मात् पराविति** । अदश्शब्दावयवमकारात् पराविलर्थः । एदिति नानुवर्तते, अदश्शब्दे मकारात् परस्य एकारस्यासंभवात् । द्विवचनमित्यपि नानुवर्तते, अदश्शब्दे मकारात् परस्य ईकारस्य अमी इति बहुवचनत्वाद् ऊकारस्य च मकारात्परस्य तत्र द्विवचनान्तेष्वेव सत्त्वेन व्यावर्त्याभावात् । **अमी ईशा इति** । अदश्शब्दाज्जसि त्यदाद्यत्वम्, पररूपत्वम्, 'जसश्शी' 'आद् गुणः' । अदे इति स्थिते एकारस्य 'एत ईद्' इति ईत्त्वम्, दस्य च मत्वम् । अमी इति रूपम् । अत्र ईकारस्य द्विवचनत्वाभावात् पूर्वसूत्रेण प्रगृह्यसंज्ञा न प्राप्तेत्यनेन सा विधीयते । **रामकृष्णावमू इति** ।

---

योर्वध्वोश्चागारं कुमार्यगारं वध्वगारमिति सिद्धम् । द्विवचनान्तं प्रगृह्यं स्यादिति व्याकुर्वतः प्राचस्तु नेदं सिध्येत् । **हरी एताविति** । इह ह्रस्वसमुच्चितप्रकृतिभावो न, 'प्लुतप्रगृह्याः—' इत्यत्र नित्यग्रहणादित्युक्तम् । अत्र वृत्तिकारेण 'मणीवादीनां प्रतिषेधो वक्तव्यः' इति पठित्वा मणीव रोदसीव जंपतीवेत्युदाहृतम् । तच्च मुनित्रयानुक्तत्वादप्रमाणमिति कैयटादयः । एवं स्थिते 'मणीवोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम' इति भारतप्रयोगं समर्थयते—**इवार्थे इति । वशब्द इत्यादि** । 'वं प्रचेतसि जानीयादिवार्थे च तदव्ययम्' इति मेदिनी । 'व वा यथा तथैवैवं साम्ये—' इत्यमरः । 'कादम्ब-

---

१ 'वयवात्मकमकाराद्' इति क ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

असति माद्ग्रहणे एकारोऽप्यनुवर्तेत। १०२ शे। (१-१-१३) अयं प्रगृह्यः स्यात्।

---

पुँल्लिङ्गाददश्शब्दात् प्रथमाद्विवचने औङि, त्यदाद्यत्वम्, पररूपत्वम्, 'वृद्धिरेचि' अदौ इति स्थिते, 'अदसोऽसेः' इत्यौकारस्य ऊत्वम्, दस्य मत्वम्। अमू इति रूपम्। यद्यप्ययमूकारो द्विवचनं भवति, तथापि पूर्वसूत्रेण प्रगृह्यत्वे कर्तव्ये उत्वमत्वयोरसिद्धतया दकारादौकारस्यैव शास्त्रदृष्ट्याऽसत्त्वात् पूर्वसूत्रेण तस्य प्रगृह्यत्वं न प्राप्तमित्यनेन विधीयते। 'अदसो मात्' इति सूत्रं प्रति तु उत्वमत्वे नासिद्धे, आरम्भसामर्थ्यात्। पूर्वसूत्रस्य तु तत्र न सामर्थ्यम्, हरी एतौ, विष्णू इमावित्यादौ चरितार्थत्वात्। स्त्रियौ फले वा अमू आसाते इति स्त्रीलिङ्गो नपुंसकलिङ्गश्च अदश्शब्दो नात्रोदाहरणम्। तथा हि स्त्रीलिङ्गाददश्शब्दाद् औङि, त्यदाद्यत्वे, पररूपत्वे, टापि, 'औङ आपः' इति शीभावे, आद् गुणे, अदे इति स्थिते उत्वमत्वयोरमू इति रूपम्। तथा नपुंसकलिङ्गात्तस्मादौङि, त्यदाद्यत्वे, पररूपत्वे, 'नपुंसकाच्च' इति शीभावे, आद् गुणे, उत्वमत्वयोरमू इत्येव रूपम्। अत्र पूर्वसूत्रेणैव प्रगृह्यत्वं सिद्धम्। उत्वमत्वयोरसिद्धत्वेऽप्येकारस्य द्विवचनस्य सत्त्वात्। अतः पुँल्लिङ्ग एव अदश्शब्दः अत्रोदाहरणमिति प्रदर्शयितुं रामकृष्णावित्युक्तम्। **मात्किमिति**। 'अदसः' इत्येव सूत्रमस्तु, माद्ग्रहणस्य किं प्रयोजनमिति प्रश्नः। **अमुकेऽत्रेति**। 'अव्ययसर्वनाम्नामकच् प्राक्टेः' इत्यकचि अदकश्शब्दाज्जसि, त्यदाद्यत्वं, पररूपत्वम् 'जसश्शी,' 'आद् गुणः' उत्वमत्वे, अमुके इति रूपम्। अत्र एकारस्य प्रगृह्यत्वनिवृत्त्यर्थं माद्ग्रहणम्। कृते च तस्मिन् एकारस्य मात्परत्वाभावान्न प्रगृह्यत्वमिति भावः। नन्वेवमपि माद्ग्रहणं व्यर्थम्, एद्ग्रहणमननुवर्त्य ईदूतोरेवात्र प्रगृह्यत्वविधानाभ्युपगमेन अमुके इत्यत्र प्रगृह्यत्वप्रसक्तेरेवाभावादित्यत आह—**असतीति**। 'अदसो मात्' इत्यत्र ईदूदेताम् एकसमासपदोपात्तानां मध्ये ईदूतोर्द्वयोरनुवृत्तौ एतोऽप्यनुवृत्तिप्रसक्तौ माद्ग्रहणादेतोऽनुवृत्तिः प्रतिबद्धा।

---

खण्डितदलानि व पङ्कजानि इत्यादिप्रयोगदर्शनाच्चेति भावः। **अदसो मादिति**। इह एकारो नानुवर्तते, असंभवादित्यभिप्रेत्याह—**ईदूताविति**। अदसः किम्, शम्यत्र, वाम्यत्र। ननूकारानुवृत्तिर्व्यर्था, स्त्रियौ फले वा अमू आसाते इत्यत्र पूर्वेणैव सिद्धेः, मुत्वस्यासिद्धत्वेऽप्येकारान्तत्वादत आह—**रामकृष्णाविति**। पुंसि पूर्वेण न सिद्ध्यत्यौकारान्तत्वादिति भावः। 'अदसो मात्' इति सूत्रं प्रति मूत्वमीत्वं च नासिद्धम्। आरम्भसामर्थ्यात्। **अमुकेऽत्रेति**। स्त्रीलिङ्गद्विवचनस्य तु पूर्वसूत्रेण प्रगृह्यत्वे प्रकृतिभाव एव अमुके अत्र। **एकारोऽप्यनुवर्तेतेति**। तथा च एकारानुवृत्तितात्पर्यग्रहफलकं माद्ग्रहणमिति भावः। **शे इति**। छान्दसमपीदं संदर्भशुद्ध्यर्थमुक्तमित्याहुः। **अस्मे इति**। अस्मभ्यमित्यर्थः 'सुपां सुलुग—' इति भ्यसः 'शे' आदेशः। 'शेषे

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अस्मे इन्द्राबृहस्पती। १०३ निपात एकाजनाङ्। ( १-१-१३ ) एकोऽज्नि-

माद्ग्रहणाभावे तु बाधकाभावादेतोऽप्यनुवृत्तिः स्यात्। ततश्च अमुके इत्यत्रापि एकारस्य प्रगृह्यत्वप्रसक्तौ तन्निवृत्त्यर्थं माद्ग्रहणम्। कृते तु तस्मिन् एतोऽनुवृत्तिप्रतिबन्धादमुके इत्यत्र न प्रगृह्यत्वम्। तथा च एकारानुवृत्तिफलकं माद्ग्रहणमिति भावः। **शे।** एकपदं सूत्रम्। प्रगृह्यमित्यनुवर्तते। छन्दसीत्यनुवृत्तौ 'सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः' इति विहितः शे इत्येकारान्त आदेशः प्रगृह्यः स्यादित्यर्थः। तदाह— **अयमिति**। 'शे' आदेश इत्यर्थः। **अस्मे इति**। अस्मभ्यमित्यर्थः। भ्यसः 'शे' आदेशः, 'लशक्वतद्धिते' इति शकार इत्, 'शेषे लोपः' अस्मे इति रूपम्। अद्विवचनत्वादप्राप्तौ वचनम्। यद्यपि छान्दसमिदं वैदिकप्रक्रियायामेव निबन्ध्यम्, तथापि अस्मे इति, त्वे इति इत्याद्यवग्रहे लोकार्थत्वस्यापि सत्त्वादिह तन्निबन्धनम्, पदपाठस्याधुनिकत्वात्।

**निपात एकाच्**। प्रगृह्यमित्यनुवर्तते। पुंल्लिङ्गतया च विपरिणम्यते। एक-

लोपः। **निपात एकाजिति**। निपातः किम्, अततेर्डः अः। हे अ आगच्छ। हे आगच्छ। अत्र प्रगृह्यसंज्ञा मा भूत्। एकग्रहणाभावे 'येन विधिः—' इति सूत्रात्तदन्तलाभे प्रेदमित्यत्र स्यादत उक्तम् 'एक—' इति। 'एकाज्' इति तु न बहुव्रीहिः, उक्तातिप्रसङ्गतादवस्थ्यात्। अतः 'पूर्वकालैक—' इति कर्मधारय एव। ननु 'निपातोऽजनाङ्—' इत्युक्ते हलन्तस्य सत्यपि प्रगृह्यत्वे प्रयोजनाभावादजन्ते प्राप्ते अज्ग्रहणसामर्थ्यादज्रूपस्यैव निपातस्य प्रगृह्यत्वे सिद्धे किमेकग्रहणेन। न च पुरोऽस्तीत्यादौ हलन्तस्य संज्ञायां सत्यां प्रकृतिभावात् 'अतो रोः—' इति रोरुत्वं न स्यादतोऽज्ग्रहणसामर्थ्यमुपत्तीणमित्येकग्रहणमावश्यकमिति वाच्यम्। प्रगृह्यसंज्ञां प्रति रुत्वस्यासिद्धतया रेफान्तस्यैतस्य प्रगृह्यसंज्ञाभावेन दोषाप्रसक्तेः। न च सान्तस्य कृता प्रगृह्यसंज्ञा एकदेशविकृतन्यायेन रेफान्तस्यापि स्यादेवेति प्रकृतिभावादुत्वाभावप्रसङ्गस्तदवस्थ इति वाच्यम्। प्रगृह्यसंज्ञां प्रतीव प्रकृतिभावं प्रत्यपि रुत्वस्यासिद्धत्वात् प्रकृतिभावाप्रवृत्तेः। सकारान्तस्य तु न किंचिदपि सिद्धकाण्डस्थं प्रयोजनं प्राप्नोति यत्प्रकृतिभावेन व्यावर्त्येत। न चाज्ग्रहणसामर्थ्यादजन्तस्यैव प्र परा अपेत्यादिनिपातस्य प्रगृह्यसंज्ञा स्यान्न त्वज्रूपनिपातस्येति वैपरीत्यशङ्कानिवारणार्थमेकग्रहणमिति वाच्यम्। अनाङ्ग्रहणस्य वैयर्थ्योपत्तेः, 'व्याहरति मृगः' इत्यादिनिर्देशविरोधाच्चोक्तशङ्काया अप्रवृत्तेः। किंच 'निपातोऽजनाङ्' इत्युक्तेऽप्यनाङिति प्रतिषेधसामर्थ्यान्निपातस्य विशेषणत्वाभ्युपगमे तदन्तविध्यप्रवृत्त्या निपातरूपो योऽच् स प्रगृह्य इत्यर्थलाभादज्रूपस्यैव निपातस्य प्रगृह्यत्वं सिद्धमिति नास्त्येव प्रयोजनमेकग्रहणस्य। नन्वेवमपि समुदायनिवृत्त्यर्थमेकग्रहणमावश्यकमेव। अन्यथा अ इ उ अपेहीत्यत्रैकाजुद्विर्वचनन्यायेन समुदायस्यैव संज्ञा स्यान्नावयवानामिति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पात आङ्वर्जः प्रगृह्यः स्यात् । इ विस्मये । उ वितर्के । इ इन्द्रः । उ उमेशः । 'अनाङ्' इत्युक्तेरङिदाकारः प्रगृह्य एव । आ एवं नु मन्यसे । आ एवं किल तत् । ङित्तु न प्रगृह्यः । ईषदुष्णं ओष्णम् । 'वाक्यस्मरणयोरङित्' ।

---

श्वासावच्चेति कर्मधारयः । तदाह—**एकोऽजित्यादिना । इ विस्मये इति ।** इ इति चादित्वान्निपातः । स च आश्चर्ये वर्तत इत्यर्थः । इ इन्द्रः । उ उमेशः । इ इति उ इति निपातः संबोधने । उभयोरपि एकाच्त्वान्निपातत्वाच्च प्रगृह्यत्वान्न संधिः । अनाङित्यत्र ङकारानुबन्धस्य प्रयोजनमाह—**अनाङित्युक्तेरिति । आ एवमिति ।** पूर्वप्रक्रान्तवाक्यार्थस्य अन्यथात्वद्योतकोऽयमाकारः । पूर्वमित्थं नामंस्था इदानीं त्वेवं मन्यस इत्यर्थः । **आ एवमिति ।** स्मरणद्योतकोऽयमाकारः । इहोभयत्रापि आकारस्य ङित्त्वाभावान्न पर्युदासः । **ङित्त्विति ।** ङित्तु आकारः प्रगृह्यो न भवति, अनाङिति पर्युदासादित्यर्थः । **ओष्णमिति ।** आ उष्णमित्यत्र आकारस्य ङित्वात् प्रगृह्यत्वाभावे सति 'आद् गुणः' । ननु प्रयोगदशायां ङकारस्याश्रवणाविशेषाद् ङिद-ङिद्विवेकः कथमित्यत आह—**वाक्येति ।** प्रक्रान्तवाक्यार्थस्यान्यथात्वे स्मरणे च अङित् । **अन्यत्र ।** ईषदाद्यर्थे ङिदिति विवेकः—भेदोऽवगन्तव्य इत्यर्थः । तथाच भाष्यम्—

---

चरमस्यैव प्रकृतिभावः स्यान्न तु पूर्वयोरिति चेन्न । अजित्येकत्वस्य विवक्षयैव समुदायनिराससंभवात्समुदायसंज्ञया अवयवानामननुग्रहेणैकाज्द्विर्वचनन्यायस्याप्यप्रवृत्तेः । एकस्मिन्निपाते संज्ञाविधानसंभवेन निपातसमुदायस्य निपातग्रहणेनाग्रहणाच्च । अत्राहु-र्भाष्यकाराः—'अच्समुदायग्रहणशङ्कानिरासार्थमेकग्रहणं कुर्वन् ज्ञापयति वर्णग्रहणेषु व्यक्तिसंख्या न विवक्ष्यते, किं तु जातिरेव निर्दिश्यते' इति तेन 'हलन्ताच्च' इति सनः कित्वाद् 'दम्भ इच्च' इतीत्वे धिप्सतीत्यादि सिद्धम् । हल्ग्रहणस्य व्यक्तिपरत्वे तु योऽन्त्येकः समीपो हल् नकारो न ततः परः सन्, यस्माच्च परः सन् भकारान्नासाविकः समीप इति कित्त्वं न स्यात्, ततश्च नलोपो न स्यात् । वस्तुतस्तु अपृक्तसंज्ञायामेकग्रहण-मुक्तार्थज्ञापकमित्याश्रित्य प्रकृतसूत्रे एकाज्ग्रहणं त्यक्तुं शक्यम् । अत एव मनोरमाया-मनाङिति पर्युदासादेवाङ्रूपनिपाते लब्धे निपातग्रहणमुत्तरार्थं स्पष्टप्रतिपत्त्यर्थमिहैव कृतमिति निपातग्रहणस्यैव प्रयोजनमुक्तं न त्वेकाज्ग्रहणस्य । अत्र नव्याः—यदुक्तं मनोरमायाम् 'अनाङिति पर्युदासात्' इत्यादि तच्चिन्त्यम् । 'ओत्' सूत्रे भाष्यकारैः प्रसज्यप्रतिषेधस्यैवाङ्गीकृतत्वात् । न च लक्ष्यभेदाभावात्प्रौढिवादमात्रं भाष्यमिति वाच्यम् । अस्मादेव भाष्यवचनाल्लक्ष्यभेदोऽप्यस्तीति सुवचत्वात् । तथाहि—अततेर्डः, अः, 'अकारो वासुदेवः स्यात्' इति वचनाद्रूढिशब्दो वा । अनेन अशब्देन सह 'आङ्मर्यादाभिविध्योः'

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अन्यत्र ङित्' इति विवेकः। **१०४ ओत्।** ( १-१-१५ ) ओदन्तो निपातः प्रगृह्यः स्यात्। अहो ईशाः। **१०५ सम्बुद्धौ शाकल्यस्येतावनार्षे।** (१-१-१६) सम्बुद्धिनिमित्तक ओकारो वा प्रगृह्योऽवैदिक इतौ परे। विष्णो इति, विष्ण

'ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः।
एतमातं ङितं विद्याद् वाक्यस्मरणयोरङित्' ॥ इति ॥

एकः अच् यस्येति बहुव्रीहिस्तु नाश्रितः। तथा सति प्रेदमित्यादावतिप्रसङ्गात्। **ओत्।** निपात इत्यनुवर्तते। ओदिति तस्य विशेषणम्। अतस्तदन्तविधिः। प्रगृह्यमित्यनुवर्तते। पुँल्लिङ्गतया च विपरिणम्यते। तदाह—**ओदन्त इत्यादिना। अहो ईशा इति।** अनेकाच्त्वात् पूर्वसूत्रेण अप्राप्तौ वचनम्। **संबुद्धौ शाकल्यस्य।** सम्बुद्धाविति निमित्तसप्तमी ओदित्यनुवृत्तेन अन्वेति। प्रगृह्यमित्यनुवर्तते, पुँल्लिङ्गतया च विपरिणम्यते। ऋषिर्वेदः, तदुक्तमृषिणेत्यादौ तथा दर्शनात्। ऋषौ भव आर्षः, न आर्षः अनार्षः, अवैदिके इतिशब्दे परत इत्यर्थः। शाकल्यग्रहणाद्विकल्पः। तदाह—**संबुद्धिनिमित्तक इत्यादिना। विष्णो इतीति।** अत्र ओकारः 'ह्रस्वस्य गुणः' इति संबुद्धिनिमित्तकः। अत्र ओदन्तत्वेऽपि निपातत्वाभावादप्राप्ते विभाषेयम्। विष्णवितीति प्रगृह्यत्वाभावे रूपम्।

---

इति आङोऽव्ययीभावे सवर्णदीर्घे 'अव्ययीभावश्च' इति नपुंसकत्वाद्ध्रस्वत्वे सोरम्यमि पूर्वे च कृते अमिति रूपं भाष्यकृत्संमतम्। तथा इणो निष्ठायामितः, वेञस्तु निष्ठायां संप्रसारणे उतः, 'अम् इतः एतः, अम् उतः ओतः' इत्यासमुद्रक्षितिवत्समासे रूपं च तत्संमतम्। तत्र पर्युदासपक्षे अमि पूर्वो गुणश्च न सिध्यति। अशब्दस्याङ्भिन्नत्वात्स्थानिवद्भावेन निपातत्वाच्च प्रगृह्यत्वात्। प्रसज्यप्रतिषेधाश्रये तु सिध्यति, तस्याङ्त्वेन प्रगृह्यत्वनिषेधात्। न चैतादृशप्रयोगोऽप्रामाणिक इति वक्तुं युक्तम्। प्रकृतभाष्यस्यैव प्रमाणत्वात्। अन्यथा हि भाष्यकारेङ्गितमात्रावलम्बनेन तत्र प्राचां ग्रन्थानामधिक्षेपाय भवतां प्रवृत्तयो व्याहन्येरन्नित्याद्याहुः। **आङ्वर्जे इति।** प्रतिषेधपक्षे तु प्रगृह्यः स्यादित्येतदुत्तरमिदं द्रष्टव्यम्। वर्ज्यत इति वर्जः। वृजेर्ण्यन्तात्कर्मणि घञ्। वर्जनीय इत्यर्थः। आङो न भवतीति यावत्। **आ एवमिति।** पूर्वप्रक्रान्तवाक्यार्थस्य अन्यथात्वद्योतकोऽयमाकारः, पूर्वमित्थं नामंस्था इदानीं त्वेवं मन्यस इत्यर्थः। **आ एवं किलेति।** स्मरणद्योतकोऽयमाकारः। **वाक्यस्मरणयोरित्यादि।** अत्रायमाशयः। 'ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः। एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित्।' इति भाष्यस्याङिल्लक्षण एव तात्पर्यं लाघवात्। अन्यस्य ङित्त्वे त्वर्थसिद्धम्। 'ईषदर्थे—' इत्यादिस्त्वेकदेशानुवादः। एवं च अभ्रआँ अप इत्यत्र

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति, विष्वविति। 'अनार्षे' इति किम्। ब्रह्मबन्धवित्यब्रवीत्। १०६ उञः। (१-१-१७) उञ इतौ वा प्रागुक्तम्। उ इति—विति। १०७ ऊँ। (१-१-१८) उञ इतौ दीर्घोऽनुनासिकः प्रगृह्यश्च ऊँ इत्ययमादेशो वा स्यात्। ऊँ इति,

---

**उञः**। एकपदं सूत्रम्। 'शाकल्यस्य' 'इतौ' 'प्रगृह्यम्' इति चानुवर्तते। उ इति ञित् उकारः निपातः। तस्य इतिशब्दे परे शाकल्यमते प्रगृह्यसंज्ञा स्यादित्यर्थः। तदाह—**उञ इतौ वा प्रागुक्तमिति**। पूर्वोक्तं प्रगृह्यत्वमित्यर्थः। **उ इति वितीति**। 'निपात एकाज्' इति नित्यं प्राप्ते विकल्पोऽयम्। प्रगृह्यत्वपक्षे प्रकृतिभावे प्रथमं रूपम्। तदभावपक्षे यणादेशे द्वितीयं रूपम्। **ऊँ**। इदमप्येकपदं सूत्रम्। ऊँ इति दीर्घस्य अनुनासिकस्य ऊकारस्य लुप्तप्रथमाविभक्तिकस्य निर्देशः। 'उञः' इत्यनुवर्तते, 'इतौ' 'शाकल्यस्य' 'प्रगृह्यम्' इति च। तदाह—**उञ इतावित्यादिना**। **ऊँ इतीति**। उक्तविधे ऊँकारादेशे रूपम्। प्रगृह्यत्वात् प्रकृतिभावः। एतदादेशाभावपक्षे पूर्वसूत्रेण प्रगृह्यत्वे सति उ इतीति रूपम्। प्रगृह्यत्वस्याप्यभावे सति यणादेशे वितीति रूपमिति त्रीणि रूपाणि फलितानि। तदेवम् 'उञ ऊँ' इत्येकमेव सूत्रं विभज्य व्याख्यातम्। एकसूत्रत्वे तु उञः इतौ परे ऊँ इत्ययं दीर्घोऽनुनासिकः प्रगृह्यश्चादेशः शाकल्यमते स्यात्। तदभावपक्षे तु 'निपात एकाज्' इति नित्यं प्रगृह्यत्वमित्येतावल्लभ्येत। ततश्च ऊँ इति उ इतीति रूपद्वयमेव स्यात्, वितीति रूपं न लभ्येत।

---

सप्तम्यर्थवृत्तेरप्याकारस्य ङित्त्वाद् 'आङोऽनुनासिकश्छन्दसि' इति प्रवर्तत इति। **ओत्**। निपात इति किम्, देवोऽसि, वायवायाहि। **संबुद्धाविति**। ऋषिर्वेदः 'तदुक्तमृषिणा' इत्यादौ तथा दर्शनादित्यभिप्रेत्याह—**अवैदिक इति**। संबुद्धौ किम्, अहो इति। अत्र परत्वाद्विकल्पो मा भूत्। न च 'ओत्' इति सूत्रस्य निरवकाशत्वं शङ्क्यम्। अहो ईशा इत्यादौ तस्य सावकाशत्वात्। इतावितिं किम्, पटोऽत्र। **उञः**। 'निपात एकाज्—' इति नित्यं प्राप्ते विभाषेयम्। शाकल्यस्येतौ प्रगृह्यमिति चात्रानुवर्तते इत्यत आह—**इतौ वा प्रागुक्तमिति**। इह 'उञ ऊँ' इत्येकमेव सूत्रं योगविभागेन व्याख्यातम्। एकसूत्रत्वे तु 'उञ इतौ ऊँ शाकल्यस्य' इत्यर्थात् 'ऊँ इति' इत्येव रूपं शाकल्यमते सिध्यति। अन्येषां तु मते नित्यं प्रगृह्य इति 'उ इति' इत्येव रूपं सिध्यति, वितीति रूपं तु न सिध्यत्येवेति ज्ञेयम्। **ऊँ**। **अनुनासिक इति**। तेनास्मिन् परे 'यरोऽनुनासिके—' इति विकल्पः। यदेतनूँ इति पठसि यदेतदूँ इति वा। एतदर्थमेवात्रानुनासिकग्रहणम्। अन्यथा 'यरो ञम्यनुनासिको वा' इत्येवावक्ष्यत्। 'यरो ञमि ञं वा' इत्येवावक्ष्यदित्युक्तौ तु यथासंख्यप्रवृत्त्या अम्मयं तन्नेत्यादिसिद्धावपि चिन्मयम्, एतन्मुरारिरिति न सिध्येत्। 'कृन्मेजन्तः' 'ङमुण्नित्यम्' इत्यादिनिर्देशाश्रयणे तु

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विति। १०८ **मय उञो वो वा। ( ८-३-३३ )** मयः परस्य उञो वो वा स्यादचि। किमु उक्तम्, किम्वुक्तम्। वस्यासिद्धत्वान्नानुस्वारः। १०९ **ईदूतौ च सप्तम्यर्थे। ( १-१-१९ )** सप्तम्यर्थे पर्यवसन्नमीदूदन्तं प्रगृह्यं स्यात्। सोमो

---

अतो विभज्य व्याख्यातम्। **मय उञो वो वा।** मय इति पञ्चमी, उञ इति षष्ठी, 'ङमो ह्रस्वादचि' इत्यतः अचीत्यनुवर्तते। तदाह—**मयः परस्येत्यादिना। किम्वुक्तमिति।** किमु उक्तमिति स्थिते मकारादुकारस्य उञो 'निपात एकाज्' इति नित्यं प्रगृह्यत्वात् प्रकृतिभावाद् यणभावे प्राप्ते वत्ववचनमिदम्। ननु तर्हि 'इको यणचि' इत्यनन्तरमेव 'मय उञो वा' इति पठितव्यम्, वग्रहणाभावेन लाघवात्। त्रिपाद्यां पाठे वग्रहणस्यापि कर्तव्यत्वेन गौरवादित्यत आह—**वत्वस्येति।** यदि षष्ठस्य प्रथमे पादे 'इको यणचि' इत्यत्रैव मय उञो यणादेशविकल्पो विधीयेत, तर्हि किम्वुक्तमित्यत्र 'मोऽनुस्वारः' इति मकारस्य वकारे परे अनुस्वारः स्यात्। त्रिपाद्यां वत्वविधौ तु तस्यासिद्धत्वान्नानुस्वारः। त्रिपाद्यामनुस्वारविध्यपेक्षया वत्वविधेः परत्वादिति भावः।

**ईदूतौ च।** 'प्रगृह्यम्' इत्यनुवर्तते। तच्च द्विवचनान्ततया विपरिणम्यते। शब्दस्वरूपस्य विशेष्यत्वात्तदन्तविधिः। इदूतौ च सप्तम्याविल्येव सिद्धे अर्थग्रहणाद्यत्र सप्तम्या लुकि 'यः शिष्यते स लुप्यमानार्थाभिधायी' इति न्यायेन प्रकृतेरेव सप्तम्यर्थे पर्यवसानं तथाविधत्वमीदूदन्तयोर्गम्यते। तथाच सप्तम्यर्थे पर्यवसन्नावीदूदन्तौ शब्दौ

---

प्रतिपत्तिगौरवम्। वस्तुतस्तु 'यरोऽनुनासिके ञं वा' इत्येव सूत्रयितुं युक्तमित्याहुः। प्रगृह्यमित्यनुवर्तनादाह—**प्रगृह्यश्चेति।** ननु दीर्घोच्चारणसामर्थ्यादेव प्रकृतिभावसिद्धौ किमनेन प्रगृह्यत्वेनेति चेदत्राहुः—प्रगृह्याप्रगृह्ययोर्द्वयोरप्युञोरादेशापत्तौ प्रगृह्यादेशे प्रकृतिभावादिष्टसिद्धावपि अप्रगृह्यादेशस्यानुनासिको वकारः स्यात्तद्वारणाय प्रगृह्यत्वाश्रयणमिति। आदेशस्यास्य स्थानिवत्त्वेनोत्वादुञ इति प्रगृह्यत्वविकल्पे प्राप्ते नित्यार्थं तदाश्रयणमित्यन्ये। यदि तु प्रगृह्यमित्यस्य स्थानिविशेषणत्वं स्वीकृत्य 'प्रगृह्यस्योञः ऊँ इत्ययमादेशः' इति व्याख्यायते, तदा दीर्घानुनासिकोक्तिवत्प्रगृह्यश्चेत्युक्तिरपि स्वरूपकथनमेवेति बोध्यम्। ऊँ इत्यत्र यदि शाकल्यस्येति नापेक्ष्यते, तदा प्रगृह्यस्योञो नित्यमादेशः स्यात्ततश्च विति ऊँ इति एते द्वे रूपे स्याताम्, तस्माच्छाकल्यग्रहणानुवृत्त्या आदेशविकल्पे सिद्धे त्रीणि रूपाणि सिध्यन्तीति कैयटस्तदाह—**अयमादेशो वा स्यादिति। वस्यासिद्धत्वादिति।** अत एवेदं वत्वं त्रिपाद्यां विधीयते। प्रकृतिभावमात्रबाधनार्थत्वे हि 'इको यण्—' इत्यनन्तरं 'मय उञो वा' इत्येवावक्ष्यत्, यणं चान्ववर्तयिष्यत्। **ईदूतौ च।** ईदूताविति किम्, 'प्रियः सूर्ये प्रियो

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गौरी अधिश्रितः। मामकी तनू इति। 'सुपां सुलुक्—' (सू ३५६१) इति सप्तम्या लुक्। अर्थग्रहणं किम्—वृत्तावर्थान्तरोपसंक्रान्ते मा भूत्। वाप्यामश्वो वाप्यश्वः। ११० अणोऽप्रगृह्यस्यानुनासिकः। (८-४-५७) अप्रगृह्यस्याणोऽवसानेऽनुनासिको वा स्यात्। दधिँ, दधि। 'अप्रगृह्यस्य' किम्। अग्नी॥

॥ इति अच्सन्धिप्रकरणम्॥

---

प्रगृह्यौ स्त इत्यक्षरार्थः। फलितमाह—**सप्तम्यर्थ इत्यादिना। सोमो गौरी अधिश्रित इति।** गौर्यामित्यर्थः। 'सुपां सुलुग्' इति सप्तम्या लुक्। प्रगृह्यत्वे प्रकृतिभावान्न यण्। वातप्रमीत्यादि सप्तम्यन्तं तु नात्रोदाहरणम्, तत्र सप्तम्या लुप्तत्वाभावेन प्रकृतेः सप्तम्यर्थे अप्रवृत्तेः। **मामकी तनू इति।** मामक्यां तन्वामित्यर्थः। 'सुपां सुलुग्' इति सप्तम्या लुक्। प्रगृह्येभ्यः परत इतिशब्दप्रयोगस्य पदकारैर्नियमितत्वात् पदपाठे मामकी इति तनू इतीत्यत्र प्रगृह्यत्वफलं बोध्यम्[1]। ननु 'ईदूतौ च सप्तम्याः' इत्येव सूत्र्यताम्। षष्ठ्या च अर्थद्वारा संबन्धो विवक्ष्यताम्। ततश्च सप्तम्यर्थे विद्यमानमीदूदन्तमित्यर्थस्य अर्थग्रहणं विनैव लाभादर्थग्रहणं किमर्थमिति पृच्छति—**अर्थग्रहणं किमिति।** कस्मै प्रयोजनायेत्यर्थः। किमित्यव्ययम्। **वृत्ताविति।** अर्थग्रहणसामर्थ्याद् लुप्तसप्तम्यर्थमात्रे पर्यवसन्नमित्यर्थो विवक्षितः। ततश्च समासवृत्तौ लुप्तसप्तमीके इदूदन्तपूर्वपदे सप्तम्यर्थमतिलङ्घ्य उत्तरपदार्थे प्रवृत्ते सति प्रगृह्यसंज्ञा न भवति। **मा भूदिति।** 'माङि लुङ्'। सर्वलकारापवादः। **वाप्यामश्वो वाप्यश्व इति।** वाप्याम् अश्व इति विग्रहे 'सुप्सुपा' इति समासे वाप्यश्व इति रूपमित्यर्थः। अत्र वाप्यामिति सप्तम्या अधिकरणत्वमवगतम्। तच्चाधिकरणकारकं क्रियापेक्षम्। तत्र वाप्यामश्वो वर्तत इति क्रियाध्याहारे वर्तमानक्रियायां वाप्या अधिकरणत्वेन अश्वस्य कर्तृत्वेनान्वयात्तयोः परस्परमन्वयाभावादसामर्थ्यात् समासो नोपपद्यते। वाप्यां विद्यमानोऽश्व इति विद्यमानपदस्याध्याहारेऽपि अश्वपदेनासामर्थ्यात् समासो न संभवति। अतः वाप्यामित्यस्य वाप्यां विद्यमाने अश्वे लक्षणया प्रवृत्तिं पुरस्कृत्य समासो वक्तव्यः। एवं च समासे लुप्तसप्तमीकस्य वापीशब्दस्य सप्तम्यर्थमतिलङ्घ्य तत्संसृष्टे आधेयभूते अश्वेऽपि प्रवृत्तेः सप्तम्यर्थमात्रविश्रान्त्यभावान्न प्रगृह्यत्वमिति भावः। **अणोऽप्रगृह्यस्य।** 'वा अवसाने' इत्यनुवर्तते। तदाह—**अप्रगृह्येत्यादिना।** अत्र अण् पूर्वेणैव

---

अग्ना भवाति'। अग्निशब्दात्परस्याः सप्तम्याः 'सुपां सुलुग्—' इत्यादिना 'डा' आदेशः। पदकारैः प्रगृह्येषु इतिशब्दप्रयोगस्य नियमितत्वेन इहापि पदकाले इतिशब्दप्रयोगप्रसङ्गः, स चानिष्ट इति बोध्यम्। सप्तमीग्रहणं किम्, धीती, मती, सुष्टुती। धीत्या,

---

१ 'प्रगृह्यत्वं फलमत्र बोध्यम्' इति क।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# अथ हल्सन्धिप्रकरणम् । ५ ।

१११ **स्तोः श्चुना श्चुः ।** (८-४-४०) सकारतवर्गयोः शकारचवर्गा-

---

णकारेण, व्याख्यानात् । ततश्च कर्तृ इत्यत्र नानुनासिकः । **इत्यच्सन्धीति ।** अल्पाच्तरमिति, सिद्धमनच्त्वादिति, कथमनच्त्वमिति च सूत्रवार्तिकभाष्यप्रयोगादेवंजातीयस्थलेषु असंदेहार्थं सन्ध्यभावोऽभ्यनुज्ञातः, अतोऽत्र कुत्वश्चुत्वयोरभावेऽपि न दोषः ।

इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां
बालमनोरमायामच्सन्धिप्रकरणं समाप्तम् ।

**स्तोः श्चुना श्चुः ।** स् च तुश्चेति समाहारद्वन्द्वः । पुंस्त्वमार्षम् । इतरेतरयोगद्वन्द्वो वा । तथा सत्येकवचनमार्षम् । एवं श्चुना श्चुरित्यत्रापि । श्चुनेति सहार्थे तृतीया । योगे इत्यध्याहार्यम् । ततश्च सहशब्दयोगाभावेऽपि तदर्थस्य गम्यत्वात्तृतीया युज्यते, अस्मादेव निर्देशात् । तदाह—**सकारतवर्गयोरित्यादिना ।** अत्र स्थान्या-

---

मत्या; सुष्ठुत्या, इति प्राप्ते तृतीयैकवचनस्य पूर्वसवर्णे ईकारः । ततः 'अकः सवर्णे दीर्घः' इत्येकादेशः । न त्विह 'सुपां सुलुक्—' इति लुक्, ह्रस्वश्रवणापत्तेः । **सोमो गौरी इति ।** वातप्रमी अत्र, यथी आसक्तः—इत्याद्युदाहरणे सत्यप्यूकारान्तस्य लौकिकोदाहरणाभावाद् उभयोरपि वेद एवोदाहरणमुक्तम् । **मामकी तनू इति ।** यद्यप्यत्र संहितायां प्रगृह्यप्रयोजनं नास्ति, तथापि 'मामकी इति' 'तनू इति' पदकाले तदस्त्येव, 'स्वायां तनू ऋत्व्ये नाधमानाम्' इत्यत्र तु संहिताकालेऽप्यस्ति, तथापि 'ऋत्यकः' इति पाक्षिकप्रकृतिभावेनाप्येतत्सिद्धम्, छन्दसि रूपान्तरस्यापादयितुमशक्यत्वादिति बोध्यम् । **सप्तम्या लुगिति ।** यदि धीत्यादाविव विभक्तेः पूर्वसवर्णे कृते सवर्णदीर्घे एकादेश इति व्याख्यायेत तदा एकादेशं बाधित्वा परत्वादाङ्गत्वाच्च 'आण्नद्याः' इत्याट्, ङेराम् च स्यादिति भावः । **अर्थग्रहणं किमिति ।** वाप्यश्व इत्यादावपि सप्तम्यर्थोऽस्त्येवेति नार्थोऽर्थग्रहणेनेति प्रश्नः । **अर्थान्तरोपसंक्रान्त इति ।** वाप्यश्व इत्यत्र यो वापीशब्दः स तु वाप्यधिकरणकद्रव्ये उपसंक्रान्तः, सोमो गौरी इत्यत्र गौरीशब्दस्तु सप्तम्यर्थमात्रे पर्यवसन्नः, न तु तदधिकरणकद्रव्ये उपसंक्रान्तः, वृत्त्यभावादिति भेदः । **अणोऽप्रगृह्यस्य ।** अण इति किम् , हर्तृ कर्तृ । **अच्सन्धिरिति ।** कुत्वं श्चुत्वं वात्र न कृतं स्पष्टप्रतिपत्त्यर्थम् । अत एवानुस्वारस्याप्यच्त्वादित्यादिनिर्देशोऽप्युपपन्नः ॥

॥ इति तत्त्वबोधिन्यामच्सन्धिप्रकरणम् ॥

**अथ हल्सन्धिः । स्तोः श्चुना श्चुः ।** स्तोरिति समाहारद्वन्द्वः, सौत्रं पुंस्त्वम् । एवं श्चुः ष्टुरित्यपि बोध्यम् । **श्चुनेति ।** 'सह युक्ते—' इति सूत्रे 'विनापि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भ्यां योगे शकारचवर्गौ स्तः। हरिश्शेते। रामश्चिनोति। सच्चित्। शार्ङ्गिञ्जय।

**११२ शात्।** ( ८-४-४४ ) शात्परस्य तवर्गस्य चुत्वं न स्यात्। विश्नः। प्रश्नः।

---

देशानां यथासंख्यं भवति। ततश्च सकारस्य शकारः, तवर्गस्य चवर्गः। तत्रापि त-थ-द-ध-नानां क्रमेण च-छ-ज-झ-ञा इति फलितम्। त, थ, द, ध, न, इत्यादि-क्रमस्याप्यनादिलोकसिद्धत्वात्। श्चुना योगे इत्यत्र न यथासंख्यमित्युत्तरसूत्रे वक्ष्यते। ततश्च सकारस्य तवर्गस्य शकारेण चवर्गेण च यथासंभवं योगे श्चुत्वं भवति। **रामश्शेते इति।** रामस् शेते इति स्थिते, शकारेण योगात् सकारस्य शकारः। 'श्चुना योगे इत्यत्र न यथासङ्ख्यम्' इत्यस्य प्रयोजनं दर्शयितुं सकारस्य चकारयोगेऽप्युदाहरति—**रामश्चिनोतीति।** रामस् चिनोतीति स्थिते, चवर्गयोगात् सकारस्य शकारः। श्चुना योगे इत्यत्रापि यथासंख्याश्रयणे तु इह सकारस्य शकारयोगाभावात् शकारो न स्यादिति भावः। **सच्चिदिति।** सत् चित् इति स्थिते, श्चुत्वस्यासिद्धत्वाद् जश्त्वेन तकारस्य दत्वे, तस्य श्चुत्वेन जकारे, 'खरि च' इति चर्त्वेन तस्य चकारे च रूपम्। शार्ङ्गिन् जयेति स्थिते, चवर्गयोगाद् नकारस्य श्चुत्वं ञकारः। **शात्।** 'न पदान्तात्' इति पूर्वसूत्राद् नेत्यनुवर्तते। 'स्तोः श्चुना श्चुः' इत्यतः तोरिति चुरिति चानुवर्तते। न तु सकारः शकारश्च। शादिति दिग्योगे पञ्चमी। परस्येत्यध्याहार्थम्। तदाह—**शात्परस्येत्यादिना। विश्न इति।** 'विच्छ् गतौ'। 'यजयाचयतविच्छप्रच्छरक्षो नङ्' इति नङ्। 'च्छ्वोश्शूड्' इति छस्य शः। ङित्वान्न गुणः। अत्र शकारयोगात् तवर्गीयनकारस्य श्चुत्वेन ञकारे प्राप्ते निषेधः। पूर्वसूत्रे श्चुना योगे इत्यत्रापि यथासङ्ख्याश्रयणे तु इह तवर्गीयस्य नस्य चुना योगाभावेन चुत्वस्याप्रसक्ततया तन्निषेधो व्यर्थः स्यात्। एवं च अस्मादेव निषेधात् पूर्वसूत्रे श्चुना योगे इत्यत्र न यथासंख्याश्रयणमिति विज्ञायते। **प्रश्न इति।** 'प्रच्छ ज्ञीप्सायाम्' पूर्ववद्

---

तद्योगं तृतीया' इति वक्ष्यमाणत्वात्तृतीया। **योगे इति**। एतदध्याहारलभ्यम्। अत्र स्थान्यादेशयोर्यथासंख्यम्। निमित्तकार्यिणोस्तु न, 'शात्' इति ज्ञापकात्। यथासंख्यसूत्रमिह नोपन्यस्तम्। 'स्थानेऽन्तरतमः' इत्यनेनापि इष्टसिद्धेर्नात्यन्तावश्यकत्वात्। **हरिश्शेत इति।** 'वा शरि' इति पाक्षिकत्वाद्विसर्जनीयस्य सः, तस्य शेन योगे शः। चवर्गयोगे रामश्चिनोति। तवर्गस्य तु चवर्गयोगे सच्चिदित्यादि। शेन योगे तु तच्शिव इत्याद्युदाहरिष्यति। **शात्।** नेति तोरिति चानुवर्तते तदाह—**तवर्गस्येत्यादि।** जश्त्वमित्यादिव्याख्यातृनिर्देशे निःसंदिग्धत्वेन बोधनाय 'व्रश्च–' इति षत्वं जश्त्वं च न कृतम्, तथा श्चुत्वमपि न कृतमिति परिहारसंभवाद्ग्रन्थमेवोदाहरति—**विश्नः प्रश्न इति।** 'विच्छ् गतौ', 'प्रच्छ् ज्ञीप्सायाम्'। 'यजयाच–' इत्यादिना नङ्। 'छ्वोः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

**११३ ष्टुना ष्टुः । ( ८-४-४१ )** स्तोः ष्टुना योगे ष्टुः स्यात् । रामष्षष्ठः । रामष्टीकते । पेष्टा । तट्टीका । चक्रिण्ढौकसे । **११४ न पदान्ताट्टोरनाम् ( ८-**

---

नङादि । अत्र 'प्रहिज्या' इति संप्रसारणं न । 'प्रश्ने चासन्नकाले' इत्यादिनिर्देशात् । अत्र वर्गपञ्चमानां नासिकास्थानाधिक्येऽपि तत्तद्वर्गीयैरस्ति सावर्ण्यमिति 'तुल्यास्य-' सूत्रे अवोचाम । **ष्टुना ष्टुः** । स्तोरित्यनुवर्तते । तदाह—**स्तोरिति** । अत्रापि स्थान्यादेशानां यथासंख्यम् । न तु ष्टुयोग इत्यत्र । **रामष्षष्ठ इति** । रामस् षष्ठ इति स्थिते षकारयोगात् सस्य ष्टुत्वेन षः । अत्रापि ष्टुना योग इत्यत्र न यथासंख्यमित्यस्य प्रयोजनं दर्शयितुं सकारस्य टवर्गयोगेऽपि उदाहरति—**रामष्टीकत इति** । 'टीकृ गतौ' । **तट्टीकेति** । तस्य टीकेति विग्रहः, तद् टीका इति स्थिते ष्टुत्वेन दस्य डत्वे चर्त्वम् । **चक्रिण्ढौकस इति** । 'ढौकृ गतौ' । चक्रिन् ढौकसे इति स्थिते टवर्गयोगाद् नस्य टुत्वेन णत्वम् ।

**न पदान्तात्** । अनामिति तोरित्यस्य विशेषणम् । ननु भिन्नविभक्तिकमेत-

---

शूड्-' इति छस्य शत्वम् । नङो ङित्वाद् गुणाभावः । प्रच्छेस्तु 'प्रश्ने चासन्न-' इति निर्देशात्संप्रसारणाभावः । ननु ञमङणनानां नासिकास्थानाधिक्याद्वर्गेष्वाद्यैश्चतुर्भिः सह तुल्यस्थानत्वाभावेन सावर्ण्याभावात् 'स्तोः श्चुना-' इति तुशब्देन नकारो न गृह्यते, किं तु स्ववर्गाद्याश्चत्वार एवेति विश्नः प्रश्न इत्यत्र श्चुत्वाप्रसक्तेः किमनेन निषेधेनेति चेदत्राहुः । 'शात्' इति निषेधाल्लिङ्गादेव 'तुल्यास्यप्रयत्नम्-' इत्यत्रास्य ग्रहणेन नासिकास्थानभिन्नं ताल्वादिस्थानं गृह्यते, तत्स्थानं तु तुल्यमेवेति तुशब्देन पञ्चमस्यापि ग्रहणात् श्चुत्वप्रसक्तौ निषेधोऽयमावश्यकः । एवं च 'तोर्लि' इति तुशब्देन नकारस्यापि ग्रहणाद् विद्वाँल्लिखति इत्यादि सिध्यति । न च निमित्तकार्यिणोर्यथासंख्य-निरासज्ञापकमित्युक्तत्वात्तेनैव चार्थवत्त्वे कथमुक्तार्थे ज्ञापकं भवेदिति वाच्यम् । तुशब्देन नकारग्रहणे सिद्धे हि यथासंख्यनिवृत्तिरनेन ज्ञापनीयेत्युभयज्ञापने बाधकाभावात् । नापि 'तुल्यास्य-' इत्यत्र यत्किंचित्स्थानतुल्यत्वविवक्षायां वर्गेषु पञ्चापि वर्णाः परस्परं सवर्णा भवेयुरित्युक्तोदाहरणे श्चुत्वप्रसक्तौ 'शात्' इत्यारम्भ आवश्यक इत्येतज्ज्ञापकाश्रयणं किमर्थमिति वाच्यम् । तथा हि सति ञमङणनानां परस्परसावर्ण्यापत्त्या त्वं नयसीत्यादौ 'अनुस्वारस्य ययि परसवर्णः', 'वा पदान्तस्य' इत्यनुस्वारस्य ञादयोऽपि स्युः । ताल्वादिस्थानसाम्याभावेऽपि नासिकारूपस्य यत्किंचित्स्थानस्य तुल्यत्वात् । नापि तुल्यास्यत्वम् अन्यूनास्यत्वमिति व्याख्यायां ञादीनां परस्परसावर्ण्यं न भवेत्, तेषां नासिकास्थानसाम्येऽपि ताल्वादिस्थानसाम्याभावेन न्यूनस्थानकत्वात् । ततश्च त्वं नयसीत्यादिषु नातिप्रसङ्गः, स्ववर्ग्यैः सह तु ञादीनां सावर्ण्यं स्यादेव । नासिकास्थानाधि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

४-४२ ) 'अनाम्' इति लुप्तषष्ठीकं पदम्। पदान्ताट्टवर्गात्परस्यानामः स्तोः ष्टुर्न स्यात्। षट् सन्तः। षट् ते। 'पदान्तात्' किम्—ईट्टे। 'टोः' किम्—सर्पिष्टमम्। 'अनाम्नवतिनगरीणामिति वाच्यम्' (वा ५०१६)। षण्णाम्।

---

त्कथं तद्विशेषणमित्यत आह—**अनामिति लुप्तषष्ठीकमिति**। नामवयवभिन्नस्ये-त्यर्थः। 'स्तोः' 'ष्टुः' इत्यनुवर्तते। तदाह—**पदान्तादित्यादिना। ईट्ट इति**। 'ईड् स्तुतौ' आत्मनेपदी, ईड् ते इति स्थिते 'खरि च' इति डस्य चर्त्वम्, ततः परस्य तकारस्य ष्टुत्वम्। तस्य टवर्गात् परत्वेऽपि पदान्तात् परत्वाभावाद् न ष्टुत्वनिषेधः। **सर्पिष्टममिति**। सर्पिष् तमम् इति स्थिते 'स्वादिष्वसर्वनामस्थाने' इति अन्तर्वर्तिनीं विभक्तिमाश्रित्य वा पदत्वात्, षकारस्य पदान्तत्वात्ततः परस्य तकारस्य ष्टुत्वनिषेधो न भवति, पदान्ताट्टवर्गात्परत्वाभावात्। न च षकारस्य 'झलाञ्जशोऽन्ते' इति जश्त्वेन डकारे सति तकारस्य टोः परत्वात् ष्टुत्वनिषेधः स्यादेवेति वाच्यम्। 'ह्रस्वात्तादौ तद्धिते' इति षत्वस्यासिद्धत्वेन जश्त्वाभावात्। इह 'आदेशप्रत्यययोः' इति षत्वं तु न भवति, 'अपदान्तस्य मूर्धन्यः' इत्यधिकारात्। **अनाम्नवति**। ष्टुत्वप्रतिषेधे नाम एव पर्युदासो न भवति, किन्तु नवतिनगरीशब्दावयवनकारस्यापि पर्युदासो वक्तव्य इत्यर्थः। **षण्णामिति**। षष् नामिति स्थिते 'स्वादिष्वसर्वनामस्थाने' इति

---

क्येऽपि तदन्यूनस्थानकत्वात्तेषामिति विद्वाँल्लिखतीत्यादीष्टं सिध्यति, वर्गाद्यानां तु नासिकास्थानाभावेन न्यूनस्थानकत्वात्पञ्चमेन च सावर्ण्याभावेऽपि न क्षतिरिति ज्ञापकाश्रयणं विनैवेष्टसिद्धिरिति वाच्यम्। हे गौरि एहीत्यादौ सवर्णदीर्घापत्तेः। 'इकोऽसवर्णे—' इति शाकलप्रकृतिभावानापत्तेश्च। इकारान्यूनस्थानकत्वेन तत्सवर्णत्वादेकारस्य। 'स्वराणामूष्मणां चैव विवृतं करणं स्मृतम्। तेभ्योऽपि विवृतावेङौ ताभ्यामैचौ तथैव च'॥ इति वचनात्प्रयत्नभेदेन सावर्ण्याभावमभ्युपगम्योक्तानिष्टवारणेऽपि तद्वस्तु तद्वत्रमित्यत्र 'तोर्लि' इति परसवर्णविधिना दकारस्य वकारापत्तेः। वकारस्य ओष्ठस्थानाधिक्येऽपि दन्तस्थानसाम्येन लकारान्यूनस्थानकत्वात्। यदि तु 'वकारस्य दन्तोष्ठम्' इति समाहारनिर्देशाद् ओष्ठस्थानदन्तस्थानभिन्नमेव दन्तोष्ठस्थानमिति वकारस्य लकारसावर्ण्याभावात्तद्वस्त्वित्यादौ नातिप्रसङ्ग इति ब्रूषे, तर्हि 'लुग्वा दुह—' इत्यादिना दन्त्ये तङि विधीयमानो यः क्सस्तस्य लुक् अदुग्धहीत्यत्र न स्यात्, किं तु अदुग्धेत्यादावेव स्यात्। तथा पिपूर्तः पिपुरतीत्यादौ विधीयमानम् 'उदोष्ठ्यपूर्वस्य' इत्युत्वं सुस्वूर्षतीत्यादौ न स्यात् उक्तरीत्या वकारस्यौष्ठ्यत्वाभावात्। न च वस्यौष्ठ्यत्वे दन्त्यत्वे च सति 'सेवसृप्—' इति षोपदेशलक्षणे स्विदादीनां पृथग्ग्रहणं व्यर्थं स्यात्, तेषामपि दन्त्यान्तसादित्वादिति भ्रमितव्यम्। 'दन्त्यः केवलदन्त्यो न तु दन्तोष्ठजोऽपि' इत्यादेर्मूल एव वक्ष्यमाणत्वात्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

षण्णवतिः। षण्णगर्यः। ११५ **तोः षि।** ( ८-४-४३ ) तवर्गस्य षकारे परे न ष्टुत्वम्। सन्षष्ठः। **झलां जशोऽन्ते** ( सू ८४ ) वागीशः। चिद्रूपम्। ११६ **यरोऽनुनासिकेऽनुनासिको वा।** ( ८-४-४५ ) यरः पदान्तस्यानुनासिके

---

पदान्तत्वात् षस्य जश्त्वेन डकारे 'प्रत्यये भाषायां नित्यम्' इति तस्य णकारः। अत्र टवर्गयोगाद् नकारस्य ष्टुत्वम्। 'न पदान्ताद्' इति निषेधस्तु न, अनामिति पर्युदासात्। **षण्णवतिरिति**। षडधिका नवतिरिति विग्रहः। अत्रापि नकारस्य न ष्टुत्वनिषेधः, नवतिशब्दस्यापि पर्युदासात्। **षण्णगर्य इति**। पृथक्पदे। न तु कर्मधारयः, 'दिक्संख्ये संज्ञायाम्' इति नियमात्। अत्रापि 'न पदान्तात्–' इति नगरीशब्दे नकारस्य ष्टुत्वनिषेधो न भवति, नगरीशब्दस्यापि पर्युदासात्। **तोःषि**। ष्टुरिति नेति चानुवर्तते। तदाह—**तवर्गस्येति**। **सन्षष्ठ इति**। अत्र नकारस्य षकारयोगात् ष्टुत्वं प्राप्तं निषिध्यते। अस्मादेव ज्ञापकात् 'ष्टुना ष्टुः' इत्यत्र ष्टुना योगे इत्यत्र यथासंख्यं नेति विज्ञायते। 'झलाञ्जशोऽन्ते' इत्यच्सन्धिनिरूपणे प्रसङ्गादुपन्यस्तम्। हल्सन्धिप्रस्तावे पुनस्तदुपन्यासः।

**यरोऽनुनासिके**। 'न पदान्ताट्टोः' इत्यतः पदान्तादित्यनुवर्तते। तच्च षष्ठ्यन्ततया विपरिणम्यते। तदाह—**यरः पदान्तस्येति**। एतन्मुरारिरिति कर्मधारयः। एतद् मुरारिरिति स्थिते दस्य अनुनासिको नकारः, दन्तस्थानसाम्यात् स्पृष्टप्रयत्नसाम्याच्च। ननु चतुर्मुख इत्यत्रापि रेफस्य अनुनासिको णकारः स्यात्, रेफणकारयोः

---

ये तु पाणिनिशिक्षायां यमानुस्वारयोरेव नासिकास्थानत्वकथनादन्येषां स्थानं नासिका न भवति, किं त्वनुनासिकत्वं गुण एव, नासिकाव्यापारेणोच्चार्यमाणत्वमात्रेण नासिकास्थानत्वकथने त्वकारादीनामप्युक्तरीत्या नासिकास्थानमिति स्थाननिरूपणे तेषां तदकथनान्न्यूनतेत्यादि वदन्ति। तेषामत्रोक्तज्ञापकाश्रयणं विनैवेष्टसिद्धिः। अन्ये त्वकारादीनां नासिकया सर्वदानुच्चारणादनुनासिकत्वं गुणः, 'सत्त्वे निविशतेऽपैति–' इत्यादिलक्षणलक्षितत्वात्। ञमङणनानां त्वनुनासिकत्वं नापैति सर्वदैव तथोच्चारणादिति न गुणः, किं तु यमानुस्वारयोरिव स्थानमेव नासिकेति स्थाननिरूपणे 'ञमङणनानां नासिका च' इत्युक्तम् नत्वकारादीनां नासिका चेति। यत्तूक्तं तुल्यास्यत्वमन्यूनास्यत्वमिति व्याख्यायां तद्वस्त्वित्यादौ 'तोर्लि' इति दकारस्य वकारप्रसङ्ग इति। तदापाततः। 'तोर्लि' इत्यत्र लकारद्वयनिर्देश इति स्वीकृत्य लकाररूपे लकारे परे परसवर्ण इति व्याख्याया-मुक्तदोषाप्रसक्तेरित्याहुः। **ष्टुना ष्टुः**। इहापि कार्यिनिमित्तयोर्यथासंख्यं न, 'तोः षिः' इति ज्ञापकात्। **सर्पिष्टमिति**। 'ह्रस्वात्तादौ तद्धिते' इति षत्वम्। **यरो**। पदान्तस्येति किम्, वेद्मि। स्तभ्नाति। **स्पर्शे चरितार्थ इति**। प्रसिद्धप्रयोगाभिप्रायेणोद-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

परेऽनुनासिको वा स्यात्। एतन्मुरारिः, एतद्मुरारिः, स्थानप्रयत्नाभ्यामन्तरतमे स्पर्शे चरितार्थो विधिरयं रेफे न प्रवर्तते। चतुर्मुखः। 'प्रत्यये भाषायां नित्यम्' (वा ५०१७)। तन्मात्रम्। चिन्मयम्। कथं तर्हि 'मदोदग्राः ककुद्मन्तः' इति? यवादि (ग २५०) गणे दकारनिपातनात्। ११७ तोर्लि। (८-४-६०) तवर्गस्य लकारे परे परसवर्णः स्यात्। तल्लयः। विद्वाल्ँलिखति। नकारस्यानुना-

---

स्पृष्टेषत्स्पृष्टप्रयत्नभेदेऽपि मूर्धस्थानान्तर्यादित्यत आह—**स्थानेति**। एतन्मुरारिरित्यादौ स्थानतः प्रयत्नतश्चान्तरतमे स्पर्शे चरितार्थो लब्धप्रयोजनोऽयमनुनासिकविधिः स्थानमात्रेण आन्तर्यमादाय रेफे न प्रवृत्तिमर्हतीत्यर्थः। 'यूनि लब्धे तु युवतिर्जरठे रमते कथम्' इति न्यायादिति भावः। **प्रत्यये भाषायां नित्यम्**। वार्तिकमेतत्। भाषा लौकिकप्रयोगः। तत्र प्रत्यये विद्यमाने अनुनासिके परतः प्रागुक्तोऽनुनासिको नित्यं भवतीत्यर्थः। **तन्मात्रमिति**। तत् प्रमाणं यस्य तत् तन्मात्रम् 'प्रमाणे द्वयसज्दघ्नञ्मात्रचः' इति मात्रच्प्रत्ययः। **चिन्मयमिति**। 'नित्यं वृद्धशरादिभ्यः' इत्यत्र नित्यमिति योगविभागात्ताद्रूप्ये मयट्। **कथं तर्हीति**। यदि प्रत्यये परे नित्यमनुनासिकः स्यात्, तदा 'मदोदग्राः ककुद्मन्तः' इति कालिदासप्रयोगः कथमित्याक्षेपः। मतुपः प्रत्ययत्वेन तस्मिन् परे दकारस्य अनुनासिकनकारावश्यम्भावादिति भावः। परिहरति—**यवादीति**। यवादिगणे ककुद्मच्छब्दे दकारस्य निर्देशान्न तस्यानुनासिकः। यदि तत्र दकारस्य नकार एव इष्टः स्यात्, तर्हि नकारमेव लाघवान्निर्दिशेदिति भावः। **तोर्लि**। 'अनुस्वारस्य ययि' इत्यतः 'परसवर्णः' इत्यनुवर्तते। तदाह—**तवर्गस्येत्यादिना**। **तल्लय इति**। तस्य लय इति विग्रहः। तद् लय इति स्थिते दस्य परसवर्णः—परनिमित्तभूतलकारसवर्णो भवति। स च लकार एव, अन्यस्य तत्सावर्ण्याभावात्। **अत्र नकारस्येति**। विद्वाल्ँलिखतीत्यत्र विद्वान् लिखतीति स्थिते नकारस्य स्थानिनः अनुनासिकस्य परसवर्णो लकारो भवन् आन्तर्यादनुनासिक एव लकारो भवतीत्यर्थः।

---

मुक्तम्। कमल् मुरारिः, वृत्त्व् नेता इत्यादौ लकारवकारयोरनुनासिकप्रवृत्तौ बाधकाभावात्। स्पर्शस्यैवेष्यत इति प्राचो ग्रन्थानुरोधेन स्पर्शभिन्नेषु अनुनासिकविधिर्न प्रवर्तते, अनभिधानादिति वा योज्यम्। **रेफे न प्रवर्तत इति**। यद्यपि व्यक्तिः पदार्थ इति पक्षे लक्ष्यभेदे लक्षणभेदाद् अस्यां व्यक्तौ लक्षणस्याचरितार्थत्वाद्रेफेऽपि प्रवृत्तिर्दुर्वारैव, तथापि लक्ष्यानुरोधेन जातिपक्षमाश्रित्येदमुक्तम्। **दकारनिपातनादिति**। ननु यवादिगणे ककुदित्येव पठ्यते, न तु ककुद्मन्त इति मतुब्विशिष्टम्। तथाच यरोऽनुनासिको दुर्वारः। न च यरोऽनुनासिकप्रवृत्तौ झयन्तत्वाभावेन 'झयः' इति मतुपो

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सिको लकारः। ११८ उदः स्थास्तम्भोः पूर्वस्य। (८-४-६१) उदः परयोः स्थास्तम्भोः पूर्वसवर्णः स्यात्। 'आदेः परस्य' (सू ४४)। उत्थानम्। उत्तम्भनम्। अत्राघोषस्य महाप्राणस्य सस्य तादृश एव थकारः। तस्य 'झरो

---

उदः स्थास्तम्भोः। 'अनुस्वारस्य ययि परसवर्णः' इत्यत्र समासनिर्दिष्टमपि सवर्णग्रहणमिह निष्कृष्य सम्बध्यते, एकदेशे स्वरितत्वप्रतिज्ञानात्। उद इति पञ्चमी। अतः 'तस्मादित्युत्तरस्य' इति परिभाषया उदः परयोरिति लभ्यते। तदाह—उदः परयोरिति। पूर्वेति। पूर्वनिमित्तस्य उदो दकारस्य यः सवर्णः स आदेशः स्यादित्यर्थः। पूर्वसवर्णश्चायमलोऽन्त्यपरिभाषया स्थास्तम्भोरन्तादेशो न भवतीत्याह—आदेः परस्येति। अनया परिभाषया स्थास्तम्भोराद्यवयवस्य सकारस्यैव भवतीत्यर्थः। उत्थानमिति। 'ष्ठा गतिनिवृत्तौ' भावे ल्युट्। उत्तम्भनमिति। 'ष्टभि प्रतिष्टम्भे' भावे ल्युट्। 'स्तम्भु रोधने' इति श्नुविधौ निर्दिष्टः सौत्रो वा धातुः। 'स्थास्तम्भोः' इति पवर्गीयोपधनिर्देशस्य उभयसाधारणत्वात्। ननु उद् स्थानमित्यत्र सकारस्य पूर्वसवर्णविधौ पूर्वनिमित्तं दकारः, तत्सवर्णाश्च त-थ-द-ध-नाः पञ्चैव, दन्तस्थानसाम्यात् स्पृष्टप्रयत्नसाम्याच्च। न तु लृकारः सकारश्च, तयोः स्थानसाम्येऽपि विवृतप्रयत्नत्वात्। नापि लकारः, ईषत्स्पृष्टत्वात्। एतदतिरिक्ताश्च सर्वे वर्णाः भिन्नस्थानकत्वान्न दकारसवर्णाः। ततश्च पूर्वनिमित्तभूतदकारसवर्णाः त-थ-द-ध-नाः पञ्चापि सकारस्य प्राप्ताः। स्थानीभूतसकारेण दन्तस्थानत आन्तर्यस्य पञ्चस्वप्यविशिष्टत्वात्। आभ्यन्तरप्रयत्नत आन्तर्यस्य च पञ्चस्वप्यभावात्। स्थानीभूतसकारस्य विवृतप्रयत्नत्वात्, एतेषां च पञ्चानां स्पृष्टप्रयत्नत्वात्। अतोऽत्र बाह्यप्रयत्नत एवान्तर्यमादाय पञ्चस्वन्यतमव्यवस्थामाह—अत्राघोषस्य महाप्राणस्य सस्य तादृश एव थकार इति। अघोष-

---

मकारस्य वत्वाप्रसक्त्या यवादिगणे ककुदिति पाठो निरर्थकः स्यादिति वाच्यम्। अनुनासिकविधेरसिद्धत्वेन झयन्तत्वानपायाद् गणे तत्पाठस्य सार्थक्यादिति चेदत्राहुः। यद्यत्र ककुद्दकारस्य नकार इष्टः स्यात्तर्हि गणे 'ककुन्' इत्येव पठेत् न तु ककुदिति। मतुपः प्रकृतिभूतककुच्छब्दस्य नान्तत्वनिपातनेऽपि अन्यत्र दकारान्तप्रयोगस्य निर्बाधत्वात्, तस्माद्यरोऽनुनासिकोऽत्र न प्रवर्तत इति। अन्ये त्वाहुः—'यचि भं तसौ मत्वर्थे' इति संहितया पाठे तसाविति तात्पूर्वं दकारं प्रश्लिष्य भत्वेनाप्येतत्समाधातुं शक्यम्, तसाविति द्विवचननिर्देशस्तु दतयोः समाहारद्वन्द्वं कृत्वा इतरेतरयोगद्वन्द्वे कृते समुपपद्यत इति। उदः स्था। 'अनुस्वारस्य ययि—' इत्यत्र समस्तमपि सवर्णग्रहणमिह निष्कृष्य संबध्यते। एकदेशे स्वरितत्वप्रतिज्ञानादित्यभिप्रेत्याह—पूर्वसवर्णः स्यादिति।

---

१ 'पूर्वस्येति' इति क।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

झरि–' ( सू ७१ ) इति पाक्षिको लोपः। लोपाभावपक्षे तु थकारस्यैव श्रवणम्। नतु 'खरि च' ( सू १२१ ) इति चर्त्वम्। चर्त्वं प्रति थकारस्यासिद्धत्वात्।

११६ झयो होऽन्यतरस्याम्। ( ८-४-६२ ) झयः परस्य हस्य पूर्वसवर्णो

---

स्येत्यनेन श्वासवतो विवारवतश्चेत्युक्तप्रायम्, समनियतत्वात्। स्थानीभूतस्तावत् सकारः अघोषश्वासविवारमहाप्राणात्मकयत्नचतुष्टयवान्। तस्य त-थ-द-ध-नेषु प्रथमतृतीयपञ्चमा न भवन्ति, तेषामल्पप्राणत्वात्। नापि चतुर्थो भवति, तस्य घोषनादसंवारयत्नकत्वात्। द्वितीयस्तु थकारः अघोषश्वासविवारमहाप्राणात्मकयत्नचतुष्टयवान्। अतः स एव थकारः पूर्वनिमित्तभूतदकारसवर्णः सकारस्य भवतीत्यर्थः। एवं च उद् स्थानमिति स्थिते, दकारस्य 'खरि च' इति चर्त्वेन तकारे सकारस्य पूर्वसवर्णो थकारे उत्थ्थानमित्येकतकारं द्विथकारं च रूपं सिद्धम्। एवम् उत्थ्तम्भनमित्यत्रापि योज्यम्। तत्र द्वितकारमेकथकारं चेति विशेषः। **तस्येति**। सकारादेशस्य थकारस्येत्यर्थः। एवं च प्रथमथकारस्य लोपपक्षे एकतकारमेकथकारं च रूपमिति भावः। ननु प्रथमथकारस्य लोपाभावपक्षे एकतकारं द्विथकारं च रूपमित्यनुपपन्नम्, प्रथमथकारस्य 'खरि च' इति चर्त्वे सति द्वितकारमेकथकारमित्यापत्तेरित्यत आह—**लोपाभावेति, असिद्धत्वादिति**। 'खरि च' इति सूत्रापेक्षया 'उदस्स्थाः–' इत्यस्य परत्वादिति भावः। उत्त्त्तम्भनमिति त्रितकारपाठस्तु प्रामादिकः। उक्तप्रक्रियाया उभयत्रापि साधारण्यात्। केचित्तु 'न मुने' इत्यत्र नेति योगविभागमभ्युपगम्य पूर्वसवर्णस्य थकारस्य चर्त्वं प्रत्यसिद्धत्वाभावाच्चर्त्वे उत्त्त्तम्भनमिति त्रितकाररूपं कथञ्चित् साधयामासुः। तत्तु मूलकृतो न संमतम्, मूले उभयसाधारण्येनैव प्रक्रियानिरूपणात्। वस्तुतस्तु 'दीर्घादाचार्याणाम्' इत्युत्तरम् 'अनुस्वारस्य ययि परसवर्णः' 'वा पदान्तस्य' 'तोर्लि' 'उदस्स्थास्तम्भोः पूर्वस्य' 'झयो होऽन्यतरस्याम्' 'शश्छोऽटि' इति षट्सूत्रीपाठोत्तरं 'झलाञ्जश् झशि' 'अभ्यासे चर्च' 'खरि च' 'वावसाने' 'अणोऽप्रगृह्यस्यानुनासिकः' इति पञ्चसूत्रीपाठ इति 'हलो यमाम्' इति सूत्रस्थभाष्यसंमतः सूत्रक्रमः। एवं च 'खरि च' इति चर्त्वे कर्तव्ये 'उदस्स्थास्तम्भोः' इति पूर्वसवर्णस्य थकारस्य असिद्धत्वाभावाच्चर्त्वे उत्त्त्थानमिति द्वितकारमेकथकारं च रूपम्, उत्त्त्तम्भनमिति तु त्रितकारमेव रूपमिति शब्देन्दुशेखरे प्रपञ्चितम्।

**झयो हः**। झय इति पञ्चमी। परस्येत्यध्याहार्यम्। ह इति षष्ठी। 'उदस्स्थातम्भोः–' इत्यतः पूर्वस्येति 'अनुस्वारस्य ययि–' इत्यतः सवर्ण इति चानुवर्तते, तदाह—**झयः परस्येत्यादिना**। वाग्घरिरित्युदाहरणम्। वाच्शब्दश्चकारान्तः, कुत्वम्, जश्त्वम्, वाग् हरिरिति स्थिते हकारस्य पूर्वसवर्णविधौ गकारः पूर्वनिमित्तम्,

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वा स्यात् । घोषवतो नादवतो महाप्राणस्य संवृतकण्ठस्य हस्य तादृशो वर्गचतुर्थ एवादेशः । वाग्घरिः, वाग्हरिः । १२० शश्छोऽटि । ( ८-४-६३ ) पदान्ताज्झयः परस्य शस्य छो वा स्यादटि । दस्य श्चुत्वेन जकारे कृते, १२१ खरि च । ( ८-४-५५ ) खरि परे झलां चरः स्युः । इति जकारस्य चकारः । तच्छिवः, तच्शिवः । 'छत्वममीति वाच्यम्' ( वा ५०२५ ) तच्छ्लोकेन, तच्श्लोकेन । अमि किम्, वाक् श्च्योतति । १२२ मोऽनुस्वारः । ( ८-३-२३ ) मान्तस्य

---

तत्सवर्णाः क-ख-ग-घ-ङाः पञ्च । तेषां हकारेण स्थानिना स्थानत आन्तर्यमविशिष्टम् । आभ्यन्तरप्रयत्नसाम्यं तु पञ्चानामपि हकारेण स्थानिना न विद्यते, स्पृष्टविवृतप्रयत्नभेदात् । अतो बाह्ययत्नत आन्तर्यमादाय पञ्चस्वन्यतमव्यवस्थामाह—**घोषवत इत्यादिना** । स्थानीभूतो हकारो घोषनादसंवारमहाप्राणाख्ययत्नचतुष्टयवान् । तस्य क-ख-ग-घ-ङेषु प्रथमतृतीयपञ्चमा न भवन्ति, तेषामल्पप्राणत्वात् । द्वितीयः खकारो न भवति, तस्याघोषश्वासविवारयत्नकत्वात् । चतुर्थस्तु घकारो घोषनादसंवारमहाप्राणवान्, अतः स एव घकारो हकारस्य भवतीत्यर्थः । ततश्च वाग्घरिरिति भवति । पूर्वसवर्णाभावे तु वाग् हरिरिति । **शश्छोऽटि** । झय इति पञ्चम्यन्तमनुवर्तते । श इति षष्ठ्येकवचनम् । तदाह—**झयः परस्य शस्येति** । तद् शिव इति स्थिते दकारस्य श्चुत्वेन जकारे कृते, जकारस्य चकार इत्यन्वयः । केनेत्यत आह—**खरि च** । 'झलाञ्जशझशि' इत्यतो झलामिति, अभ्यासे चर्च इत्यतश्चरिति चानुवर्तते । तदाह—**खरि पर इत्यादिना । इति जकारस्य चकार इति** । स्थानत आन्तर्यादिति भावः । ततः छत्वम् । नतु प्रागित्यपि बोध्यम् । छत्वस्य श्चुत्वचर्त्वे प्रत्यसिद्धत्वात् । 'हलो यमाम्' इति सूत्रस्थभाष्यसंमतसूत्रक्रमे तु श्चुत्वेन जकारे कृते, शस्य छत्वम्, ततो जकारस्य चर्त्वम् । न तु छत्वात् प्राक् चर्त्वम्, चर्त्वं प्रति छत्वस्यासिद्धत्वात् । **तच्छिव इति** । स चासौ शिवश्चेति, तस्य शिव इति वा विग्रहः । चोः कुरिति कुत्वं तु न, श्चुत्वस्यासिद्धत्वात् । **छत्वममीति वाच्यम्** । 'शश्छोऽटि' इति सूत्रे अटीति विहाय अमीति वक्तव्यमित्यर्थः । 'शश्छोऽमि' इति सूत्रं पठनीयमिति यावत् । **तच्श्लोकेनेति** । स चासौ श्लोकश्च, तस्य श्लोक इति वा विग्रहः । लकारस्य अड्बहिर्भूतत्वात् तत्परकस्य शकारस्य सूत्रपाठतः छत्वे अप्राप्ते वार्तिकमिदम् । **वाक् श्च्योततीति** । अत्र तु कुत्वं भवत्येव । चकारस्य स्वाभाविकतया श्चुत्वनिष्पन्नत्वा-

---

**शश्छोऽटि** । इह पदान्तादित्यनुवर्त्य पदान्ताज्झय इति व्याख्येयम्, तेनेह न, 'मध्वश्चोतन्त्यभितो विरप्शम्' । विपूर्वाद्रपेरौणादिकः शः । **छत्वममीति** । 'शश्छोऽटि' इति सूत्रं 'शश्छोऽमि' इति पठनीयमित्यर्थः । **तच्छ्लोकेनेति** । तच्छ्मश्रुणेत्याद्यप्यु-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पदस्यानुस्वारः स्याद्धलि। 'अलोऽन्त्यस्य' ( सू ४२ )। हरिं वन्दे। 'पदस्य' इति किम्—गम्यते। **१२३ नश्चापदान्तस्य झलि।** ( ८-३-२४ ) नस्य मस्य चापदान्तस्य झल्यनुस्वारः। यशांसि। आक्रंस्यते। 'झलि' किम्—नम्यते। **१२४ अनुस्वारस्य ययि परसवर्णः।** ( ८-४-५८ ) स्पष्टम्। अङ्कितः।

---

भावेन असिद्धत्वाभावात्। अत्र चकारस्य अम्बहिर्भूतत्वात् तत्परकशकारस्यात्र न छत्वम्।

**मोऽनुस्वारः**। पदस्येत्यधिकृतम्। म इति षष्ठ्यन्तं पदस्य विशेषणम्, तदन्तविधिः। 'हलि सर्वेषाम्' इत्यतो हलीत्यनुवर्तते। तदाह—**मान्तस्येत्यादिना**। **अलोऽन्त्यस्येति**। उपतिष्ठत इति शेषः। ततश्च मान्तस्य पदस्य यः अन्त्यः अल् तस्येत्यर्थः। पदान्तस्य मस्येति फलितम्। **हरिं वन्द इति**। हरिम् वन्दे इति स्थिते मस्यानुस्वारः। **गम्यत इति**। 'गम्लृ गतौ'। कर्मणि लट्। 'भावकर्मणोः' इत्यात्मनेपदे यक्। अत्र मस्य पदान्तत्वाभावान्नानुस्वारः। **नश्चापदान्तस्य झलि**। चकारान्मस्येत्यनुकृष्यते, अनुस्वार इति च। तदाह—**नस्येत्यादिना**। **यशांसीति**। यशश्शब्दाद् जस्, 'जश्शसोश्शिः'। 'नपुंसकस्य झलचः' इति नुम्। 'सान्तमहतः' इति दीर्घः। यशान् सि इति स्थिते नकारस्य अनुस्वारः। **आक्रंस्यत इति**। 'क्रमु पादविक्षेपे'। आङ्पूर्वात् कर्तरि लृट्। 'आङ उद्गमने' इति तङ्, 'स्यतासी लृलुटोः' इति स्यः। 'स्नुक्रमोः' इति नियमान्नेट्। आक्रम् स्यते इति स्थिते मस्य अपदान्तत्वात् पूर्वेणाप्राप्ते वचनम्। **नम्यत इति**। कर्मणि लट्, तङ्, यक्। अत्र मस्य झल्परकत्वाभावान्नानेनानुस्वारः। अपदान्तत्वाच्च न पूर्वेण। **अनुस्वारस्य ययि**। **स्पष्टमिति**। अनुवर्त्यपदान्तराभावादिति भावः। **अङ्कित इति**। 'अन्क पदे लक्षणे च' इति चुरादौ नोपधः। 'नश्चापदान्तस्य' इति कृतानुस्वारस्य निर्देश इति केचित्। णयन्तात् क्तः, इट्। 'निष्ठायां सेटि' इति णिलोपः। अनुस्वारस्यानेन परसवर्णः। परनिमित्तमत्र ककारः, तत्सवर्णः कवर्गः, सः अनुस्वारस्य

---

दाहर्तव्यम्। **मोऽनुस्वारः**। 'हलि सर्वेषाम्' इत्यतो हलीत्यनुवर्तते 'पदस्य' इति च तदाह—**मान्तस्येत्यादि**। हलि किम्, त्वमत्र। किमत्र। **नश्चापदान्तस्य**। अपदान्तस्य किम्, राजन् पाहि। **आक्रंस्यत इति**। 'आङ उद्गमने' इति तङ्। 'स्नुक्रमोः—' इति नेट्। **अनुस्वारस्य**। अत्र ययीति स्पष्टार्थम्। अचि परे अनुस्वाराभावात्। शलि तु परसवर्णोऽनुस्वारान्तरतमो न संभवतीति कुराडं रथेनेत्यत्रेव दशनमित्यादावपि परसवर्णविध्यप्रवृत्तेः। अत्र वदन्ति। ईषद्विवृतमूष्मणां विवृतं स्वराणामिति भाष्यमते ययीत्यस्यापार्थकत्वम्। सूत्रकारमते तदावश्यकमेव। अन्यथा

---

१ अयं पाठो बालमनोरमानुरोधेन। इतरत्र तु 'मन्यते' इति पाठः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अञ्चितः । कुण्ठितः । शान्तः । गुम्फितः । 'कुर्वन्ति' इत्यत्र णत्वे प्राप्ते तस्यासिद्धत्वादनुस्वारे परसवर्णे च कृते तस्यासिद्धत्वान्न णत्वम्। १२५ **वा पदान्तस्य।** ( ८-४-५९ ) पदान्तस्यानुस्वारस्य ययि परे परसवर्णो वा स्यात् । त्वङ्करोषि,

---

भवन् नासिकास्थानसाम्याद् ङकार एव भवति । **अञ्चित इति** । 'अन्चु गतिपूजनयोः' नोपधः । तस्मात् क्तः । 'अञ्चेः पूजायाम्' इति इट् । 'नाञ्चेः पूजायाम्' इति निषेधाद् 'अनिदिताम्' इति नलोपो न । अत्र 'नश्चापदान्तस्य' इत्यनुस्वारस्य परसवर्णो ञकारः । **कुण्ठित इति** । 'कुठि प्रतिघाते', इदित्त्वान्नुम् । क्तः, इट् । अत्र 'नश्च' इत्यनुस्वारस्य परसवर्णो णकारः । **शान्त इति** । 'शम उपशमे' । क्तः । 'वा दान्तशान्त' इत्यादिनिपातनान्नेट् । 'अनुनासिकस्य क्वि' इति दीर्घः । 'नश्च' इति मस्यानुस्वारः । तस्य परसवर्णो नकारः । **गुम्फित इति** । 'गुन्फ ग्रन्थे' द्वितीयान्तः, चतुर्थान्तो वा नोपधः । क्तः, इट् । 'नोपधात्थफान्ताद्वा' इत्यकित्त्वपक्षे नलोपो न । अत्र 'नश्च' इत्यनुस्वारस्य परसवर्णो मकारः । ननु कृन्धातोर्लट्, झिः, झोऽन्तः, 'तनादिकृञ्भ्य उः', गुणः, रपरत्वम्, 'अत उत् सार्वधातुके', उकारस्य यण् । 'न भकुर्छुराम्' इति निषेधाद् 'र्वोरुपधायाः' इति दीर्घो न । कुर्वन्तीति रूपम् । अत्र नकारस्य 'नश्चापदान्तस्य' इत्यनुस्वारं बाधित्वा परत्वाद् 'रषाभ्याम्' इति णत्वं स्यात् । न च त्रिपाद्यां 'नश्चापदान्तस्य' इत्यपेक्षया 'रषाभ्याम्' इत्यस्य परत्वात् 'पूर्वत्रासिद्धम्' इत्यसिद्धत्वाद् अनुस्वारे सति परसवर्णे च नकारस्यैव श्रवणमिति वाच्यम् । एवमपि परसवर्णविधिना प्राप्तस्य नकारस्य 'रषाभ्याम्' इति णत्वप्राप्तेर्दुर्वारत्वादित्यत आह— **कुर्वन्तीत्यादि** । 'रषाभ्याम्' इत्यपेक्षया परसवर्णस्य परतया णत्वे कर्तव्ये अनुस्वारस्थानिकपरसवर्णस्य नकारस्यासिद्धत्वान्न णत्वमिति भावः ।

**वा पदान्तस्य** । 'अनुस्वारस्य ययि परसवर्णः' इत्यनुवर्तते । तदाह— **पदान्तस्येत्यादिना** । **त्वङ्करोषीति** । त्वम् करोषीति स्थिते, 'मोऽनुस्वारः', पर-

---

दंशनमित्यादावनुस्वारान्तरतमः परसवर्णोऽनुनासिक ईकारः स्यात् । ईकारशकारयोस्तन्मते सावर्ण्यस्य सत्त्वात् । तथा कुण्डं शेते इत्यादावनुस्वारस्य 'वा पदान्तस्य' इति स्यादिति । **अङ्कित इति** । 'अन्क पदे लक्षणे च' इति चुरादिण्यन्तात् क्तः । 'निष्ठायां सेटि' इति णिलोपः । परसवर्णेन ङः । 'अकि लक्षणे' इत्यस्माद्वा क्तः । नुमोऽनुस्वारे परसवर्णेन ङः । **अञ्चित इति** । 'अञ्चेः पूजायाम्' इति निष्ठायामिट् । 'नाञ्चेः–' इति नलोपनिषेधः । **कुण्ठित इति** । 'कुठि प्रतिघाते' क्तः । नुमोऽनुस्वारे परसवर्णेन णः । **शान्त इति** । 'शम उपशमे' क्तः । 'वा दान्तशान्त–' इति निपातनादिडभावः । 'अनुनासिकस्य क्वि–' इति दीर्घः । मस्यानुस्वारे परसवर्णेन नकारः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्वं करोषि। सय्ँय्न्ता, संयन्ता। सव्ँवत्सरः, संवत्सरः। यल्ँलोकम्, यं लोकम्। अत्रानुस्वारस्य पक्षेऽनुनासिका यवलाः। **१२६ मो राजि समः क्वौ।** (८-३-२५) क्विबन्ते राजतौ परे समो मस्य म एव स्यात्। सम्राट्। **१२७ हे मपरे वा।** (८-३-२६) मपरे हकारे परे मस्य म एव स्याद्वा। 'ह्मल, ह्मल चलने' किम् ह्मलयति, किं ह्मलयति। 'यवलपरे यवला वेति वक्तव्यम्' (वा ४६०२) **१२८ यथासंख्यमनुदेशः समानाम्।** (१-३-१०) समसम्बन्धी विधिर्यथा-

---

सवर्णो ञकारः। तदभावपक्षे अनुस्वार एव श्रूयते। **अत्रेति**। सम् यन्तेति स्थिते 'मोऽनुस्वारः'। तस्य परनिमित्तभूतयकारसवर्णः अनुनासिक एव यकारो भवति, आन्तर्यात्। तथाच सय्ँयन्तेति रूपम्। एवं सं वत्सर इति स्थिते अनुस्वारस्य परसवर्णः अनुनासिको वकारः। सव्ँवत्सर इति रूपम्। यं लोकमिति स्थिते अनुस्वारस्य परसवर्णोऽनुनासिको लकारः। यल्ँलोकमिति रूपम्। परसवर्णाभावपक्षे तु अनुस्वार एवेत्यर्थः। **मो राजि**। म इति प्रथमान्तम्। 'मोऽनुस्वारः' इत्यतो म इति स्थानषष्ठ्यन्तमनुवर्तते। सम इत्यवयवषष्ठी। प्रत्ययग्रहणपरिभाषया क्विग्रहणेन क्विप्प्रत्ययान्तलाभः। तदाह—**क्विबन्त इत्यादिना**। **म एवेति**। न त्वनुस्वार इत्यर्थः। मस्य मविधानमनुस्वारनिवृत्त्यर्थमिति भावः। **सम्राडिति**। 'राजृ दीप्तौ'। सम्पूर्वात् 'सत्सूद्विषद्रुह्—' इत्यादिना क्विप्। 'व्रश्च—' इति षत्वम्। जश्त्वेन डत्वम्। चर्त्वम्। अत्र मोऽनुस्वारो न भवति। **हे मपरे वा**। 'मोऽनुस्वारः' इत्यतो म इति षष्ठ्यन्तमनुवर्तते। 'मो राजि' इत्यतो म इति प्रथमान्तमनुवर्तते। मः परो यस्मादिति विग्रहः। तदाह—**मपरे इत्यादिना**। ह्मलयतीति ण्यन्ताल्लट्। 'ज्वलह्वलह्मलनमामनुपसर्गाद्वा' इति मित्त्वाण्णौ 'मितां ह्रस्वः'। **यवलपरे**। यवलाः परा यस्मादिति विग्रहः। यवलपरके हकारे परे मस्य यवला वा स्युरित्यर्थः। **यथासंख्यम्**। साम्यमिह संख्यातो विवक्षितम्। अनुदेशो विधानम्। समानामिति यदि कर्मणि षष्ठी, तर्हि स्थान्यादिभिः समसंख्यानां यत्र विधानम्, यथा 'एचोऽयवायावः' इत्यादौ, तत्रैव यथासंख्यप्रवृत्तिः स्यात्। 'समूलाकृतजीवेषु हन्-कृञ्-ग्रहः' इत्यत्र न स्यात्, तत्र विधेयस्य णमुल एकत्वात्। अतः समानामिति संबन्धसामान्ये षष्ठी। एवं च समूलाद्युपपदानां हनादिधातूनां च समसंख्यानामुपादानेन एकस्य प्रत्ययस्य विधिरपि समसंख्याकसम्बन्धी विधिरेवेति तत्रापि यथासंख्यप्रवृत्तिर्निर्बाधा। तदाह—**समसम्ब-**

---

**गुम्फित इति**। 'गुम्फ ग्रन्थे' क्तः। नस्यानुस्वारे परसवर्णेन मः। **मो राजि समः क्वौ**। राजीति किम्, संपत्। सम इति किम्, इदं राट्। क्वाविति किम्, संराजितुम्, संराजितव्यम्। मकारस्य मकारवचनमनुस्वारनिवृत्त्यर्थम्, तदाह—**म एव**

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

संख्यं स्यात्। कियँ ह्यः, किं ह्यः। किवँ ह्वलयति, किं ह्वलयति। किलँ ह्लादयति, किं ह्लादयति। १२९ नपरे नः। (८-३-२७) नपरे हकारे परे मस्य नः स्याद्वा। किन् ह्नुते, किं ह्नुते। १३० ङ्णोः कुक्टुक् शरि। (८-३-२८) ङकारणकारयोः कुक्टुकावागमौ वा स्तः शरि। कुक्टुकोरसिद्धत्वाज्जश्त्वं न। 'चयो द्वितीयाः शरि

---

न्धी विधिरिति। यथासंख्यमिति। संख्याशब्देनात्र प्रथमत्वद्वितीयत्वादिरूपाः संख्याघटितधर्मा विवक्षिताः, तान् अनतिक्रम्य यथासंख्यम्। ततश्च 'एचोऽयवायावः' इत्यादिषु प्रथमस्य स्थानिनः प्रथम आदेशः, द्वितीयस्य द्वितीय इत्येवंक्रमेण स्थान्यादेशतन्निमित्तादीनां समसंख्याकानां क्रमेण अन्वयः प्रतिपत्तव्य इति फलितम्[1]। प्रकृते च यपरके हकारे परे मकारस्य यकारः, वपरके वः, लपरके ल इति सिध्यति। कियँ ह्य इति। मस्य यत्वे रूपम्। ह्य इत्यव्ययम्, पूर्वेद्युरित्यर्थः। यत्वाभावे 'मोऽनुस्वारः'। किवँ ह्वलयतीति। मस्य वत्वम्। 'ह्वल् चलने' णिच्। किलँ ह्लादयतीति। मस्य लत्वम्। 'ह्लादी सुखे च' णिच्। नपरे नः। हे इति वेति म इति चानुवर्तते। नः परो यस्मादिति विग्रहः। तदाह—नपरे हकार इत्यादिना। किन् ह्नुते इति। 'ह्नुङ् अपनयने'। मस्य नत्वे रूपम्। तदभावे 'मोऽनुस्वारः'।

ङ्णोः कुक्टुक् शरि। 'हे मपरे वा' इत्यतो वेत्यनुवर्तते। कुक् च टुक् चेति समाहारद्वन्द्वः। आगमाविति। एतच्च 'आद्यन्तौ टकितौ' इति लभ्यम्। यथासंख्यपरिभाषया ङकारस्य कुक्, णकारस्य टुक्। उभयत्र ककार इत्, उकार उच्चारणार्थः। प्राङ् षष्ठः, सुगण् षष्ठः—इति स्थिते, यथाक्रमं कुकि टुकि च, तयोः पूर्वावयवत्वेन पदान्तत्वाद् जश्त्वमाशङ्क्याह—कुक्टुकोरिति। चयो द्वितीयाः।

---

स्यादिति। सम्राडिति। 'राजृ दीप्तौ'। संपूर्वादस्मात् 'सत्सूद्विष—' इत्यादिना क्विप्। 'व्रश्च—' आदिना षत्वं जश्त्वचर्त्वे। हे मपरे वा। मपरे इति बहुव्रीहिः। यवलेति। यवलाः परा यस्माद्यवलपरस्तस्मिन्हकारे परे मस्य यवला वा भवन्तीत्यर्थः। यथासंख्यमनुदेशः। अनुदिश्यत इति अनुदेशः। पश्चादुच्चार्यत इत्यर्थः। समानामिति संबन्धे षष्ठी तदाह—समसंबन्धी विधिरिति। समकर्मकं विधानमिति तु नोक्तम्, तथाहि सति यत्रोद्देशिषु समेषु समानां विधानं पाघ्रादिषु पिबादीनां प्रियस्थिरादिषु च प्रस्थादीनां तत्रैव यथाक्रमं प्रवृत्तिः स्यात्। इष्यते तु अनुवाद्ययोरपि यथासंख्यत्वम्। 'समूलाकृतजीवेषु हन्कृञ्ग्रहः' इत्यत्र यथा। समानामिति किम्, 'लक्षणेत्थंभूता—' इत्यत्र लक्षणादयश्चत्वारोऽर्थाः, प्रत्यादयस्तु त्रयः, तत्र सर्वेषां सर्वत्र कर्मप्रवचनीयसंज्ञा यथा स्यात्। नपरे। अयमपि बहुव्रीहिरेव। हे इति तु अनुवर्तते

---

१ 'फलितः' इति क, ख।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पौष्करसादेरिति वाच्यम्' ( वा ५०२३ )। पौष्करसादिराचार्यः । प्राङ्ख् षष्ठः, प्राङ्क्षष्ठः, प्राङ् षष्ठः । सुगण्ठ् षष्ठः, सुगण्ट् षष्ठः, सुगण् षष्ठः । **१३१ डः सि धुट्** । ( ८-३-२९ ) डात्परस्य सस्य धुड् वा स्यात् । षट्त् सन्तः, षट् सन्तः । **१३२ नश्च** । ( ८-३-३० ) नकारान्तात्परस्य सस्य धुड् वा स्यात् । सन्त्सः,

---

पौष्करसादिशब्दस्य चयो द्वितीया इत्यर्थभ्रमं वारयति—**पौष्करसादिराचार्य इति**। तथा च विकल्पः फलतीति भावः। प्राङ्क् षष्ठ इति कुकि रूपम्। 'चयो द्वितीयाः' इति पक्षे प्राङ्ख् षष्ठ इति रूपम्। न चात्र खकारस्य 'खरि च' इति चर्त्वम्, खकारारम्भविधिसामर्थ्यात्। 'चयो द्वितीयाः' इति 'नादिन्याक्रोशे' इति सूत्रभाष्यपठितमिदम्। प्राङ् षष्ठ इति कुगभावे रूपम्। एवं टुक्यपि सुगण्ट् षष्ठ इत्यादि। **डः सि धुट्**। ड इति पञ्चमी। ततश्च 'तस्मादित्युत्तरस्य' इति परिभाषया सीति सप्तमी षष्ठी सम्पद्यते—डात्परस्य सस्येति। 'हे मपरे वा' इत्यतो वेत्यनुवर्तते। तदाह—**डात्परस्येत्यादिना**। 'तस्मिन्निति निर्दिष्टे' इति नेह भवति, 'उभयनिर्देशे पञ्चमीनिर्देशो बलीयान् परत्वाद्' इति न्यायात्। धुट् इति चतुर्थधकारनिर्देशः। टकार इत्। उकार उच्चारणार्थः। थुट् इति द्वितीयविधौ तत्सामर्थ्याच्चर्त्वं न स्यात्। अन्यथा तकारमेव विदध्यात्। चतुर्थविधेस्तु न तत्सामर्थ्यम्, प्रथमविधौ तस्य 'चयो द्वितीयाः' इत्यापत्तौ तन्निवृत्त्या चरितार्थत्वात्। **षट् सन्त इति**। षष् इति षकारस्य जश्त्वेन डः, षड् सन्त इति स्थिते, चर्त्वस्यासिद्धत्वाद् डात् परत्वात् सस्य धुट् आद्यवयवः। तस्य चर्त्वेन तकारः। 'चयो द्वितीयाः' इति तु न। चर्त्वस्यासिद्धत्वात्। ततो लक्ष्यभेदाद् डस्य चर्त्वेन टः। **नश्च**। 'सि धुट्' इति, 'वा' इति चानुवर्तते। 'नः' इति पञ्चमी। 'तस्मादित्युत्तरस्य' इति परिभाषया सीति षष्ठी सम्पद्यते। तदाह—**नकारान्तात् परस्येति**। **सन्त्स इति**। धुटि धस्य चर्त्वम्।

---

तदाह—**नपरे हकारे इति**। **ङ्णोः**। **चयो द्वितीया इति**। एतच्च 'नादिन्याक्रोशे–' इति सूत्रे भाष्ये स्थितम्। अत एव मनोरमायां 'डः सि–' इति सूत्रे तुडित्युच्यमाने 'चयो द्वितीयाः–' इति पक्षे थकारापत्तिरुक्ता। यदि तु 'ङ्णोः' इति सूत्रस्थं स्यात् तर्हि तुडित्येव सुवचं स्यात्। तुटोऽसिद्धत्वेन 'चयो द्वितीयाः–' इत्यस्याप्रवृत्तेः। **पौष्करसादेरिति**। पुष्करे तीर्थविशेषे सीदतीति पुष्करसत्। तस्यापत्यं पौष्करसादिराचार्यः। बाह्वादित्वादिञ्। अनुशतिकादित्वादुभयपदवृद्धिः। **डः सि धुट्**। उभयनिर्देशे पञ्चमीनिर्देशो बलीयान् परत्वादित्यभिप्रेत्याह—**सस्येति**। सीति सप्तमीनिर्देशस्तु लाघवार्थः। **षट्त्सन्त इति**। धुटश्चर्त्वेन तकारः। 'चयो द्वितीयाः–' इति तस्य थो न, चर्त्वस्यासिद्धत्वात्। अत एव धुडभावे षट्सन्त इत्यत्र टस्य ठो न

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सन्सः। १३३ शि तुक्। ( ८-३-३१ ) पदान्तस्य नस्य शे परे तुग्वा स्यात्। 'शश्छोऽटि' ( सू १२० ) इति छत्वविकल्पः। पक्षे 'झरो झरि-' (सू ७१) इति चलोपः। सञ्छम्भुः, सञ्च्छम्भुः, सञ्च्शम्भुः, सञ्शम्भुः॥

अच्छौ अचछा अचशा अशाविति चतुष्टयम्।
रूपाणामिह तुक्छत्वचलोपानां विकल्पनात्॥

---

**शि तुक्।** पूर्वसूत्राद् न इति पञ्चम्यन्तमनुवृत्तमिह षष्ठ्यन्तमाश्रीयते, शब्दाधिकाराश्रयणात्। पदस्येत्यधिकृतम् अवयवषष्ठ्यन्तमाश्रीयते। 'हे मपरे वा' इत्यतो वेत्यनुवृत्तम्। तदाह—**पदान्तस्य नस्येत्यादिना**। नान्तस्य पदस्येत्युचितम्। उकार उच्चारणार्थः। सन् शम्भुरिति स्थिते, नकारस्यान्तावयवस्तुक्। ननु तुग्ग्रहणं व्यर्थम्, 'ङः सि धुट्' इत्यतो धुडेवानुवर्त्य नकारात् परस्य शस्य विधीयताम्। 'खरि च' इति चर्त्वे सन्त् शम्भुरित्यस्य सिद्धेरित्यत आह—**शश्छोऽटीति छत्वविकल्प इति**। शकारस्येति शेषः। धुटो विधौ तु तस्य परादित्वात्पदान्तत्वाभावात् छत्वं न स्यात्, छत्वविधेः पदाधिकारस्थत्वेन पदान्ताद् झयः परस्यैव शस्य तत्प्रवृत्तेर्भाष्ये सिद्धान्तितत्वात्, अन्यथा विसृपो विरप्शिन्नित्यादावपि शस्य छत्वापत्तेः। **पक्ष इति।** कदाचिद् 'झरो झरि' इति तुकस्तकारस्य श्चुत्वमापन्नस्य लोप इत्यर्थः। **सञ् छम्भुरिति।** तकारस्य श्चुत्वमापन्नस्य लोपे सति नकारस्य श्चुत्वेन ञकारे रूपम्। **सञ्च् छम्भुरिति।** श्चुत्वमापन्नस्य तकारस्य लोपाभावे नकारस्य च श्चुत्वे ञकारे रूपम्। तुको जश्त्वं तु न, जश्त्वे तस्यासिद्धत्वात्। अत एव श्चुत्वोत्तरमपि जश्त्वं न। **सञ्च् शम्भुरिति।** शस्य छत्वाभावे तकारनकारयोश्चुत्वे च रूपम्। **सञ्शम्भुरिति।** तुकः अभावे नकारस्य श्चुत्वे रूपम्। तदिदं रूपचतुष्टयमुक्तक्रमं श्लोकेन संगृह्णाति—**अच्छाविति**। तुक्छत्वचलोपानां विकल्पनाद् अच्छौ अचछा अचशा

---

भवति। नन्वेवमपि 'ङः सि धुग्' इति धुग्विधीयताम्, ङकारस्य सकारे परे धुगिति व्याख्यानसंभवात्, किमनेन धुटः परादित्वाभ्युपगमेन। मैवम्। पूर्वान्तत्वे तु 'न पदान्ताट्टोरनाम्' इति निषेधाप्रवृत्त्या धकारस्य ष्टुत्वप्रसङ्गात्। अत एव वक्ष्यमाणस्तुगिहैव न कृतः। ङस्य तुकि ष्टुत्वे तस्यासिद्धत्वेन 'चयो द्वितीयाः—' इत्यस्यापि प्रसङ्गाच्च। इह धुड्विकल्पेन रूपद्वये सति टकारनकारविसर्गाणां द्वित्वविकल्पात् षोडश रूपाणि। 'खयः शरः' इति द्वित्वे द्वात्रिंशत्। 'शरोऽचि' इति निषेधोऽत्र न प्रवर्तते। तस्य सौत्रद्वित्वमात्रविषयत्वस्योक्तत्वात्। न च चर्त्वस्यासिद्धत्वात् खयः परत्वमेव नास्तीति शङ्क्यम्। 'पूर्वत्रासिद्धीयमद्वित्वे' इत्युक्तेः। **शि तुक्।** शीति सप्तमी पूर्वत्र कृतार्थाया न इति

---

१ 'धुडित्येवानुवर्त्य' इत्युचितम्। 'धुडेवानुवृत्त्य' इति क।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

**१३४ ङमो ह्रस्वादचि ङमुण् नित्यम् ।** (८-३-३२) ह्रस्वात्परो यो ङम् तदन्तं यत्पदं तस्मात्परस्याचो नित्यं ङमुडागमः स्यात् । प्रत्यङ्ङात्मा । सुगण्णीशः । सन्नच्युतः । **१३५ समः सुटि ।** (८-३-५) समो रुः स्यात्सुटि ।

---

त्रशाविति रूपाणां चतुष्टयमित्यन्वयः । **ङमो ह्रस्वात् ।** ङम् प्रत्याहारः । ङम इति पञ्चम्यन्तम् । तद्विशेषणत्वात् पदस्येत्यधिकृतं पञ्चम्यन्तया विपरिणम्यते । ङम इति च ह्रस्वादिति विशेषणसम्बन्धमनुभूय पदविशेषणत्वं भजत् तदन्तपरम् । ङम इति पञ्चमीबलाद् अचीति सप्तमी षष्ठ्यर्थे । तदाह—**ह्रस्वात्पर इत्यादिना । ङमुडागम इति ।** टकार इत्, उकार उच्चारणार्थः । संज्ञायां कृतं टित्त्वमानर्थक्यात्तदङ्गन्यायात् संज्ञिभिः सम्बध्यते । ततश्च ङुट् णुट् नुट् इति त्रय आगमाः फलिताः टित्त्वादच आद्यवयवा यथासंख्यं प्रवर्तन्ते । 'हे मपरे वा' इति वाग्रहणानुवृत्तिशङ्काव्युदासार्थं नित्यग्रहणम् । **प्रत्यङ्ङात्मेति ।** प्रत्यङ् आत्मा इति स्थिते आकारात् प्राग् ङुट् । **सुगण्णीश इति ।** 'गण संख्याने' चुरादिः । ण्यन्ताद्विचि णिलोपः । न तु क्विप् । 'अनुनासिकस्य क्वि' इति दीर्घप्रसङ्गात् । ङमुटि कर्तव्ये णिलोपस्तु न स्थानिवत्, 'पूर्वत्रासिद्धे न स्थानिवत्' इत्युक्तेः । सुगण् ईश इति स्थिते ईकारात् प्राग् णुट् । **सन्नच्युत इति ।** सन् अच्युत इति स्थिते, अकारात् प्राग् नुट् । न च परमदण्डिनावित्यत्र परमपरिण्डन् औ इति स्थिते, प्रत्ययलक्षणेन अन्तर्वर्तिविभक्त्या पदत्वान्नुट् स्यादिति वाच्यम् । 'उत्तरपदत्वे चापदादिविधौ' इति प्रत्ययलक्षणप्रतिषेधात् । वस्तुतस्तु 'उत्तरपदत्वे च' इति प्रत्ययलक्षणप्रतिषेधो यत्रोत्तरपदस्य कार्यित्वं तत्रैव प्रवर्तते । अन्यथा 'पदव्यवायेऽपि' इति निषेधो माषकुम्भवापेनेत्यत्र न स्यात् । अतः परमदण्डिनौ इत्यत्र ङमुड्वारणाय 'उञि च पदे' इत्यतः पदे इत्यनुवर्त्य अजादेः पदस्य ङमुडिति व्याख्येयमिति शब्देन्दुशेखरे प्रपञ्चितम् ।

**समः सुटि ।** सम इति षष्ठ्यन्तम् । 'मतुवसो रु सम्बुद्धौ' इत्यतः रुग्रहण-

---

पञ्चम्याः षष्ठीं कल्पयतीत्याह—**नस्येति । चलोप इति ।** 'झरो झरि' इत्यत्र सवर्णग्रहणसामर्थ्याद् यथासंख्यं न प्रवर्तत इति भावः । **सञ्छंभुरिति ।** इह श्चुत्वतुकोरसिद्धत्वमाश्रित्य 'नश्छवि—' इति रुत्वं नाशङ्क्यम्, छत्वस्यासिद्धत्वात् । **चतुष्टयमिति ।** अत्र तुकः श्चुत्वे 'चयो द्वितीयाः—' इति पक्षे चस्य छत्वे शस्यापि छत्वविकल्पात् सञ्छ्छंभुः सञ्छ्शंभुरिति रूपद्वयवृद्धिर्बोध्या । न च शस्य छत्वपक्षे शर्परत्वाभावात् 'चयो द्वितीयाः—' इति पक्षे चस्य छो नेति शङ्क्यम्, 'शश्छोऽटि' इति छत्वस्यासिद्धत्वादित्याहुः । **ङमो ह्रस्वात् ।** ङम् प्रत्याहारः, संज्ञायां च कृतं टित्वं सामर्थ्यात्संज्ञिभिः संबध्यते । तेन यथासंख्यं ङुट्–णुट्–नुटः प्रवर्तन्ते । नित्यग्रहणं विस्पष्टार्थम्,

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

'अलोऽन्त्यस्य' ( सू ४२ )। १३६ अत्रानुनासिकः पूर्वस्य तु वा। ( ८-३-२ ) अत्र रुप्रकरणे रोः पूर्वस्यानुनासिको वा स्यात्। १३७ अनुनासिकात्

---

मनुवर्तते। तदाह—**समो रुः स्यात् सुटीति**। रु इत्युकार इत्। **अलोऽन्त्यस्येति**। उपतिष्ठत इति शेषः। सम्पूर्वात् करोतेस्तृचि 'सम्परिभ्यां करोतौ भूषणे' इति सुडागमे सम् स्कर्तेति स्थिते मस्य रुत्वम्। सर् स्कर्तेति स्थिते—**अत्रानुनासिकः**। 'मतुवसो रु सम्बुद्धौ' इति रुत्वविध्यनन्तरमिदं पठितम्। अतः अत्रेत्यनेन रुप्रकरणे इत्यर्थो गम्यते। पूर्वत्वं च रु इत्यपेक्षया ज्ञेयम्, प्रकृतत्वात्। तदाह—**अत्र रुप्रकरणे रोः पूर्वस्यानुनासिको वा स्यादिति**। उत्तरसूत्रे अनुनासिकाभावपक्षानुवादादेव विकल्पे[1] सिद्धे वाग्रहणं स्पष्टार्थम्। परस्य नित्यं रुत्वम्, पूर्वस्य तु अनुनासिकविकल्प इति वैषम्यस्य सिद्धस्यैव द्योतनार्थस्तुशब्दोऽपि स्पष्टार्थ एव। इदमेवाभिप्रेत्य मूले विवरणवाक्ये तुग्रहणं त्यक्तमिति प्रौढमनोरमायां मूलकृतैव उक्तम्। अनेन सूत्रेण सर् इत्यत्र सकारादकारः अनुनासिकः। सँर् स्कर्ता। **अनुनासिकात्**।

---

'हे मपरे—' इति 'मय उञो वो वा' इति च विकल्पद्वयस्य मध्ये पाठादेव नित्यत्वलाभात्। नन्विह नित्यग्रहणाभावे 'हे मपरे वा' इति वाग्रहणमुत्तरसूत्रेषु पञ्चस्वप्यनुवर्तते वा न वेति शङ्का स्यादिति चेत्सत्यम्। अत एव विस्पष्टार्थमित्युक्तं न तु व्यर्थमिति। **तस्मात्परस्याऽच इति**। ङम इत्यस्य षष्ठ्यन्तताामाश्रित्याचि परे पूर्वस्यैव विधीयतां को दोष इति चेत्। मैवम्। तथाहि सति ङमन्तस्य पदस्य पूर्वावयवः स्यादित्यनिष्टं प्रसज्येत। पदस्य यो ङम् तस्येति वैयधिकरण्येन व्याख्यायामपि कुर्वन्नास्ते इत्यत्र णत्वं प्रसज्येत, 'पदान्तस्य' इति निषेधस्याप्रवृत्तेः। यद्यपि बहिरङ्गपरिभाषया ङमुड्विधेरसिद्धत्वादिष्टं सिध्यति, तथापि यथोद्देशपक्षे त्रैपादिकेऽन्तरङ्गे बहिरङ्गपरिभाषाया अप्रवृत्तेः प्रसज्यत एव णत्वमिति यथोक्तव्याख्यानमेव साध्विति दिक्। **सुगणीश इति**। णयल्लोपौ न स्थानिवत्। पूर्वत्रासिद्धे तन्निषेधात्। ननु परमदण्डिनावित्यादौ अन्तर्वर्तिविभक्त्या पदत्वान्नुट् स्यादिति चेन्न। 'उत्तरपदत्वे चापदादिविधौ' इति प्रत्ययलक्षणप्रतिषेधात्। अत एव परमवाचौ परमगोदुहौ परमलिहावित्यादौ कुत्वघत्वढत्वादीनि न। प्राचा तु 'उञि च पदे' इत्यतः पदे इत्यनुवर्त्य अजादेः पदस्येति व्याख्यानाद् ङमुणनेत्युक्तम्, तदनेन प्रत्युक्तम्। इहैव नलोपं वारयितुमुक्तरीतेरेव तेनाप्यनुसर्तव्यत्वात्। **समः सुटि**। यद्यपि मोऽनुस्वारेण सिद्धम्, तथापि अनुनासिकत्रिसकारसिद्ध्यर्थमिदम्। **अत्रानुनासिकः**। अयमधिकारो विधिर्वेति पक्षद्वयम्। आद्ये अत्रग्रहणमनर्थकम्। अधिकारादेव रुप्रकरणलाभात्। तुशब्दस्तु अधिकारपक्षे

---

१ 'नुवादादेव सिद्धे' इति क।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

**परोऽनुस्वारः।** ( ८-३-४ ) अनुनासिकं विहाय रोः पूर्वस्मात्परोऽनुस्वारागमः स्यात्। 'खरवसानयोर्विसर्जनीयः' ( सू ७६ )। **१३८ विसर्जनीयस्य सः।** ( ८-३-३४ ) खरि विसर्जनीयस्य सः स्यात् । एतदपवादे 'वा शरि' ( सू १५१ ) इति पाक्षिके विसर्गे प्राप्ते 'संपुंकानां सो वक्तव्यः' ( वा ४८६२ )

---

अनुनासिकादिति ल्यब्लोपे पञ्चमी । विहायेति गम्यम् । पूर्वस्येत्यनुवर्तते । पञ्चम्यन्ततया विपरिणाम्यते। पूर्वत्वं च रुत्वकृतरेफापेक्षया। परत्वं च रोर्यः पूर्ववर्णस्तदपेक्षया। तदाह—**अनुनासिकं विहायेति।** अनुनासिकाभावपक्षे इत्यर्थः । आगमत्वं परशब्दलभ्यम् । ततश्च सकारादकारस्य अनुनासिकाभावपक्षे अकारात् परः अनुस्वारागमः । संर् स्कर्ता । अथ रेफस्य विसर्गविधिं स्मारयति—**खरवसानयोरिति। विसर्जनीयस्य सः।** 'खरवसानयोः' इत्यतो मण्डूकप्लुत्या खरीत्यनुवर्तते, एकदेशे स्वरितत्वप्रतिज्ञानात् । केचित्तु विसर्गश्रवणात् खरीत्यार्थिकम्, अवसानस्य तु न संबन्धः, व्याख्यानादित्याहुः । तदाह—**खरीति।** 'विसर्जनीयस्य सः' इति सिद्धे 'संपुकानाम्' इति पुनर्विधानं व्यर्थमित्यत आह—**एतदपवाद इति।** पुनर्विधानं 'वा शरि' इति पाक्षिकविसर्गबाधनार्थमिति भावः । **संपुंकानामिति** । सम् पुम् कान् एतेषां विसर्गस्य सकारो वक्तव्य इत्यर्थः । अनेन वार्तिकेनात्र विसर्गस्य नित्यमेव

---

परस्मात्कार्यिणः पूर्वकार्यस्य विशेषद्योतनार्थः, परस्य नित्यं रुत्वं पूर्वस्य तु वाऽनुनासिक इति। विधिपक्षे तुशब्दो व्यर्थः। वाग्रहणं स्पष्टार्थम्। 'अनुनासिकात्परः' इति ज्ञापकादेव सिद्धेः। नहि विकल्पं विना 'अनुनासिकं विहाय' इत्यनुनासिकाभावपक्षः संभवति। इदमेव ध्वनयितुं वृत्तौ तुवेतिशब्दावनुक्त्वा रोः पूर्वस्यानुनासिकः स्यादित्येवोक्तम्। **रोः पूर्वस्येति।** उपलक्षणमेतल्लोपस्यापि। अत्र रुप्रकरणे यो विधिस्ततः पूर्वस्येति निष्कृष्टोऽर्थः। एवं रोः पूर्वस्मात्पर इत्यस्यापि रुप्रकरणे यो विधिस्ततः पूर्वस्मात्पर इत्यर्थो बोध्यः। **अनुनासिकात्।** ल्यब्लोपे पञ्चमीत्याह—**अनुनासिकं विहायेति।** अनुनासिकाभावपक्षे इत्यर्थः। पूर्वस्येति प्रकृतस्य तु विभक्तिविपरिणामेन पञ्चम्यन्ततेत्यभिप्रेत्याह—**रोः पूर्वस्मादिति।** संसर्गवद्विप्रयोगस्यापि विशेषावगतिहेतुत्वाद् 'अवत्सा धेनुरानीयताम्' इत्यत्रेव संभावितानुनासिकत्वगुणक एवोपस्थितत्वादाकाङ्क्षितत्वाच्चावधित्वेन संबध्यत इत्यभिप्रेत्याह—रोः पूर्वस्मादिति इति तु मनोरमायामवतारितम्, तत्तु पूर्वस्येत्यनुवर्तनं विभक्तिविपरिणामं चानपेक्ष्य लौकिकन्यायेनैवेष्टं सिध्यतीत्याशयेनोक्तमित्याहुः। **अनुस्वारागम इति।** आगमत्वं च परशब्देनैव लभ्यते। यथा 'पूर्वौ तु ताभ्यामैच्' इत्यत्र पूर्वशब्देन ऐचोरागमत्वमिति भावः। **विसर्जनीय । खरीति।** एतच्च 'खरवसानयोः–' इति सूत्रान्मण्डूकप्लुत्यानुवर्तते।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

**सँस्स्कर्ता-संस्स्कर्ता । ' समो वा लोपमेके ' इति भाष्यम् । लोपस्यापि रुप्रकरणस्थत्वादनुस्वारानुनासिकाभ्यामेकसकारं रूपद्वयम् । द्विसकारं तूक्तमेव । तत्र ' अनचि च ' ( सू ४८ ) इति सकारस्य द्वित्वपक्षे त्रिसकारमपि रूपद्वयम् । अनुस्वारविसर्गजिह्वामूलीयोपध्मानीययमानामकारोपरि शर्षु च पाठस्योपसंख्यानमिति शेषः ।**

---

**सँस्स्कर्तेति** । अनुनासिकपक्षे रूपम् । **संस्स्कर्तेति** । अनुस्वारपक्षे रूपम् । उभयत्रापि द्विसकारत्वमेव । **समो वेति** । समो मस्य सुटि लोपम् एके आचार्या इच्छन्तीत्यर्थः । एकशब्दोऽन्यपर्यायः । 'एके मुख्यान्यकेवलाः' इत्यमरः । लोपपक्षेऽपि अनुस्वारानुनासिकाभ्यामेकसकारं रूपद्वयमित्याह—**लोपस्यापीति** । 'अत्रानुनासिकः पूर्वस्य तु वा' इत्यत्र रोः पूर्वस्येत्युपलक्षणं रुप्रकरणविधेयस्य लोपस्यापि, अन्यथा रुप्रकरण इत्यर्थकस्य अत्रेत्यस्य वैयर्थ्यात् । एवम् 'अनुनासिकात् परोऽनुस्वारः' इत्यत्र रोः पूर्वस्मादित्यपि । ततश्च समो मलोपस्यापि रुप्रकरणस्थतया लोपात्पूर्ववर्तिनः अकारस्य कदाचिदनुनासिकः । तदभावपक्षे अकारात् परः अनुस्वारागमः, इत्येवमनुस्वारानुनासिकाभ्यामेकसकारं रूपद्वयमित्यर्थः । **द्विसकारं तु उक्तमेवेति** । रुत्वपक्षे इति शेषः । ननु लोपपक्षे एव 'अनचि च' इति सुट्सकारस्य द्वित्वेन द्विसकाररूपद्वयस्य सिद्धत्वात् 'समः सुटि' इति रुत्वविधानं व्यर्थमित्यत आह—**तत्रेति** । तत्र द्विसकाररूपयोर्मध्ये रुत्वे सति तत्स्थानिकसकारस्य 'अनचि च' इति द्वित्वपक्षे त्रिसकारमपि रूपद्वयमित्यर्थः । एतदर्थमेव रुत्वविधानमिति भावः । 'स्कोः' इति लोपस्तु न, रुत्वस्यासिद्धत्वात् । न च लोपपक्षे एव सुट्सकारस्य 'अनचि च' इति द्वित्वे प्रथमसकारस्य तेनैव सूत्रेण पुनर्द्वित्वे त्रिसकारमपि रूपद्वयं सिद्धमिति समो रुत्वविधिर्व्यर्थ एवेति वाच्यम् । 'लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तिः' इति न्यायात् । ननु वर्णसमाम्नाये अनुस्वारस्य पाठाभावाद् अनच्त्वात् ततः परस्य सकारस्य कथमनुस्वारपक्षे द्वित्वमित्यत आह—**अनुस्वारविसर्गेति** । एतच्च 'हयवरट्' सूत्रे भाष्ये स्थितम् । **अकारोपरीति** । इकाराद्युपरि पाठे पयःसु इत्यादौ इणः परस्य विहितम् 'आदेशप्रत्यययोः' इति षत्वं स्यादिति भावः । कश्चित्तु 'इणः षः' इति षत्वं स्यादिति वदन् बभ्राम, तत्र विसर्गस्यैव षत्वविधेः । एवं च अनुनासिकपक्षे एकसकारं द्विसकारं त्रिसकारमिति त्रीणि रूपाणि । एवमनुस्वारपक्षेऽपि त्रीणि रूपाणीति स्थितम् । **अनु-**

---

**संस्स्कर्तेति** । 'संपरिभ्याम्—' इति करोतेः सुट् । ननु अनुस्वारस्यानच्त्वात्ततः परस्य द्वित्वं न स्यादेवेति अनुस्वारपक्षे त्रिसकारकं रूपं कथं स्यादित्याशङ्क्याह—**अनुस्वारविसर्गेत्यादि** । **अकारोपरीति** । यदि त्विकारोपरि पठ्येरंस्तर्हि पयःसु यशःसु

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तत्त्वेनानुस्वारस्याप्यच्त्वात्। अनुनासिकवतां त्रयाणां 'शरः खयः' (वा ५०११) इति कद्वित्वे षट्। अनुस्वारवतामनुस्वारस्यापि द्वित्वे द्वादश। एषामष्टादशानां तकारस्य द्वित्वे वचनान्तरेण पुनर्द्वित्वे चैकतं द्वितं त्रितमिति चतुष्पञ्चाशत्। अणोऽनुनासिकत्वेऽष्टोत्तरं शतम्। **१३९ पुमः खय्यम्परे।** (८-३-६) अम्परे खयि पुम्शब्दस्य रुः स्यात्। व्युत्पत्तिपक्षे 'अप्रत्ययस्य' (सू १२५)

---

**नासिकवतामिति**। अनुनासिकपक्षे एकद्वित्रिसकाराणां कद्वित्वे त्रीणि, तदभावे त्रीणीति षडित्यर्थः। ननु ककारस्य अचः परत्वाभावात् कथम् 'अनचि च' इति द्वित्वमित्यत आह—**'शरः खयः' इतीति**। शरः परस्य खयो द्वे वा स्त इति वार्तिकार्थः। एवं च अनुनासिकपक्षे द्विककाराणि त्रीणि रूपाणि, एकककाराणि त्रीणीति षड् रूपाणि स्थितानि। अनुस्वारपक्षे तु द्वादश रूपाणीत्याह—**अनुस्वारवतामिति**। अनुस्वारस्यापीत्यपिना ककारसंग्रहः। अनुस्वारपक्षे एकद्वित्रिसकाराणां रूपाणामनुस्वारस्य शर्षु पाठस्योपसंख्याततत्वेन शर्त्वाद् द्वित्वविकल्पे सति द्व्यनुस्वाराणि त्रीणि (३) एकानुस्वाराणि त्रीणि (३) इति षट् (६)। अथ षण्णामप्येषां 'शरः खयः' इति ककारस्य द्वित्वविकल्पे सति द्विककाराणि षट् (६) एकककाराणि षट् (६) इत्यनुस्वारपक्षे द्वादश (१२) इत्यर्थः। एवं च अनुनासिकपक्षे षट् (६) अनुस्वारपक्षे द्वादश (१२) इत्यष्टादश रूपाणि। **एषामिति**। उक्तानाम् अष्टादशानां रूपाणां तकारस्य 'अचो रहाभ्याम्' इति द्वित्वविकल्पे सति प्रथमस्य तकारस्य 'यणो मयः' इति पुनर्द्वित्वे एकैकस्य एकतं द्वितं त्रितमिति संकलनया–एकतान्यष्टादश (१८) द्वितान्यष्टादश (१८) त्रितान्यष्टादश (१८) इति संकलनया चतुरधिकपञ्चाशद्रूपाणि (५४) संपन्नानीत्यर्थः। **अणोऽनुनासिकत्वे इति**। 'अणोऽप्रगृह्यस्यानुनासिकः' इति तकारादाकारस्य अनुनासिकत्वविकल्पे सति आनुनासिक्ये चतुष्पञ्चाशत् (५४) तदभावे चतुष्पञ्चाशत् (५४) इति संकलनया अष्टाधिकं शतम् (१०८) रूपाणि संपन्नानीत्यर्थः।

**पुमः**। रुग्रहणमनुवर्तते। अम् परो यस्मादिति विग्रहः। तदाह—**अम्परे खयीति**। पुमान् कोकिलः इति कर्मधारये 'सुपो धातुप्रातिपदिकयोः' इति सुब्लुकि 'संयोगान्तस्य लोपः' इति सकारलोपे पुम् कोकिल इति स्थिते, मस्य रुत्वम्, अनुनासिकानुस्वारविकल्पः, विसर्गः, 'संपुंकानाम्' इति सः। ननु 'विसर्जनीयस्य सः' इत्येव सिद्धे 'संपुंकानाम्' इत्यत्र पुंग्रहणं व्यर्थमित्यत आह। **व्युत्पत्तीत्यादि**। ⁀कः⁀पयोः

---

इत्यादौ इणः परस्येति षत्वं स्यादिति भावः। **अच्त्वादिति**। न चैवं हरिः कर्ता, हरिं स्मरेत्, रामः पातीत्यादौ यणादिप्रसङ्गः, त्रिपादीस्थत्वेन विसर्गादीनामसिद्धत्वात्। **अनुस्वारस्यापि द्वित्वे इति**। अपिशब्दात्ककारस्य। **वचनान्तरेणेति**। 'अचो

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति षत्वपर्युदासात् ≍क≍पयोः प्राप्तौ, अव्युत्पत्तिपक्षे तु षत्वप्राप्तौ, 'संपुंकानाम्–' (वा ४८६२) इति सः। पुँस्कोकिलः, पुंस्कोकिलः। पुँस्पुत्रः, पुंस्पुत्रः। 'अम्परे' किम्। पुंक्षीरम्। 'खयि' किम्। पुंदासः। 'ख्याञादेशे न' (वा १५११) पुंख्यानम्। १४० नश्छव्यप्रशान्। (८-३-७) अम्परे छवि नकारान्तस्य

प्राप्तौ 'संपुंकानाम्' इति स इत्यन्वयः। 'विसर्जनीयस्य सः' इति सत्वापवादं 'कुप्वोः ≍क≍पौ च' इति विधिं बाधितुं पुंग्रहणमित्यर्थः। ननु 'इदुदुपधस्य चाप्रत्ययस्य' इति षत्वविधिः कुप्वोरित्यस्यापवादः, अतस्तं षत्वविधिं बाधितुं पुंग्रहणमित्येव वक्तुमुचितमित्यत आह—**अप्रत्ययस्येति षत्वपर्युदासादिति**। 'पूञो डुम्सुन्' इत्यौणादिकप्रत्ययस्थमकारस्थानिकत्वाद् विसर्गस्येति भावः। ननु 'उणादयः अव्युत्पन्नानि प्रातिपदिकानि' इति 'आयनेयि' इति सूत्रस्थभाष्यरीत्या औणादिकप्रत्ययान्तेषु प्रकृतिप्रत्ययविभागाभावात् कथमिहाप्रत्ययस्येति पर्युदासं इत्यत आह—**व्युत्पत्तिपक्ष इति**। औणादिकशब्देषु प्रकृतिप्रत्ययविभागव्युत्पादनमस्ति—नास्तीति पक्षद्वयम् 'आदेशप्रत्ययोः इति सूत्रभाष्ये स्थितम्। तत्र व्युत्पत्तिपक्षे पुंस्–शब्दस्य डुम्सुन्प्रत्ययान्ततया तत्र मकारस्थानिकविसर्गस्य अप्रत्ययस्येति पर्युदासेन 'इदुदुपधस्य चाप्रत्ययस्य' इति षत्वस्य तत्र न प्रसक्तिः। अतः तत्र 'कुप्वोः' इति विधिं बाधितुम् 'संपुंकानाम्' इति पुंग्रहणमित्यर्थः। **अव्युत्पत्तीति**। औणादिकशब्देषु प्रकृतिप्रत्ययविभागाभावपक्षे अप्रत्ययस्येति पर्युदासस्यात्राप्रसक्तेः 'इदुदुपधस्य' इति प्रसक्तं षत्वं बाधितुं 'संपुंकानाम्' इति पुंग्रहणमित्यर्थः। पुँस्कोकिल इत्यनुनासिकपक्षे रूपम्। पुंस्कोकिल इत्यनुस्वारपक्षे रूपम्। ननु 'चक्षिङ् व्यक्तायां वाचि' अस्माद् ल्युट्, अनादेशः, 'चक्षिङः ख्याञ्', पुंसः ख्यानं पुंख्यानमित्यत्रापि पुमो मस्य रुत्वं स्यादित्यत आह—**ख्याञादेशे नेति**। भाष्ये 'चक्षिङः ख्याञ्' इति पठित्वा 'पूर्वत्रासिद्धम्' इत्यसिद्धकाण्डे 'रषाभ्याम्' इति णत्वविध्यनन्तरं 'ख्शाञश्शस्य यो वा' इति पठितमिति वक्ष्यते। एवं च यत्वस्यासिद्धतया खकारस्य अम्परकत्वाभावात् 'पुमः खयि' इति रुत्वं नेत्यर्थः। **पुंख्यानमिति**। 'मोऽनुस्वारः' 'वा पदान्तस्य' इति परसवर्णविकल्पः। नच 'वर्जने प्रतिषेधः, असनयोश्च' इति अनादेशे परे प्रतिषेधात् कथमत्र ख्याञादेश इति वाच्यम्। ख्शाञादेशप्रयोजनपरवार्तिके पुंख्यानमित्यादिप्रयोगात्तदुपपत्तेः।

**नश्छव्यप्रशान्**। न इति षष्ठ्यन्तं पदस्य इत्यधिकृतस्य विशेषणम्। तदन्तविधिः। 'अम्परे' इत्यनुवर्तते, रु इति च। तदाह—**अम्पर इत्यादिना**। 'अप्र-

रहाभ्याम्' इति कृतेऽपि 'यणो मयः' इति भवत्येवेति भावः। **पुमः खयि**। पुंसः संयोगान्तलोपेऽवशिष्टभागस्येदमनुकरणम्। 'अम्परे' इति बहुव्रीहिः। **पर्युदासा-**

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पदस्य रुः स्यात्, न तु प्रशान्शब्दस्य। विसर्गः। सत्वम्। श्चुत्वम्। शार्ङ्गिँश्छिन्धि, शार्ङ्गिंश्छिन्धि। चक्रिँस्त्रायस्व, चक्रिंस्त्रायस्व। 'पदस्य' किम्। हन्ति। 'अम्परे' किम्। सन्त्सरुः। त्सरुः खड्गमुष्टिः। 'अप्रशान्' किम्। प्रशान्तनोति। १४१ नॄन्पे। (८-३-१०) नॄन् इत्यस्य रुः स्याद्वा पकारे परे। १४२ कुप्वोः ꣵकꣶपौ

---

शान्' इति षष्ठ्यर्थे प्रथमा। तदाह—**न त्विति। विसर्ग इति**। शार्ङ्गिन् छिन्धि, चक्रिन् त्रायस्व, इति स्थिते नकारस्यानेन रुत्वम्, अनुनासिकानुस्वारविकल्पः, ततो विसर्गः, सत्वम्, सस्य श्चुत्वेन शकार इत्यर्थः। **शार्ङ्गिँश्छिन्धीति**। अनुनासिकपक्षे रूपम्। **शार्ङ्गिंश्छिन्धीति**। अनुस्वारपक्षे रूपम्। एवं चक्रिँस्त्रायस्वेत्यनुनासिकपक्षे। अनुस्वारपक्षे तु चक्रिंस्त्रायस्वेति। त्रैङ् पालने। ङित्त्वादात्मनेपदी। 'त्राहि' इति प्राचीनग्रन्थस्तु प्रामादिकः। त्रायत इति त्राः, त्रा इवाचरति त्राति इत्याचारक्विबन्ताद् लोट्, परस्मैपदमिति वा कथञ्चित् समाधेयम्। **प्रशानिति**। प्रपूर्वात् शाम्यतेः क्विप्। 'अनुनासिकस्य क्वि' इति दीर्घः। 'मो नो धातोः' इति मस्य नः। तस्यासिद्धत्वान्नलोपो न। **नॄन्पे**। नॄन् इति द्वितीयान्तशब्दस्वरूपपरं षष्ठ्यन्तम्। षष्ठ्याः सौत्रो लुक्। नलोपाभावोऽपि सौत्र एव। 'मतुवसो रु—' इत्यतः 'रु' इत्यनुवर्तते। 'उभयथर्क्षु' इत्यतः 'उभयथा' इत्यनुवर्तते। कदाचिद् भवति कदाचिन्न भवतीत्येवमुभयथा रुः प्रत्येतव्य इत्यर्थः। विकल्प इति यावत्। तदाह—**नॄनित्यस्येत्यादिना**। अलोऽन्त्यस्य। 'नॄन् पाहि' इति स्थिते नस्य रुत्वम्। अनुनासिकानुस्वारविकल्पः। 'खरवसानयोः' इति रेफस्य नित्यं विसर्गे प्राप्ते। **कुप्वोःꣵकꣶपौ च**। 'कुप्वोः' इति छेदः। ओसस्स-

---

**द्विति**। इदुदुपधस्य—' इति षत्वविधायके सूत्रे इति भावः। **ख्याञादेशे नेति**। 'चक्षिङः ख्याञ्' इत्यत्र ख्शादिरयमादेशः। असिद्धकाण्डे णत्वानन्तरं 'शस्य यो वा' इति स्थितमिति वक्ष्यते। एवं च यत्वस्यासिद्धतया अम्परत्वाभावात् 'पुमः खयि—' इति रुत्वं नेत्यर्थः। **पुंख्यानमिति**। चक्षिङो 'ल्युट् च' इति ल्युटि ख्याञादेशः। ननु आदेश इह दुर्लभः, 'वर्जने प्रतिषेधः, असनयोश्च' इति वार्तिकादिति चेत्सत्यम्। 'बहुलं तणयन्नवधक्कगात्रविचक्षणाजिराद्यर्थम्' इति वार्तिके बहुलग्रहणात्समाधेयम्। विस्तरस्त्विह मनोरमायामनुसंधेयः। **त्रायस्वेति**। 'त्रैङ् पालने' लोटि शप्यायादेशः। **प्रशानिति**। प्रपूर्वात् शाम्यतेः क्विप्। 'अनुनासिकस्य—' इति दीर्घः 'मो नो धातोः' इति नः। तस्यासिद्धत्वान्नलोपो न। **नॄन्पे**। पकारोपरि अकार उच्चारणार्थः। तेन नॄंः पुनातीत्यादि सिद्धम्। 'उभयथर्क्षु' इत्यत उभयथेति अनुवृत्तेर्विकल्पः फलित इत्याशयेनाह—**रुः स्याद्वेति। कुप्वोःꣵकꣶ—**। अत्र कुप्वोरिति रेफस्य विसर्गः, जिह्वामूलीयस्य खर्वात्। 'खर्परे शरि—' इति विसर्गस्यास्य लोपः, जिह्वामूलीयस्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

च । ( ८-३-३७ ) कवर्गे पवर्गे च परे विसर्जनीयस्य क्रमाज्जिह्वामूलीयोपध्मानीयौ स्तः । चाद्विसर्गः । येन नाप्राप्तन्यायेन 'विसर्जनीयस्य सः' ( सू १३८ ) इत्यस्यापवादोऽयम् । न तु 'शर्परे विसर्जनीयः' ( सू १५० ) इत्यस्य । तेन 'वासः क्षौमम्' इत्यादौ विसर्ग एव । नॄँᳲपाहि, नॄंᳲपाहि, नॄँःपाहि, नॄंः पाहि, नॄन्पाहि ।

**१४३ कानाम्रेडिते । ( ८-३-१२ )** कान्नकारस्य रुः स्यादाम्रेडिते परे ।

---

स्य रुत्वे तस्य खर्परत्वाद् विसर्गः, जिह्वामूलीयस्य शर्षूपसंख्यातत्वेन खत्वात् । तस्य च विसर्गस्य खर्परे शरि वा विसर्गलोपो वक्तव्य इति लोपः । अतः सूत्रे 'कुप्वोः' इति न विसर्गः श्रूयते । विसर्जनीयस्य स इत्यतो विसर्जनीयस्य इत्यनुवर्तते । तदाह— **कवर्गे इत्यादिना** । क्रमादिति यथासंख्यसूत्रलभ्यम् । **चाद् विसर्ग इति** । 'शर्परे विसर्जनीयः' इत्यतो 'विसर्जनीय' इत्यनुकृष्यत इत्यर्थः । चकारः पक्षे विसर्गसमुच्चयार्थ इति यावत् । अन्यथा जिह्वामूलीयोपध्मानीयाभ्यां विसर्गस्य बाध एव स्यादिति भावः । एवं च प्रकृते पकारे परे विसर्गस्य सत्वं बाधित्वा कदाचिदुपध्मानीयः कदाचिद्विसर्गः । तयोः उच्चारणे भेदः । इहादेशयोः कपावुच्चारणार्थौ, न तु विधेयकोटिप्रविष्टौ । ननु 'कुप्वोः' इति जिह्वामूलीयोपध्मानीयविसर्गविधिना यथा विसर्जनीयस्य सत्वं बाध्यते, तथा शर्परे विसर्जनीय इति केवलविसर्गविधिरपि बाध्यते । तथा च 'वासः क्षौमम्' इत्यत्रापि 'कुप्वोः' इति कदाचिद् जिह्वामूलीयः कदाचिद्विसर्गश्च स्याताम् । इष्यते तु केवलविसर्ग इत्यत आह—**येन नाप्राप्तेति** । 'येन नाप्राप्ते यो विधिरारभ्यते स तस्यापवादः' इति न्यायः । 'प्राप्ते' इति भावे क्तः । 'येन' इति कर्तरि तृतीया । 'कर्तृकर्मणोः' इति षष्ठी तु न भवति, न लोक इति निषेधात् । द्वौ नञावावश्यकत्वं द्योतयतः । यस्य विधेरवश्यं प्राप्तौ सत्यामित्यर्थः । अनेन न्यायेन 'कुप्वोः' इति विधिः 'विसर्जनीयस्य सः' इत्यस्यैवापवादः । सत्वे प्राप्त एव तदारम्भात् । शर्परे विसर्जनीय इत्यस्य तु 'कुप्वोः' इति नापवादः, 'कः करोति' इत्यादौ 'शर्परे खरि' इत्यप्राप्तेऽपि 'कुप्वोः' इत्यस्यारम्भादित्यर्थः । **तेनेति** । 'वासः क्षौमम्' इत्यादौ 'कुप्वोः' इति विधिना शर्परे इत्यस्य बाधाभावेन 'शर्परे खरि' इति केवलविसर्ग एव भवतीत्यर्थः । 'नॄँᳲपाहि', 'नॄंᳲपाहि' इत्युपध्मानीयपक्षे आनुनासिक्ये अनुस्वारे च सति रूपद्वयम् । 'नॄँः पाहि', 'नॄंः पाहि' इति विसर्गपक्षे अनुनासिकानुस्वाराभ्यां रूपद्वयम् । 'नॄन् पाहि' इति रुत्वाभावे रूपम् । तथा च पञ्च रूपाणि । सूत्रे पे इत्यकार उच्चारणार्थः । तथा च 'नॄन्पुनाति' इत्यादावपि पञ्च रूपाणि भवन्ति । **कानाम्रेडिते** । 'कान्' इति द्वितीयान्तशब्दस्य-

---

शत्वात् । 'वा शरि–' इति विसर्गस्य विसर्ग एव वा । आदेशयोः कपावुच्चारणार्थौ । **चाद्विसर्ग इति** । प्राचा तु–'चाद्विकल्प इत्युक्तम्' तदसत् । ᳲकᳲपाभ्यां मुक्ते विस-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

'संपुंकानाम्' (वा ४८१२) इति सः । यद्वा **१४४ कस्कादिषु च । (८-३-४८)** ᳲकᳲपयोरवादः । एष्विण उत्तरस्य विसर्गस्य षः स्यात् । अन्यस्य तु सः । काँस्कान्, कांस्कान् । कस्कः । कौतस्कुतः सर्पिष्कुण्डिका । धनुष्कपालम् ।

---

रूपपरं षष्ठ्यन्तम् । षष्ठ्याः सौत्रो लुक् । नलोपाभावोऽपि सौत्र एव । अलोऽन्त्य परिभाषया कान्शब्दान्तस्येति लभ्यते । रु इत्यनुवर्तते । तदाह—**कान्नकारस्येत्यादिना । संपुंकानामिति** । कान् इत्यस्य वीप्सायां द्विर्वचने कान् कान् इति स्थिते प्रथमनकारस्य रुत्वे अनुनासिकानुस्वारविकल्पः । रेफस्य विसर्गः । तस्य 'विसर्जनीयस्य सः' इति सत्वं बाधित्वा 'कुप्वोः' इति प्राप्तौ 'संपुंकानाम्' इति सत्वमित्यर्थः ।

वस्तुतस्तु 'संपुंकानाम्' इति वार्तिके कान् इति निष्फलमित्याह—**यद्वेति । कस्कादिषु च** । 'इणः' इत्यनुवर्तते । इण इति पञ्चम्यन्तम् । 'विसर्जनीयस्य सः' इत्यतो विसर्जनीयस्य' इत्यनुवर्तते । 'कस्कादिषु' इति विषयसप्तमी । कस्कादिगणे इणः परस्य विसर्गस्य षः स्यादित्यर्थः । 'सोऽपदादौ' इत्यतः स इति प्रथमान्तमनुवर्तते । कस्कादिषु अनिणः परस्य विसर्गस्य सत्वं स्यादित्यर्थः । तदेवं वाक्यद्वयं संपद्यते । कस्कादिषु तथाविधानामेव कृतषत्वसत्वानां निर्देशादयं विषयाविभागः । **ᳲकᳲपयोरपवाद इति** । 'ᳲकᳲपयोः' इत्युपलक्षणं 'कुप्वोः' इति विहितविसर्गस्यापि । **अन्यस्य तु स इति** । प्रकृते विसर्गस्य इणः परत्वाभावाद् न षत्वम् । किन्तु सत्वमित्यर्थः । कांस्कानिति अनुनासिकपक्षे रूपम् । कांस्कानिति अनुस्वारपक्षे रूपम् । अथ कस्कादिगणं पठति—**कस्क इत्यादिना** । वीप्सायां द्वित्वे पूर्वखण्डे अकारात् परस्य विसर्गस्य सत्वम् । 'कः कोऽत्र भोः' इति प्रयोगे तु संहिताविरहात् सत्वाभावः, 'कस्कादिषु च' इत्यस्य 'तयोर्य्वावचि संहितायाम्' इति संहिताधिकारस्थत्वादित्याहुः । **कौतस्कुत इति** । वीप्सायां द्विर्वचने कुतः कुत आगत इत्यर्थे तत आगतं इत्यण् । अव्ययानां भमात्रे टिलोपः । अत एव निपातनाद् 'अव्ययात्त्यप्' इति न । **सर्पिष्कुण्डिकेति** । अत्र इणः परत्वात् षत्वम् । एवं धनुष्कपालम्, चतुष्कपालमित्यत्रापि ।

---

र्जनीयस्य सत्वप्रसङ्गात् । **कानाम्रेडिते** । 'कान्कान्' इति वाच्ये आम्रेडितग्रहणं यत्र द्विरुक्तिस्तत्रैव यथा स्यात् । इह मा भूत्, कान् कान् पश्यसीति । अत्र एकः किंशब्दः प्रश्ने, द्वितीयः क्षेपे । कान् कुत्सितान् पश्यसीत्यर्थः । वार्तिके कान्ग्रहणाभावेऽपि सत्वं सिध्यतीत्याशयेनाह—**यद्वेति** । संपुमोस्तु वार्तिकेनैव सत्वम् । कस्कादिषु संस्कर्ता, संस्करिष्यति, पुंस्कोकिलः, पुंस्काम इत्यादिबहूनां पाठे गौरवात् । कस्कादिषु संपुंकानिति पठित्वा सर्वमपि वार्तिकं त्यक्तुमशक्यम्, पुंस्कोकिल इत्यादाविणः परत्वेन विसर्गस्य षत्वप्रसङ्गात् । किं तु कान्ग्रहणमिव समूग्रहणं वार्तिके त्यक्तुं शक्यमित्यन्ये । **कस्का-**

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आकृतिगणोऽयम्। १४५ **संहितायाम्**। ( ६-१-७२ ) इत्यधिकृत्य। १४६ **छे च**। ( ६-१-७३ ) ह्रस्वस्य छे परे तुगागमः स्यात्संहितायाम्। श्चुत्वस्यासिद्धत्वाज्जश्त्वेन दः। ततश्चर्त्वस्यासिद्धत्वात्पूर्वं श्चुत्वेन जः। तस्य चर्त्वेन चः। श्चुत्वस्यासिद्धत्वात् 'चोः कुः' ( सू ३७८ ) इति कुत्वं न। स्वच्छाया। शिवच्छाया। १४७ **आङ्माङोश्च**। ( ६-१-७४ ) एतयोश्छे परे तुक्स्यात्। 'पदान्ताद्वा' ( सू १४६ ) इति विकल्पापवादः। आच्छादयति। माच्छिदत्। १४८ **दीर्घात्**। ( ६-१-७५ ) दीर्घाच्छे परे तुक्स्यात्। दीर्घस्यायं तुक्, न तु

---

ननु कस्कादिगणे कांस्कानित्यस्य पाठाभावात् कथं सत्वमित्यत आह—**आकृतिगणोऽयमिति**। एवं च कस्कादित्वादेव कांस्कानित्यत्र सत्वसिद्धेः 'संपुंकानाम्' इत्यत्र कान्ग्रहणं न कर्तव्यमिति भावः।

**संहितायाम्। इत्यधिकृत्येति**। छे चेत्यादि विधीयत इति शेषः। यद्यप्येतद् 'इको यणचि' इत्यत्रैव वक्तव्यम्, तथापि सूत्रक्रमानुरोधादिहोक्तम्। **छे च**। 'ह्रस्वस्य पिति—' इत्यतः 'ह्रस्वस्य' इति 'तुक्' इति चानुवर्तते। 'संहितायाम्' इत्यधिकृतम्। तदाह—**ह्रस्वस्येति**। तुकः ककार इत्। उकार उच्चारणार्थः। कित्त्वाद् ह्रस्वस्यान्तावयवः। स्वस्य छायेति षष्ठीसमासे सुब्लुकि वकारादकारस्य तुकि स्वत् छायेति स्थिते वस्तुगत्या प्रक्रियाक्रमं दर्शयति—**श्चुत्वस्येत्यादिना। श्चुत्वेन ज इत्यन्तेन**। ननु स्वच् छायेति स्थिते तुको ह्रस्वावयवस्य पदान्तत्वात् तत्स्थानिकचकारस्य 'चोः कुः' इति कुत्वं स्यादित्याशङ्क्याह—**श्चुत्वस्येति। आङ्माङोश्च**। छे तुगित्यनुवर्तते। तदाह—**एतयोरिति**। आङ्माङोरित्यर्थः। ननु 'दीर्घात्' इत्येव सिद्धे किमर्थमिदमित्यत आह—**पदान्ताद्वेति विकल्पापवाद इति। आच्छादयति। माच्छिददिति**। तुकि पूर्ववत् प्रक्रिया। **दीर्घात्**। छे तुगित्यनुवर्तते। तदाह—**दीर्घात् छे परे तुक् स्यादित्यादिना**। 'उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्' इति छकारस्य तुक् अन्तावयवः स्यात्। ततश्च छिदिधातोर्यङि, द्वित्वे, हलादिशेषे, अभ्यासचर्त्वे 'गुणो यङ्लुकोः' इति अभ्यासगुणे, ताङि, चे छियते इति स्थिते, छकारस्यान्त्यावयवे तुकि, तस्य श्चुत्वेन चकारे सति तत्पूर्वस्य छकारस्य 'खरि च' इति चर्त्वेन चकारे सति, चेच्चियत इति एकाराद् द्विचकारमेव रूपं स्यात्, छकारो न श्रूयेतेत्यत आह—**दीर्घस्यायं तुगिति**। ततश्च छकारात् प्राग् दीर्घस्योपरि

---

**दिषु च**। अत्र 'सोपदादौ' इत्यतः स इति 'इणः षः' इति सूत्रं चानुवर्तते, तदाह—**एष्विण उत्तरस्येत्यादि। कौतस्कुत इति**। कुतः कुत आगत इत्यर्थे अव्ययात्त्यपि प्राप्ते गणपाठसामर्थ्यादणि इत्याहुः। 'अव्ययानां भमात्रे' इति वक्ष्यमाणे-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

छस्य । '—सेनासुराच्छाया—' ( सू ८२८ ) इति ज्ञापकात् । चेच्छिद्यते । १४९ पदान्ताद्वा । (६-१-७६ ) दीर्घात्पदान्ताच्छे परे तुग्वा स्यात् । लक्ष्मीच्छाया, लक्ष्मीछाया ॥

॥ इति हल्सन्धिप्रकरणम् ॥

## अथ विसर्गसन्धिप्रकरणम् । ६ ।

' विसर्जनीयस्य सः ' ( सू १३८ ) । विष्णुस्त्राता । १५० शर्परे विसर्जनीयः । ( ८-३-३५ ) शर्परे खरि विसर्जनीयस्य विसर्जनीयः, न त्वन्यत् ।

---

तुकि श्चुत्वे चेच्छिद्यत इति भवति । छकारस्य खर्परकत्वाभावाच्चर्त्वं न भवतीति चकारात् छकारश्रवणं निर्बाधम् । ननु दीर्घस्यायं तुगिति कुत इत्यत आह—**सेनेति** । उत्तरसूत्रे पदान्तदीर्घात् छे तुग्विकल्पविधानादिदं सूत्रमपदान्तविषयमभिप्रेत्य उदाहरति—**चेच्छिद्यत इति** । **पदान्ताद्वा** । तुक्, छे, दीर्घात्, इत्यनुवर्तते । तदाह—**दीर्घात् पदान्तादित्यादिना** । अयमपि तुक् दीर्घस्यैव न तु छस्य । उक्तज्ञापकात् ।

इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमायां हल्सन्धिप्रकरणं समाप्तम् ॥

**विसर्जनीयस्य सः** । हल्सन्धिनिरूपणे प्रसङ्गादिदं व्याख्यातमपि प्रकरणानुरोधात् पुनरुपन्यस्तं विसर्जनीयपदानुवृत्तिप्रदर्शनार्थम् । **विष्णुस्त्रातेति** । विष्णुशब्दात् सुप्रत्यये तस्य रुत्वे विसर्गे सति विष्णुः त्रातेति स्थिते सत्वम् । **शर्परे विसर्जनीयः** । 'विसर्जनीयस्य' इत्यनुवर्तते । 'खरवसानयोः—' इत्यतः खर्ग्रहणं मण्डूकप्लुत्या अनुवर्तते । शर् परो यस्मादिति बहुव्रीहिः । खर् विशेष्यम् । तदाह—**शर्परे खरीति** । विसर्गस्य विसर्गविधौ फलमाह—**न त्वन्यदिति** । विसर्गस्य विसर्गविधानं

---

नात्र टिलोपः । **सर्पिष्कुण्डिकेति** । 'नित्यं समासे—' इत्येव सिद्धे इह पाठस्य प्रयोजनमसमासे व्यपेक्षाविरहेऽपि षत्वार्थमित्यादि वक्ष्यति । **संहितायाम्** । **इत्यधिकृत्येति** । एतच्च 'इको यणचि' इत्यत्रैव वक्तव्यमपि सूत्रक्रमानुरोधेनात्रोक्तम् । **छे च** । छकारोपरि अकार उच्चारणार्थः । 'विदिभिदिच्छिदेः—' इति निर्देशात् । तेन विच्छिन्नमित्यादि सिद्धम् । **ह्रस्वस्येति** । एतच्च 'ह्रस्वस्य पिति कृति—' इत्यतोऽनुवर्तते तुक् च । **सेनासुरेति** । यदि हि छस्य तुक् स्यात्तर्हि छस्य चर्त्वे सति चद्वयं स्यात् । संनिपातपरिभाषया चर्त्वाप्रवृत्तौ तु छकारोपरि चकारः श्रूयेतेति भावः । **पदान्ताद्वा** । प्रकृतेन दीर्घेण पदविशेषणात्तदन्तविधिलाभेनेष्टसिद्धावप्यन्तग्रहणं पदान्तस्यैव तुग्यथा स्यात्पदस्य मा भूदित्यदर्थम् । अन्यथा पदविधित्वात्समर्थपरिभाषोपस्थितौ समर्थेषु

---

१—'जश्त्वचर्त्वेषु' इति लपपाठः, अपदान्तत्वाज्जश्त्वस्याप्राप्तेः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कः त्सरुः। 'घनाघनः क्षोभणः'। इह यथायथं सत्वं जिह्वामूलीयश्च न।
**१५१ वा शरि।** (८-३-३६) शरि परे विसर्जनीयस्य विसर्जनीय एव वा स्यात्। हरिः शेते, हरिश्शेते। 'खर्परे शरि वा विसर्गलोपो वक्तव्यः' (वा ४९०६) राम स्थाता, रामः स्थाता। हरि स्फुरति, हरिः स्फुरति। पक्षे विसर्गे सत्वे च त्रैरूप्यम्। 'कुप्वोः ᳲकᳲपौ च'। (सू १४२)। कᳲकरोति, कःकरोति। कᳲखनति, कः खनति। कᳲपचति, कः पचति। कᳲफलति, कः फलति। **१५२ सोऽपदादौ।**

---

तदितरपरिसंख्यानार्थमिति भावः। किं तदन्यदित्यत आह—**इह यथायथमिति।** 'यथास्वे यथायथम्' इति निपातितम्। यथासम्भवमित्यर्थः। कः त्सरुरित्यत्र सत्वम्, घनाघनः क्षोभण इत्यत्र कुप्वोरिति जिह्वामूलीयश्च न भवतीत्यर्थः। तथा च सत्वस्य 'कुप्वोः' इत्यस्य चायमपवाद इत्युक्तं भवति। **वा शरि।** विसर्जनीयस्येति, विसर्जनीय इति चानुवर्तते। विसर्गस्य विसर्गविधानं च तस्य सत्वपरिसंख्यानार्थम्। वाग्रहणाच्च सत्वपरिसंख्यानं पाक्षिकम्। तदाह—**शरि पर इत्यादिना। हरिः शेत इति।** विसर्गस्य विसर्जनीयपक्षे सत्वपरिसंख्याने रूपम्। **हरिश्शेत इति।** विसर्गस्य विसर्गविध्यभावपक्षे सत्वे सति सस्य श्चुत्वेन शकारे रूपम्। **खर्परे शरि।** खर् परो यस्मादिति बहुव्रीहिः। शर् विशेष्यम् खर्परके शरि परे विसर्गस्य लोपविकल्पो वक्तव्य इत्यर्थः। लोपाभावपक्षे 'वा शरि' इति भवति। **राम स्थातेति।** रामः स्थातेति स्थिते विसर्गलोपे अविसर्गमेकसकारं रूपम्। एवं हरि स्फुरतीत्यत्रापि। **पक्षे इति।** विसर्गस्य लोपाभावपक्षे 'वा शरि' इति विसर्गे सति सविसर्गमेकसकारं रूपम्। तदुभया-भावे तु सत्वे सति द्विसकारं रूपमिति रूपद्वयम्। ततश्च लोपपक्षासिद्धाविसर्गैकसकार-रूपसंकलनया त्रीणि रूपाणीत्यर्थः। **कुप्वोः ᳲकᳲपौ च।** हल्सन्धिनिरूपणे व्याख्या-तमप्येतत् प्रकरणानुरोधात् पुनरुपन्यस्तम्। कᳲकरोतीति जिह्वामूलीयपक्षे। कः करो-तीति विसर्गपक्षे। एवमग्रेऽपि। **सोऽपदादौ।** कुप्वोरित्यनुवर्तते। अपदादाविति

---

लक्ष्मीच्छायेत्यादिष्वेव स्यात्। तिष्ठतु कुमारी छत्रं हर देवदत्तेत्यत्र न स्यात्। असा-मर्थ्यात्। एवं 'न पदान्ताट्टोः—' इति सूत्रे पदाट्टोरिति वक्तव्येऽन्तग्रहणं दुष्टाः षट् सन्तन्नय इत्यत्रापि ष्टुत्वनिषेधार्थमित्याहुः। इति तत्त्वबोधिन्यां हल्सन्धिप्रकरणम्।

**विसर्गसन्धिः। विष्णुस्त्रातेति।** प्रातिपदिकात् 'स्वौजसमौट्—' इति सुप्रत्यये तस्य रुत्वे 'खरवसानयोः—' इति विसर्गे च कृते 'विसर्जनीयस्य—' इति सः। अस्य च रुत्वं नाशङ्क्यम्, रुत्वं प्रति विसर्जनीयस्य सत्वस्यासिद्धत्वात्। **शर्परे विस-र्जनीयः।** शर्परे इति बहुव्रीहिः, अनुवर्तमानश्च खर् अन्यपदार्थः। सत्वादेरयमपवादः। यदि तु 'शर्परे न' इत्येवोच्येत तर्हि प्रकृते सत्वे निषिद्धेऽपि कुप्वोः ᳲकᳲपौ स्याताम्,

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

(८-३-३८) विसर्जनीयस्य सः स्यादपदाद्योः कुप्वोः परयोः। 'पाश-कल्प-क-काम्येष्विति वाच्यम्' (वा ५०३३)। पयस्पाशम्। यशस्कल्पम्। यशस्कम्। यशस्काम्यति। 'अनव्ययस्येति वाच्यम्' (वा ४६०१)। प्रातःकल्पम्। 'काम्ये रोरेवेति वाच्यम्' (वा ४६०२) नेह। गीःकाम्यति। १५३ इणः षः। (८-

---

तद्विशेषणम्। द्वित्वे एकवचनमार्षं प्रत्येकाभिप्रायं वा एकवचनम्। विसर्जनीयस्येत्यप्यनुवर्तते। तदाह—**विसर्जनीयस्येत्यादिना**। 'कुप्वोः' इत्यस्यायमपवादः। **पाशकल्पक इति**। एतद्वार्तिकं ग्रन्थकृता न धृतम्। **पयस्पाशमिति**। याप्ये पाशप्। कुत्सितं पय इत्यर्थः। **यशस्कल्पमिति**। ईषदसमाप्तौ कल्पप्। ईषदसमाप्तं यश इत्यर्थः। **यशस्कमिति**। 'अज्ञाते' 'कुत्सिते' इत्यादिना कः। **यशस्काम्यतीति**। यश आत्मन इच्छतीत्यर्थे सुप आत्मन इत्यनुवृत्तौ 'काम्यच्च' इति काम्यच्। 'सनाद्यन्ताः' इति धातुत्वाल्लडादयः। **अनव्ययस्य**। 'सोऽपदादौ' इति विधिः अव्ययविसर्गस्य न भवतीत्यर्थः। **प्रातःकल्पमिति**। ईषदसमाप्तौ कल्पप्। ईषदसमाप्तः प्रातःकाल इत्यर्थः। अधिकरणशक्तिप्रधानस्यापि प्रातश्शब्दस्य वृत्तिविषये शक्तिमत्प्रधानत्वं न विरुध्यते, दोषाभूतमहः, दिवाभूता रात्रिरितिवत्। **काम्ये रोः**। काम्यप्रत्यये परतः रुस्थानिकस्यैव विसर्गस्य 'सोऽपदादौ' इति विधिर्भवतीत्यर्थः। **गीः काम्यतीति**। गिरमात्मन इच्छतीत्यर्थे काम्यजादि पूर्ववत्। गॄधातोः क्विपि 'ॠत इद्धातोः' इति इत्वे, रपरत्वे, रेफस्य विसर्गः, तस्य च रुस्थानिकत्वाभावान्न सत्वम्। किंतु 'कुप्वोः' इत्येव भवतीत्यर्थः। **इणः षः**। इण इति पञ्चमी। परस्येत्यध्याहार्यम्। विसर्जनीयस्येत्यनु-

---

वासः क्षौमम्, अद्भिः प्सातमित्यादौ। विसर्जनीयवचनात्तु विकारमात्रं बाध्यते इत्याशयेनाह—**न त्वन्यदिति**। तदेव स्फुटयति—**इहेति**। **सोऽपदादौ**। **अपदाद्योरिति**। सूत्रे व्यत्ययेन एकवचनम्। यदि तु 'विसर्जनीयस्य सः' 'शर्परे विसर्जनीयः' इत्यत्र मण्डूकप्लुत्यानुवर्तितो यः खर् स इहाप्यनुवर्त्य विशेष्यते अपदादौ खरीति, तदा यथाश्रुतं साधु। परंतु पुनर्मण्डूकप्लुत्यानुवर्तने क्लेश इति भावः। अन्ये त्वाहुः—पुनर्मण्डूकप्लुतिं विनाप्यनुवर्तितुं शक्यः, 'वा शरि' इत्यत्र शरा खरं विशेष्य शर्रूपे खरीति व्याख्याने 'कुप्वोः—' इति सूत्रे कुप्वोः खरीति व्याख्याने च क्षत्यभावादिति। **पयस्पाशमिति**। 'याप्ये पाशप्' 'ईषदसमाप्तौ कल्पप्—' 'अज्ञाते' 'कुत्सिते' इति कः 'काम्यच्च' इति काम्यच्। **पाश-कल्प-क-काम्येष्विति** वृत्तिः। संभवदर्शनमेतत्, न तु परिगणनम्, अन्यस्यासंभवात्। **प्रातःकल्पमिति**। अधिकरणशक्तिप्रधानस्यापि प्रातःशब्दस्येह वृत्तिविषये शक्तिमत्परत्वम्, दोषाभूतमहः, दिवाभूता रात्रिरितिवत्। **गीः काम्यतीति**। न च सत्वनिषेधेऽपीह 'इणः षः' इति षत्वं स्यादिति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

३-३९ ) इणः परस्य विसर्गस्य षकारः स्यात्पूर्वविषये। सर्पिष्पाशम्। सर्पिष्कल्पम्। सर्पिष्कम्। सर्पिष्काम्यति। **१५४ नमस्पुरसोर्गत्योः।** ( ८-३-४० ) गतिसंज्ञयोरनयोर्विसर्गस्य सः कुप्वोः परयोः। नमस्करोति। साक्षात्प्रभृतित्वात्कृञो योगे विभाषा गतिसंज्ञा। तदभावे—नमः करोति। 'पुरोऽव्ययम्' (सू ७६८) इति नित्यं गतिसंज्ञा। पुरस्करोति। अगतित्वान्नेह। पूः पुरौ पुरः प्रवेष्टव्याः। **१५५ इदुदुपधस्य चाप्रत्ययस्य।** ( ८-३-४१ ) इकारोकारोपधस्याप्रत्ययस्य

---

वर्तते। तदाह—**इणः परस्येति। पूर्वविषये इति।** अत्र 'कुप्वोः' इति 'अपदादौ' इति 'अनव्ययस्य' इति 'काम्ये रोरेव' इति च संबध्यत इति भावः। तेन उच्चैःकल्पं, दोःपाशं, गीःकाम्यतीत्यादौ न षत्वमिति भावः। सर्पिष्पाशमित्यादौ पूर्ववत् पाशकल्पवादि। **नमस्पुरसोः।** इत उत्तरमपदादाविति न संबध्यते। 'विसर्जनीयस्य सः' इति 'कुप्वोः' इति चानुवर्तते। तदाह—**गतिसंज्ञयोरित्यादिना।** 'कुप्वोः' इत्यस्यायमपवादः। **नमस्करोतीति।** नमस् इति सकारस्य रुत्वे विसर्गे तस्य कुप्वोरिति विधिं बाधित्वा अनेन सत्वम्। ननु प्रादिषु पाठाभावात् कथं नमश्शब्दस्य गतित्वमित्यत आह—**साक्षादिति। विभाषेति।** 'साक्षात्प्रभृतीनि च' इत्यत्र 'विभाषा कृञि' इत्यतो विभाषेत्यनुवृत्तेरिति भावः। **तदभाव इति।** गतित्वाभावपक्षे कुप्वोरिति जिह्वामूलीये सति नम≍करोतीति रूपमित्यर्थः। **पुरः प्रवेष्टव्या इति।** 'पॄ पालनपूरणयोः' 'भ्राजभास' इत्यादिना क्विप्, 'उदोष्ठ्यपूर्वस्य' इत्युत्वम्, रपरत्वम्, ततो जसि अनव्ययत्वेन गतित्वाभावान्न सत्वम्। अनव्ययत्वसूचनार्थमेव 'पूः पुरौ' इत्युक्तम्।

**इदुदुपधस्येति।** विसर्जनीयस्येत्यनुवर्तते। इदुदुपधस्येति तद्विशेषणम्। इदुतौ उपधे यस्येति बहुव्रीहिः। कुप्वोरिति चानुवर्तते। तदाह—**इकारोकारेति। अप्रत्ययस्येति।** प्रत्ययावयवभिन्नस्येत्यर्थः। प्रत्ययभिन्नस्य विसर्गस्येत्यर्थे तु कविभिः

---

वाच्यम्। तत्रापि 'काम्ये रोरेव' इत्यस्यानुवृत्तेः। यदि तु 'इणः षः' इत्यत्रैवेदं पठ्यते तर्हि षत्वमात्रप्रतिषेधेऽपि पूर्वेण सत्वं स्यात्। **इणः षः।** 'सोपदादौ' इत्यस्यायमपवादः। **पुरः प्रवेष्टव्या इति।** 'पॄ पालनपूरणयोः'। 'भ्राजभास–' इत्यादिना क्विप्। तदन्ताज्जस्। जसन्ततां स्फुटीकर्तुं पूः पुरावित्युपन्यस्तम्। **इदुदुपधस्य।** इदुदिति किम्, गीः करोति, पूः करोति। इह इदुतौ उपधे यस्य समुदायस्य तस्यावयवो यो विसर्ग इति वैयधिकरण्येन संबन्धः। अप्रत्ययस्येति तु अप्रत्ययो यो विसर्ग इति संबध्यते। संभवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वात्। न च विसर्गस्य प्रत्ययत्वमप्रसिद्धमिति वाच्यम्। अग्निः करोतीत्यादौ स्थानिवद्भावेन तत्प्रसिद्धेः। न चातिदेशं प्रति त्रिपाद्या असिद्धत्वं शङ्क्यम्। अप्रत्ययस्येति निषेधेनैव सिद्धत्वज्ञाप-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विसर्गस्य षः स्यात्कुप्वोः। निष्प्रत्यूहम्। आविष्कृतम्। दुष्कृतम्। 'अप्रत्ययस्य' किम्। अग्निः करोति। वायुः करोति। 'एकादेशशास्त्रनिमित्तकस्य न षत्वम्।

---

कृतमित्यत्रापि षत्वं स्यात्। तत्र भिसः प्रत्ययत्वेऽपि विसर्गमात्रस्य प्रत्ययत्वाभावात्। अत्र 'इदुद्भ्यामप्रत्ययस्य' इत्येतावतैव इदुद्भ्यामुत्तरस्य विसर्गस्येत्यर्थस्य सिद्धत्वादुपधाग्रहणं न कर्तव्यमिति हयवरट्सूत्रे भाष्ये स्थितम्—"उपधाग्रहणं न करिष्यते। इदुद्भ्यां तु परं विसर्जनीयं विशेषयिष्यामः" इति। **निष्प्रत्यूहमिति**। प्रत्यूहो विघ्नः तस्याभावो निष्प्रत्यूहम्। अर्थाभावे अव्ययीभावः। **आविष्कृतमिति**। प्रकाशे प्रादुराविः स्यादित्यमरः। **दुष्कृतमिति**। दुस् दुरिति प्रादौ पठितम्। तत्र प्रथमस्य सान्तस्य षत्वं निर्विवादम्। रेफान्तस्य तु 'इदुदुपधस्य सकारस्य यो विसर्जनीय' इति हयवरट्सूत्रस्थभाष्यसम्मतपक्षान्तरे षत्वं न भवति, तत्र विसर्जनीयस्य सकारस्थानिकत्वाभावात्। **अग्निः करोतीति**। विसर्गस्य व्यपदेशिवद्भावेन प्रत्ययावयवत्वादिति भावः।

---

नात्। अत एव अग्निरित्यादौ रोर्विसर्गः सिध्यति। अन्यथाऽपदान्तत्वान्न स्यात्। विसर्गविधिस्तु पुनरित्यादौ चरितार्थः। ज्ञापकं च विशेषापेक्षम्। तेन 'अचः परस्मिन्–' इति त्रिपाद्यां न प्रवर्तते। एवं च 'पूर्वत्रासिद्धीये न स्थानिवत्' इति सिद्धान्त उक्तयुक्तिमूलको न तु वाचनिक इति मनोरमायां स्थितम्। अत्र वदन्ति—अप्रत्ययस्येत्यत्र प्रत्ययस्य यो विसर्जनीयो न भवतीत्याद्यर्थ एव आकरे स्थित इति अप्रत्ययो यो विसर्ग इति सामानाधिकरण्येनान्वयो न युक्तः। सर्पिष्करोतीत्यत्र 'इसुसोः सामर्थ्ये' इति वैकल्पिकषत्वप्रवृत्तावपि तिष्ठतु सर्पिः पिब त्वमुदकमित्यत्र 'इदुदुपधस्य–' इत्यनेन नित्यं षत्वप्रसङ्गात्। न चाकरमतेऽप्युणादीनामव्युत्पत्त्याश्रयणे तथा स्वीकारादिष्टापत्तिरिति वाच्यम्। व्युत्पत्त्याश्रयणे दोषतादवस्थ्यात्, 'इसुसोः–' इत्यत्र सर्पिष्करोतीत्युदाहरणेन व्युत्पत्तिपक्षस्यैव वार्तिककारेण स्वीकृतत्वानुमानात्। अन्यथा 'इदुदुपधस्य–' इत्यनेनैव व्युत्पत्त्यव्युत्पत्तिपक्षभेदेन षत्वविकल्पसिद्धेस्तदुदाहरणस्यासंगतिप्रसङ्गात्। किंच तिष्ठतु सर्पिरित्यादौ 'इदुदुपधस्य–' इति षत्वस्येष्टत्वे—कस्कादिषु सर्पिष्कुण्डिकाशब्दोऽसमासे व्यपेक्षाविरहेऽपि षत्वार्थः—इति स्वमूलग्रन्थविरोध इति। अत्र केचित्। इदुद्भ्यामप्रत्ययस्येति वक्तव्ये इदुदुपधस्येतिग्रहणं नित्यं य इदुदुपधस्तस्यैव विसर्गस्य षत्वं यथा स्यात्, कविभिः कृतमित्यादौ मा भूदित्येवमर्थम्। भिसो विसर्गस्य हि नित्यमिदुदुपधत्वं नास्ति रामैरित्यादौ तदभावादिति। तन्न, अग्निः करोतीति निषेधोदाहरणस्यासंगत्यापत्तेः। देव इत्यादावकारोपधत्वात् प्रियचत्वा इत्यादावाकारोपधत्वेन चतुष्कपाल इत्यादौ षत्वानापत्तेश्चेति यत्किंचिदेतत्। अन्ये तु 'प्रत्ययस्य यो विसर्जनीयो न भवति' इत्यादिव्याख्याने तूक्तोदाहरणे षत्वस्याप्रवृत्तेरुपधस्ये-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कस्कादिषु भ्रातुष्पुत्रशब्दस्य पाठात्' ( वा ४९१९ )। तेनेह न—मातुः कृपा ।

ननु मातृशब्दात् पञ्चम्येकवचनं ङसिः । 'ऋत उत्' इति ऋकारस्य अकारस्य च उकार एकादेशः । रपरत्वम् । मातुर् स् इति स्थिते 'रात्सस्य' इति सलोपः । मातुः कृपेत्यत्रापि षत्वं स्यात् । उर् इत्येकादेशस्य पूर्वान्तत्वेन अप्रत्ययतया तदवयवरेफस्थानिकविसर्गस्य प्रत्ययावयवत्वाभावात् । नच उ इत्यस्यैव एकादेशतया पूर्वान्तत्वेऽपि रेफस्य प्रत्ययावयवत्वमस्तीति वाच्यम् । 'उरण् रपरः' इत्यत्र 'आद्यन्तौ टकितौ' इत्यतः अन्तग्रहणानुवृत्तिमङ्गीकृत्य रेफस्य एकादेशान्ततया भाष्ये सिद्धान्तिततत्वात् । अत एव च 'रदाभ्याम्' इति सूत्रे 'थलि च सेटि' इति सूत्रे च 'गुणो भवति वृद्धिर्भवतीति रेफशिरा गुणवृद्धिसंज्ञकोऽभिनिर्वर्तते' इति भाष्यम्, 'उः स्थाने अण् प्रसज्यमान एव रपरो भवति, पूर्वभक्तश्च रेफः' इति कैयटश्च संगच्छते । नच उर् इत्यस्य परादित्वे प्रत्ययावयवत्वमस्तीति वाच्यम् । मातृ अस् इत्यस्यां दशायां हि सकारसन्निधौ अकारस्य प्रत्ययत्वाभावेन तत्स्थाने भवन् उर् इत्यादेशः प्रत्ययत्वं न भजते । प्रत्ययत्वस्य समुदायनिवेशित्वात् । यस्तु कृते उरादेशे अवशिष्टः सकारः प्रत्ययसंज्ञकः, स तु लुप्त एव । अस्तु वा परादित्वेन उर् इत्यस्य प्रत्ययत्वम् । तथापि तस्य पूर्वान्तत्वाद् अप्रत्ययत्वाद् तद्विसर्गस्य षत्वमप्रत्यूहम् । न च अन्तवत्त्वे कर्तव्ये षत्वस्यासिद्धत्वाद् न तत्रान्तवत्त्वप्रवृत्तिरिति वाच्यम् । 'पूर्वत्रासिद्धे न स्थानिवत्' इत्युक्त्या तदितरातिदेशानां त्रिपाद्यामपि प्रवृत्त्यभ्यनुज्ञानात् । अत एव अमी चीरपेणेत्यत्र ईत्वणत्वे सिध्यतः । तत्र एकारे अदश्शब्दसम्बन्धित्वस्य पे इत्यत्र एकाजुत्तरपदत्वस्य च अन्तवत्त्वाधीनत्वात् । तस्माद् उर् इत्यस्य पूर्वान्तत्वे मातुः कृपेत्यत्र षत्वं दुर्वारमित्यत आह—**एकादेशेति** । एकादेशशास्त्रसंपन्नरेफस्थानिकत्वेन विसर्गस्य एकादेशशास्त्रे-

त्येतत्सुत्यजमित्याहुः । स्यादेतत्, अप्रत्ययग्रहणमेव स्थानिवत्सूत्रं प्रति त्रिपादी सिद्धेत्यत्र ज्ञापकमित्युक्तम् । तदिदं वैयधिकरण्येनान्वयमभ्युपगच्छतां न सिध्येत् । अत्राहुः—'न मु ने' इत्यत्र नेति योगं विभज्य स्थानिवत्सूत्रं प्रति त्रिपादी नासिद्धेति व्याख्यायते । 'प्रत्ययः' 'परश्च' इत्यादिनिर्देशाश्चेहानुकूलाः । योगविभागस्येष्टसिद्ध्यर्थत्वाद् 'अचः परस्मिन्—' इति सूत्रं प्रति त्वसिद्धैव । ततश्च 'पूर्वत्रासिद्धे न स्थानिवत्' इति सिद्धान्तो युक्तिमूलक इत्यादि सर्वं संगच्छत इति । अप्रत्ययो विसर्ग इति सामानाधिकरण्यपक्षे मातुः कृपेत्यादौ 'इदुदुपधस्य—' इति षत्वमाशङ्क्याह—**एकादेशशास्त्रनिमित्तकस्येति** । मातुरित्यत्र हि 'ऋत उत्' इति एकादेशशास्त्रं विसर्गं प्रति परम्परया प्रयोजकम् । आकरे तु 'एकादेशनिमित्तात्' इति प्रचुरः पाठः । तत्र

१ पूर्वान्तत्वे—क, ख ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

'मुहुसः प्रतिषेधः' (वा० ४९११)। मुहुः कामा। **१५६ तिरसोऽन्यतरस्याम्।** (८-३-४२) तिरसो विसर्गस्य सो वा स्यात्कुप्वोः। तिरस्कर्ता, तिरःकर्ता। **१५७ द्विस्त्रिश्चतुरिति कृत्वोऽर्थे।** (८-३-४३) कृत्वोऽर्थे वर्तमानानामेषां विसर्गस्य षकारो वा स्यात्कुप्वोः। द्विष्करोति, द्विः करोति। इत्यादि।

---

निमित्तकत्वमिति भावः। **भ्रातुष्पुत्रेति।** एकादेशशास्त्रनिमित्तकस्यापि विसर्गस्य षत्वप्रवृत्तौ भ्रातुष्पुत्रशब्दस्य पाठो व्यर्थः स्यात्। 'कस्कादिषु च' इति षत्वार्थो हि तत्र पाठः। षत्वस्य च अनेनैव सिद्धौ किं तेनेति भावः।

**मुहुसः।** षत्वस्येति शेषः। अत्र 'पुम्मुहुसोः प्रतिषेधो वक्तव्यः' इति भाष्ये पठितम्। तत्र पुंग्रहणमनुवादमात्रम्। 'संपुंकानां सो वक्तव्यः' इत्यनेन गतार्थत्वात्। **तिरसो।** सोऽपदादाविल्यतः स इत्यनुवर्तते, कुप्वोरिति, विसर्जनीयस्येति च। इण इति निवृत्तम्, असंभवात्। तत्सन्नियोगात् ष इति च निवृत्तम्। तदाह—**तिरसो विसर्गस्येत्यादिना। तिरस्कर्तेति।** 'कुप्वोः' इति प्राप्ते सत्वम्। तदभावे जिह्वामूलीयविसर्गौ। **द्विस्त्रिश्चतुरिति।** इतिकरणानन्तरं शब्दानामिति शेषः। विसर्जनीयस्येति कुप्वोरिति अन्यतरस्यामिति इणष्ष इति चानुवर्तते। 'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' इति कृत्वसुचोऽर्थः कृत्वोऽर्थः। तत्र वर्तमानानां द्विः त्रिः चतुः इति शब्दानां विसर्गस्येत्यन्वयः। तदाह—**कृत्वोऽर्थ इत्यादिना। द्विष्करोतीति।**

---

एकादेश एकादेशशास्त्रम्, तन्निमित्तं यस्य उकारस्य तस्मादित्यर्थः। नन्वेवम् 'अप्रत्ययस्य' इत्यत्र सामानाधिकरण्यपक्षोऽप्याकरसंमत इति चेदत्राहुः—प्रत्येकं 'संयोगसंज्ञा' इति पक्ष आकरसंमतोऽपि यथा निष्प्रयोजनस्तथायमपि। वैयधिकरण्यपक्षस्त्वावश्यक एव। अन्यथा तिष्ठतु सर्पिः पिब त्वमुदकमित्याद्यसिद्ध्यापत्तेरिति। **भ्रातुष्पुत्रशब्दस्य पाठादिति।** नच 'षत्वतुकोरसिद्धः' इत्येकादेशशास्त्रस्यासिद्धत्वात्षत्वाप्राप्तौ विध्यर्थ एव तत्र पाठो न ज्ञापनार्थ इति वाच्यम्। षत्वे तुकि च कर्तव्ये पदान्तपदाद्योः सतोरेवैकादेशोऽसिद्ध इति सिद्धान्तात्। अन्यथा शकहूष्वित्यत्रापि षत्वं न स्यात्। शकान् ह्वयन्तीत्यत्र 'आदेच उपदेशे—' इत्यात्वे क्विपि संप्रसारणे कृते 'संप्रसारणाच्च' इति पूर्वरूपैकादेशे च 'हलः' इति दीर्घः। भवति हि 'कोऽसिचत्' 'सोऽसिचत्' इत्यादौ पदान्तपदाद्योरादेशः। तेन तत्र षत्वनिषेधः सिध्यति, न तु शकहूष्वित्यत्र। एवं च भ्रातुष्पुत्र इत्यत्रापि 'षत्वतुकोः—' इत्येकादेशशास्त्रमसिद्धं न भवतीत्युक्तं ज्ञापकं सुस्थमेव। नन्वुक्तज्ञापकात् शकहूष्वित्यत्रापि मातुः कृपेत्यत्रेव षत्वं न स्यात्। मैवम्, तुल्यजातीयस्य ज्ञापकत्वात्, कश्च तुल्यजातीयः, यः कुप्वोरिति दिक्। **द्विस्त्रिश्चतुरिति।** इह द्वित्रिभ्यां सुजन्ताभ्यां साहचर्याच्चतुःशब्दोऽपि सुजन्त एव ग्रहीष्यते। कृत्वोर्थग्रहणं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

'कृत्वोऽर्थे' किम्—चतुष्कपालः । १५८ इसुसोः सामर्थ्ये । ( ८-३-४४ ) इसुसोर्विसर्गस्य षः स्याद्वा कुप्वोः । सर्पिष्करोति, सर्पिः करोति । धनुष्करोति,

---

'द्वित्रिचतुर्भ्यस्सुच्' इति कृत्वोऽर्थे सुच् । आदिना त्रिष्करोति चतुष्करोतीति गृह्यते । सर्वत्र विसर्गस्य प्रत्ययावयवत्वाद् 'इदुदुपधस्य' इत्यप्राप्ते विभाषेयम् । षत्वाभावे 'कुप्वोः' इति जिह्वामूलीयविसर्गौ । कृत्वोऽर्थे यो विसर्ग इति तु न व्याख्यातम्, तथा सति चतुष्करोतीत्यत्र अव्याप्तेः, चतुश्शब्दे सुचः संयोगान्तलोपेन विसर्गस्य तत्र प्रातिपदिकावयवत्वात् । **चतुष्कपाल इति** । चतुर्षु कपालेषु संस्कृतः पुरोडाश इत्यर्थे 'संस्कृतं भक्षाः' इत्यणि विवक्षिते 'तद्धितार्थोत्तरपद–' इति समासः । 'द्विगोर्लुगनपत्ये' इत्यणो लुक् । अत्र चतुश्शब्दस्य कृत्वोऽर्थे अवृत्तेर्न तद्विसर्गस्य षत्वविकल्पः, किं तु 'इदुदुपधस्य–' इति नित्यमेव षत्वम् । ननु तत्र प्रत्ययावयवभिन्नस्येति व्याख्याने 'चतेरुरन्' इत्यौणादिकप्रत्ययावयवत्वाद् विसर्गस्य कथमिह 'इदुदुपधस्य–' इति नित्यं षत्वम् । अतस्तत्र प्रत्ययभिन्नस्येत्येव व्याख्यानमुचितम् । एवं चात्र चतुश्शब्दविसर्गस्य प्रत्ययत्वाभावाद् 'इदुदुपधस्य–' इति नित्यषत्वं निर्बाधं भविष्यतीति चेत्, नैष दोषः । कविभिः कृतमित्यादौ षत्ववारणाय प्रत्ययावयवभिन्नस्येत्येव व्याख्यातुमुचितत्वात् । चतुश्शब्दस्तु अव्युत्पन्न एव । अतः प्रत्ययावयवभिन्नस्येति पर्युदासस्तत्र न भवति, 'चतुष्पाद्भ्यो ढञ्' इत्यादिनिर्देशबलेन चतुश्शब्दे अव्युत्पत्तिपक्षस्यैवाङ्गीकार्यत्वात् । द्विनामा त्रिनामा च कश्चित् । द्विः करोति, त्रिः करोति । अत्रापि न षत्वम्, कृत्वोऽर्थे अवृत्तेः ।

**इसुसोः** । 'इणः षः' इत्यतः ष इति, कुप्वोरिति, विसर्जनीयस्येति, अन्यतरस्यामिति चानुवर्तते । तदाह—**इसुसोर्विसर्गस्येति** । **सर्पिष्करोतीति** । व्युत्पत्तिपक्षे अत्र विसर्गस्य प्रत्ययावयवत्वाद् 'इदुदुपधस्य–' इत्यप्राप्तौ विभाषावचनम् । षत्वाभावपक्षे 'कुप्वोः–' इति जिह्वामूलीयविसर्गौ । धनुष्करोतीत्यत्राप्येवम् । ननु एकार्थीभावलक्षणं सामर्थ्यं वृत्तावेव, न तु वाक्ये, इति समर्थसूत्रे भाष्ये कैयटादिषु च स्पष्टम् ।

---

तु 'साहचर्यं न सर्वत्र व्यवस्थापकम्' इत्यत्र ज्ञापकम् । तेन 'दीधीवेवीटाम्' इत्यत्र धातुसाहचर्येऽप्यागमस्येटो ग्रहणम् । **चतुष्कपाल इति** । चतुर्षु कपालेषु संस्कृत इत्यर्थे 'संस्कृतं भक्षाः' इत्यणो 'द्विगोर्लुगनपत्ये' इति लुक् । अत्र मनोरमायाम्—'इदुदुपधस्य–' इति नित्यं ष इत्युक्तम् । एवं च 'द्वितं त्रितमिति चतुःपञ्चाशत्' इति स्वमूलग्रन्थे प्रयोगश्चिन्त्यः स्यात्, चतुष्कपालवत्तत्रापि नित्यतया षत्वप्रवृत्तेः, अतोऽत्र षत्वनिवारणाय 'अप्रत्ययस्य' इत्यत्र प्रत्ययस्य यो विसर्जनीयो न भवतीत्यर्थ एव स्वीकर्तव्यः ।

---

१ चतुःशब्देऽव्याप्तेः । चतुष्करोतीत्यत्र सुचो हल्ङ्यादिना लुप्तत्वेन–इति क । चतुष्करोतीत्यत्राव्याप्तेः । चतुःशब्दे सुचो हल्ङ्यादिना लुप्तत्वेन–इति ख ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

धनुः करोति। सामर्थ्यमिह व्यपेक्षा। 'सामर्थ्ये' किम्—तिष्ठतु सर्पिः, पिब त्वमुदकम्। **१५६ नित्यं समासेऽनुत्तरपदस्थस्य। ( ८-३-४५ )** इसुसोर्विसर्गस्यानुत्तरपदस्थस्य समासे नित्यं षः स्यात्कुप्वोः परयोः। सर्पिष्कुण्डिका। 'अनुत्तपदस्थस्य' इति किम्—परमसर्पिःकुण्डिका। कस्कादिषु सर्पिष्कुण्डिकाशब्दोऽसमासे व्यपेक्षाविरहेऽपि षत्वार्थो व्यपेक्षायां नित्यार्थश्च। १६० अतः

---

एवं च सर्पिष्करोतीति धनुष्करोतीति वाक्ये कथमयं षत्वविकल्प इत्यत आह—**सामर्थ्यमिह व्यपेक्षेति**। विशिष्टा अपेक्षा व्यपेक्षा, पदानामाकाङ्क्षायोग्यतासन्निधिवशाद् यः परस्परान्वयः सा व्यपेक्षा। इदं तु सामर्थ्यं वाक्येषु विद्यते। यथा राज्ञः पुरुषोऽश्वश्च, राज्ञो देवदत्तस्य च पुरुष इत्यादौ। एवं च सर्पिष्करोतीत्यादौ एतादृशं व्यपेक्षालक्षणं सामर्थ्यमस्तीति भवत्युदाहरणम्। व्यपेक्षालक्षणमेवात्र सामर्थ्यमाश्रित्य सर्पिष्करोतीति भाष्ये उदाहृतत्वादिति भावः। न च पेचुः काष्ठैः, सख्युः कामः, कविभिः कृतमित्यादौ षत्वं शङ्क्यम्, अत्र प्रातिपदिकावयवयोरेव इसुसोर्ग्रहणात्, नित्यं समास इत्युत्तरसूत्रोदाहरणे तयोरेव संभवेनार्थाधिकाराश्रयणात् साहचर्याच्च। **तिष्ठत्विति**। तिष्ठतु सर्पिरित्येकं वाक्यम्। पिब त्वमुदकमित्यन्यत्। तत्र सर्पिरित्यस्य पिबे इत्यत्रान्वयाभावान्न सामर्थ्यम्। अतो नायमत्र षत्वविकल्पः। नापि 'इदुदुपधस्य–' इति नित्यं षत्वम्, प्रत्ययावयवत्वात्। अत एव प्रत्ययभिन्नस्य विसर्गस्येति व्याख्यानं नाश्रितम्। तथा सति तिष्ठतु सर्पिः, पिब त्वमुदकमित्यत्र विसर्गस्य प्रत्ययैकदेशस्य प्रत्ययभिन्नतया 'इदुदुपधस्य–' इति षत्वापत्तेः। **नित्यं समासे**। इसुसोरित्यनुवर्तते, कुप्वोरिति, विसर्जनीयस्येति च। तदाह—**इसुसोरित्यादिना**। **सर्पिष्कुण्डिकेति**। सर्पिषः कुण्डिकेति विग्रहः। समासे व्यपेक्षालक्षणसामर्थ्यस्यापि सत्त्वाद् 'इसुसोः सामर्थ्ये' इति षत्वविकल्पे प्राप्ते वचनमिदम्। **परमसर्पिःकुण्डिकेति**। अत्र विसर्गस्य उत्तरपदस्थत्वान्न षत्वम्। 'इदुदुपधस्य–' इति षत्वं तु न, विसर्गस्यात्र प्रत्ययावयवत्वात्। प्रत्ययभिन्नस्य विसर्गस्येति व्याख्याने तु अत्रापि 'इदुदुपधस्य–' इति षत्वं स्यात्, अत्र विसर्गस्य प्रत्ययैकदेशतया प्रत्ययभिन्नत्वात्। नन्वनेनैव सिद्धे कस्कादिषु सर्पिष्कुण्डिकाशब्दपाठो व्यर्थ इत्यत आह—**कस्कादिष्विति**। **व्यपेक्षाविरहेऽपीति**। तिष्ठतु सर्पिः, कुण्डिकां पश्येत्यादावित्यर्थः। अत्र चासमासत्वाद् 'नित्यं समास–' इति न भवति। सामर्थ्याभावाच्च 'इसुसोः सामर्थ्ये' इति च न भवति। प्रत्ययावयवत्वाद् 'इदुदुपधस्य–' इत्यपि न भवति। अतस्तत्र षत्वप्राप्त्यर्थं कस्कादिषु पाठ इति भावः। **व्यपेक्षायामिति**। इदं सर्पिष्कुण्डिकाया

---

१ सर्पिष्करोति–इति क, ख। २ पिबतु इति—क।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्य। ( ८-३-४६ ) अकारादुत्तरस्यानव्ययस्यविसर्गस्य समासे नित्यं सकारादेशः स्यात्करोत्यादिषु परेषु। न तूत्तरपदस्थस्य। अयस्कारः। अयस्कामः। अयस्कंसः। अयस्पात्रम्। अयस्सहिता कुशा अयस्कुशा। अयस्कर्णी। 'अतः' किम्—गीःकार। 'अनव्ययस्य' किम्—स्वःकामः। 'समासे' किम्—यशः करोति। 'अनुत्तरपदस्थस्य' किम्—परमयशःकारः। १६१ अधश्शिरसी पदे। (८-३-४७) एतयोर्विसर्गस्य सादेशः स्यात्पदशब्दे परे। अधस्पदम्। शिरस्पदम्। समास इत्येव। अधः पदम्। शिरः पदम्। अनुत्तरपदस्थस्येत्येव। परमशिरःपदम्। कस्कादिषु च। भास्करः॥

॥ इति विसर्गसन्धिप्रकरणम्॥

---

इत्यत्रेत्यर्थः। तत्र 'इसुसोस्सामर्थ्ये' इति विकल्पप्राप्तौ नित्यषत्वार्थः कस्कादौ पाठ इति भावः। **अतः कृकमि**। अत इति पञ्चमी। 'विसर्जनीयस्य' इति 'नित्यं समासेऽनुत्तरपदस्थस्य' इति चानुवर्तते। तदाह—**अकारादित्यादिना**। **अयस्कार इति**। 'कुप्वोः—' इति बाधित्वा सत्वम्। एवमग्रेऽपि। **अयस्सहितेति**। अयसो विकार इति तु नोक्तम्, 'जानपद—' इत्यादिना ङीष्प्रसङ्गात्। **अयस्कर्णीति**। अय इव कर्णौ यस्या इति विग्रहः। 'नासिकोदर—' इति ङीष्। **अधश्शिरसी**। अधश्शिरसी इति षष्ठ्यर्थे प्रथमा। विसर्जनीयस्येति, स इति चानुवर्तते। तदाह—**एतयोरिति**। 'कुप्वोः' इत्यस्यापवादः। **अधस्पदमिति**। पदस्याध इति विग्रहः। मयूरव्यंसकादित्वात् समासः। **शिरस्पदमिति**। शिरसः पदमिति विग्रहः। सौत्रक्रममनुरुध्य पुनराह—**कस्कादिषु चेति**। **भास्कर इति**। अत इति तपरकरणाद् 'अतः कृकमि—' इत्यस्य न प्राप्तिरिति सत्वप्राप्त्यर्थं कस्कादौ भास्करशब्दस्य पाठ इति भावः।

इति विसर्गसन्धिः।

---

चतुष्कपाल इत्यत्र तु कस्कादेराकृतिगणत्वात् षत्वप्रवृत्तिरित्याहुः। **व्यपेक्षाविरहेऽपीति**। तिष्ठतु सर्पिष्कुण्डिकामानयेत्यादावित्यर्थः। **व्यपेक्षायामिति**। इदं सर्पिष्कुण्डिकाया इत्यत्रेत्यर्थः। अत्र सर्पिरित्यसमस्तं पदमिति बोध्यम्। समासे तु 'नित्यं समासे—' इत्यनेन सिद्धे समासाभावमेव ज्ञापयितुमिदमिति सर्पिर्विशेषणमुक्तम्। **नित्यार्थश्चेति**। अयं भावः। असमासे व्यपेक्षाविरहेऽत्यन्ताप्राप्तौ नित्यतया षत्वार्थः पाठः। व्यपेक्षायां त्वसमासे 'इसुसोः—' इति विकल्पेन प्राप्तौ नित्यार्थ इति। **अयःसहितेति**। न त्वयसो विकारः, 'जानपद—' इति ङीष्प्रसङ्गात्। **अयस्कर्णीति**। अय इव कर्णौ यस्याः 'नासिकोदर—' इति ङीष्। **अधःशिरसी**। **एतयोरिति**। सूत्रे तु षष्ठ्याः स्थाने प्रथमा बोध्या। **अधस्पदमिति**। पदस्याध इति विग्रहः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# अथ स्वादिसन्धिप्रकरणम् । ७ ।

'स्वौजसमौ—'[1] ( सू १८३ ) इति सुप्रत्यये 'शिवस् अर्च्यः' इति स्थिते । १६२ ससजुषो रुः । ( ८-२-६६ ) पदान्तस्य सस्य 'सजुष्' शब्दस्य

---

**ससजुषो रुः** । ससजुषोः रुः इति छेदः । 'रो रि' इति रेफलोपः । सश्च सजूश्च ससजुषौ, तयोरिति विग्रहः । रुविधौ उकार इत् । तत्फलं त्वनुपदमेव वक्ष्यते । स इति सकारो विवक्षितः । अकार उच्चारणार्थः । 'पदस्य' इत्यधिकृतं सकारेण सजुष्शब्देन च विशेष्यते । अतस्तदन्तविधिः । सकारान्तं सजुष्शब्दान्तं च यत् पदं तस्य रुः स्यादिति । स च 'अलोऽन्त्यस्य' इत्यन्त्यस्य भवति । ततश्च फलितमाह—**पदान्तस्य सस्येति । सजुष्शब्दस्य चेति ।** सजुष्शब्दान्तं यत् पदं तदन्तस्य षकारस्येत्यर्थः । ततश्च सजुषौ सजुष इत्यत्र षकारस्य न रुत्वम्, पदान्तत्वाभावात् । सजुष्शब्दान्तं यत्पदमिति तदन्तविधिना परमसजूरित्यत्र नाव्याप्तिः । न च सजूरित्यत्राव्याप्तिः शङ्क्या, व्यपदेशिवद्भावेन तदन्तत्वात् । 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' इति 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्न' इति च परिभाषाद्वयं प्रत्ययग्रहणे यस्मादितिविषयम्, न तु येन विधि रितिविषयमिति 'असमासे निष्कादिभ्यः' इति सूत्रे भाष्ये स्पष्टम् । ननु शिवस् इति सकारस्य 'झलाञ्जशोऽन्ते' इति जश्त्वेन दकारः स्यात्, जश्त्वं प्रति

---

मयूरव्यंसकादित्वात्समासः । **शिरस्पदमिति** । षष्ठीसमासः ।

इति तत्त्वबोधिन्यां विसर्गसन्धिप्रकरणम् ।

**स्वादिसन्धिः** । शिव इत्यस्यावसाने विसर्गस्तस्याच्र्य इत्यनेन समभिव्याहारे सस्याभावाद्रुत्वं कथं स्यादित्याशङ्कायामाह—**स्वौजसमौडित्यादिनेति** । एवं चात्र मूलभूत एव सुरस्तीति रुत्वादिकं स्यादेव । विसर्गस्त्विह न भवति खरवसानाभावात् । भाविन्यवसानभङ्गेऽकृतव्यूहपरिभाषयाऽर्च्यपदसमभिव्याहारात्पूर्वमपि न भवतीति बोध्यम् । **ससजुषो रुः** । पदस्येत्यनुवृत्तं ससजूभ्यां विशिष्यते, विशेषणेन तदन्तविधिः । न च सजूःशब्दांशे 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्न' इति निषेधः शङ्क्यः । तस्य प्रत्ययविधिविषयकत्वात् । सान्तं सजुष्शब्दान्तं च यत्पदं तस्य रुः स्यात्स चालोऽन्त्यस्य । एवं स्थिते फलितमाह—**पदान्तस्य सस्येति । सजुष्शब्दस्येति** । तदन्तस्य पदस्येत्यर्थः । तेन सजुषौ सजुष इत्यत्रापि नातिव्याप्तिः । न च सजूरित्यत्राव्याप्तिः 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' इति निषेधादिति वाच्यम् । तस्यापि प्रत्ययविधिविषयकत्वात् । अत एव 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' इति

---

१ मौट्—इति क, ख ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

च रुः स्यात्। जश्त्वापवादः। १६३ **अतो रोरप्लुतादप्लुते।** (६-१-११३) अप्लुतादतः परस्य रोरुः स्यादप्लुतेऽति । 'भोभगोअघो—' (सू १६७) इति प्राप्तस्य यत्वस्यापवादः। उत्वं प्रति रुत्वस्यासिद्धत्वं तु न भवति, रुत्वमनूद्योत्वविधेः सामर्थ्यात्। १६४ **प्रथमयोः पूर्वसवर्णः।** (६-१-१०२) अकः प्रथमाद्वितीययोरचि परे पूर्वसवर्णदीर्घ एकादेशः स्यात् । इति प्राप्ते । १६५

---

रुत्वस्य परत्वेऽपि असिद्धत्वादित्यत आह—**जश्त्वापवाद इति**। तथा च रुत्वस्य निरवकाशत्वान्नासिद्धत्वमिति भावः। तदुक्तं भाष्ये 'पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्य' इति, 'अपवादो वचनप्रामाण्यात्' इति च। शिवर् अर्च्य इति स्थिते। **अतो रोः**।'ऋत उत्' इत्यत उदित्यनुवर्तते। अत इति पञ्चमी। 'एङः पदान्तादति' इत्यतः अतीत्यनुवर्तते। तदाह—**अप्लुतादित्यादिना**। नन्वत्र उत्वं बाधित्वा 'भोभगोअघोअपूर्वस्य योऽशि' इति यत्वं परत्वात् स्यात्। न च यत्वस्यासिद्धत्वाद् उत्वं निर्बाधमिति वाच्यम्, कृतेऽपि उत्वे तस्य स्थानिवत्त्वेन रुत्वाद्यत्वस्य दुर्निवारत्वात्, अत आह—**यत्वस्यापवाद इति**। यद्यपि भो भगो अघो इत्यंशे उत्वं नापवादः, तथाप्यपूर्वस्येत्यंशे उत्वमपवादः, प्राप्ते एव अपूर्वकस्य रोर्यत्वे 'अतो रोः—' इत्यस्यारम्भादिति भावः। ननु उत्वं प्रति रोरसिद्धत्वात् कथमुत्वं तस्येत्यत आह—**उत्वं प्रतीति**।

शिव उ अर्च्य इति स्थिते। **प्रथमयोः**। 'अकः सवर्णे' इत्यतः अक इति, 'इको यणचि' इत्यतः अचीति चानुवर्तते। 'एकः पूर्वपरयोः' इत्यधिकृतम्। प्रथमयोरित्यवयवषष्ठी। प्रथमाद्वितीये सुब्विभक्ती विवक्षिते। तदाह—**अकः प्रथमेत्यादिना**। **इति प्राप्त इति**। शिव उ इत्यत्र अकारस्य उकारस्य च स्थाने पूर्वसवर्णे आकारे

---

'ग्रहणवता—' इति च परिभाषाद्वयमपि प्रत्ययविधिविषयकमिति 'दिव उत्' सूत्रे हरदत्तेनोक्तम्। कैयटहरदत्ताभ्यामिति तु मनोरमायां स्थितम्। तत्र कैयटेनानुक्तत्वात्कैयटग्रहणं प्रमादपतितमिति नव्याः। केचित्तु 'दिव उत्' सूत्रं यस्मिन्निति बहुव्रीहिरयम्, सूत्रसमुदायश्चान्यपदार्थः। तथा च दिव उत्सूत्रशब्देन 'इन्द्रे च' इति सूत्रस्यापि क्रोडीकारात्तत्र च कैयटेनोक्तत्वान्नोक्तदोष इति कुकविकृतिवत् क्लेशेन मनोरमां समर्थयन्ति। यत्वस्यासिद्धत्वादुत्वे कृतेऽपि तस्य स्थानिवत्त्वेन रुत्वाद्यत्वं स्यादित्याशङ्कायामाह—**यत्वस्यापवाद इति**। **उत्वविधेः सामर्थ्यादिति**। न च 'अतो रोरप्लुतात्—' इति सूत्रं परित्यज्य 'रोः सुपि' इति सूत्रानन्तरम् 'अत उरति' इत्येव लाघवादुच्यताम्, किमनेन सामर्थ्याश्रयणप्रयासेनेति वाच्यम्। तथा हि सति उत्वस्यासिद्धतया शिवोऽर्च्य इत्यादावाद्गुणस्याप्रवृत्तिप्रसङ्गात्। **प्रथमयोः**। अत्र प्रथमाशब्दः प्रथमाद्वितीययोः समुदाये गौणः, द्विवचनं तु समुदाय्यपेक्षया। 'इको यणचि' इत्यतोऽचीति,

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

**नादिचि** । ( ६-१-१०४ ) अवर्णादिचि परे न पूर्वसवर्णदीर्घः । 'आद् गुणः' ( सू ६९ ) 'एङः पदान्तादति' ( सू ८६ ) शिवोऽर्च्यः । 'अतः' इति तपरः किम्—देवा अत्र । 'अति' इति तपरः किम्—श्व आगन्ता । 'अप्लुतात्' किम्—एहि सुस्रोत३ अत्र स्नाहि । प्लुतस्यासिद्धत्वादतः परोऽयम् । 'अप्लुतात्'

---

प्राप्ते इत्यर्थः । **नादिचि** । न आदिति छेदः । आदिति पञ्चमी । पूर्वसवर्ण इत्यनुवर्तते । तदाह—**अवर्णादिति** । अनेन शिव उ इत्यत्र पूर्वसवर्णदीर्घनिषेधः । **आद् गुण इति** । शिव उ इति स्थिते आद् गुण इति गुणं बाधित्वा पूर्वसवर्णदीर्घे प्राप्ते तस्मिन्निषिद्धे सति बाधके निवृत्ते गुणः पुनरुन्मिषति । 'देवदत्तस्य हन्तरि हते देवदत्तस्य न पुनरुन्मज्जनम्' इति न्यायस्तु नात्र प्रवर्तते । देवदत्ते हते सति तद्धन्तुर्हनने देवदत्तस्य न पुनरुन्मेष इति हि तदर्थः । देवदत्तं हन्तुमुद्युक्तस्य हनने तु देवदत्तस्य उन्मेषोऽस्त्येव । प्रकृते च पूर्वसवर्णदीर्घेण गुणो न हतः । किंतु हननोद्यमसजातीयं प्रसक्तिमात्रं पूर्वसवर्णदीर्घस्य स्थितम् । प्रसक्ते च तस्मिन्निषिद्धे गुणोन्मेषो निर्बाध एवेति 'स्वादिषु' इति सूत्रे कैयटे स्पष्टम् । 'अपवादे निषिद्धे उत्सर्गस्य स्थितिः' इति न्यायश्च एतन्मूलक एव । 'तौ सत्' 'भिद्योद्ध्यौ नदे' इत्यादिनिर्देशाश्चात्रानुकूला इत्यलम् । **एङः पदान्तादतीति** । शिवो अर्च्य इति स्थिते ओकारस्य अकारस्य च स्थाने पूर्वरूपम् ओकारः । **देवा अत्रेति** । देवास् अत्रेति स्थिते, सस्य रुः । तस्य दीर्घादाकारात् परत्वादतः परत्वाभावादुत्वं न । किं तु भोभगो इति यत्वे लोपश्शाकल्यस्येति लोपः । **श्व आगन्तेति** । श्वस् आगन्तेति स्थिते, सस्य रुः, तस्य ह्रस्वाकारपरकत्वाभावादुत्वं न । किं तु यत्वं लोपश्च । **एहीति** । सुस्रोतस्शब्दः कस्यचित् संज्ञा । सम्बुद्धेर्हल्ङ्यादिलोपः, 'दूराद् धूते च' इति टेः प्लुतः, सस्य रुः । सुस्रोत३र् अत्रेति स्थिते प्लुतात् परस्य रोः उत्वनिवृत्तये अप्लुतादिति पदमित्यर्थः । नन्वत्र रोः अतः परत्वाभावादेव उत्वनिवृत्तिसिद्धेरप्लुतादिति व्यर्थमेवेत्यत आह—**प्लुतस्यासिद्धत्वादतः परोऽयमिति** । उत्वे कर्तव्ये प्लुतस्यासिद्धत्वादतः परोऽयं रुः । अतस्तस्य उत्वे प्राप्ते तन्निवृत्त्यर्थमप्लुतादित्यावश्यकमित्यर्थः । नन्वप्लुतादित्युक्तेऽपि रोरुत्वमत्र दुर्वारम्, उत्वे कर्तव्ये प्लुतस्यासिद्धतया अप्लुतात् परत्वस्यापि सत्त्वादित्यत आह—**अप्लुतादिति**

---

'अकः सवर्णे दीर्घः' इत्यतोऽको दीर्घ इति' 'एकः पूर्वपरयोः' इति सूत्रं चानुवर्तते—इत्याशयेन व्याचष्टे—**अकः प्रथमाद्वितीययोरचीत्यादिना** । अचि किम्, रामः । अकः किम्, गावौ, नावौ । प्रथमयोः किम्, वृत्ते, प्लक्षे । यद्यपीदं 'नादिचि' इत्यनेनैव सिध्यति, तथापि हरी इत्यत्रेव हर्योरित्यत्रापि पूर्वसवर्णदीर्घः स्यात् । तद्वा-

---

१ सुस्रोत ३:—इति क, ख । २ पूर्वसवर्णदीर्घप्रसक्त्या—इति क ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति विशेषणे तु तत्सामर्थ्यान्नासिद्धत्वम्। तपरकरणस्य तु न सामर्थ्यम्, दीर्घनिवृत्त्या चरितार्थत्वात्। 'अप्लुते' इति किम्—तिष्ठतु पय अ३ग्निदत्त। 'गुरोरनृतः—' (सू ९७) इति प्लुतः। १६६ **हशि च**। (६-१-११४) अप्लुतादतः परस्य रोरुः स्याद्धशि। शिवो वन्द्यः। रोरित्युकारानुबन्धग्रहणान्नेह।

---

**विशेषणे तु तत्सामर्थ्यान्नासिद्धत्वमिति**। यदि उत्वे कर्तव्ये प्लुतस्यासिद्धत्वम्, तर्हि अप्लुतादिति विशेषणं व्यर्थमेव स्यात्, दत्तेऽपि विशेषणे प्लुतस्यासिद्धतया अप्लुतात् परत्वस्यापि सत्त्वेन उत्वप्राप्तिदोषतादवस्थ्यात्। अतः अप्लुतादिति विशेषणसामर्थ्यात् प्लुतस्य नासिद्धत्वमिति विज्ञायत इत्यर्थः। नन्वेवमपि अप्लुतादिति व्यर्थम्। प्लुतात् परस्य रोः अत इति तपरकरणादेव उत्वनिवृत्तिसिद्धेः। न च उत्वे कर्तव्ये प्लुतस्यासिद्धत्वादतः परत्वस्यापि सत्त्वादुत्वं स्यादिति वाच्यम्, तपरकरणसामर्थ्यादेव प्लुतस्यासिद्धत्वाभावविज्ञानेन अतः परत्वाभावेनैव उत्वनिवृत्तेः सम्भवादित्यत आह—**तपरकरणस्य तु न सामर्थ्यमिति**। प्लुतस्यासिद्धत्वाभावसाधने इति शेषः। कुत इत्यत आह—**दीर्घनिवृत्त्येति**। देवा अत्रेत्यादौ दीर्घव्यावृत्त्या लब्धप्रयोजनकत्वादित्यर्थः। येन विना यदनुपपन्नं तत्तस्य गमकम्। यथा दिवा अभुञ्जानस्य पीनत्वं रात्रिभोजनं विना अनुपपद्यमानं रात्रिभोजनस्य गमकम्। प्रकृते तु प्लुतस्यासिद्धत्वेऽपि अत इति तपरकरणं देवा अत्रेत्यादौ दीर्घव्यावृत्तिरूपं प्रयोजनं लब्ध्वा उपपद्यमानं कथं प्लुतस्यासिद्धत्वाभावं गमयितुं शक्नुयादिति भावः। **तिष्ठतु पय अ३ग्निदत्तेति**। अत्र पयस् इति स्थिते, सस्य रुः, तस्य प्लुतपरकत्वादुत्वं न। ननु 'दूराद् धूते च' इति वाक्यस्य टेः प्लुतविधानात् कथमिह अग्निदत्तशब्दे आद्यवर्णस्य प्लुत इत्यत आह—**गुरोरिति**।

**हशि च**। अतो रोरप्लुतादिति पदत्रयमनुवर्तते, 'ऋत उत्' इत्यतः उदिति च, तदाह—**अप्लुतादित्यादिना**। **शिवो वन्द्य इति**। शिवस् वन्द्य इति स्थिते, सस्य रुः। तस्य अतपरकत्वाभावात् पूर्वसूत्रेण उत्वं न प्राप्तमिति वचनमिदम्। ननु प्रातरत्र भ्रातर्गच्छेत्यत्र रेफस्य 'अतो रोः' इति 'हशि च' इति च उत्वं कुतो न स्यादित्यत आह—**रोरित्युकारेति**। उकारः अनुबन्ध इद् यस्य स उकारा-

---

रणाय प्रथमयोरित्युक्तमिति दिक्। पूर्वग्रहणं किम्, अमी इत्यत्र पद्धे परसवर्णो मा भूत्। दीर्घग्रहणं किम्, त्रिमात्रे स्थानिनि त्रिमात्रो मा भूत्। 'आद् गुणः' इत्यपवादे निषिद्धे पुनरुत्सर्गस्य स्थितिरिति न्यायादिति भावः। अत्र 'भियोद्धयौ नदे' 'तौ सत्' इत्यादि लिङ्गम्, तद्धि 'नादिचि' इति पूर्वसवर्णदीर्घे निषिद्धे पुनरुत्सर्गस्य वृद्धेः

---

१ धातर्गच्छ—इति क, ख।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रातरत्र। भ्रातर्गच्छ। 'देवास्' इह इति स्थिते। रुत्वम्। **१६७ भोभगोअघोअपूर्वस्य योऽशि।** ( ८-३-१७ ) एतत्पूर्वकस्य रोर्यादेशः स्यादशि परे। असन्धिः सौत्रः। 'लोपश्शाकल्यस्य' (सू ६७) देवा इह, देवायिह। 'अशि' किम्—देवास्सन्ति। यद्यपीह यत्वस्यासिद्धत्वाद्विसर्गो लभ्यते तथापि विसर्गस्य

---

नुबन्धः, तस्यैव उत्वविधौ ग्रहणात् प्रातरत्र भ्रातर्गच्छेत्यत्र रेफस्य उत्वं न भवति। प्रातर् इति हि रेफान्तमव्ययम्। न तत्र रेफ उकारानुबन्धवान्। भ्रातृशब्दात् सम्बुद्धिः सुः, 'ऋतो ङिसर्वनामस्थानयोः' इति ऋकारस्य गुणः अकारो रपरः, हल्ङ्यादिना सुलोपः। अत्रापि न रेफ उकारानुबन्धवान्। अत उभयत्रापि रेफस्य उत्वं न भवतीत्यर्थः। अथ देवा इहेति रूपं दर्शयितुमाह—**देवास् इह इति स्थिते रुत्वमिति। भोभगो।** 'रोस्सुपि' इत्यतो रोरित्यनुवर्तते। भो भगो अघो अ इत्येषां द्वन्द्वः। एते पूर्वे यस्मादिति बहुव्रीहिः। पूर्वशब्दश्च प्रत्येकं संबध्यते—भोपूर्वकस्य भगोपूर्वकस्य अघोपूर्वकस्य अकारपूर्वकस्य च रोरिति। तदाह—**एतत्पूर्वकस्येति।** अत्र सूत्रे 'भगो अघो' इत्यत्र 'अघो अपूर्वस्य' इत्यत्र च 'एङः पदान्तादति' इति पूर्वरूपमाशङ्क्याह—**असन्धिरिति।** सन्ध्यभावः सूत्रप्रयुक्त इत्यर्थः। 'कृतलब्ध-' इत्यण्। देवाय् इह इति स्थिते यलोपं स्मारयति—**लोपश्शाकल्यस्येति।** देवा इहेति यलोपपक्षे रूपम्। तदभावे देवायिहेति। **देवास्सन्तीति।** देवास् सन्तीति स्थिते सस्य रुः। तस्य अश्परकत्वाभावाद्यत्वं न। किन्तु विसर्गः। विसर्जनीयस्य सः। नन्विह अश्ग्रहणं व्यर्थम्। न च देवार् सन्तीति स्थिते रेफस्य यत्वव्यावृत्त्यर्थं तदिति वाच्यम्, यत्वस्यासिद्धतया विसर्गे सति सत्वे देवास्सन्तीति सिद्धेरिति शङ्कते—**यद्यपीति।** अस्तु यत्वस्यासिद्धत्वाद् रेफस्य विसर्गः। तथापि तस्य स्थानिवद्भावेन रुत्वाद्यत्वं दुर्वारम्। अतः अश्ग्रहणमावश्यकमिति भावः। ननु यत्वविधौ विसर्गस्य स्थानिवद्भावेन कथं रुत्वम्। अनल्विधाविति निषेधात्। विसर्गस्थानिभूतं रेफमाश्रित्य

---

प्रवृत्त्यैव सिध्यति, नान्यथेति। नन्वेवं 'नान्तःपादमव्यपरे' इति पाठे 'सुजाते अश्वसूनृते' 'उपप्रयन्तो अध्वरम्' इत्यादौ 'एङः पदान्तादति' इति पूर्वरूपमेव हि तेन निषिध्यते, तस्मिंश्च निषिद्धे 'एचोऽयवायावः' इत्युत्सर्गोऽपि प्रवर्तेत। मैवम्। बाधके निषिद्धे बाध्यमपि क्वचिन्नेति स्वीकारात्तत्सिद्धेः। **भोभगो। असन्धिः सौत्र इति।** सूत्रे कृतः सौत्रः, 'कृतलब्ध-' इत्यण्। भगोअघोशब्दयोरोकारस्याकारस्य च पूर्वरूपं सौत्रत्वान्नेत्यर्थः। यदि तु भोस् भगोस् अघोस् इतिं सान्तं रान्तं वानुकृत्य भो इत्यादीनां त्रयाणाम् 'अलोऽन्त्यस्य' इत्यन्त्यस्य यः स्यात्, अपूर्वस्य रोश्चेति व्याख्या

---

१ धातर्गच्छ—इति क, ख। २ धातर्गच्छ—इति क, ख। ३ धातृ—इति क, ख

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्थानिवद्भावेन रुत्वाद्यत्वं स्यात्। न ह्ययमल्विधिः। रोरिति समुदायरूपाश्रयणात्। भोस्, भगोस्, अघोस् इति सकारान्ता निपाताः। तेषां रोर्यत्वे कृते।

---

प्रवर्तमानस्य यत्वविधेः स्थान्यलाश्रयत्वादित्यत आह—**न ह्ययमल्विधिरिति**। कुत इत्यत आह—**रोरिति समुदायरूपाश्रयणादिति**। यद्यपि यत्वविधिः विसर्गस्थानिभूतं रेफमाश्रयति, तथापि नाल्विधिः। ह्रस्वत्वादिरूपवर्णमात्रवृत्तिधर्मपुरस्कारेण स्थान्यलाश्रयत्वस्य तत्र विवक्षितत्वात्। प्रकृते च यत्वविधिः रुत्वेनैव रेफमाश्रयति, न तु रेफत्वेन, तथा सति प्रातरत्रेत्यादावतिव्याप्तेः। रुत्वं च रेफोकारसमुदायधर्मः, न तु रेफमात्रवृत्ति। अतो यत्वविधिर्विसर्गस्थानिभूतं न रेफं[1] वर्णमात्रवृत्तिधर्मपुरस्कारेणाश्रयतीति नाल्विधिः। अतो यत्वे कर्तव्ये विसर्गस्य स्थानिवद्भावेन रुत्वाद्यत्वं स्यात्। अतः अशीति परनिमित्तमाश्रितमिति भावः। **निपाता इति**। चादेराकृतिगणत्वादिति भावः। **रोर्यत्वे कृत इति**। 'भोभगोअघो-' इत्यनेनेति शेषः। भोय् अच्युत इति स्थिते 'लोपश्शाकल्यस्य' इति न भवति, यकारस्य अपूर्वकत्वाभावात्।

---

यते, तर्हि असन्धिनर्थ्यय एवेति बोध्यम्। ननु रोरुकारस्यानुबन्धत्वाद्रेफमात्रं विसर्गस्थानि, तथा च 'अनल्विधौ' इति स्थानिवद्भावो न स्यादित्याशङ्कयाह—**न ह्ययमिति**। यथा अग्रहीदित्यत्र 'ग्रहोऽलिटि-' इति दीर्घस्य स्थानिवद्भावेन इट्त्वाद् 'इट ईटि' इति प्रवर्तते एवमिहापि विसर्गस्य रुत्वाद्यत्वं प्रवर्तेतेति भावः। यद्यपि 'रो रि' इत्यतो र इत्यनुवर्त्य रोर्यो रेफः, तस्य यादेश इति व्याख्याने अयमल्विधिरेव, तथापि उत्तरार्थं कर्तव्यमशिग्रहणं र इत्यस्यानुवृत्तिक्लेशवारणार्थमिहैव कृतम्। **निपाता इति**। 'भोभगो-' इति सूत्रे निर्दिष्टाश्चादेराकृतिगणत्वात्तत्र बोध्याः। यदि तु 'विभाषा भवद्भगवदघवतामोच्चावस्य' इति वार्तिकेन 'एषां रुः स्याद् अवस्योकारो वा संबुद्धौ' इत्यर्थकेन निष्पन्ना एव भोशब्दादयो गृह्येरन्, तदा पुँल्लिङ्गैकवचनमात्रे भो हरे इत्यादिसिद्धावपि भो हरिहरौ, भो विद्वद्वृन्द, भो गङ्गे, इत्यादि न सिद्ध्येत्। तस्माद् 'विभाषा भवद्-' इति वार्तिकं नावश्यमाश्रयणीयमिति भावः। मनोरमायां तु 'भाष्यस्वरसरीत्या तु 'विभाषा-' इति वार्तिकमारब्धव्यमेव, इत्युक्तम्। तथा हि 'हे भवन्' इतिवद् 'हे भोः' इति प्रयोगस्यापीष्टत्वात्। तस्य च वार्तिकारम्भ एव सिद्धेः। 'स्युः पाट्प्याडङ्गहेहैभोः' इत्यमरोक्तानां तु संबोधनार्थानां निपातानां सह प्रयोगायोगात्। किं च 'अत्रभवान् हरिः, तत्रभवान्, ततोभवान्' इतिवत् 'तत्रभोः' इत्याद्यपि वार्तिके सत्येव सिध्यति। 'इतराभ्योऽपि दृश्यन्ते' इति सर्वविभक्त्यन्तात् त्रतसोर्भवदादियोग एवेष्टत्वात्। किंच आमन्त्रितत्वे पदात्परस्याष्टमिकनिघातः 'आमन्त्रितं पूर्वमविद्यमानवत्' इत्यविद्यमानवद्भावश्चेत्यादि सिध्यति, नान्यथा। भो हरिहरावित्यादिसिद्धये 'भोः' इति निपातोऽप्यवश्याभ्युपगन्तव्यः। यदि तु

---

१ रेफं न—इति क, ख।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

१६८ **व्योर्लघुप्रयत्नतरः शाकटायनस्य** । (८-३-१८) पदान्तयोर्वकारयकारयोर्लघूच्चारणौ वयौ वा स्तोऽशि परे । यस्योच्चारणे जिह्वाग्रोपाग्रमध्यमूलानां शैथिल्यं जायते स लघूच्चारणः । १६९ **ओतो गार्ग्यस्य** ( ८-३-२० ) ओकारात्परस्य पदान्तस्यालघुप्रयत्नस्य यकारस्य नित्यं लोपः स्यात् । गार्ग्यग्रहणं पूजार्थम् ।

---

**व्योर्लघु** । व् च य् च व्यौ, तयोरिति विग्रहः । पदस्येत्यधिकृतम् । तच्च वकारयकाराभ्यां विशेष्यते । तदन्तविधिः । वान्तस्य यान्तस्य च पदस्येति लभ्यते । 'अलोऽन्त्यस्य' इत्यन्त्यस्य भवति । तथा च पदान्तयोर्यवयोरिति फलितम् । लघुः प्रयत्नो यस्योच्चारणे स लघुप्रयत्नः । अतिशयितः लघुप्रयत्नो लघुप्रयत्नतरः । अन्यपदार्थस्य च वर्तिपदार्थप्रकर्षापेक्षः प्रकर्षः । लघुतरप्रयत्नक इत्यर्थः । प्रत्येकाभिप्रायमेकवचनम् । आन्तर्याद् यस्य यः, वस्य वः । अशीत्यनुवर्तते । शाकटायनमुनिग्रहणाद्विकल्पः । तदाह—**पदान्तयोरित्यादिना** । उच्चारणप्रयत्ने लघुतरत्वं विशदयति—**यस्येति** । ततश्च भोय् अच्युतेत्यत्र यकारस्य पाक्षिको लघुप्रयत्नो यकारः । वकारोदाहरणं तु 'असावादित्य इति वृत्तिः' इति शब्देन्दुशेखरे । **ओतो गार्ग्यस्य** । ओत इति पञ्चमी । 'व्योः' इत्यतो यग्रहणमनुवर्तते, न तु वकारोऽपि, ओतः परस्य तस्यासंभवात् । 'पदस्य' इत्यधिकृतं यकारेण विशेष्यते । तदन्तविधिः । ओकारात् परो यः यकारस्तदन्तस्य पदस्येति लभ्यते । अलोऽन्त्यपरिभाषया पदान्तस्य यकारस्येति फलितम् । 'भोभगो–' इत्यतः अशीत्यनुवर्तते । 'लोपश्शाकल्यस्य' इत्यतो लोप इत्यनुवर्तते । स च पूर्वविहितलघुप्रयत्नस्य न भवति, विधानसामर्थ्यात् । तदाह—**ओकारादित्यादिना** । ननु लोपस्य कथं नित्यत्वम् । गार्ग्यग्रहणादित्यत आह—**गार्ग्यग्रहणं**

---

भगोअघोइति निपातावपि प्रामाणिकौ, तर्हि स्तां नाम, वार्तिकं तूक्तप्रयोजनाय स्वीकर्तव्यमेवेति दिक् । स्यादेतत् , निपातानामभ्युपगमे यत्वविधौ त एव गृह्येरन् , प्रतिपदोक्तत्वात् । न तु संबुद्ध्यन्ताः, लाक्षणिकत्वादिति चेन्मैवम् । 'स्वरितेनाधिकारः' इत्यत्राधिकः कारोऽधिकार इति व्याख्यानमाश्रित्य लक्ष्यानुरोधेन स्वरितत्वमाश्रित्योभयग्रहणात् लक्षणप्रतिपदोक्तपरिभाषाया अनित्यत्वाच्च । अनित्यत्वे लिङ्गं तु 'भुवश्च महाव्याहृतेः' इति सूत्रे महाव्याहृतिग्रहणम् , 'यावत्पुरा–' इति सूत्रे निपातग्रहणं च । न चैवं लाक्षणिकानामपि ग्रहणे विभोरिदम् , सुप्रभा गौर्यस्य स सुप्रभगुः, तस्य सुप्रभगोरिदम् , रघोरिदमित्यत्रापि यत्वापत्तिरिति वाच्यम् । परस्परसाहचर्येण निपातानां वार्तिकोक्तानां च ग्रहणेऽप्यन्येषामग्रहणात् । साहचर्यं त्वेषां संबोधनार्थे इति बोध्यम् । भोर् इत्यादीनां त्रयाणामलोऽन्त्यस्य यः स्यादिति व्याख्याने तु अर्थवद्ग्रहणपरिभाषया नातिप्रसङ्गः ।

---

१ वृत्ति–इति क ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भो अच्युत । लघुप्रयत्नपक्षे भोयच्युत । 'पदान्तस्य' किम्—तोयम् । १७० उञि च पदे ( ८-३-२१ ) अवर्णपूर्वयोः पदान्तयोर्यवयोर्लोप उञि परे । स उ एकाग्निः । 'पदे' किम्—तन्त्रयुतम् । वेञः सम्प्रसारणे रूपम् । यदि तु प्रतिपदोक्तो निपात उञिति ग्रहीष्यते, तर्ह्युत्तरार्थं पदग्रहणम् । १७१ हलि सर्वेषाम् । ( ८-३-२२ ) भोभगोअघोअपूर्वस्य लघ्वलघूच्चारणस्य यकारस्य लोपः

---

पूजार्थमिति । व्याख्यानादिति भावः । **भो अच्युतेति** । अलघुप्रयत्नपक्षे यकारस्य नित्यं लोपः । लघुप्रयत्नपक्षे भोयच्युतेति । अत्र लघुप्रयत्नस्य विधिसामर्थ्यान्न लोपः । **तोयमिति** । अत्र यकारस्य पदान्तत्वाभावाद् 'ओतो गार्ग्यस्य' इति न भवति । अनेन अत्र 'भोभगो—' इति नानुवर्तत इति सूचितम् । **उञि च पदे** । अपूर्वस्येति, पदस्येति, व्योरिति, लोप इति चानुवर्तते । तदाह—**अवर्णेति** । **स उ एकाग्निरिति** । उ इति निपातः । सस् उ इति स्थिते सस्य रुः, भोभगो इत्यपूर्वत्वाद् यत्वम् । 'लोपश्शाकल्यस्य' इति विकल्पनिवृत्त्यर्थमिदम् । वकारोदाहरणं तु 'असा उ एकाग्निः' इति वृत्तिः । **पदे किमिति** । उञः पदत्वाव्यभिचारात् पदे इति तद्विशेषणस्य किं प्रयोजनमिति प्रश्नः । **तन्त्रयुतमिति** । तन्त्रे उतमिति विग्रहः । अयादेशः । अत्र यकारस्य लोपनिवृत्त्यर्थं पदग्रहणमिति भावः । नन्वत्र उञ्परकत्वाभावादेव लोपनिवृत्तिसम्भवात् पदग्रहणं व्यर्थमेवेत्यत आह—**वेञ इति** । 'वेञ् तन्तुसन्ताने' इत्यतः क्तप्रत्यये, 'वचिस्वपियजादीनाम्' इति वकारस्य संप्रसारणे उकारे, पूर्वरूपे, उतमिति रूपम् । अत्र उञ्परकत्वेऽपि तस्य उञः पदत्वाभावात्तस्मिन् परे यस्य लोपो न भवतीत्यर्थः । ननु स उ एकाग्निरित्यत्र उञ् प्रतिपदोक्तः, चादौ पठितत्वात् । उतमित्यत्र तु उञ् लाक्षणिकः, संप्रसारणादिविधिनिष्पन्नत्वात् । ततश्च 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्' इति परिभाषया चादिपठितस्यैव उञोऽत्र ग्रहणं भविष्यति । न तु उतमित्यत्र उञोऽपि । अतः पदग्रहणं व्यर्थमेवेत्यत आह—**यदीति** । **उत्तरार्थमिति** । 'ङमो ह्रस्वादचि—' इत्यर्थमित्यर्थः । एतच्चात्रैव भाष्ये स्पष्टम् ।

**हलि सर्वेषाम्** । भोभगोअघोअपूर्वस्येत्यनुवर्तते । 'व्योर्लघुप्रयत्न—' इत्यतः यकारग्रहणमनुवर्तते । तदाह—**भोभगो इत्यादिना** । **लघ्वलघूच्चारणस्येति** । ओकारात् परस्य यस्य लघुप्रयत्नतरस्यैवानेन लोपः । अलघुप्रयत्नतरस्य त्वोकारात् परस्य यस्य 'ओतो गार्ग्यस्य' इत्येव सिद्धम् । अपूर्वकस्य तु यस्य लघ्वलघूच्चारणस्येति विवेकः । **यकारस्येति** । वकारस्त्वत्र नानुवर्तते । भोभगोअघोअपूर्वस्य वका-

---

न च 'अजहत्स्वार्था वृत्तिः' इति पक्षे विभोरिदं प्रभोरिदमित्यत्र भोरित्येकदेशस्य अर्थोऽस्तीति शङ्क्यम्, 'जहत्स्वार्था वृत्तिः' इति मुख्यपक्षे तदभावादिति दिक् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्याद्धलि सर्वेषां मतेन । भो देवाः । भो लक्ष्मीः । भो विद्वद्वृन्द । भगो नमस्ते । अघो याहि । देवा नम्याः । देवा यान्ति । 'हलि' किम्-देवायिह, देवा इह । १७२ रोऽसुपि । ( ८-२-६९ ) अह्नो रेफादेशः स्यान्न तु सुपि । रोरपवादः । अहरहः । अहर्गणः । 'असुपि' किम्-अहोभ्याम् । अत्र 'अहन्'

---

रस्याभावादिति वृत्तिः । 'अव्यपरे' इति निर्देशादिति तदाशयः । वृक्णं वातीति वृक्णवाः, तमाचष्टे वृक्णव्, एयन्तात् क्विप्, इष्ठवद्भावाट्टिलोपः, णेरनिटीति णिलोपः, वृक्णव् करोतीत्यत्र अपूर्वकस्य वस्य सम्भवेऽपि नात्र लोपप्रसक्तिः, अशीत्यनुवर्त्य अशात्मके हलीति भाष्ये व्याख्यातत्वात् । वृक्णव् हसतीति तु अस्मादेव भाष्यादसाधुरित्याहुः । **सर्वेषां मतेनेति** । सर्वाचार्यसंमतत्वादयं लोपो नित्य इति फलितम् । अत्र यदि 'विभाषा भवद्भगवदघवतामोच्चावस्य' इति वार्तिकेन 'मतुवसो रु सम्बुद्धौ-' इत्यत्र पठितेन एषामन्तस्य संबुद्धौ रुत्वं वा स्यात्, अव इत्यंशस्य ओकारश्चेत्यर्थकेन निष्पन्ना भोरादिशब्दा एव गृह्येरन्, तर्हि पुँल्लिङ्गैकवचनमात्रे भो हरे इत्यादिसिद्धावपि तदन्यत्र द्विवचनादौ स्त्रीनपुंसकयोश्च भो हरिहरौ, भो देवाः, भो लक्ष्मीः, भो विद्वद्-वृन्द इत्यादौ लोपो न सिध्येत् । अतो भोस् इत्यादिनिपातानामप्यत्र ग्रहणमित्यभिप्रेत्योदाहरति—**भो देवा इत्यादि** । **देवा नम्या इति** । न चात्र यकारस्य 'लोपो व्योः-' इत्येव लोपः सिद्ध इति वाच्यम्, लोपो व्योरिति लोपं प्रति यत्वस्यासिद्धत्वात् । **रोऽसुपि** । रः असुपीति छेदः । 'अहन्' इति सूत्रमनुवर्तते । तच्च लुप्तषष्ठीकं

---

**व्योर्लघु** । **वकारयकारयोरिति** । भोभगोअघोअपूर्वयोरित्यर्थः । लघुप्रयत्नतरः लघूच्चारणतरः । स चान्तरतम्याद्वस्य वः, यस्य य इत्याह—**वयाविति** । विधानसामर्थ्याल्लघुप्रयत्नतरस्य न भवतीत्याशयेनाह—**अलघुप्रयत्नस्येति** । **भोयच्युतेति** । एवं भगोयच्युत । अघोयच्युत । वकारस्योदाहरणं तु 'असावादित्यः' । एतच्च काशिकायां स्पष्टम् । **उत्तरार्थं पदग्रहणमिति** । वस्तुतस्तूत्तरत्रापि नोपयुज्यते, पदस्येत्यनुवृत्त्यैव निर्वाहात् । 'ञमि च पदे' इत्यतः पदे इत्यनुवर्त्य अजादेः पदस्येति व्याख्यानात् परमदण्डिनावित्यादौ ङमुण्णेति प्राचो व्याख्यानस्य 'ङमो ह्रस्वादचि-' इति सूत्रे मनोरमायां निरस्तत्वाच्च । ननु 'हलि सर्वेषाम्' इत्यत्र पदेग्रहणानुवृत्तौ हलादौ पदे इति व्याख्यानलाभाद् वृक्णव्भ्यां वृक्णव्भिरित्यत्र वस्य नित्यं लोपो न भवति, किं तु 'लोपः शाकल्यस्य' इति वैकल्पिक एव लोप इत्यस्ति पदेग्रहणस्य प्रयोजनमिति चेन्मैवम् । 'हलि सर्वेषाम्' इत्यत्र वस्यानुवर्तितत्वात् । किं च माभ्यां माभिरित्यत्र भ्यामादौ परतो यस्य विकल्पेनैव भवन्मते लोपः स्यात्तत्र 'हलि सर्वेषाम्' इत्यस्याप्रवृत्तेः । न चेष्टापत्तिः । भाष्यकारैर्दण्डिनेत्यत्र ङमुड्वारणाय 'ङमो ह्रस्वादचि-'

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

(सू ४४३) इति रुत्वम्। 'रूपरात्रिरथन्तरेषु रुत्वं वाच्यम्' (वा ४८४७)। अहोरूपम्। गतमहो रात्रिरेषा। एकदेशविकृतस्यानन्यत्वाद्—अहोरात्रः, अहोरथन्तरम्। 'अहरादीनां पत्यादिषु वा रेफः' (वा ४८२१)। विसर्गापवादः। अहर्पतिः।

---

पदम्। तदाह—अह्न इत्यादि। न तु सुपीति। पर्युदासाश्रयणे तु नञिवयुक्तन्यायेन सुब्भिन्ने प्रत्यये पर इत्यर्थः स्यात्। ततश्च अहर्वानित्यादावेव स्यात्। न त्वहर्भातीत्यादावपि। अतः प्रसज्यप्रतिषेध आश्रितः। ननु 'अहन् इत्यस्य रुः स्यात् पदान्ते' इत्यर्थकेन 'अहन्' इति सूत्रेणैव सिद्धत्वात् किमर्थमिदमित्यत आह—रोरपवाद इति। अहरहरिति। 'नित्यवीप्सयोः' इति द्विर्वचनम्। अहन् अहन् इति स्थिते रत्वम्। 'न लुमता–' इति निषेधात् सुप्परकत्वाभावः। 'अहन्' इति रुत्वे तु 'अतो रोरप्लुतात्–' इत्युत्वं स्यात्। अहर्गण इति। अह्नां गण इतिविग्रहः। 'अहन्' इति रुत्वे तु हशि चेत्युत्वं स्यात्। अहोभ्यामिति। अहन् भ्याम् इति स्थिते नकारस्य सुप्परकत्वान्न रेफः। अत्रेति। 'अहन्' इति रुत्वे 'हशि च' इत्युत्वे आद् गुणः। रूपरात्रि। अहन्शब्दस्येति शेषः। 'रोऽसुपि' इति रत्वस्यापवादः। अहोरूपमिति। अह्नो रूपमिति विग्रहः। अहन् रूपमिति स्थिते नकारस्य रुत्वम्, उत्वम्, आद् गुणः। रत्वे तु 'हशि च' इत्युत्वं न स्यात्। गतमहो रात्रिरेषेति। अहन् रात्रिरिति स्थिते, रुत्वम्, उत्वम्, आद् गुणः। रत्वे तु उत्वं न स्यात्। ननु अहश्च रात्रिश्चेति द्वन्द्वे, 'अहस्सर्वैकदेश–' इत्यादिना समासान्ते अचि, 'यस्येति च' इति लोपे, अहन् रात्र इति स्थिते, नकारस्य रुत्वे, उत्वे, आद् गुणे, 'रात्राह्नाहाः पुंसि' इति पुंस्त्वे, अहोरात्र इति रूपम्। अत्र नकारस्य रात्रिशब्दपरकत्वाभावात् कथं रुत्वम्। ततश्च 'रोऽसुपि' इति रत्वे उत्वं न स्यादित्यत आह—एकदेशेति। अहोरथन्तरमिति। अहश्च रथन्तरं चेति द्वन्द्वः। रथन्तरं सामविशेषः। अहरादीनाम्। ननु अहरादीनामिति रेफविशिष्टस्य उपादानाद् रेफस्य रेफविधानं व्यर्थमित्यत आह—विसर्गापवाद इति। अहर्पति-

---

इत्यत्रानुवृत्त्यर्थं पदग्रहणमित्युक्तत्वात्। न च तदेव प्रयोजनमस्त्विति वाच्यम्। ह्रस्वात्परो यो ङम् तदन्तं यत्पदं तस्मात्परस्याचो नित्यं ङमुडिति व्याख्यानेन दण्डिनेत्यत्र ङमुटः प्रसक्त्यभावात्। हलि सर्वेषाम्। यकारस्येति। वकारस्तु नानुवर्तते। भोभगोअघोअपूर्वस्यासंभवात्। अपूर्वस्तु यद्यपि संभवति वृक्षव्करोतीति, तथापि तत्र लोपाप्रसङ्गः। अशीत्यनुवर्त्याशा हलो विशेषणात्। वृक्षव् हसतीत्यादि त्वनभिधानादसाध्वित्याहुः। गव्यमित्यत्र तु पदान्तत्वं नास्ति, गव्यूतिरित्यत्र वकारप्रश्लेषान्न वलोप इत्युक्तम्। देवा नम्या इति। अत्र 'लोपो व्योर्वलि' इति न प्रवर्तते, तं प्रति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गीर्पतिः। धूर्पतिः। पक्षे विसर्गोपध्मानीयौ। **१७३ रो रि।** (८-३-१४) रेफस्य रेफे परे लोपः स्यात्। **१७४ ढ्रलोपे पूर्वस्य दीर्घोऽणः।** (६-३-१११) ढरेफौ लोपयतीति तथा, तस्मिन्वर्णेऽर्थाद् ढकारे रेफात्मके परे पूर्वस्याणो दीर्घः स्यात्। पुना रमते। हरी रम्यः। शम्भू राजते। 'अणः' किम्—तृढः। वृढः। 'तृहू हिंसा-

---

**रिति।** अह्नां पतिरिति विग्रहः। **गीर्पतिरिति।** गिरां पतिरिति विग्रहः। **धूर्पतिरिति।** धुरां पतिरिति विग्रहः। उभयत्रापि 'र्वोरुपधाया—' इति दीर्घः। **पक्ष इति।** रत्वाभावपक्षे विसर्गस्य 'कुप्वोः—' इति उपध्मानीयविसर्गौ। 'इदुदुपधस्य—' इति तु तपरकरणान्न।

**रो रि।** रः इति षष्ठी। 'ढो ढे लोपः' इत्यतो लोप इत्यनुवर्तते तदाह—**रेफस्येति।** पुनर् रमते इति स्थिते प्रथमरेफस्य लोपः। **ढ्रलोपे।** ढ्च रेफश्च ढ्रौ, तौ लोपयतीति ढ्रलोपः। ण्यन्तात्कर्मण्युपपदे अण्, उपपदसमासः। ढलोपनिमित्तं रेफलोपनिमित्तं च विवक्षितम्। तच्च ढकाररेफात्मकमेव। 'ढो ढे लोपः' 'रो रि' इति तयोरेव ढ्रलोपनिमित्तत्वात्। तथा च ढलोपनिमित्ते ढकारे, रेफलोपनिमित्ते रेफे च परतः पूर्वस्याणो दीर्घ इति फलति। तदाह—**ढरेफावित्यादिना।** ढलोपे रेफलोपे च पूर्वस्याणो दीर्घ इति तु न व्याख्यातम्। तथा सति चयनीयमित्यनीयर्प्रत्यान्ते 'तस्य लोपः' इति रेफलोपे यकारादकारस्य, चकार चचारेत्यादौ अभ्यासे अकारस्य च हलादिशेषेण रेफलोपे दीर्घापत्तेः। **पुना रमत इति।** पुनर् रमत इति स्थिते 'रो रि' इति रेफलोपः। तन्निमित्ते रेफे परे नकारादकारस्य दीर्घः। **हरी रम्य इति।** हरिस् रम्य इति स्थिते रुत्वे, रेफलोपे, अनेन दीर्घः। **शम्भू राजत इति।** शम्भुस् राजत इति स्थिते रुत्वे, रेफलोपे, अनेन दीर्घः। त्रयाणामुदाहरणात् पूर्वेणैव णकारेणात्राण् गृह्यत इति सूचितम्। **तृढः। वृढ इति।** अत्र

---

यत्वस्यासिद्धत्वात्। **हलि किम्। देवायिहेति।** उत्तरार्थमावश्यकं हलीति ग्रहणमिहैव कृतम्। तेन 'लोपः शाकल्यस्य' इत्यस्यास्य च विषयविभागोऽत्र सिध्यतीति भावः। **रोऽसुपि।** असुपीति यदि पर्युदासः स्यात्ततः सुप्सदृशे प्रत्यये एव स्यादहर्पतिरित्यादौ, न त्वहर्भातीत्यादावपि। तस्मात्प्रसज्यप्रतिषेध एवेति व्याचष्टे—**न तु सुपीति। अहरहरिति।** 'नित्यवीप्सयोः' इति द्वित्वम्। न चात्र रेफादेशस्यासिद्धत्वात्पूर्वं नलोपे अकारस्यैव रेफः स्यादिति वाच्यम्। 'अहन्' इत्यावर्त्य एकेन लोपाभावं निपात्य द्वितीयेन रुर्विधेय इति 'अहन्' इति सूत्रे वक्ष्यमाणतया रुत्वापवादस्यापि रेफादेशस्य नकारस्थानिकत्वलाभात्। **अहोरात्र इति।** 'अहःसर्वैकदेश—'

---

१ ढकारे रेफात्मके—इति क्वचित् पाठः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

याम्' । 'वृहू उद्यमने' । पूर्वग्रहणमनुत्तरपदेऽपि पूर्वमात्रस्यैव दीर्घार्थम् । अनर्थाः ।

---

ऋकारस्य दीर्घनिवृत्त्यर्थमणग्रहणम् । ऋकारश्चात्र अणग्रहणेन न गृह्यते । पूर्वेणैव णकारेण प्रत्याहाराश्रयणात् । अन्यथा दीर्घश्रुत्या अच इत्युपस्थितौ किमणग्रहणेनेति भावः । ननु तृढः वृढ इत्यत्र ढ्लोपस्यैवाभावाद् दीर्घाप्रसक्तेरणग्रहणं व्यर्थमित्याशङ्क्य तत्र ढलोपं दर्शयितुमाह—**तृहू हिंसायाम् । वृहू उद्यमन इति**। आभ्यां क्तप्रत्यये 'हो ढः' इति ढत्वे 'झषस्तथोः–' इति तकारस्य धत्वे, तस्य ष्टुत्वेन ढकारे, 'ढो ढे लोपः' इति पूर्वस्य ढकारस्य लोपे 'तृढः वृढः' इति रूपे। अत्र ढलोपनिमित्ते ढकारे परे ऋकारस्य दीर्घनिवृत्त्यर्थमणग्रहणमिति भावः । ननु 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इत्येव सिद्धौ पूर्वस्येति किमर्थमित्यत आह—**पूर्वग्रहणमिति**। ढ्लोप इति सूत्रस्य 'अलुगुत्तरपदे' इत्युत्तरपदाधिकारस्थत्वाद् उत्तरपदस्थयोरेव ढ्लोपनिमित्तभूतढरेफयोः परतः पूर्वपदस्याणो दीर्घ इत्यर्थः स्यात् । ततश्च 'लिह् आस्वा-

---

इत्यादिना समासान्तो वक्ष्यते। 'रात्राह्नाहाः पुंसि' इति पुंस्त्वम् । **अहोरथन्तरमिति**। रथन्तरं साम, तेनाहः समाहारद्वन्द्वः, पृथक्पदत्वं वा । **अहरादीनामिति** । उभयत्राप्यादिशब्दः प्रकारे । तेन 'स्वर्चक्षा रथिरः, कविः काव्येना स्वर्चना' इत्यादि ग्राह्यम् । **विसर्गापवाद इति** । मो राजिवद्रेफस्य रेफो विधीयते, विकारनिवृत्त्यर्थमिति भावः। **ढ्लोपे** । ढ्रेत्यकार उच्चारणार्थः । ढश्च रश्च ढ्रौ, तौ लोपयतीति ढ्लोपः। णिजन्तात्कर्मण्यणि उपपदसमासः । **तृढो वृढ इति** । ऊदित्त्वेन वेट्कत्वाद् 'यस्य विभाषा' इति निष्ठायां नेट् । ढत्वधत्वष्टुत्वढलोपाः । प्राचा दृढ इति प्रत्युदाहृतम्, तदसत् । तत्र ढलोपस्यैवाभावात् । 'दृढः स्थूलबलयोः' इति सूत्रेण हि दृंहेर्नकारहकारयोर्लोपः, तकारस्य ढत्वं च निपात्यते, न त्वसिद्धकाण्डस्थढत्वस्येह प्रवृत्तिः । 'दादेर्धातोः–' इति घत्वेन बाधात् । न चेडभावो ढत्वं न लोपश्च निपात्यतां धत्वष्टुत्वढलोपास्तु भविष्यन्त्येवेति वाच्यम् । तथा सति परिदृढय्येत्यत्र 'ल्यपि लघुपूर्वात्' इति णेरयादेशो न स्यात् । तथा पारिवृढी कन्येत्यत्र 'इतो मनुष्यजातेः' इति ङीषं बाधित्वा 'अणिञोः–' इति ष्यङ् स्यात्, ढलोपस्यासिद्धत्वेन गुरूपोत्तमत्वाद् इत्याकरे स्थितम्। ननु परिदृढय्येत्यत्र ल्यबादेशः कथं भवेत्, यावता परिदृढमाचष्टे इति णिचि कृते क्त्वाप्रत्यये च क्त्वान्त एव परेरन्तर्भावात्समासाभाव इति चेत् । अत्र कैयटः—संग्रामयतेरेव सोपसर्गात्प्रत्ययोत्पत्तिर्नान्यस्मादिति नियमात्परिशब्दं पृथक्कृत्य दृढशब्दादेव णिच् क्रियते । णिजन्तस्य धातुत्वात् क्त्वाप्रत्यये कृते परेः क्त्वान्तेन कृदन्तेन समास इति सिद्धो ल्यबादेशः, णाविष्ठवद्भावाद्रभाव इति । ननु पूर्वस्येति व्यर्थं सप्तमीनिर्देशादेव तल्लाभादत आह—**पूर्वग्रहणमित्यादि** । 'ढ्लोपे पूर्वस्य–' इति सूत्रस्योत्तरपदा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लीढः। 'मनस् रथः' इत्यत्र रुत्वे कृते 'हशि च' (सू १६६) इत्युत्वे 'रो रि' (सू १७३) इति रेफलोपे च प्राप्ते। **१७५ विप्रतिषेधे परं कार्यम्।** (१-

---

दने' 'गुहू संवरणे' आभ्यां क्तप्रत्यये ढत्वधत्वष्टुत्वढलोपेषु इकारस्य उकारस्य च दीर्घो न स्यात्। तत्र ढलोपनिमित्तस्य ढस्य उत्तरपदस्थत्वाभावाद् इकारस्य उकारस्य च पूर्वपदस्थत्वाभावाच्च। इष्यते च लीढो गूढ इति। अतः पूर्वग्रहणम्। कृते तु पूर्वग्रहणे तत्सामर्थ्याद् अनुत्तरपदस्थयोरपि ढरेफयोः परतः अपूर्वपदस्थस्यापि पूर्वस्याणो दीर्घः सिध्यतीत्यर्थः।

तथा उत्तरपद इत्यस्यानुवृत्तौ 'अजर्घाः' इत्यत्रापि दीर्घो न स्यात्। 'गृधु अभिकाङ्क्षायाम्'। यङ्लुक्, द्वित्वम्, हलादिः शेषः, अभ्यासस्य रुक्, कुहोश्चुः, लङ्, सिप्, शप्, लुक्, लघूपधगुणः, रपरत्वम्, इतश्चेति इकारलोपः, हल्ङ्यादिना सलोपः, जर्गर्ध् इति स्थिते, 'एकाचो बश–' इति गकारस्य भष्भावः घकारः, जश्त्वं दकारः, 'दश्च' इति रुः, अडागमः, अजर्घर् र् इति स्थिते 'रो रि' इति रेफलोपः, 'ढ्रलोप–' इति दीर्घः, विसर्गः, 'अजर्घाः' इति रूपम्। अत्रापि रेफलोपनिमित्त-रेफस्य उत्तरपदस्थत्वाभावात् तस्मिन् परतः अकारस्य दीर्घो न स्यात्। अत उत्तर-पदानुवृत्तिनिवृत्तये पूर्वग्रहणम्। यद्यपि 'ढ्रलोपे–' इत्यत्र ढलोपनिमित्तढकारविषये उत्तर-पद इत्यस्यानुवृत्तिः असंभवादेव न सम्भवति, तथापि अजर्घा इत्यत्र रेफलोपनिमित्त-रेफविषये उत्तरपद इत्यस्यानुवृत्तिनिवृत्तये पूर्वग्रहणम्। तदनुवृत्तौ हि नीरक्तम्, दूरक्त-मित्यादावेव स्यात्। अजर्घा इत्यत्र न स्यात्। पुना रमत इत्यादौ असमासेऽपि न स्यात्। उत्तरपदशब्दस्य समासचरमावयव एव रूढत्वादित्यलम्। ननु मनोरथ इत्यत्र मनस् रथ इति स्थिते, सस्य रुत्वे, तस्य रेफस्य 'हशि च' इत्युत्वम् 'रो रि' इति लोपश्चेत्युभयं प्रसक्तम्। तत्र कतरद् बाध्यमित्यत्र निर्धारयति—**मनस् रथः इत्यत्रेत्यादिना**। मनस् रथ इत्यत्र रुत्वे कृते 'हशि च' इत्युत्वे, 'रो रि' इति रेफलोपे च प्राप्ते, उत्वमेवेत्यन्वयः। ननु परत्वाद् रेफलोप एव स्यादिति शङ्कितुमाह-**विप्रतिषेधे**। विप्रतिपूर्वात् सेधतेर्घञि उपसर्गवशात् परस्परविरोधे विप्रतिषेधशब्दः।

---

धिकारस्थत्वादुत्तरपदस्थयोरेव ढरेफयोः परतो दीर्घः स्यान्न तु 'लीढः अजर्घाः' इत्यत्रेति भावः। यद्यप्यसंभवादेवानुत्तरपदस्थे ढकारे दीर्घो भवेत्, तथाप्यजर्घा इत्यत्र दीर्घो न स्यादिति ज्ञेयम्। वस्तुतस्तु उत्तरपदस्य समासचरमावयवे रूढत्वात्पुना रमत इत्या-दावपि न स्यात्, किं तु नीरक्तं दूरक्तम् इत्यादावेव स्यादिति तत्त्वम्। **लीढ इति**। 'लिह आस्वादने' क्तः। ढत्वधत्वष्टुत्वढलोपाः। इह ढलोपं प्रति ष्टुत्वं नासिद्धम्, ढकारे परतो लोपविधिसामर्थ्यात्। अत एव 'ढो ढे लोपः' इत्यस्य पदाधिकारस्थत्वेऽप्यपदान्तस्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

४-२ ) तुल्यबलविरोधे सति परं कार्यं स्यात् । इति रेफलोपे प्राप्ते । 'पूर्वत्रा-

विरोधश्च तुल्यबलयोरेव लोकसिद्धः । न हि मशकसिंहयोर्विरोध इत्यस्ति । तदाह—**तुल्यबलेति** । द्वयोः शास्त्रयोः क्वचिल्लब्धावकाशयोरेकत्र लक्ष्ये युगपत्सम्भवस्तुल्यबलविरोधः । कार्यस्य परत्वं परशास्त्रविहितत्वम् । **इति रेफलोपे प्राप्त इति** । 'हशि च' इत्यस्यावकाशः शिवो वन्द्य इति । रेफलोपस्यावकाशः पुना रमत इति । तत्र हि रोरित्युकारानुबन्धग्रहणाद् 'हशि च' इत्यप्रसक्तम् । ततश्च तयोस्तुल्यबलयोः उत्वरेफलोपयोः मनोरथ इत्यत्र युगपत् सम्भवादन्यतरस्मिन् बाधनीये सति परत्वादुत्वं बाधित्वा रेफलोपे प्राप्त इत्यर्थः ।

तामिमां रेफलोपशङ्कां परिहरति—**पूर्वत्रेति** । अत्र रेफलोपस्यासिद्धत्वादित्यनुक्त्वा रो रीत्यस्यासिद्धत्वादिति ब्रुवन् पूर्वत्रासिद्धमित्यत्र शास्त्रासिद्धत्वमेवाभ्युपैति । न तु कार्यासिद्धत्वम् । तथा सति हि अतिदेशस्यारोपरूपत्वाद् असिद्धत्वारोपान्निरधिष्ठानारोपासम्भवेन सूत्रोदाहरणसम्पत्त्यै परत्वाल्लक्ष्ये कार्यप्रवृत्तेरावश्यकतया परत्वात् त्रैपादिके कार्ये जाते तत्राऽभावप्रतियोगित्वारोपेऽपि देवदत्तस्य न पुनरुन्मज्जनमिति न्यायेन स्थानीभूतरोरभावाद् 'हशि च' इत्यस्य प्राप्तिर्न स्यात् । शास्त्रासिद्धत्वे तु यद्यत् त्रैपादिकं शास्त्रं प्रवृत्त्युन्मुखं तत्तच्छास्त्र एवासिद्धत्वारोपात् पूर्वशास्त्रप्रतिबन्धकस्य परशास्त्रस्य उच्छेदबुद्धौ सत्यां 'विप्रतिषेधे परं कार्यम्' इति न प्रवर्तते । तदुक्तम्—

ढस्य लोपो भवति । **अजर्घा इति** । 'गृधु अभिकाङ्क्षायाम्' यङ्लुकि द्वित्वे अभ्यासस्य रुक्, लङः सिपि शब्लुकि सिप ईडभावपक्षे लघूपधगुणो रपरः, 'इतश्च' इतीकारलोपे हल्ङ्यादिलोपः, भष्भावः, जश्त्वम् 'दश्च' इति रुत्वपक्षे अजर्घर् र् इति स्थिते 'रो रि' रेफलोपेऽनेन दीर्घः । अत्रेयं सुगमा व्याख्या—**ढ्रलोपे पूर्वस्य दीर्घोऽणः** । लीढः, नीरक्तं, दूरक्तम् । अणः किम् , तृढः । वृढः । पूर्वग्रहणमनुत्तरपदेऽपि पूर्वमात्रस्य दीर्घार्थम् । अजर्घाः । पुना रमते । हरी रम्यः । शम्भू राजत इति । **विप्रतिषेधे** । विप्रतिपूर्वात् 'षिधू शास्त्रे माङ्गल्ये च' 'षिधु गत्याम्' इत्यास्माद्वा धातोर्घञ् । 'उपसर्गात्सुनोति-' इति षत्वम् । उपसर्गवशाच्च विरोधार्थकत्वम् । **कार्यमिति** । 'अर्हे कृत्यतृचश्च' इत्यर्हार्थे कृत्यप्रत्ययः । तेन तुल्यबलविरोध इति पर्यवसानादतुल्यबलेषूत्सर्गापवादनित्यानित्यान्तरङ्गबहिरङ्गविधिषु नेदं प्रवर्तते । नह्यपवादादीनां संनिधावुत्सर्गादीनां कृत्यर्हत्वम्, तैर्बाधितत्वात् । तत्र नित्यमावश्यकत्वाद्बाधकम्, अन्तरङ्गं तु लाघवात्, अपवादस्तु वचनप्रामाण्यात्, तद्भिन्नस्तु प्रकृतसूत्रस्य विषयः । अत एव 'परनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः' इत्युक्तम् । यद्यतुल्यबलेष्वपि परमेव स्यात्तन्नोपपद्येताऽतो व्याचष्टे—**तुल्यबल-**

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सिद्धम्' (सू १२) इति 'रो रि' (सू १७३) इत्यस्यासिद्धत्वादुत्वमेव। मनोरथः।

---

'पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्य' इति। ततश्च स्थानिनो निवृत्त्यभावात् पूर्वशास्त्रप्रवृत्तिर्निर्बाधा। एतच्च 'पूर्वत्रासिद्धम्' इत्यत्र, 'अचः परस्मिन्' इत्यत्र, 'षत्वतुकोरसिद्धः' इत्यत्र च भाष्ये स्पष्टम्। न च 'तौ सत्' इत्यादिनिर्देशाद् देवदत्तहन्तृन्यायो न सार्वत्रिक इति वाच्यम्। हते सति देवदत्ते तद्धन्तरि हतेऽपि देवदत्तस्य न पुनरुन्मेषः। हन्तृहन्तरि हतत्वारोपे तु सुतरां नोन्मेषः। देवदत्तं हन्तुमुद्युक्तस्य हनने तु देवदत्तस्य जीवनमस्त्येवेति न्यायशरीरम्। तावित्यादौ च वृद्धिहन्तुः पूर्वसवर्णदीर्घस्य हननोद्यमसजातीयं प्रसङ्गमात्रम्। न तु हननस्थानीया लक्ष्ये प्रवृत्तिः। अतस्तावित्यादौ नास्य न्यायस्य प्रवृत्तिरिति 'तौ सत्' इत्यादिनिर्देशः कथमेतस्य न्यायस्यानित्यतां बोधयितुमीष्टे। स्पष्टं चैतत् स्वादिष्विति सूत्रे कैयटे। प्रकृते तु निरधिष्ठानारोपासम्भवाद् हननसजातीया लक्ष्ये कार्यप्रवृत्तिरावश्यकी। ततश्च प्रवृत्तस्य रेफलोपस्यासिद्धत्वेऽपि देवदत्तहन्तृहतन्यायेन रोरुन्मेषाभावादुत्वं न भवतीति शब्दरत्ने प्रपञ्चितम्। न च उत्वकार्यासिद्धत्वपक्षेऽपि मनोरथसिद्धिरस्त्येव, दर्शनाभावरूपरेफलोपस्याभावरूपासिद्धत्वे सति रोरुन्मेषावश्यकत्वाद् अभावाभावस्य प्रतियोगिरूपत्वादिति वाच्यम्, एवमपि कार्यासिद्धत्वे अमू अमी इत्याद्यसिद्धेः। यथा चैतत्तथा अदस्शब्दनिरूपणावसरे प्रपञ्चयिष्यते।

---

**विरोध इति**। जातौ पदार्थे विध्यर्थमिदं सूत्रम्। वृत्तेषु वृत्ताभ्यामित्यत्र हि लब्धावकाशयोरेत्वदीर्घत्वशास्त्रयोर्वृत्तेभ्य इत्यत्र युगपत्प्रसङ्गे विनिगमकाभावादप्रतिपत्तिरेव स्यात्। तदुक्तम् 'अप्रतिपत्तिर्वा उभयोस्तुल्यबलत्वात्' इति। तत्रास्माद्वचनात्परस्मिन् कृते यदि पूर्वस्यापि निमित्तमस्ति तर्हि तदपि भवति, यथा भिन्धकीत्यत्र परत्वाद्धिभावे कृतेऽप्यकच्। तदुच्यते—'पुनः प्रसङ्गविज्ञानात्सिद्धम्' इति। व्यक्तौ तु पदार्थे तत्तद्व्यक्तिविषयकयोर्लक्षणयोरन्यत्र चरितार्थत्वासंभवात्तव्यत्तव्यानीयरामिव पर्यायेण प्रवृत्तौ नियमार्थमिदं सूत्रं विप्रतिषेधे परमेव स्यान्न तु पूर्वमिति। एतल्लक्षणारम्भाच्च तत्र तत्र पूर्वस्यानारम्भोऽनुमीयते। तथा च जुहुतात्त्वमित्यत्र परत्वात्तातङि कृते स्थानिवद्भावेन 'हुझल्भ्यः—' इति धित्वं न भवति। तदुच्यते—'सकृद्गतौ विप्रतिषेधेन यद्बाधितं तद्बाधितमेव' इति। लक्ष्यानुरोधाद्व्यवस्थाप्यमेतद् द्वयमपि। तत्र विधिपक्षे तूत्वे रेफलोपे च प्राप्ते इति पाठ्यम्। नियमार्थमिति पक्षे परमेव कार्यं स्यादित्येवकारोऽध्याहर्तव्यो वृत्तौ। **उत्वमेवेति**। सिद्धासिद्धयोरतुल्यबलत्वेन 'विप्रतिषेधे परम्—' इत्यस्याप्रवृत्तौ निष्प्रतिपक्षत्वादुत्वमेव भवतीत्यर्थः। तदुक्तम्—'पूर्वत्रासिद्धे नास्ति विप्रतिषधोऽभावादुत्तरस्य' इति। एतेन 'विभक्तिकार्यं प्राक् पश्चादुत्व-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

**१७६ एतत्तदोः सुलोपोऽकोरनञ्समासे हलि । ( ६-१-१३२ )**

अककारयोरेतत्तदोर्यः सुस्तस्य लोपः स्याद्धलि न तु नञ्समासे। एष विष्णुः। स शम्भुः। 'अकोः' किम्–एषको रुद्रः। 'अनञ्समासे' किम्—असश्शिवः। 'हलि' किम्–एषोऽत्र। **१७७ सोऽचि लोपे चेत्पादपूरणम् (६-१-१३४)**

---

**एतत्तदोः**। एतत्तदोरित्यत्र 'त्यदादीनां मिथः सहोक्तौ यत्परं तच्छिष्यते' इत्येकशेषस्य त्यदाद्यत्वस्य चाभाव आर्षः । सु इति लुप्तषष्ठीकं पदम्, एतत्तदोरित्यनेनान्वेति–एतत्तदोः सकारस्येति। अत एव सोर्लोपः सुलोप इति न षष्ठीसमासः, असामर्थ्यात्। अविद्यमानः ककारो ययोस्तौ अकौ, तयोः अकोरिति बहुव्रीहिः। तदाह—**अककारयोरित्यादिना**। अनञ्समासे इति न पर्युदासः। तथा सति नञिवयुक्तन्यायाद् नञ्समाससदृशे समास एव स्यात्, न तु एष विष्णुरित्यादिवाक्येषु इत्यभिप्रेत्याह—**न तु नञ्समास इति। एष विष्णुः, स शम्भुरिति**। एषस् विष्णुः, सस् शम्भुरिति स्थिते सकारस्य लोपः। **एषको रुद्र इति**। 'अव्ययसर्वनाम्नामकच्प्राक्टेः' इति अकच्। अत्र एतच्छब्दस्य सककारत्वान्न सुलोपः। तच्छब्दे अकचि सको रुद्र इत्यपि प्रत्युदाहरणम्। न च अकचि सति शब्दान्तरत्वात् प्राप्तिरेव नेति वाच्यम् 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते' इति परिभाषया साकच्कस्य अशब्दान्तरत्वात्। परिभाषायां तु इदमेव ज्ञापकम्। **असश्शिव इति**। न सः अस इति विग्रहः। 'विसर्जनीयस्य सः' इति सत्वे श्चुत्वेन शकारः। नञ्समासत्वान्न सुलोपः। अनेषश्शिव इत्यपि प्रत्युदाहरणम्। **एषोऽत्रेति**। एषस् अत्रेति स्थिते, सस्य रुत्वम्, उत्वम्, आद् गुणः, हल्परकत्वाभावान्न लोपः। अत्र एतत्तदोरवयवस्य सोरिति न व्याख्यातम्, असम्भवात्, सोः परत्वेन विहितस्य प्रातिपदिकावयवत्वा-

---

मत्वे' इति वक्ष्यमाणग्रन्थो व्याख्यातः। **एतत्तदोः**। अत्र त्यदाद्यत्वमेकशेषश्च न कृतः, सौत्रत्वात्, 'प्रकृतिवदनुकरणम्' इति वैकल्पिकातिदेशाद्वा। एवं च वृत्तावप्येतत्तदोरिति प्रयोगः साधुः, 'हल्ङ्याब्भ्यः–' इत्यस्यानन्तरमेवेदं लाघवाय न कृतम्, संहिताधिकारोपजीवनादित्याहुः। सूत्रे सु इति पृथक् पदं लुप्तषष्ठीकमित्याह—**एतत्तदोर्यः सुरिति**। एतत्तदर्थगतसंख्याभिधायी यः सुस्तस्येत्यर्थः। एतत्तदोर्विहित इति व्याख्याने तु परमस ददाति परमैष ददातीत्यादौ सुलोपो न स्यात्। एतत्तदोः पर इति व्याख्यानं तु न संभवति, एतत्तद्भ्यामिति पञ्चम्यभावात्। एतत्तदोरवयव इति तु न संभवत्येव, सोः प्रत्ययत्वात्। तस्मादर्थद्वारकसंबन्ध एवाश्रितः। तदाश्रयणे लिङ्गं तु अनञ्समास इति बोध्यम्। एतत्तदोः किम्, यो ददाति। **अकोः किमिति**। साकच्कयोः शब्दान्तरत्वादप्रसङ्ग इति प्रश्नः। **एषक इति**। अकोरिति प्रतिषेध

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

'सस्' इत्येतस्य सोर्लोपः स्यादचि पादश्चेल्लोपे सत्येव पूर्येत। 'सेमामविड्ढि प्रभृतिम्' 'य्[1] ईशिषे'। 'इह ऋक्पाद एव गृह्यते' इति वामनः। 'अविशेषाच्छ्लोकपादोऽपि' इत्यपरे। 'सैष दाशरथी रामः'। 'लोपे चेत्' इति किम्–'स इत्येति' 'स एवमुक्त्वा'। 'सत्येव' इत्यवधारणं तु 'स्यश्छन्दसि बहुलम्' (सू ३५२६) इति पूर्वसूत्राद्बहुलग्रहणानुवृत्त्या लभ्यते। तेनेह न। 'सोऽहमाजन्मशुद्धनाम्'॥

॥ इति स्वादिसन्धिप्रकरणम्॥

---

भावात्। एतत्तद्भ्यां परस्य सोरित्यपि न भवति, एतत्तदोरिति षष्ठीविरोधात्। एतत्तद्भ्यां विहितस्येति व्याख्याने तु परमैष ददाति, परमस ददातीत्यत्र अव्याप्तिः। तत्र सोः समासाद्विहितत्वेन एतत्तद्भ्यां विहितत्वाभावात्। अनञ्समास इति प्रतिषेधवैयर्थ्याच्च। अत एतत्तदर्थगतसंख्याभिधायिनः सोरिति व्याख्येयम्। **सोऽचि लोपे।** स इति प्रथमैकवचनान्तस्वरूपपरम्। ततः षष्ठ्या लुक्। सस्शब्दस्येति लभ्यते। सुलोप इत्यनुवर्तते। तदाह—**सस् इत्यादिना।**

इति स्वादिसन्धिः।

इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां
बालमनोरमायां सन्धित्रयं समाप्तम्।

---

एव 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते' इति परिभाषां ज्ञापयतीति भावः। **सोऽचि लोपे।** अचीति विस्पष्टार्थमिति वृत्तौ स्थितम्। सस् इति तच्छब्दस्य प्रथमैकवचनान्तस्यानुकरणं लुप्तषष्ठीकमित्याह—**स इत्यस्येति। बहुलग्रहणेति।** अत एव लोपं विना पादपूरणेऽपि क्वचिद्भवति—'सास्मा अरम्' इति। अत्र वदन्ति। ये तु 'सोऽहमाजन्मशुद्धानाम्' इत्यादिसिद्ध्यर्थं पादश्चेल्लोपे सत्येव पूर्येतेति सावधारणं व्याचख्युस्तेषां 'सास्मा अरम्' इत्यादौ सुलोपानापत्तिः। अत्र हि सः अस्मै इति च्छेदः। बहुलग्रहणानुवृत्त्या तदुपपादने तु सोऽहमाजन्मेत्याद्येव तथोपपाद्यतां किमवधारणेनेति।

इति तत्त्वबोधिन्यां स्वादिसन्धिप्रकरणम्।

---

१ य ईशिषे–इति नास्ति क, ख।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# अथाजन्तपुँल्लिङ्गप्रकरणम्। ८।

**१७८ अर्थवदधातुरप्रत्ययः प्रातिपदिकम्। ( १-२-४५ )** धातुं प्रत्ययं प्रत्ययान्तं च वर्जयित्वाऽर्थवच्छब्दस्वरूपं प्रातिपदिकसंज्ञं स्यात्।

---

अथ स्वौजसमौडित्यादिना स्वादिप्रत्ययान्वक्ष्यति। तत्र ङ्याप्प्रातिपदिकादित्यधिकृतम्। किं तत् प्रातिपदिकमिति जिज्ञासायामाह—**अर्थवदधातुः**। अर्थोऽस्यास्तीत्यर्थवत्। नपुंसकलिङ्गानुसारात् शब्दस्वरूपमिति विशेष्यमध्याहार्यम्। अधातुरिति, अप्रत्यय इति च तद्विशेषणम्। न धातुरधातुरिति नञ्तत्पुरुषः। परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः, इति पुंस्त्वम्। अप्रत्यय इत्यावर्तते। प्रत्ययभिन्नं प्रत्ययान्तभिन्नं च विवक्षितम्। पूर्ववत्पुंस्त्वम्। संज्ञाविधाविति निषेधस्तु प्रत्ययस्य यत्र संज्ञा तद्विषय इति भावः। तदाह—**धातुं प्रत्ययमित्यादिना**। अव्युत्पन्ना डित्थादिशब्दा इहोदाहरणानि। अर्थवदिति किम्। धनं वनमित्यादौ प्रतिवर्णं प्रातिपदिकसंज्ञा मा भूत्। सत्यां हि प्रातिपदिकसंज्ञायां प्रतिवर्णं सुबुत्पत्तिः स्यात्, संख्याकारकाभावेऽपि प्रथमैकवचनस्य सोर्दुर्वारत्वात् प्रथमाविभक्तेः कारकानपेक्षत्वात्, तदेकवचनस्य संख्यानवगमेऽपि प्रवृत्तेर्भाष्ये सिद्धान्तितत्वाच्च। न च हल्ङ्यादिना सुलोपात् प्रतिवर्णं सोरुत्पत्तावपि न क्षतिरिति वाच्यम्, एवमपि नलोपस्य दुर्वारत्वात्, अकारात् सोः रुत्वविसर्गापत्तेश्चेत्यलम्। अधातुरिति किम्। हन्धातोर्लङि, तिप्, शप्, लुक्, 'इतश्च' इतीकारलोपः, अडागमः, हल्ङ्यादिलोपः, अहन्निति रूपम्। अत्र धातोः प्रातिपदिकसंज्ञायां

---

**अथाजन्तपुँल्लिङ्गम्। अर्थवदधातु। प्रत्ययं प्रत्ययान्तं चेति।** सूत्रे तन्त्रादिनोभयं विवक्षितमिति भावः। अर्थवदिति नपुंसकनिर्देशस्यानुगुणं विशेष्यमध्याहरति—**शब्दस्वरूपमिति**। अधातुरप्रत्यय इति पुँल्लिङ्गनिर्देशस्तु 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' इत्युत्तरपदलिङ्गवत्त्वाद्बोध्य इत्याहुः। यदि तु धातुभिन्नमित्यर्थं परित्यज्यारोपितो धातुरधातुरिति व्याख्यायते, तदा नपुंसकत्वप्राप्तिशङ्कैव नास्तीति ज्ञेयम्। अर्थवदिति किम्, धनं वनमित्यादौ प्रतिवर्णं संज्ञा मा भूत्। तस्यां च सत्यां स्वादयः स्युः। ननु संख्याकर्मादेरभावान्न भविष्यतीति चेन्न, 'एकवचनमुत्सर्गतः करिष्यते' इति सिद्धान्तात्। हुंफडादिभ्य इव सोर्दुर्वारत्वात्। न चार्थवद्ग्रहणपरिभाषया अनर्थके न स्यादिति वाच्यम्। तस्या विशिष्टरूपोपादानविषयत्वात्। 'प्रादूहोढ—' इत्यत्र तु ऊढ इति विशिष्टरूपमुपात्तमिति क्तवत्वन्तैकदेशस्यानर्थकस्योढशब्दस्य ग्रहणं नेत्युक्तम्। न ह्यत्र तथा विशेषरूपस्योपादानमस्ति। यद्यप्यधातुरित्यादिपर्युदासेनार्थवत्त्वं लभ्यते, तथाप्युत्तरार्थमर्थवद्ग्रहणं स्पष्टप्रतिपत्तये इहैव कृतम्। न चैकाज्द्विर्वचन-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सुबपवादे तिङि उत्पन्ने लुप्ते तस्मिन् प्रातिपदिकसंज्ञायाः प्रागुत्पन्नाया अनपगमात् नलोपः स्यात्। न च प्रत्ययलक्षणमाश्रित्य प्रत्ययान्तपर्युदासादेव न प्रातिपदिकत्वमिति वाच्यम्। एवमपि प्राक्प्रवृत्तप्रातिपदिकत्वस्यानपगमात्। न चैवमपि कार्यकालपक्षे नलोपार्थं प्रातिपदिकसंज्ञायां क्रियमाणायां प्रत्ययलक्षणेन प्रत्ययान्तस्य प्रातिपदिकसंज्ञा न स्यादिति वाच्यम्। तर्हि हे राजन्नित्यत्रापि प्रत्ययलक्षणेन प्रत्ययान्तत्वात् प्रातिपदिकत्वाभावे सति नलोपस्याप्रसक्तौ 'न ङिसंबुद्ध्योः' इति तन्निषेधवैयर्थ्यप्रसङ्गात्। न च राजन्शब्दस्यौणादिककनिन्प्रत्ययान्तस्य 'कृत्तद्धित–' इति प्रातिपदिकत्वान्नलोपप्रसक्तौ 'न ङिसंबुद्ध्योः' इति निषेधोऽर्थवानिति वाच्यम्। उणादीनामव्युत्पत्तिपक्षे 'कृत्तद्धित–'

---

न्यायेन समुदायस्यैव संज्ञा स्यात्, नावयवानामित्यर्थवद्ग्रहणमिह व्यर्थमिति शङ्क्यम्, समुदाये द्विरुक्ते अवयवा अपि द्विरुक्ता भवन्ति। 'वृक्षः प्रचलन् सहावयवैः प्रचलति' इति न्यायात्। इह तु समुदाये प्रवृत्तया प्रातिपदिकसंज्ञया नावयवानां तत्कार्यसिद्धिरिति वैषम्यात्। अत एव यत्र बहवो हलः संश्लिष्टास्तत्र द्वयोर्बहूनां चाविशेषेण संयोगसंज्ञेति सिद्धान्तः संगच्छते। अन्यथा त्वदुपन्यस्तन्यायेन समुदाय एव संयोगसंज्ञा प्रवर्तते। अत्र केचित्—धनं वनमित्यादौ प्रतिवर्णं सत्यामपि संज्ञायां सत्स्वपि स्वादिषु न क्षतिः। 'हल्ङ्याब्–' इत्यादिना सुलोपात्। न च नलोपो धस्य जश्त्वं च स्यादिति शङ्क्यम्। धातुपाठे धनवनेत्युच्चारणसामर्थ्यात्तदप्रवृत्तेरित्याहुः। तदसत्, अकारात्सोरुत्पत्तौ रुत्वप्रवृत्तेः। यद्यपि समुदितप्रातिपदिकस्यावयवत्वेन सुपो लुकि रुत्वं न भवेत्तथापि चिकीर्षति विद्म इत्यादौ रेफदकारयोः पदान्तत्वे सति 'खरवसानयोः–' इति विसर्गस्य 'यरोऽनुनासिके–' इत्यनुनासिकस्य च प्रसङ्गादिति दिक्। अधातुः किम्, अहन्। धातोः प्रातिपदिकसंज्ञायां सत्यां तिङां स्वाद्यपवादत्वादहन्नित्यत्र हन्तेस्तिपि सिपि वा कृते 'इतश्च' इति इकारलोपे हल्ङ्यादिलोपे च प्राक् कृता प्रातिपदिकसंज्ञा नापगतेति 'न लोपः प्रातिपदिकान्तस्य' इति नलोपः स्यात्तन्मा भूत्। 'अहन्' इति रुत्वं 'रोऽसुपि' इति रत्वं चेह नाशङ्क्यम्, लाक्षणिकत्वात्। न च कार्यकालपक्षे प्रत्ययान्तत्वेन पर्युदासात् प्रातिपदिकसंज्ञाभावेन नलोपो न भवेदिति वाच्यम्, प्रत्ययलक्षणेन उक्तपर्युदासाप्रवृत्तेः 'न ङिसंबुद्ध्योः' इति निषेधेन ज्ञापितत्वात्। कथमन्यथा राजेत्यादौ नलोपः स्यात्। यद्यपि व्युत्पत्तिपक्षे राजन्शब्दस्य कनिन्प्रत्ययान्ततया 'कृत्तद्धित–' इति प्रातिपदिकसंज्ञायां राजेत्यादौ नलोपः स्यात्। तथा च 'न ङिसंबुद्ध्योः' इति निषेधो न ज्ञापक इति कार्यकालपक्षेऽधातुग्रहणं व्यर्थम्, तथाप्यव्युत्पत्तिपक्षे ज्ञापकमेवेति कार्यकालेऽपि तत्स्वीकर्तव्यम्। न च 'सुपो धातु–' इति सूत्रे प्रातिपदिकात्पृथग्धातुग्रहणाद्धातोर्नेयं संज्ञेति वाच्यम्, पुत्रीयती-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इत्यस्याप्रवृत्तेः। एवं चास्मादेव निषेधात् प्रत्ययलक्षणमाश्रित्याप्रत्ययान्त इति पर्युदासो न प्रवर्तत इति विज्ञायते। एवं च अहन्नित्यत्राप्यप्रत्ययान्तत्वात् प्रातिपदिकत्वप्राप्तौ तन्निवृत्त्यर्थमधातुग्रहणम्। अप्रत्यय इति किम्। हरिषु करोषि इत्यत्र सुप्सिपोरर्थवत्त्वात् अप्रत्ययान्तत्वाच्च प्रातिपदिकत्वे प्राप्ते तन्निवृत्त्यर्थमप्रत्यय इति प्रत्ययपर्युदासः। न चात्र सुप्सिपोर्व्यपदेशिवद्भावेन प्रत्ययान्तत्वात् प्रत्ययान्तपर्युदासेनैव प्रातिपदिकत्वनिवृत्तिसंभवात् किं प्रत्ययपर्युदासेनेति वाच्यम्, प्रत्ययग्रहणे यस्मात् स विहितस्तदादेस्त-

---

त्यादौ प्रत्ययान्ते धातुग्रहणस्य चरितार्थत्वात्। अप्रत्ययः किम्, हरिषु, करोषि। अत्र सुप्सिपोर्मा भूत्। अप्रत्ययान्तः किम्, तत्रैव विभक्तिविशिष्टयोर्मा भूत्। न चान्तवद्भावेन काण्डे कुड्ये इत्यादौ प्रातिपदिकत्वं स्यादेव। तथा च 'ह्रस्वो नपुंसके–' इति ह्रस्वः सोरुत्पत्तिश्च स्यादिति वाच्यम्। 'सप्तम्यधिकरणे च' इत्यादिनिर्देशेन विभक्त्येकादेशस्यान्तवद्भावानभ्युपगमादिति दिक्। ननु प्रत्ययपर्युदासो न कर्तव्यः, प्रत्ययान्तपर्युदासेनैव गतार्थत्वात्। व्यपदेशिवद्भावेन तस्यापि प्रत्ययान्तत्वादिति चेन्मैवम्, प्रत्ययग्रहणे यस्मात्स विहितस्तदादेर्ग्रहणात् केवलस्य चातथात्वात्। अन्यथा सुप्तिङोरपि तदन्तत्वात् पदत्वं स्यात्। तथा च हरिषु करोषीत्यादौ षत्वं न स्यात्। 'सात्पदाद्योः' इति निषेधात्। न च षत्वविधेर्निरवकाशता, सर्पिषे, एष इत्यादौ चरितार्थत्वात्। अन्ये तु व्याचक्षते—'कृत्तद्धित–' इत्यत्र हि तदन्तविधिर्वक्ष्यते। तथा च तद्धितग्रहणस्य तद्धितान्तानामेव नत्वन्यप्रत्ययान्तानां संज्ञेति नियमार्थतामाश्रित्य प्रत्ययान्तपर्युदासोऽत्र न कर्तव्यः। अथवा—'सात्पदाद्योः' इति सूत्रे सातिग्रहणात्प्रत्ययो न प्रातिपदिकमिति सिद्धे प्रत्ययग्रहणं सामर्थ्यात्तदन्तपरम्। उत्तरसूत्रे तद्धितग्रहणं तु विध्यर्थमेवास्तु। यद्वा सातिग्रहणात्प्रत्ययस्य प्रातिपदिकत्वाभावे तद्धितग्रहणस्योक्तरीत्या नियमार्थत्वे च 'अर्थवदधातुः प्रातिपदिकम्' इत्येव सुवचमिति, तेषाम् 'इको यणचि' इति सूत्रं व्यर्थं स्यात्, 'तस्मादित्युत्तरस्य' 'वाम्नृतुपित्रुषसः–' इत्यादिनिर्देशाज्ज्ञापकादिष्टसिद्धेः। 'नाऽऽज्झलौ' इत्यत्राकारसहितोऽच् आजित्ययं मूलस्थग्रन्थोऽपि विरुध्येत। 'कालसमयवेलासु–' इत्यादिज्ञापकादेव ढत्वाभावसिद्धेः। यदि ज्ञापकेन प्रत्याख्यानमयुक्तमिति, यदि चाऽऽकारप्रश्लेषे एव तल्लिङ्गमित्यभ्युपगमे सूत्राक्षरैरेवेष्टं सिध्यतीत्युच्येत, तर्हि 'अप्रत्यय–' इत्येतदभ्युपगम्य प्रत्ययपर्युदासे सातिग्रहणं लिङ्गम्, प्रत्ययान्तपर्युदासे तु तद्धितग्रहणमित्यप्रत्ययग्रहणमेवावर्त्य व्याख्यायताम्, किमनया कुसृष्ट्येति दिक्। अधातुप्रत्ययाविति सिद्धे नञ्द्वयोपादानम् 'अप्रत्ययः' इत्यस्यावृत्तिसौकर्यार्थम्। महासंज्ञाकरणं श्रुत्यनुरोधात्, तथा चाथर्वणे पठ्यते—'को धातुः, किं प्रातिपदिकम्, कः प्रत्ययः' इति। डित्थादीन्यव्युत्पन्नानीहो-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

१७९ **कृत्तद्धितसमासाश्च**। (१-२-४६) कृत्तद्धितान्तौ समासाश्च प्रातिपदिक-

---

दन्तस्य ग्रहणमिति परिभाषया प्रकृतिप्रत्ययसमुदायस्यैव प्रत्ययान्ततया केवलप्रत्यययोः सुप्सिपोः पर्युदासालाभात्, अप्रत्ययान्त इति किम्। हरिषु करोषि। अत्र प्रकृतिप्रत्यय-समुदाययोः प्रत्ययभिन्नत्वादर्थवत्त्वाच्च प्रातिपदिकत्वं मा भूत्।

**कृत्तद्धित**। कृच्च तद्धितश्च समासश्चेति विग्रहः। पूर्वसूत्रात् प्रातिपदिक-मित्यनुवर्तते, बहुवचनान्ततया विपरिणम्यते। प्रत्ययग्रहणपरिभाषया 'कृतद्धित–' इति तदन्तग्रहणम्। तदाह—**कृत्तद्धितान्तावित्यादिना**। कृत्तद्धितान्तयोः प्रत्ययान्तत्वात् पूर्वसूत्रेणाप्राप्तौ कृत्तद्धितग्रहणम्। "केवलयोः कृत्तद्धितयोः संज्ञायां प्रयोजनाभावात् संज्ञाविधाविति निषेधोऽत्र न भवति"। अस्मादेव पूर्वसूत्रे संज्ञाविधावपि प्रत्ययग्रहण-परिभाषया तदन्तलाभात् प्रत्ययान्तपर्युदासः। केचित्तु अर्थवदित्यनुवर्त्य तत्सामर्थ्यात् तदन्तविधिमाहुः। कृदन्ते यथा—कर्ता भर्ता इत्यादि। तद्धिते यथा—औपगव इत्यादि। समासे यथा—राजपुरुष इत्यादि।

ननु समासग्रहणं व्यर्थम्, समासे राजपुरुष इत्यादिशब्दानां पूर्वसूत्रेणैव प्रातिपदिकत्वस्य सिद्धत्वात्। न च उत्तरपदोत्तरलुप्तप्रत्ययं प्रत्ययलक्षणेनाश्रित्य प्रत्य-यान्तपर्युदासः शङ्क्यः, उत्तरपदमात्रस्य प्रत्ययान्तत्वेऽपि समुदायस्याप्रत्ययान्तत्वात्, प्रत्ययग्रहणे यस्मात्स विहितस्तदादेरेव ग्रहणात् प्रत्ययलक्षणमाश्रित्य प्रत्ययान्तपर्युदासो

---

दाहरणम्। अव्युत्पत्तिपक्षस्य चेदमेव ज्ञापकमिति प्राञ्चः। वस्तुतस्तु व्युत्पत्तिपक्षे बहुपटव इत्याद्यर्थं सूत्रमिति नव्याः। न चैवं 'बहुच्पूर्वः प्रातिपदिकम्' इत्येव सूत्र्यतामिति वाच्यम्, मूलकेनोपदंशमित्यादौ कृदन्तत्वेनातिप्रसङ्गाद् गतिकारक-पूर्वस्यापि कृदन्तत्वात्। न च समासग्रहणं नियमार्थमिति निस्तारः। अर्थवत्सूत्रारम्भं विना समासग्रहणस्य नियमार्थत्वायोगात्। **कृत्तद्धितसमासाश्च**। अर्थवदित्यनु-वर्तते तत्सामर्थ्यात्तदन्तविधिः। ननु यद्यर्थवत्ता पारमार्थिकी विवक्ष्यते, सा पदस्य वाक्यस्य वाऽस्ति, न तु कृत्तद्धितान्तस्य, यदि तु प्रक्रियादशायां या कल्पिता सा विवक्ष्यते, तर्हि कृत्तद्धितयोरपि साऽस्तीति कथमर्थवद्ग्रहणानुवृत्त्या तदन्तग्रहणमिति चेदत्राहुः। अत एवार्थवद्ग्रहणसामर्थ्यमुक्तम्। प्रत्ययान्तेन ह्येकार्थीभूतेन प्रतीयमानोऽर्थ इह गृह्यते, तस्य लौकिकार्थं प्रति प्रत्यासन्नतरत्वाद्, मतुपः प्राशस्त्यपरतया तस्यैव ग्रहणात्। अत एव च तदुपादानं सार्थकम्, पूर्वसूत्रे अधातुरिति पर्युदासबलेनापि तल्लाभ-संभवादिति। तदेतत्सकलमभिप्रेत्याह—**कृत्तद्धितान्ताविति**। लिङ् धुग् इत्यादौ 'अधातुः' इति, कर्ता औपगव इत्यादौ 'अप्रत्ययान्तः' इति पर्युदासे प्राप्ते 'कृत्त-

---

१ अयं ग्रन्थो नास्ति—क।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

**संज्ञाः स्युः। पूर्वसूत्रेण सिद्धे समासग्रहणं नियमार्थम्। यत्र संघाते पूर्वो भागः पदं**

---

न प्रवर्तेत इति 'न ङिसम्बुद्ध्योः' इति निषेधेन ज्ञाप्यत इति पूर्वसूत्रे प्रपञ्चितत्वाच्चेत्यत आह--**पूर्वसूत्रेणेत्यादिना**। नियमशरीरं दर्शयति--**यत्रेति**। पूर्वो भागः पदमित्युपलक्षणम्। उत्तरभागस्तु प्रत्ययो नेत्यपि द्रष्टव्यम्। अन्यथा जन्मवानित्यादौ प्रातिपदिकत्वं न स्यात्, स्वादिष्वसर्वनामस्थान इति पूर्वभागस्य पदत्वात्। न चात्र 'कृत्तद्धित-' इति तद्धितग्रहणसामर्थ्यादेव प्रातिपदिकत्वं संभवतीति वाच्यम्, दाक्षिरित्यादौ तद्धितग्रहणस्य चरितार्थत्वात्। तत्र हि प्रकृतिभागो न पदम्, भत्वेन तद्बाधात्। पूर्वो भागः पदमित्यनुक्तौ बहुपटव इत्यत्र प्रातिपदिकसंज्ञा न स्यात्। ईषदसमाप्तावित्यनुवृत्तौ 'विभाषा सुपो बहुच् पुरस्तात्तु' इति सूत्रेण पटव इति प्रथमाबहुवचनान्तात् पूर्वतः बहुच्प्रत्यये कृते 'अर्थवत्' इति प्रातिपदिकत्वात् तदवयवजसो

---

द्धित-' इत्यारम्भः। **नियमार्थमिति**। न च प्रत्ययान्तत्वेन पर्युदासे प्राप्ते विध्यर्थमस्त्विति शङ्क्यम्। वाक्यस्याप्रत्ययान्तत्वात्। प्रत्ययग्रहणे यस्मात्स विहितस्तदादेरेव ग्रहणात्। न चैवमपि अनुपसर्जनस्त्रीप्रत्यये तदादिनियमाभावाद्राजकुमारीत्यादौ ङीबन्ते विध्यर्थमस्त्विति वाच्यम्। 'अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधते' इति लुग्विषये हल्ङ्यादिलोपाप्रवृत्त्या श्रूयमाण एव सुपि समासप्रवृत्तेः। तत्र च कुमारीशब्दस्य सुबन्तत्वेऽपि राजकुमारीशब्दस्यातथात्वादप्रत्ययान्तत्वेन प्रवृत्तायाः संज्ञाया एकदेशविकृतन्यायेन विभक्तिलुक्यपि सुलभत्वात्। अत एव गोमत्प्रिय इत्यादौ नुमादयो न, लुकः प्रागन्तरङ्गस्य हल्ङ्यादिलोपस्य प्रवृत्तौ तु स्युरेवेति दिक्। नियमशरीरमाह--**यत्र संघात इति**। नियमश्चात्र सजातीयापेक्ष इत्याह--**पूर्वो भागः पदमिति**। षड्विधेऽपि समासे पूर्वभागस्य पदत्वाव्यभिचाराद्भवत्ययं सजातीयः। पूर्वो भाग इत्युपलक्षणम्, 'उत्तरस्तु प्रत्ययो न' इत्यपि बोध्यम्। अन्यथा जन्मवानित्यादौ संज्ञा न स्यात्। 'स्वादिषु-' इत्यनेन पूर्वभागस्य पदत्वात्। न च तद्धितग्रहणसामर्थ्यात्तत्र स्यादेवेति वाच्यम्। तद्धितग्रहणस्य भानव औपगव इत्यादौ कृतार्थत्वात्। तत्र हि पूर्वभागस्य भत्वम्, न तु पदत्वम्। न चैवमयमियानित्यादिसमुदायस्य प्रातिपदिकत्वं स्यादेव, पूर्वभागस्य पदत्वेऽप्युत्तरस्य प्रत्ययत्वादनेन नियमेन वारयितुमशक्यत्वादिति वाच्यम्। 'उत्तरस्तु प्रत्ययो न' इत्यत्र 'तद्विहितप्रत्ययो न' इति व्याख्यानात्। पूर्वो भागः पदमिति किम्, बहुज्विशिष्टस्य प्रातिपदिकसंज्ञा यथा स्यात्। तेन बहुपटव इत्यत्र उपोत्तमोदात्तत्वं सिध्यति। प्रथमजसो लुकि 'चितः सप्रकृतेर्बह्वकजर्थम्' इति चित्स्वरे कृते पुनर्जस उत्पत्तेः। प्रातिपदिकसंज्ञायामसत्यां तु जसेवोदात्तः स्यात्। यद्वा 'प्रकृतिप्रत्ययभावानापन्नसंघातस्य चेद्भवति तर्हि समासस्यैव' इति नियमार्थं समास-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तस्य चेद्भवति तर्हि समासस्यैव । तेन वाक्यस्य न । १८० प्रत्ययः । (३-१-१) आ पञ्चमपरिसमाप्तेरधिकारोऽयम् । १८१ परश्च । ( ३-१-२ ) अयमपि तथा ।

---

लुकि 'चितः सप्रकृतेर्बह्वकजर्थम्' इति टकारादुकारस्य उदात्तत्वे चित्स्वरे कृते पुनर्जसि बहुपटव इति रूपम् । अत्र टकारादकार उदात्त इति स्थितिः । जसन्तात् पूर्वतो बहुच्प्रत्यये बहुपटव इति समुदायस्य प्रातिपदिकत्वाभावे तु ततो जसन्तरं नोत्पद्येत । न चेष्टापत्तिः, तथा सति बहुच्प्रकृतिभूतजसन्ते जसः प्रातिपदिकावयवत्वाभावेन 'सुपो धातुप्रातिपदिकयोः' इति लुगभावाद्बहुपटव इति जसन्तस्यैव बहुच्प्रकृतितया चितस्स-प्रकृतेर्विधीयमानश्चित्स्वरः जस एवाकारस्य स्यात् । इष्यते तु टकारादुत्तरस्य । बहुपटव इति समुदायस्य प्रातिपदिकत्वे तु प्रातिपदिकावयवत्वाद् जसो लुकि पटुशब्दस्यैव बहुच्प्रकृतितया टकारादुत्तरस्य चित्स्वरे सति पुनर्जसि बहुपटव इति रूपमुक्तं निर्बाध-मिति भावः । नियमस्य फलमाह—**तेनेति** । उक्तनियमेनेत्यर्थः । अन्यथा 'देवदत्त गामभ्याज शुक्लां दण्डेन' इत्यादिवाक्यस्यापि प्रातिपदिकत्वापत्तौ सुब्लुक् स्यात् । न च वाक्यस्य प्रत्ययान्तत्वादेव न प्रातिपदिकत्वमिति वाच्यम्, प्रत्ययग्रहणे यस्मात स विहितस्तदादेरेव ग्रहणादिति भावः । 'कृत्तद्धितसमासाश्च' इति चकारः अनुक्तसमुच्चयार्थः । तेन 'निपातस्यानर्थकस्य प्रातिपदिकसंज्ञा वक्तव्या' इति वार्तिकं गतार्थम् ।

**प्रत्ययः** । तृतीयाध्यायस्यादिमं सूत्रमिदम् । इत ऊर्ध्वमा पञ्चमाध्यायपरि-समाप्तेः प्रत्ययशब्दः संज्ञात्वेनाधिक्रियत इत्यर्थः । हनश्च वधः, ई च खनः, नडादीनां कुक्च, इत्यादीनामादेशागमानां तु न प्रत्ययसंज्ञा, महासंज्ञाकरणात् । **परश्च** । तृतीया-ध्यायस्य द्वितीयसूत्रमेतत् । **अयमपि तथेति** । अयमपि योग आ पञ्चमपरिसमाप्ते-

---

ग्रहणम् । तेन गवित्ययमाहेत्यादौ नातिप्रसङ्ग इति दिक् । नियमफलमाह—**तेन वाक्यस्य नेति** । गामभ्याज शुक्लामित्यादिवाक्यस्य न भवतीत्यर्थः । सत्यां हि संज्ञायां सुब्लुक् स्यात् । नन्वेवमपि मूलकेनोपदंशं भुङ्क्ते इत्यादिवाक्यस्य संज्ञा दुर्वारा 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणाद्' इति चेन्नैवम् । समासग्रहणकृतनियमेन परत्वाद्बाधात् । एवं च 'कृत्तद्धित—' इति सूत्रे कृद्ग्रहणपरिभाषा निष्फलत्वान्नोप-तिष्ठते । तस्याश्च परिभाषाया व्यावक्रोशी व्यावहासीत्यत्रावकाशः । तत्र हि 'कर्म-व्यतिहारे णच् स्त्रियाम्' इति धातोर्णचि कृते गतिपूर्वस्य णजन्तत्वात् 'णचः स्त्रियाम्-इत्यञि सत्युपसर्गाकारस्यादिवृद्धिस्वरौ भवतः । कृद्ग्रहणे कारकपूर्वस्याप्युदाहरणमव-तप्ते नकुलस्थितमित्यादि स्फुटीभविष्यति । चकारोऽनुक्तसमुच्चयार्थः । तेन 'निपातस्या-नर्थकस्य प्रातिपदिकसंज्ञा वक्तव्या' इति वार्तिकं गतार्थम् । येषां द्योत्योऽप्यर्थो नास्ति तदर्थमिदम् । अवद्यति । अनुकरणेषु तु अनुकार्येण सहाभेदविवक्षायामर्थवत्त्वाभावा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

१८२ ङ्याप्प्रातिपदिकात् । (४-१-१) ङ्यन्तादाबन्तात्प्रातिपदिकाच्चेत्या पञ्चमपरिसमाप्तेरधिकारः । 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' (प ७२)

---

रधिकार इत्यर्थः । अवधिनियमे तु व्याख्यानमेव शरणम् । ङ्याप्प्रातिपदिकात् । चतुर्थाध्यायस्यादिमं सूत्रमिदम् । ङी च, आप् च, प्रातिपदिकं चेति समाहारद्वन्द्वः । ङी इति, ङीप्ङीष्ङीनां सामान्येन ग्रहणम् । आबिति टाप्डाप्चापां ग्रहणम् । प्रत्ययग्रहणपरिभाषया तदन्तग्रहणम् । तदाह—ङ्यन्तादित्यादिना । आ पञ्चमेत्यवधिनियमे तु व्याख्यानमेव शरणम् । ननु प्रातिपदिकादित्येव सूत्र्यताम् । ङ्याब्ग्रहणं मास्तु । प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति परिभाषया ऊङ्प्रत्ययान्तात् श्वश्रूशब्दादिव दण्डिनी अजा खट्वा इत्यादिभ्योऽपि ङ्याबन्तेभ्यः सुबादिप्रत्ययसंभवादित्यत आह—प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापीति । स्त्रीलिङ्गबोधकङीबादिप्रत्ययविशिष्टस्येत्यर्थः । यथा स्यादिति । यथेति योग्यतायाम् । ङ्याबन्तादेव तद्धितः प्राप्तुं योग्यः । स च ङ्याब्ग्रहणे सत्येव स्यादित्यर्थः । व्यवच्छेद्यं दर्शयति—

---

देव न प्रातिपदिकत्वम् । 'भू सत्तायाम्' इति यथा । भेदविवक्षायां तु संज्ञा स्यादेव 'भुवो वुक्—' इति यथा । अधिकारोऽयमिति । प्रत्ययशब्दः संज्ञात्वेनाधिक्रियत इत्यर्थः । ङ्याप्प्रातिपदिकात् । समाहारद्वन्द्वादेकवचनम् । ङीति ङीप्ङीष्ङीनां सामान्यग्रहणम्, आबिति च टाप्डाप्चापाम् । आपञ्चमपरिसमाप्तेरिति । ननु 'घकालतनेषु—' इति ज्ञापकात्सुबन्तात्तद्धितोत्पत्तिरित्यभ्युपगतेः किमर्थस्तद्धितेषु प्रातिपदिकाधिकार इति चेदत्राहुः । असति त्वधिकारे 'अत इञ्' इत्यत्रात इत्येतत्सुबन्तस्यैव विशेषणं स्यात्, ततश्च दक्षस्यापत्यमित्यत्रैव इञ् स्यान्न तु दक्षयोर्दक्षाणामित्यत्र । किं च 'वृद्धाच्छः' इत्यत्र वृद्धमित्येतत् सुबन्तविशेषणं मा भूत् । अन्यथा जानन्तीति ज्ञाः 'इगुपध—' इति कः । ज्ञानामयमित्यत्र सुबन्तस्य वृद्धत्वाच्छः स्यात् । प्रातिपदिकाधिकारे तु वृद्धं यत्प्रातिपदिकं तत्प्रकृतिकात् सुबन्ताच्छ इत्यर्थलाभादिह प्रातिपदिकस्यावृद्धत्वाच्छो न भवति, किं तु अणेव भवति । शब्दकौस्तुभे त्वसत्यस्मिन्नधिकारे वाक्यादपि क्प्रत्यादयः स्युः । ततो विशिष्टप्रातिपदिकतायां सकलसुब्लोपे स्पष्टमेवानिष्टमिति स्थितम् । लिङ्गविशिष्टस्येति । लिङ्गविशिष्टप्रत्ययबोधकप्रत्ययविशिष्टस्यापीत्यर्थः । परिभाषायाः प्रयोजनं श्वश्रूः । प्रत्ययान्तत्वेनाप्रातिपदिकत्वेऽपि इह स्वादयः । न च 'श्वशुरः श्वश्र्वा' इति निर्देशादेव स्वादिसिद्धिरिति वाच्यम् । निर्देशस्य शब्दपरत्वात् । 'विपराभ्यां जेः' 'ङेयः' इतिवत् । किं च कुमारीमाचष्टे कुमारयति । 'णाविष्ठवत्' इति टिलोपः । एवं यामिन्य इवाचरन्ति यामिनयन्तीत्यत्राचारे क्विपि फलम् । ङ्याब्भ्यां प्रागिति । तेन एनिका आर्यका च सिध्यति । तथा हि 'न

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इत्येव सिद्धे ङ्याब्ग्रहणं ङ्याबन्तात्तद्धितोत्पत्तिर्यथा स्यान्ङ्याब्भ्यां प्राङ् माभू-

ङ्याब्भ्यां प्राङ् मा भूदिति। ततश्च लोहिनिका आर्यका च सिध्यति। तथा हि— लोहितशब्दस्तावद् 'वर्णानां तणतिनितान्तानाम्' इति फिट्सूत्रेणाद्युदात्तः। ततश्च ओकार उदात्तः। 'अनुदात्तं पदमेकवर्जम्' इति परिशिष्टौ इकाराकारावनुदात्तौ। तथा च 'वर्णादनुदात्तात्तोपधात्तो नः' इति मणौ विद्यमानाल्लोहितशब्दात् स्त्रीत्वविवक्षायां ङीप्, तत्संनियोगेन तकारस्य नकारादेशश्च प्राप्तः। 'लोहितान्मणौ' इति स्वार्थिकः कन्नपि प्राप्तः। तत्र स्वार्थिकत्वादन्तरङ्गः परश्च कन् नत्वसंनियोगशिष्टं ङीपं बाधित्वा प्रवर्तेत। ततश्च ङीपो न प्रसक्तिः। कोपधत्वेन तोपधत्वाभावात्। ततश्च लोहितकशब्दाद् 'अजाद्यतः—' इति टापि 'प्रत्ययस्थात्—' इत्यादिना इत्वे लोहितिकेत्येव स्यात्, न तु लोहिनिकेति। इष्यते तु रूपद्वयमपि। 'ङ्याप्प्रातिपदिकात्' इत्यत्र ङीब्ग्रहणे तु तत्सामर्थ्याद् अन्तरङ्गं परमपि कनं बाधित्वा नत्वसंनियोगशिष्टे ङीपि कृते, लोहिनीशब्दात् कनि, 'केऽणः' इति ह्रस्वे, लोहिनिकेति रूपम्। वर्णादनुदात्तादित्यस्य वैकल्पिकतया नत्वसंनियोगशिष्टङीबभावे तु लोहिताशब्दात् कनि, ह्रस्वे, पुनः कान्तात् टापि, 'प्रत्ययस्थात्' इतीत्वे लोहितिकेत्यपि सिध्यति। तथा आर्यशब्दात् स्वार्थिके कनि, समुदायोत्तरटापैव स्त्रीत्वबोधनसंभवादेकाज्द्विर्वचनन्यायेन कन्नन्तादेव टापि, कनः पूर्वं टाबभावात्, आत्स्थानिकस्य अतोऽभावाद् 'उदीचामातस्स्थाने' इति इत्वविकल्पस्याप्रवृत्तौ, 'प्रत्ययस्थात्' इति नित्यमित्वे आर्यिकेत्येव स्यात्, आर्यकेति न स्यात्। इष्यते तूभयमपि। 'ङ्याप्प्रातिपदिकात्' इत्यत्र आब्ग्रहणे तु तत्सामर्थ्यात् स्वार्थिकं कनं बाधित्वा टापि, ततः कनि, 'केऽणः' इति ह्रस्वे, पुनः कन्नन्तात्टापि, 'उदीचामातस्स्थाने' इतीत्वविकल्पे रूपद्वयं सिध्यति।

वस्तुतस्तु ङ्यापोर्ग्रहणं मास्तु, सुबन्तादेव तद्धितोत्पत्तिः। सुपः प्रागेव च ङ्यापौ प्रवर्तेते। स्वार्थद्रव्यलिङ्गसंख्याकारककुत्सादिप्रयुक्तकार्याणां क्रमिकत्वात्। तथा हि— स्वार्थः प्रवृत्तिनिमित्तं जात्यादि, तज्ज्ञानं पूर्वं भवति, विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वात्। ततस्तदाश्रयज्ञानम्, धर्मित्वेन प्रधानत्वाद् लिङ्गादिभिराकाङ्क्षितत्वाच्च।

सामिवचने' इति ज्ञापयिष्यमाणोऽत्यन्तस्वार्थिकः कः, एतार्यशब्दाभ्यां ङ्यापौ बाधेत, ततश्च एतिका आर्यिकेत्येव रूपं स्यात्। ङ्याब्ग्रहणसामर्थ्यात्तु ङीबन्तात्कनि एनिकेत्यपि सिध्यति। 'वर्णादनुदात्तात्—' इत्यस्य वैकल्पिकत्वात्। आबन्तात्कनि तु 'उदीचामातः स्थाने—' इतीत्वविकल्पादार्यका आर्यिकेति रूपद्वयं सिध्यति। वस्तुतस्तु ङ्यापोर्ग्रहणं मास्तु 'घकालतनेषु—' इत्यलुग्विधानसामर्थ्यात्सुबन्तात्तद्धितोत्पत्तिरिति हि निष्कर्षः। तथा च सुपः प्रागेव ङ्यापौ प्रवर्तेते। स्वार्थद्रव्यलिङ्गसंख्याकारकप्रयुक्त-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दित्येवमर्थम् । १८३ **स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप्** । ( ४-१-२ ) ङ्यन्तादाबन्तात्प्रातिपदिकाच्च परे स्वादयः प्रत्ययाः स्युः । सुङस्योरुकारेकारौ जशटङपाश्चेतः । १८४ **विभक्तिश्च** । (१-४-

---

ततः स्वमात्रापेक्षत्वाद् लिङ्गस्य ज्ञानम् । ततो विजातीयक्रियापेक्षकारकापेक्षया सजातीयपदार्थापेक्षसंख्याज्ञानम् । ततः कारकरूपविभक्त्यर्थापेक्षा भवति । तन्निवृत्तौ कुत्सादिज्ञानमिति 'कुत्सित' इति सूत्रभाष्ये स्थितम् । शब्दरत्ने च परिष्कृतमेतत् ।

**स्वौजसमौट्** । सु-औ-जस्, अम्-औट्-शस्, टा-भ्याम्-भिस्, ङे-भ्याम्-भ्यस्, ङसि-भ्याम्-भ्यस्, ङस्-ओस्-आम्, ङि-ओस्-सुप्, इत्येकविंशतिः स्वादयः । समाहारद्वन्द्वः, इतरेतरयोगद्वन्द्वो वा, तथा सति सौत्रमेकवचनम् । ङ्याप्प्रातिपदिकादित्यधिकृतं प्रत्ययः, परश्चेति च । यथायथं च विपरिणम्यते । तदाह—**ङ्यन्तादित्यादिना** । **सुङस्योरिति** । सु-ङसि-इत्यनयोरुकारेकारौ, जस्-शस्-इत्यनयोर्जकारशकारौ, औट्-टा-इत्यनयोष्टकारः, ङे-ङसि-ङस्-ङि-इत्येतेषां ङकारः, सुप् इत्यस्य पकारः, इत्येते इत्संज्ञकाः प्रत्येतव्या इत्यर्थः । 'उपदेशेऽजनुनासिक इत्' 'चुटू' 'लशक्वतद्धिते' 'हलन्त्यम्' इति सूत्रैरिति शेषः । इत्संज्ञायां च लोपः । तद्-

---

कार्याणां क्रमिकत्वस्वीकारादित्यवधेयम् । **स्वौजसमौट्** । समाहारे द्वन्द्वः । **सुङस्योरिति** । सोरुकारः 'अर्वणस्त्रसौ-' इत्यत्र विशेषणार्थः । 'असि' इत्युक्ते हि असकारादावित्यर्थः स्यात् । तथा च 'वाजमर्वत्सु' इति न सिध्येत् । ङसेरिकारः 'टाङसिङसाम्' 'ङसिङ्योः स्मात्स्मिनौ' इत्येतदर्थः । जश्शसोर्जकारशकारौ 'जसः शी' 'तस्माच्छसो नः-' इत्यनयोर्विषयविभागार्थौ । ननु अन्यतरस्य निरनुबन्धकत्वमेवास्त्विति चेन्न । जसो जकाराभावे औइत्यस्य आव् स्यात्, ततश्च प्रत्ययस्य वकारान्तता संभाव्येत, एवं शसः शकाराभावे औटो डित्वं संभाव्येत । तथा च तेजसी इत्यादौ टिलोपः स्यात् । अथवा लिहावित्यादौ डित्वसामर्थ्यादभस्यापि टेर्लोपः संभाव्येत । औटष्टकारः सुडिति प्रत्याहारार्थः । टाटकारस्तु 'टाङसिङसाम्' 'द्वितीयाटौस्स्वेनः' इति विशेषणार्थः । एतेन 'आदिरन्त्येन-' इति सूत्रे काशिकाकारेण यदुक्तम्—अन्त्येनेति किम्, सुडिति तृतीयैकवचनावयवेन मा भूद्—इति तत्परास्तम् । औटष्टकारस्यानन्यार्थतया तेनैव संभवात् प्रत्यासत्तेश्च । अत एव शब्दकौस्तुभे तत्रान्यदेव प्रयोजनमुक्तम् । मध्यमेनेता सहित आदिस्तदुत्तरेषामपि ग्राहको मा भूदित्यन्त्येनेति ग्रहणम् । अन्त्येनेता सहितो मध्यमः पूर्वेषामपि मा भूदित्यादिग्रहणम्—इति । अमुमेवार्थं मनसि निधाय—आद्यन्ताभ्यामवयवाभ्यामवयवी समुदाय आक्षिप्यते—इति निष्कृष्टमुक्तं प्राक् । प्रकृतमनुसरामः—ङेप्रभृतीनां ङकारो 'घेर्ङिति' ङेराम्-' इति विशेषणार्थः । सुपः पकारस्तु

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

१०४) सुप्तिङौ विभक्तिसंज्ञौ स्तः । तत्र 'सु' 'औ' 'जस्' इत्यादीनां त्रिकाणां प्रथमादयः सप्तम्यन्ताः प्राचां संज्ञाः । ताभिरिहापि व्यवहारः । १८५ सुपः । ( ३-४-१०३ ) सुपस्त्रीणि त्रीणि वचनान्येकश एकवचनद्विवचनबहुवचनसंज्ञानि

---

च्चारणफलं तु तत्र तत्र वक्ष्यते । अथ 'न विभक्तौ तुस्माः' इत्याद्युपयोगिनीं विभक्ति-संज्ञामाह—**विभक्तिश्च** । सुप इति पूर्वसूत्रात् सुब्ग्रहणम्, तिङस्त्रीणीत्यतस्तिङ्ग्रहणं चानुवर्तते, एकदेशे स्वरितत्वप्रतिज्ञाबलात् । तदाह—**सुप्तिङाविति** । चकारः पुरुष-वचनसंज्ञाभिः समावेशार्थः । तेन एकसंज्ञाधिकारस्थत्वेऽपि न पर्यायत्वम् । अन्यथा रामेभ्यः, भवाम इत्यादौ विभक्तिसंज्ञाविरहेण न विभक्ताविति निषेधो न स्यात् । ननु 'प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा, कर्मणि द्वितीया, कर्तृकरणयोस्तृतीया, चतुर्थी सम्प्रदाने, अपादाने पञ्चमी, षष्ठी शेषे, सप्तम्यधिकरणे च' इत्यादौ कथं प्रथमादि-व्यवहारः, सूत्रकृता पाणिनिना प्रथमादिसंज्ञानामनुक्तत्वादित्यत आह—**तत्रेति** । तेषु स्वादिप्रत्ययेषु मध्य इत्यर्थः । **इत्यादीनामिति** । आदिना अम्—औट्—शस्—इत्यादीनां ग्रहणम् । **प्राचामिति** । पाणिनेः पूर्वेषां स्फोटायनाद्याचार्याणां शास्त्रे प्रथमाद्याः सप्तम्यन्ताः संज्ञाः स्थिता इत्यन्वयः । किं तत इत्यत आह—**ताभिरिति** । ताभिः प्रथमादिसंज्ञाभिः इहापि पाणिनीयशास्त्रेऽपि व्यवहारः संभवतीत्यर्थः । **सुपः** । सुप् प्रत्याहारः, षष्ठ्येकवचनम् । 'तान्येकवचनद्विवचनबहुवचनान्येकशः' इति सूत्रं तानीति-वर्जमनुवर्तते । एकश इति एकैकमित्यर्थः । 'संख्यैकवचनाच्च वीप्सायाम्' इति शस् । शसैव वीप्साया अभिधानाद् 'नित्यवीप्सयोः' इति द्वित्वं न । तच्च संख्यैकवचनाच्चेति सूत्रव्याख्यावसरे प्रपञ्चयिष्यते । तिङस्त्रीणि त्रीणीत्यतः त्रीणि त्रीणीत्यनुवर्तते । तदाह—**सुपस्त्रीणीत्यादिना** । **द्व्येकयोः** । द्व्येकयोरिति भावप्रधानो निर्देशः । अन्यथा द्व्येकेष्विति स्यादित्यभिप्रेत्य व्याचष्टे—**द्वित्वैकत्वयोरिति** । **बहुषु** । पूर्वसूत्रा-

---

प्रत्याहारार्थः । **विभक्तिश्च** । 'तिङस्त्रीणि त्रीणि—' इत्यतस्तिङ्ग्रहणं व्यवहितमपि स्वरितत्वबलादनुवर्तते । 'सुपः' इति च संनिहितमित्यभिप्रेत्याह—**सुप्तिङाविति** । तिङां विभक्तिसंज्ञायाः प्रयोजनं 'न विभक्तौ तुस्माः' इति । सुपां तु त्यदाद्यत्वादिकमपि । चकारः पुरुषवचनसंज्ञाभ्यां समावेशार्थः । अन्यथा एकसंज्ञाधिकारादेकवचनादिसंज्ञाभिः सह वचनद्वयप्रामाण्यात्पर्यायः स्यात् । ततश्च रामेभ्यो नमाम इत्यादौ बहुवचनसंज्ञापक्षे विभक्तित्वाभावात्सस्येत्संज्ञा स्यात् । **इहापीति** । अस्मिन्नपि तन्त्रे 'प्रातिपदिकार्थ-लिङ्गपरिमाण—' इत्यादौ इत्यर्थः । **सुपः** । अत्र 'तिङस्त्रीणि—' इति सूत्रात् 'त्रीणि त्रीणि' इति पदं 'तान्येकवचन—' इति सूत्रं च तानीति पदं विहायानुवर्तत इति व्याचष्टे—**सुपस्त्रीणि त्रीणीत्यादिना** । **एकश इति** । एकैकमित्यर्थः । 'संख्यैक-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्युः । १८६ द्व्येकयोर्द्विवचनैकवचने । ( १-४-२२ ) द्वित्वैकत्वयोरेते स्तः । १८७ बहुषु बहुवचनम् । ( १-४-२१ ) बहुत्वे एतत्स्यात् । रुत्वविसर्गौ ।

वैरूप्याय इहापि बहुशब्दो बहुत्वपर इत्याह—बहुत्व इति । न चात्र सूत्रे बहुशब्दस्य बहुत्वपरत्वेऽपि बहुत्वस्य एकत्वाद् बहुष्विति बहुवचनं कथमिति शङ्क्यम्, बहुत्व-संख्याधारद्रव्यगतबहुत्वस्य बहुत्वगुणे आरोपेण तदुपपत्तेः । बहुत्वं च त्रित्वचतुष्ट्वादि-परार्धसंख्याव्यापकीभूतधर्मविशेषः, न तु त्रित्वाद्यन्यतममित्येकादशस्य प्रथमे 'बहुवचनेन सर्वप्राप्तेर्विकल्पः स्यात्' इति कपिञ्जलाधिकरणे तद्भाष्यवार्तिकयोः स्थितम् । प्रपञ्चितं चास्माभिरध्वरमीमांसाकुतूहलवृत्तौ । एवं च बहुरोदन इति वैपुल्यवाचिना बहुशब्दाद् न बहुवचनम् । द्व्येकयोरित्यादिप्रायपाठबलेन संख्यानियतस्यैव तथाविधबहुत्वस्यात्र विवक्षितत्वम् । एकस्यामेव स्त्र्यादिव्यक्तौ दारा इत्यादिप्रयोगे त्ववयवबहुत्वस्यावयविन्या-रोपाद्बहुवचनं कोशवृद्धव्यवहारबलादित्यलम् । रुत्वविसर्गाविति । रामशब्दात् प्रथमाविभक्तौ एकवचने सुप्रत्यये सति, उकारस्य इत्त्वेन लोपे, 'ससजुषोः–' इति रुत्वे, 'खरवसानयोः–' इति विसर्ग इत्यर्थः । सु इत्युकारस्तु अर्वणस्त्रसावित्यादौ विशेषणार्थः । असीत्युक्ते हि असकारादावित्यर्थः स्यात् । ततश्च वाजमर्वत्सु इत्यत्र अर्वणस्तृविधिर्न प्रवर्तेत । न चात्र रोरसुप्त्वात् तदन्तस्य पदत्वाभावाद् रेफस्य पदान्तत्वाभावात् कथमिह विसर्ग इति वाच्यम् । स्थानिवद्भावेन रोः सुप्त्वात् । न च स्थानिवद्भावे कर्तव्ये त्रैपादि-कस्य रोरसिद्धत्वं शङ्क्यम्, 'इदुदुपधस्य चाप्रत्ययस्य' इति अप्रत्ययग्रहणेन स्थानि-वत्त्वातिदेशे रोरसिद्धत्वाभावज्ञापनात् । तत्र ह्यप्रत्ययग्रहणम् अभिस्करोति, कविभिः

वचनाच' इति वीप्सायां प्रथमान्ताच्छस् । द्व्येकयोः । इह द्व्येकशब्दौ संख्यापरावित्य-भिप्रेत्याह—द्वित्वैकत्वयोरिति । संख्येयपरत्वे तु बहुवचनं स्यादिति भावः । बहुषु । अयमपि संख्यापर एवेत्याह—बहुत्व इति । बहुवचनं त्वाश्रयद्रव्यगत-बहुत्वं धर्मे आरोप्य कृतम् । तत्फलं तु बहुः पर्वत इति वैपुल्यवाचिनो नेह ग्रहणमिति सूचनमेव । वस्तुतो व्यर्थं तत्, परत्वादेकवचनसंभवादिति शब्दकौस्तुभादौ स्थितम् । रुत्वविसर्गाविति । ननु रुत्वस्यासिद्धत्वादुकारस्येत्संज्ञालोपयोरभावात् 'स्थानिवदा-देशः' इत्यस्यापि त्रिपाद्यामप्रवृत्त्या रेफान्तस्य 'सुप्तिङन्तम्–' इति पदसंज्ञाभावेन च विसर्गोऽत्र दुर्लभः । विसर्गविधेस्तु पुनरित्यादौ चरितार्थत्वादिति चेन्मैवम् । 'न मुने' इति सूत्रे नेति योगं विभज्य असिद्धं नेति व्याख्यायामिष्टसिद्धिरित्युक्तत्वात् । राम इति । संज्ञाशब्दोऽयमव्युत्पन्न इति पक्षे अर्थवत्सूत्रेण प्रातिपदिकसंज्ञा, 'करणाधि-करणयोश्च' इत्यधिकारे घापवादेन 'हलश्च' इति घञा रमन्तेऽस्मिन्निति व्युत्पादने तु

१ त्वात्—इति क, ख । २ सुप्रत्यये—इति नास्ति क ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रामः। १८८ **सरूपाणामेकशेष एकविभक्तौ** । ( १-२-६४ ) एकविभक्तौ यानि सरूपाण्येव दृष्टानि तेषामेक एव शिष्यते। 'प्रथमयोः पूर्वसवर्णः' (सू १६४)

---

कृतमित्यादौ विसर्गपर्युदासार्थम्। स्थानिवत्त्वे कर्तव्ये रोरसिद्धत्वे तु तत्र विसर्गस्यैवाभावात् तद्वैयर्थ्यं स्पष्टमेवेत्यलम्। **राम इति।**

'रमन्ते योगिनोऽनन्ते सत्यानन्दे चिदात्मनि।

इति रामपदेनासौ परं ब्रह्माभिधीयते।' इति श्रुतिः।

'करणाधिकरणयोश्च' इत्यधिकारे 'हलश्च' इत्यधिकरणे घञ्। 'कृत्तद्धित-' इति प्रातिपदिकत्वम्। अव्युत्पन्नः संज्ञाशब्दो वा। तथा सति अर्थवदिति प्रातिपदिकत्वम्।

अथ प्रातिपदिकार्थगतद्वित्वादिविवक्षायां प्रातिपदिकस्य द्वित्र्यादिप्रयोगप्राप्ताविदमारभ्यते—**सरूपाणाम्**। एकविभक्ताविति सरूपाणामित्यत्रान्वेति। समानं रूपं येषां तानि सरूपाणि। 'ज्योतिर्जनपद' इत्यादिना समानस्य सभावः। निर्धारणषष्ठी। 'वृद्धो यूना-' इत्युत्तरसूत्रादेवेत्यपकृष्यते। शिष्यते इति शेषः। कर्मणि घञ्। एकश्चासौ शेषश्चेति 'पूर्वकालैक-' इति समासः। एकस्यां विभक्तौ परतः सरूपाणामेव दृष्टानां मध्ये एकः शिष्यत इति फलति। तदाह—**एकविभक्तावित्यादिना**। एवेति किम्। मातृशब्दस्तावज्जननीवाची, परिच्छेत्तृवाची च। तत्र मातृभ्यामिति भ्यामादौ क्वचित्सारूप्ये सत्यपि, औजसादिषु मातरौ माताराविति वैरूप्यदर्शनान्नैकशेषः। यद्यपि कतिपयविभक्तौ उक्तयोर्मातृशब्दयोः सारूप्येणैव दर्शनमस्ति। तथापि एकस्यामपि विभक्तौ

---

'कृत्तद्धित-' इति सूत्रेणेति विवेकः। अत्र केचित् परिष्कुर्वन्ति—'गन्धर्वः शरभो रामः सृमरो गवयः शशः। इत्यादयो मृगेन्द्राद्या गवाक्षः पशुजातयः' इत्यमरोक्त्या यदि पशुविशेषे प्रयुज्यते तदा रूढोऽय रामशब्द इत्यर्थवत्सूत्रेण संज्ञा। यदा तु रामचन्द्रे भगवति प्रयुज्यते तदा रमन्ते योगिनो यस्मिन्निति व्युत्पत्त्याश्रयणात् 'कृत्तद्धित-' इति सूत्रेण संज्ञेति। **सरूपाणामेकशेषः-**। इतरनिवृत्तिपूर्वकमवस्थानं शेषशब्दार्थः। न च विरूपेष्वेकशेषाप्रवृत्त्या घटकलशाविति द्वन्द्वापत्तिरिति शङ्क्यम्, 'विरूपाणाम्' इति वार्तिकस्य वक्ष्यमाणत्वात्। वस्तुतस्तु सूत्राक्षरैरेव वार्तिकार्थो लभ्यते। रूप्यते बोध्यते इति रूपमर्थः, समानं रूपं येषामिति सरूपाः 'ज्योतिर्जनपद-' इत्यादिना समानस्य सभावः, तथा समानं रूपं स्वरूपं येषां ते सरूपाः। सरूपाश्च सरूपाश्च सरूपाः तेषामित्येकशेषेण व्याख्यानात्। न च स्वाङ्गे स्वव्यापारायोगः वाक्यापरिसमाप्तिन्यायादिति वाच्यम्, उद्देश्यतावच्छेदकरूपाक्रान्ततया स्वस्मिन्नपि प्रवृत्तेः। अन्यथा 'तुल्यास्यप्रयत्नम्-' इत्यादौ सवर्णदीर्घो न स्यात्। तथा 'अर्थवत्-' सूत्रान्तर्गतानां प्रातिपदिकत्वम्, 'प्रत्ययः' 'परश्च' इत्यत्र सुप्प्रत्ययः, 'ससजुषोः-' इत्यत्र रुः,

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

परतो विरूपाणि न दृष्टानीत्यर्थो विवक्षितः। एतद्द्योतनायैव एकविभक्ताविल्यत्र एकग्रहणम्। एवकारापकर्षसिद्धार्थकथनपरम् एकग्रहणं स्पष्टार्थमेवेति केचित्। एकशेष इत्येकपदोपादानं तु द्विबहूनामपि शेषो मा भूदित्येतदर्थम्। शेषपदानुपादाने तु सरूपाणां स्थाने एक आदेशः स्यात्। ततश्च अश्वश्च अश्वश्चेति द्व्युदात्तवतः स्थाने द्व्युदात्तवानादेशः स्यात्। तन्निवृत्त्यर्थं शेषग्रहणम्। एकविभक्ताविति सारूप्ये उपलक्षणम्, न तु एकविभक्तौ परत एकशेषो भवतीति व्याख्यानमुचितम्, जननीपरिच्छेत्तृवाचिनोरेकशेषापत्तेरित्यादि प्रपञ्चितं प्रौढमनोरमायाम्। अत्र 'तिष्यपुनर्वस्वोर्नक्षत्रद्वन्द्वे–' इति पूर्वसूत्राद् द्वन्द्व इत्यनुवर्त्य द्वन्द्वे प्रसक्त इति व्याख्येयम्। ततश्च देवदेवः राजराज इत्यादौ नैकशेषः। द्वन्द्वापवाद एकशेष इति फलितम्। यद्यप्यनैमित्तिकत्वादन्तरङ्गोऽयमेकशेषः सुबुत्पत्तेः प्रागेव प्रवर्तते। तथापि द्वन्द्वापवाद एवायम्। असति ह्येकशेषे सुबुत्पत्तिः[1], पक्षे द्वन्द्वश्च स्यात्। सति तु अनेकसुबन्तविरहाद् द्वन्द्वस्याप्राप्तिः फलिता। घटश्च घटश्च घटश्च तेषां समाहार[2] इति समाहारद्वन्द्वविषये तु नास्य प्रवृत्तिः, अनभिधानात्। द्वन्द्वे कृते एकशेष इति तु न व्याख्येयम्। पन्थान इत्यादौ

---

'खरवसानयोः–' इति सूत्रे विसर्गश्च न स्यादिति सर्वोपप्लवः स्यात्। 'स्वाध्यायोऽध्येतव्यः' इत्यस्य 'नेह नाना–' इत्यादिश्रुतेश्च स्वस्मिन्नपि यथा प्रवृत्तिस्तथा दीर्घादीनामपीति चेत्तुल्यमेकशेषेऽपि। एतेन 'अ इ उ ण्' इत्यादौ 'आद् गुणः' इत्यादि सन्धिकार्यं कुतो नेत्याशङ्कायाम्—वर्णोपदेशकालेऽजादिसंज्ञानामनिष्पादात्सन्धिर्न—इति केषांचित्समाधानं परास्तम्। वर्णोपदेशे इत्संज्ञायामच्प्रत्याहारे च निष्पन्ने प्रवर्तमानानां गुणादीनामुपेन्द्र इत्यादौ तटस्थ इव उद्देश्यतावच्छेदकरूपाक्रान्ते वर्णोपदेशादावपि प्रवृत्तेरावश्यकत्वात्। स्यादेतत्, 'सरूपाणामेक एकविभक्तौ' इत्येव सूत्रमस्तु किमनेन शेषग्रहणेन। अत्राहुः—तथा हि सति सरूपाणां स्थाने एकोऽन्तरतम आदेशो भवतीत्यर्थः स्यात्। तथा चाश्वश्चाश्वश्चेत्यत्रोदात्तद्वयवतः स्थाने उदात्तद्वयवानादेशस्तथा अनुदात्तद्वयवतः स्थाने अनुदात्तद्वयवानादेशः प्रसज्येतेति। **एकविभक्तौ यानीति**। विभक्तिः सारूप्ये उपलक्षणं न त्वेकशेषे निमित्तम्। एवं चानैमित्तिकत्वेनान्तरङ्गोऽयमेकशेषः सुबुत्पत्तेः प्रागेव प्रवर्तते। यद्येतन्नारभ्येत, तर्हि प्रत्येकं विभक्तिः स्याद् द्वन्द्वश्च प्रवर्तेत। आरब्धे त्वेकशेषेऽनेकसुबन्तविरहाद् द्वन्द्वस्य प्राप्तिरेव नास्तीति भावः। ननु सुबुत्पत्तेः प्रागेकशेषप्रवृत्तौ शिष्यमाणं यत्प्रातिपदिकं तदेकमेवार्थं बोधयतीति द्विवचनाद्यनुत्पत्तौ रामौ रामा इत्यादि न सिध्येत्। नैष दोषः, शिष्यमाणस्य लुप्यमानार्थाभिधायित्वात्। अत एव 'कृत्तद्धितसमासैकशेष–' इत्येकशेषो वृत्तिषु गण्यते। परार्थाभिधानं हि वृत्तिः।

---

१ त्तेः—इति ख। २ समाहार इति—इति नास्ति क।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

'नादिचि' (सू १६५) 'वृद्धिरेचि' (सू ७२)। रामौ। १८६

ऋक्पूरित्यादिसमासान्तापत्तेः, करावित्यादौ 'द्वन्द्वश्च प्राणितूर्य–' इत्याद्यापत्तेः। पूर्व-सूत्रादिह द्वन्द्वग्रहणानुवृत्तौ 'इदितो नुम् धातोः' इत्यत्र इदित इति निर्देशो लिङ्गम्। इत् इकार इत्संज्ञको यस्य स इदित्, अत्र इच्छब्दयोरेकविभक्तौ सारूप्येऽपि द्वन्द्व-विषयत्वाभावान्नैकशेषः। अन्यथा तत्राप्येकशेषः स्यादित्यलम्।

राम औ इति स्थिते प्रक्रियां दर्शयति–**प्रथमयोरित्यादिना**। वृद्धिं बाधित्वा पूर्वसवर्णदीर्घे प्राप्ते आह—**नादिचीति**। तस्मिन् प्रतिषिद्धे सति वृद्धेः प्रवृत्तौ रामौ इति रूपमित्यर्थः। देवदत्तहन्तृहतन्यायस्तु नात्र प्रवर्तत इति स्वादिसन्धौ मनोरथ

अत एव च लुप्तेऽपि प्रत्यये लिड् धुग् इत्यादौ कर्ता प्रतीयत इति दिक्। **सरूपाणये-वेति**। एतच्च उत्तरसूत्रस्थस्यैवकारस्येहानुकर्षणाल्लभ्यते। अत्र च एकस्यामपि विभक्तौ परतो विरूपाणि न दृष्टानीति पर्यवसन्नोऽर्थः, तेन मातृशब्दयोर्जननीवाचिपरिच्छे-त्तृवाचिनोर्नैकशेषः, मातृभ्यां मातृभिरित्यादौ सारूप्येऽपि औजसादिषु वैरूप्यात्। नन्वेवं पयः पयो नयति, देवदेवेत्यादावतिप्रसङ्गः स्यादेवेति चेद्, उच्यते—सहविव-क्षायामेवैकशेषः प्रवर्तते। इतरेतरयोगद्वन्द्वस्य विषय इति यावत्। यत्र ह्यनेकस्यार्थस्य मिलितस्येतरान्वयः स तथाभूतो विषयः। इदं च 'इदितो नुम् धातोः' इति लिङ्गा-ल्लभ्यते न्यायाच्च। तथा हि–'यः शिष्यते स लुप्यमानार्थाभिधायी' इति स्थिते श्रूय-माणैकशब्दोपस्थितं सर्वमविशेषादैकरूप्येणैवान्वेतुमर्हति। यद्वा 'तिष्यपुनर्वस्वोः–' इति सूत्राद् द्वन्द्वे इत्यनुवर्त्य द्वन्द्वे प्रसक्ते सति इति व्याख्येयम्, न तु द्वन्द्वे कृते सतीति। पन्थानौ पन्थान इत्यादौ 'ऋक्पूरब्धूः–' इत्यादिना समासान्तापत्तेः, करौ करा इत्यादौ 'द्वन्द्वश्च प्राणितूर्य–' इत्यादिना एकवद्भावापत्तेश्चेति दिक्। सूत्रे शेषशब्दः कर्मसाधन इत्याह—**एक एव शिष्यत इति**। असत्येकग्रहणे द्विबह्वोरपि शेषः स्यादित्येक-ग्रहणम्। न चैवमप्येकविभक्तावित्यत्र एकग्रहणं व्यर्थमिति शङ्क्यम्, एकस्यामपि विभक्तौ परतो विरूपाणि न दृष्टानीत्यर्थलाभाय तस्यावश्यकत्वात्। किं च स्वसा च स्वसारौ चेत्यादौ विभक्तौ परतः पूर्वभागयोर्वैरूप्यदर्शनात्स्वसार इत्येकशेषस्तत्र न स्यात्। तथा स्वसरि च स्वस्रोश्चेत्यत्र वैरूप्यदर्शनात्स्वसृष्विति न स्यात्। किं तु कमलौ कमल इत्यादिष्वेव स्यात्। कृते त्वेकग्रहणे नायं दोषः प्रसज्यते। एकविभक्तौ परतः पूर्वत्र वैरूप्यादर्शनात्। यदा तु विभक्तावित्यत्रैकत्वं विवक्षितत्वान्मास्त्वत्र एक-ग्रहणमित्युच्यते, तर्हि स्पष्टप्रतिपत्त्यर्थमेवास्त्विति केचित्। अन्ये त्वाहुः—एकग्रहण-मेकैकविभक्तावित्यर्थलाभार्थम्। तथा च सकलविभक्तावित्यर्थलाभादेवकारापकर्षणं

१ उत्तरसूत्रादिह द्वन्द्वग्रहणापकर्षे—इति क, ख।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चुटू। ( १-३-७ ) प्रत्ययाद्यौ चुटू इतौ स्तः। इति जस्येत्संज्ञायाम्। १६० न विभक्तौ तुस्माः। ( १-३-४ ) विभक्तिस्थास्तवर्गसकारमकारा इतो न स्युः। इति सकारस्य नेत्त्वम्। १६१ अतो गुणे। ( ६-१-६७ ) अपदान्तादकाराद् गुणे परतः पररूपमेकादेशः स्यात्। इति प्राप्ते। परत्वात्पूर्वसवर्णदीर्घः। 'अतो गुणे'

---

इत्यत्र प्रपञ्चितम्। राम जस् इति स्थिते। **चुटू**। 'उपदेशेऽजनुनासिक इत्' इत्यतः इदित्यनुवर्तते। तच्च द्विवचनान्ततया विपरिणम्यते। 'आदिर्ञिटुडवः' इत्यत आदिग्रहणमनुवर्त्य द्विवचनान्ततया विपरिणम्यते। 'षः प्रत्ययस्य' इत्यनुवर्तते। तदाह—**प्रत्ययाद्यावित्यादिना**। **इति जस्येति**। इत्संज्ञायां 'तस्य लोपः' इति लोपः। जकारस्तु 'जसश्शी' इत्यादौ शसो निवृत्त्यर्थः। अथ जसः सकारस्य 'हलन्त्यम्' इतीत्संज्ञायां लोपमाशङ्क्याह—**न विभक्तौ**। तु स् म एतेषां द्वन्द्वः। इत् इत्यनुवृत्तं बहुवचनान्ततया विपरिणम्यते। तदाह—**विभक्तिस्था इत्यादिना**। अथ राम अस् इति स्थिते 'अकस्सवर्णे दीर्घः' इति सवर्णदीर्घस्यापवादं पररूपमाशङ्कितुमाह[1]—**अतो गुणे**। 'एङि पररूपम्' इत्यतः पररूपमित्यनुवर्तते। 'उस्य पदान्तात्' इत्यतः अपदान्तादित्यनुवर्तते। 'एकः पूर्वपरयोः' इत्यधिकृतम्। अत इति पञ्चमी। तदाह—**अपदान्तादित्यादिना**। **इति प्राप्त इति**। न च परत्वाद् 'अकस्सवर्णे दीर्घः' इति कुतो न स्यादिति वाच्यम्, 'अकस्सवर्णे दीर्घः' इति प्राप्त एवारभ्यमाणपररूपस्य तदपवादत्वात्, परादपवादस्य बलीयस्त्वादिति भावः। **परत्वादिति**। 'अतो गुणे' इत्यपेक्षया 'प्रथमयोः पूर्वसवर्णः' इत्यस्य परत्वादित्यर्थः। ननु पररूपमिदमपवादत्वात् सवर्णदीर्घमिव पूर्वसवर्णदीर्घमपि कुतो न बाधत इत्यत आह—**अतो गुण इती-**

---

विनैव सिद्धमिष्टमिति दिक्। एकश्च एकश्च द्वौ च द्वौ चेत्यादावेकशेषो न भवत्यनभिधानात्। द्वन्द्वोऽप्यत्रानभिधानेनैव वारणीयः, उत्सर्गतः संख्याशब्देष्वेवमेव। विंशत्यादौ त्वेकशेष इष्ट एवेति बोध्यम्। **चुटू**। 'आदिर्ञिटुडवः' इत्यत आदिः, 'षः प्रत्ययस्य' इत्यतः प्रत्ययस्येति चानुवर्तते, तदाह—**प्रत्ययाद्याविति**। प्रत्ययाद्याविति किम्, वाचाटः। 'तेन वित्तश्चुञ्चुप्चणपौ' इत्यत्र प्रत्ययादौ यकारो लुप्तनिर्दिष्टस्तेन चस्य नेत्संज्ञेति वक्ष्यति। **न विभक्तौ**। 'हलन्त्यम्' इतीत्संज्ञाप्राप्तौ निषेधारम्भः। तु इत्यस्योदाहरणम्—रामात्, पचेरन्। मकारस्य तु रामम्, अद्राक्षम्। विभक्तौ किम्, 'अचो यत्' 'ऊर्णाया युस्' 'रुधादिभ्यः श्नम्' एतेष्वन्त्यस्येत्संज्ञा यथा स्यात्। 'इदमस्थमुः' इत्यत्र मकारपरित्राणार्थमुकारानुबन्धासञ्जनादनित्योऽयमिति ज्ञायते। अन्यथा 'प्राग्दिशो विभक्तिः' इति थमो विभक्तित्वाद्दानीमो मकारस्यैवानेनैव सूत्रेणेत्त्व-

---

१ पररूपमाशङ्क्याह—इति क।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

( सू १६१ ) इति हि 'पुरस्तादपवादा अनन्तरान्विधीन्बाधन्ते नोत्तरान्' ( प ६० ) इति न्यायेन 'अकः सवर्णे दीर्घः' ( सू ८५ ) इत्यस्यैवापवादः । न तु 'प्रथमयोः–' ( सू १६४ ) इत्यस्यापि । रामाः । **१६२ एकवचनं संबुद्धिः ।** ( २-३-४६ ) संबोधने प्रथमाया एकवचनं संबुद्धिसंज्ञं स्यात् । **१६३ एङ्ह्रस्वात्संबुद्धेः ।** ( ६-१-६६ ) एङन्ताद्ध्रस्वान्ताच्चाङ्गाद्धल्लुप्यते संबुद्धेश्चेत् ।

---

**त्यादि** । अनन्तरान् अव्यवहितानित्यर्थः । **उत्तरानिति** । व्यवहितानित्यर्थः । 'अतो गुणे' इत्युत्तरम् 'अव्यक्तानुकरणस्य–' इत्यादि पठित्वा 'अकस्सवर्णे दीर्घः' 'प्रथमयोः पूर्वसवर्णः' इति पठितम् । ततश्च पररूपमिदं सवर्णदीर्घमेव बाधते, न तु तद्व्यवहितं पूर्वसवर्णदीर्घमपीति भावः । वस्तुतस्तु पुरस्तादपवादन्यायस्य नायं विषयः । न हि पररूपमिदं पूर्वसवर्णदीर्घस्यापवादः । भवन्तीत्यादौ अप्राप्तेऽपि पूर्वसवर्णदीर्घ एतस्य पररूपस्यारम्भादित्यलम् ।

रुत्वविसर्गौ सिद्धवत्कृत्याह—**रामा इति** । हे राम स् इति स्थिते, 'एङ्ह्रस्वात्संबुद्धेः' इति विधास्यन् संबुद्धिसंज्ञामाह—**एकवचनम्** । 'प्रातिपदिकार्थलिङ्ग–' इत्यतः प्रथमेत्यनुवृत्तं षष्ठ्या विपरिणम्यते । 'संबोधने च' इत्यतः संबोधन इत्यनुवर्तते । तदाह—**संबोधन इत्यादिना** । सुः संबुद्धिरित्येव सुवचम् । प्रथमाग्रहणानुवृत्तेः सप्तमीबहुवचनस्य सुपो न ग्रहणम् । न चात्र प्रत्ययग्रहणपरिभाषया तदन्तग्रहणं शङ्क्यम् । 'ह्रस्वस्य गुणः' इति संबुद्धौ परतोऽङ्गस्य गुणविधिबलात्, संज्ञाविधौ प्रत्ययग्रहणे तदन्तविधिनिषेधाच्च । एतेन तदन्तसंज्ञानिवृत्त्यर्थमेकवचनग्रहणमित्यपास्तम् । **एङ्ह्रस्वात्** । एङ्ह्रस्वादित्यङ्गविशेषणम् । तदन्तविधिः । '–सुतिस्यपृक्तं हल्' इत्यतो हलिति प्रथमान्तमनुवर्तते । तच्चाङ्गादित्यत्रान्वेति–अङ्गात् परं हलिति । 'लोपो व्योः–' इत्यतो लोप इत्यनुवर्तते । तच्च हलित्यनेन सामानाधिकरण्येनान्वेति । लुप्यत इति लोपः । कर्मणि घञ् । संबुद्धेरित्यवयवषष्ठी हलित्यत्रान्वेति । ततश्च एङन्ताद्ध्रस्वान्ता-

---

निषेधसिद्धेः, किं तेनेति । तेन 'क्विमोऽत्' क्केति सिद्धम् । **एकवचनम्** । 'सुः संबुद्धिः' इत्येव सुवचम् । न च सप्तमीबहुवचनेऽतिप्रसङ्गः । संबोधने प्रथमेत्यधिकारादेव तदभावादिति नव्याः । अत्र व्याचख्युः—'सुः संबुद्धिः' इति वाच्ये एकवचनग्रहणमेकोऽर्थ उच्यते येन तावन्मात्रस्य प्रत्ययस्य संज्ञार्थम् । अन्यथा 'सामन्त्रितम्' इति पूर्वसूत्रे तदन्तस्यामन्त्रितसंज्ञा कृतेति प्रक्रमाभेदाय इयमपि संज्ञा तदन्तस्यैव स्यादिति । **एङ्ह्रस्वात्संबुद्धेः** । यद्यत्र 'हल्ङ्याब्भ्यः–' इत्यतो हलमननुवर्त्य एङन्ताद् ह्रस्वान्ताच्चाङ्गात्परस्याः संबुद्धेर्लोप इति व्याख्यायेत, हलनुवृत्तावप्यङ्गात्परा या संबुद्धिः

---

१ तदन्त—इति नास्ति क ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सम्बुद्ध्याक्षिप्तस्याङ्गस्यैङ्ह्रस्वाभ्यां विशेषणान्नेह । हे कतरत् कुलेति । हे राम । हे रामौ । हे रामाः । 'एङ्' ग्रहणं किम्—हे हरे । हे विष्णो । अत्र हि परत्वान्नित्यत्वाच्च संबुद्धिगुणे कृते ह्रस्वात्परत्वं नास्ति । १९४ अमि पूर्वः ।

---

चाङ्गात् परं यद् हल् संबुद्ध्यवयवभूतं तल्लुप्यत इति फलति । तदाह—एङन्तादित्यादिना । ननु एङ्ह्रस्वादित्यस्याङ्गाधिकारस्थत्वाभावात् कथमङ्गस्य विशेष्यत्वलाभः । तस्य वा किं प्रयोजनम् । एङो ह्रस्वाच्च परं संबुद्ध्यवयवभूतं हल्लुप्यत इत्येवास्तु । तत्राह—सम्बुद्ध्याक्षिप्तस्येत्यादि । संबुद्धेः प्रत्ययत्वात् तत्प्रकृतेरङ्गत्वमर्थाल्लब्धम् । तस्य च एङा ह्रस्वेन च विशेषितत्वात् तदन्तविधौ एङन्ताद्ध्रस्वान्ताच्चाङ्गात् परं हल्लुप्यत इत्यर्थलाभाद् इह लोपो नेत्यर्थः । इहेत्यस्य विशेष्यमाह—हे कतरत् । कुलेतीति । कतरशब्दस्य नपुंसकत्वस्फोरणाय कुलशब्दः । कतरशब्दान्नपुंसकलिङ्गात् संबुद्धिः सुः । 'अद्ड् डतरादिभ्यः पञ्चभ्यः' इति तस्य अद्ड् आदेशः । डकार इत् । डित्त्वसामर्थ्यादभत्वेऽपि टेरिति रेफादकारस्य लोपः । 'वाऽवसाने' इति चर्त्वम् । कतरत् इति । यदि एङ्ह्रस्वादित्यत्राङ्गस्य विशेष्यत्वं न स्यात्, तदा कतरदित्यत्र तकारस्य हलो ह्रस्वादकारात् परत्वात् संबुद्ध्यवयवत्वाच्च लोपः प्रसज्येत । अङ्गस्य विशेष्यत्वे तु न दोषः । अत्र हि टिलोपानन्तरं कतर् इति रेफान्तमङ्गम् । तत्तु न ह्रस्वान्तम् । यत्तु ह्रस्वान्तं तन्नाङ्गम् । रेफादकारस्य सुस्थानिकाद्ड्डादेशावयवत्वेन प्रत्ययावयवतया प्रकृतिभागानन्तर्भावात् । नन्विह हल्ग्रहणानुवृत्तिर्व्यर्था । एङन्ताद् ह्रस्वान्ताच्चाङ्गात् परस्य संबुद्धेर्लोपः स्यादित्येव व्याख्यायताम् । अस्तु वा हलनुवृत्तिः । तथापि एङन्ताद्ध्रस्वान्ताच्चाङ्गात् परा या संबुद्धिः तदवयवो हल्लुप्यत इति कुतो न व्याख्यातमिति चेत्, एवं सति हे ज्ञानेति न सिध्येत् । तदिदमजन्तनपुंसकलिङ्गाधिकारे ज्ञानशब्दप्रक्रियावसरे मूल एव स्पष्टीभविष्यति । हे हरे, हे विष्णो इति । हरिशब्दाद्विष्णुशब्दाच्च संबुद्धिः सुः । 'ह्रस्वस्य गुणः' इति गुणः । हे हरे स्, हे विष्णो स्, इति

---

तस्या यद्धलिति वा । उभयथापि हे ज्ञानेति न सिध्येत् । लोपात्परत्वात्सोरतोऽमि, अमि पूर्वत्वे च कृते एकादेशस्य परादिवद्भावे ह्रस्वान्तात्परत्वाभावात्पूर्वान्तवद्भावे अम एवाभावाद् 'उभयत आश्रयणे तु नान्तादिवत्' इति निषेधादतो व्याचष्टे—एङन्तादित्यादिना चेदित्यन्तेन । संबुद्ध्याक्षिप्तस्येति । तदन्तस्यैव संज्ञाभ्युपगमे तु संबुद्ध्या अङ्गमाक्षेप्तुं न शक्यत इति बोध्यम् । ह्रस्वात्परत्वं नास्तीति । तथा च सूत्रे एङ्ग्रहणमावश्यकमिति भावः । किं च 'इमां किमाचामयसे न चक्षुषी' इति श्रीहर्षप्रयोगे से इति पृथक् पदं सलक्ष्मीके हे दमयन्तीत्यर्थ इति 'निगरणचलनार्थेभ्यश्च' इति सूत्रे मनोरमायां व्युत्पादितम् । ततश्च तत्रापि संबुद्धिलोपार्थमेङ्ग्रहण-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

( ६-१-१०७ ) अकोऽम्यचि परतः पूर्वरूपमेकादेशः स्यात्। रामम्। रामौ।

स्थिते, ह्रस्वात् परत्वाभावात् सुलोपो न स्यात्। अत एङ्ग्रहणमित्यर्थः। ननु गुणात्पूर्वं हे हरि स्, हे विष्णु स्, इत्यस्यामेव दशायां ह्रस्वात्परत्वादेव सुलोपसंभवाद् एङ्ग्रहणं व्यर्थमित्यत आह—अत्रेति। संबुद्धिलोपापेक्षया अयं गुणः परः, नित्यश्च अकृतेऽपि संबुद्धिलोपे तत्प्रवृत्तेः, कृतेऽपि संबुद्धिलोपे प्रत्ययलक्षणमाश्रित्य तत्प्रवृत्तेः, अतः संबुद्धिलोपात्प्रागेव ह्रस्वस्य गुणे कृते सति ह्रस्वात्परत्वाभावात् सोर्लोपो न स्यात्। अत एङ्ग्रहणमित्यर्थः।

**अथ द्वितीया विभक्तिः।** राम अम् इति स्थिते, 'न विभक्तौ तुस्माः' इति मकारस्य नेत्त्वम्। 'अकः सवर्णे—' इति दीर्घं बाधित्वा 'अतो गुणे' इति पररूपं प्राप्तम्, तद्बाधित्वा 'प्रथमयोः—' इति पूर्वसवर्णदीर्घे प्राप्ते। **अमि पूर्वः।** 'अकः सवर्णे दीर्घः' इत्यतः अक इति पञ्चम्यन्तमनुवर्तते। 'एकः पूर्वपरयोः' इत्यधिकृतम्। 'इको यणचि' इत्यतः अचीत्यनुवर्तते। तदाह—**अकोऽम्यचि।** अमि विद्यमानो योऽच् तस्मिन् परे इत्यर्थः। राममिति मकारादकारस्य अमवयवाकारस्य च पूर्वरूपमकार एको भवति। अचीत्यनुवृत्तौ अकः अमि परे पूर्वपरयोः पूर्वरूपमेकादेशः स्यादिति लभ्येत। तथा सति अमो मकारसहितस्य पूर्वरूपं स्यात्। तन्मा भूदित्यजनुवृत्तिः। **रामाविति।** राम औट् इति स्थिते हलन्त्यमिति टकारस्य इत्संज्ञायां लोपः। औटष्टकारः सुडिति प्रत्याहारार्थः। राम शस् इति स्थिते, न विभक्तौ तुस्मा इति सकारस्य नेत्त्वम्। तत्र

मावश्यकमेव। स्यादेतत्, एङ्ग्रहणस्य से इत्यत्र सावकाशतया हे हरे इत्यादौ संबुद्धिलोपो न स्यात्, संनिपातपरिभाषाविरोधात्। तथा ह्रस्वग्रहणस्यापि हे रामेत्यत्र सावकाशत्वाद् हे गौरि इत्यत्र परत्वाद्धल्ङ्यादिलोपं बाधित्वा 'अम्बार्थनद्योः—' इति ह्रस्वे कृते संबुद्धिलोपो न स्यात्। लक्ष्मीशब्दे तु हल्ङ्यादिलोपस्याप्यभावाद् हे लक्ष्मि इत्यत्र सुतरां संबुद्धिलोपो न स्यात्। सत्यम् 'गुणात्संबुद्धेः' इति वक्तव्ये एङ्ह्रस्वग्रहणसामर्थ्यात्संनिपातपरिभाषां बाधित्वापि संबुद्धिलोपः प्रवर्तते इति दिक्। **अमि पूर्वः।** प्रथमयोरिति पूर्वसवर्णदीर्घे प्राप्तेऽयमारम्भः। 'इको यणचि' इत्यतोऽचीत्यनुवर्तते तदाह—**अम्यचीति।** अमि योऽच् तस्मिन् अमोऽवयवे अचीति यावत्। तेन मकारसहितस्य पूर्वरूपं नेति स्थितं मनोरमायाम्। एवम् 'अच्तादूहिन्याम्—' इत्यादावपि ऊहिन्यां योऽच् तस्मिन् इत्यादि बोध्यम्। 'पदास्वैरिबाह्या—' इत्यादिनिर्देशाश्चास्मिन् व्याख्याने लिङ्गमित्यपि स्थितम्। कथं तर्हि काशिकादावमि परत इत्येवोक्तम्, न त्वम्यचीति चेदत्राहुः—'तस्मादित्युत्तरस्य' 'आदेः परस्य' इत्यादेरेवादेश इति निर्णीते 'एकः पूर्वपरयोः' इत्यादेशः पूर्वपरयोर्वर्णयोरेव भविष्यतीत्याशयेन नोक्त-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

**१६५ लशक्वतद्धिते।** ( १-३-८ ) तद्धितवर्जप्रत्ययाद्या लशकवर्गा इतः स्युः। इति शसः शस्येत्संज्ञा। **१६६ तस्माच्छसो नः पुंसि।** ( ६-१-१०३ ) कृतपूर्वसवर्णदीर्घात्परो यः शसः सकारस्तस्य नः स्यात्पुंसि। **१६७ अट्कुप्वाङ्-**

---

शकारस्य अनन्त्यत्वाद्धलन्त्यमित्यप्राप्तावाह—**लशक्वतद्धिते**। लशकु इति समाहारद्वन्द्वः। 'उपदेशेऽजनुनासिक इत्' 'आदिर्ञिटुडवः' 'षः प्रत्ययस्य' इत्यत इदिति, आदिरिति, प्रत्ययस्येति चानुवर्तते। अतद्धित इति षष्ठ्यर्थे सप्तमी। तद्धितभिन्नस्य प्रत्ययस्य आदिभूतं लकारशकारकवर्गम् इत्संज्ञं भवतीत्यर्थः। तदाह—**तद्धितवर्जेत्यादिना**। अतद्धित इति किम्, 'कर्णललाटात् कनलङ्कारे' कर्णिका, अत्र ककारस्य तद्धितावयवत्वान्नेत्वम्। सति तस्मिन् 'क्ङिति च' इत्यादिवृद्धिः स्यात्। एतेन प्रयोजनाभावादेव लशादितद्धितेषु नेत्त्वमित्यतद्धितग्रहणं व्यर्थमिति निरस्तम्। **इति शस इति**। शकारस्य इत्संज्ञायां तस्य लोप इति लोपः। शकारोच्चारणं तु 'जसः शी' 'तस्माच्छसो नः' इत्यादौ विषयविभागार्थम्। राम अस् इति स्थिते 'अकः सवर्णे दीर्घः' इति बाधित्वा 'अतो गुणे' इति प्राप्ते 'प्रथमयोः—' इति पूर्वसवर्णदीर्घे रामास् इति स्थिते, **तस्माच्छसो**। 'प्रथमयोः पूर्वसवर्णः' इति पूर्वसूत्रकृतः संनिहितः पूर्वसवर्णदीर्घः तस्मादित्यनेन परामृश्यते। दिक्शब्दयोगे पञ्चम्येषा। परस्येत्यध्याहार्यम्। शस इत्यवयवषष्ठी, स चावयवः परत्वेन विशेष्यते। स चावयवः अर्थात् सकार एव, अन्यस्यासंभवात्। तदाह—**कृतपूर्वेत्यादिना**। कृतपूर्वेति किम्, दीर्घात् परस्य शसवयवस्येत्युक्तौ एतान् गाः पश्येत्यत्र गोशब्दात् शसः सस्यापि नत्वप्रसङ्गः। अतः कृतपूर्वसवर्णदीर्घादिति। गा इत्यत्र च औतोम्शसोरित्याकार एकादेशः, न तु पूर्व-

---

मिति। **लशक्व**। 'आदिर्ञिटुडवः' इत्यत आदिरित्यनुवर्तते, 'षः प्रत्ययस्य' इत्यतः प्रत्ययस्येति, 'अतद्धिते' इति पर्युदासाद्वा लभ्यत इत्याह—**प्रत्ययाद्या इति**। लश्च शश्च कुश्चेति समाहारद्वन्द्वे लशक्विति नपुंसकम्। तदितरेतरयोगद्वन्द्वेन विवृणोति—**लशकवर्गा इति**। अतद्धित इति किम्, 'प्राणिस्थादातः—' इति लच्। चूडालः। 'लोमादिभ्यः शः' लोमशः। अत्र प्रयोजनाभावादेव नेत्संज्ञेति नेदं प्रत्युदाहरणमिति नव्याः। 'कर्णललाटात्—' इति भवार्थे कन्, कर्णिका। सत्यां हीत्संज्ञायां 'क्ङिति च' इति वृद्धिः स्यात्। प्रत्ययाद्या इति किम्, 'जल्पभिक्ष—' इति वृङः षाकन्, वराकः। अत्र 'क्ङिति च' इति गुणो न स्यात्। **तस्माच्छसो**। तच्छब्देन संनिहितः पूर्वसवर्णदीर्घः परामृश्यते। दीर्घमात्रपरामर्शे तु एतान् गाः पश्येत्यत्रापि नत्वप्रसङ्गात्। शस इत्यवयवषष्ठी, स चावयवः परत्वेन विशेष्यते—पूर्वसवर्णदीर्घात्परस्य शसोऽवयवस्येति। तदेतदाह—**परो यः शसः सकार इति**। परो यः शसिति न व्याख्या-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

**नुम्व्यवायेऽपि।** ( ८-४-२ ) अट् कवर्गं पवर्गं आङ् नुम् एतैर्व्यस्तैर्यथासंभवं मिलितैश्च व्यवधानेऽपि रषाभ्यां परस्य नस्य णः स्यात्समानपदे। 'पदव्यवायेऽपि'

---

सवर्णदीर्घ इति ततः परस्य न नत्वम्। शसः किम्, रामाः। प्रकृते च नत्वे रामान् इति रूपम्। अत्र नकारस्य णत्वप्राप्तिमाशङ्कितुमाह—**अट्कुप्वाङ्**। 'रषाभ्यां नो णः समानपदे' इति पूर्वसूत्रमनुवर्तते। तत्र न इति षष्ठ्यन्तम्। तेन च सूत्रेण रषाभ्यामव्यवहितपरस्य णत्वं विहितम्। रामेणेत्यादौ अडादिव्यवधानेऽपि प्राप्त्यर्थमिदमारब्धम्। अट् प्रत्याहारः, कुः कवर्गः, पुः पवर्गः। अट् च, कुश्च, पुश्च, आङ् च, नुम् च, तैर्व्यवधानम्, तस्मिन् सत्यपि रषाभ्यां परस्य नस्य णत्वं स्यादित्यर्थः। अत्र अडादिभिः समस्तैर्व्यवधानं रामेणेत्यादिलक्ष्ये क्वाप्यसभावितम्। एकैकव्यवायेऽपीति व्याख्याने तु रामेणेत्यादावव्याप्तिः। यथासंभवं मिलितैर्व्यवायेपीति व्याख्याने तु नराणामित्यादावेकमात्रव्यवधाने णत्वं न स्यात्। अतः अडादिभिर्व्यस्तैर्यथासम्भवं मिलितैश्च व्यवायेऽपीति व्याख्येयम्। एवं च 'क्षुभ्नादिषु च' इति णत्वनिषेधसूत्रे क्षुभ्नशब्दपाठोऽर्थवान्। सरूपाणामित्यादिनिर्देशाश्च उपपन्ना भवन्ति। तदाह—**अट्कवर्गेत्यादिना**। विवरणावसरे अट् कवर्ग इत्याद्यविभक्तिकनिर्देशा न दूष्यन्ते, भाष्ये तथा बहुलमुपलम्भात्। **समानपद इति**। एकपद इत्यर्थः।

---

तम्। कृते पूर्वसवर्णदीर्घे ततः परस्य शसोऽसंभवात्। **अट्कुप्वाङ्**। 'रषाभ्याम्-' इति पञ्चमीनिर्देशाद्व्यवहितस्याप्राप्तौ वचनमिदम्। तत्र सर्वैर्व्यवायोऽसंभवी, एकैकमात्रव्यवाय इत्यपि नार्थः, क्षुभ्नादिषु क्षुभ्नपाठसामर्थ्यात् 'सरूपाणाम्-' इत्यादिनिर्देशाच्चेत्यभिप्रेत्याह—**व्यस्तैर्यथासंभवं मिलितैश्चेत्यादि**। नन्वेवं कृत्स्नं कार्त्स्न्यमित्यादावडादिव्यवधानाभावाण्णत्वाभावेऽप्यदर्शनेत्यादावड्व्यवधानादतिप्रसङ्गः। न च अडादिभिरेव व्यवधान इति नियमः, अप्राप्ते विधिरयमित्युक्तत्वात्। सत्यम्। योगविभागोऽत्र बोध्यः। 'व्यवायेऽपि' इत्येको योगो विध्यर्थः। 'अट्कुप्वाङ्नुम्' इत्यन्यो नियमार्थः। छान्दसो भिसो लुक्। अत्र योगविभागं विनापि निर्वाहः सुकर इति तु नव्याः। तथा हि। 'अट्कुप्वाङ्-' इति सूत्रे 'रषाभ्याम्' इत्यनुवर्तते। पञ्चमीश्रुत्या 'तस्मादित्युत्तरस्य' इति परिभाषोपतिष्ठते। उपस्थितापि सा वचनप्रामाण्यादडादिव्यवाये न प्रवर्तते। तदन्यव्यवाये प्रवर्तत एव। अत एव—येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यादेकवर्णव्यवहितस्यैव इको गुणो न तु भिनत्तीत्यादावनेकव्यवहितस्येकः—इति 'पुगन्तलघूपधस्य-' इति सूत्रे वक्ष्यति। एवं च यत्राडादिभिरेव व्यवधानं रामेणेत्यादौ तत्र भवत्येव णत्वम्। यत्र त्वडादिभिन्नेन व्यवधानमदर्शनेत्यादौ तत्र न भवति। 'तस्माद्-' इति परिभाषाया जागरूकत्वात्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

( सू १०५७ ) इति निषेधं बाधितुमाङ्ग्रहणम् । नुम्ग्रहणमनुस्वारोपलक्षणार्थम् । तच्चाकर्तुं शक्यम् । अयोगवाहानामट्सूपदेशस्योक्तत्वात् । इति णत्वे प्राप्ते ।

**१९८ पदान्तस्य । ( ८-४-३७ )** पदान्तस्य नस्य णत्वं न स्यात् । रामान् ।

---

अखण्डमेव पदमिह विवक्षितम् । तेन रामनामेत्यादौ नातिप्रसङ्गः । मातृभोगीण इत्यादौ णत्वोपपत्तिस्तु तद्धिताधिकारे वक्ष्यते । आङा व्यवाये पर्याणद्धमित्युदाहरणम् । इह आङ्ग्रहणाभावे तु ' उपसर्गादसमासेऽपि' इत्यत्र तदननुवृत्त्या णत्वं न स्यात् । नन्वड्व्यवाय इत्येवात्र णत्वं भविष्यति, किमाङ्ग्रहणेनेत्यत आह—**पदव्यवायेऽपीति** । ननु 'इवि प्रीणने' ल्युट्, अनादेशः, इदित्त्वान्नुम् । प्रेन्वनम् । अत्र 'कुमति च' इति नुमा व्यवधानेऽपि णत्वं स्यात् । किं च 'बृहि वृद्धौ' ल्युट्, इदित्वान्नुम् , 'नश्चापदान्तस्य–' इत्यनुस्वारः, बृंहणम् । 'तृंहू- हिंसायाम्' ल्युट्, स्वाभाविकोऽयमनुस्वारः, तृंहणम् । इहोभयत्रापि णत्वं न स्यात् । अनुस्वारस्य अडाद्यनन्तर्भावात् । अत आह—**नुम्ग्रहणमिति** । नुम्ग्रहणेन अनुस्वारो लक्ष्यते । प्रयोगानुसारादित्यर्थः । एवं च नुम्ग्रहणं प्रत्याख्येयमित्याह—**तच्चेति** । ननु नुम्ग्रहणाभावे तल्लक्षितानुस्वारस्य कथं लाभ इत्यत आह—**अयोगवाहानामिति** । न विद्यते योगो येषां वर्णसमाम्नाये ते अयोगाः अनुपदिष्टाः उपदिष्टैरगृहीताश्चेत्यर्थः । वाहयन्ति प्रयोगं निर्वाहयन्तीति वाहाः, अयोगाश्च ते वाहाश्च अयोगवाहा अनुस्वारविसर्गादयः । अट्सु उपदेशस्य पाठस्य हल्सन्धिनिरूपणावसरे उक्तत्वादित्यर्थः । स्पष्टं चैतद् हयवरट्सूत्रभाष्यवार्तिकयोः । उक्तं चात्रैव सूत्रे भाष्ये—'नार्थो नुम्ग्रहणेन, अनुस्वारे कृते अड्व्यवाय इत्येवात्र णत्वं सिद्धम्' इति । **इति णत्व इति** । शसवयवस्य नकारस्य णकारे प्राप्त इत्यर्थः । **पदान्तस्य** । रषाभ्यां नो ण इत्यनुवर्तते, 'न भाभूपू–' इत्यतो नेति च । तदाह—**पदान्तस्य नस्येत्यादिना** ।

---

**निषेधं बाधितुमिति** । तेन पर्याणद्धमित्यत्र 'उपसर्गादसमासेऽपि–' इति णत्वं सिध्यतीति भावः । **उपलक्षणार्थमिति** । नुम्स्थानिकस्य स्वाभाविकस्य वानुस्वारमात्रस्योपलक्षणार्थं नुम्ग्रहणमित्यर्थः । तेन 'बृहि वृद्धौ' इदित्त्वान्नुम् , तस्यानुस्वारः । 'तृंहू हिंसायाम्' स्वाभाविकोऽत्रानुस्वारः । बृंहणम् तृंहणम् , उभयत्राप्यत्र णत्वं सिद्धम् । **अयोगवाहानामिति** । अविद्यमानो योगः प्रत्याहारेषु संबन्धो येषां ते अयोगाः, अनुपदिष्टत्वादुपदिष्टैरगृहीतत्वाच्च प्रत्याहारसंबन्धशून्या इत्यर्थः । वाहयन्ति निर्वाहयन्ति प्रयोगमिति वाहाः । अयोगाश्च ते वाहाश्च अयोगवाहाः । अनुपदिष्टत्वे उपदिष्टैरगृहीतत्वे च सति श्रूयमाणा इत्यर्थः । **अट्स्विति** । निष्कर्षस्त्वकारोपरीति तेन पयःस्वित्यादाविणः परस्येति षत्वं न भवति । अत एवोक्तं प्राक्—अनुस्वारविसर्ग-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

**१६६ यस्मात्प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्।** ( १-४-१३ ) यः प्रत्ययो यस्माक्रियते तदादि शब्दस्वरूपं तस्मिन्प्रत्यये परेऽङ्गसंज्ञं स्यात्। 'भवामि' 'भविष्यामि' इत्यादौ विकरणविशिष्टस्याङ्गसंज्ञार्थं तदादिग्रहणम्। 'विधिः' इति किम्-स्त्री इयती। 'प्रत्यये' किम्-प्रत्ययविशिष्टस्य ततोऽप्यधिकस्य वा मा भूत्।

---

**अथ तृतीयाविभक्तिः**। तत्र टा इति टकारस्य चुटू इतीत्संज्ञायां लोपः। टकारोच्चारणं तु टाङसिङसां द्वितीयाटौस्स्वित्यादौ विशेषणार्थम्। राम आ इति स्थिते अङ्गकार्यं विधास्यन्नङ्गसंज्ञामाह—**यस्मात्प्रत्ययविधिः**। यस्मादिति प्रकृतिभूतादित्यर्थः। **यः प्रत्यय इति**। यच्छब्दान्तराध्याहारस्तु प्रत्यासत्तिलभ्यः। स च यस्माद्यस्य प्रत्ययस्य विधिः तस्मिन्प्रत्यये तदादेरङ्गसंज्ञेत्यर्थलाभाय। तत् प्रकृतिरूपम् आदिर्यस्य तत् तदादि। नपुंसकवशाच्छब्दस्वरूपमित्यध्याहार्यम्। तदाह—**तदादि शब्दस्वरूपमिति**। प्रकृते च रामशब्दस्य प्रकृतिमात्रस्य तदादित्वं व्यपदेशिवद्भावाद् बोध्यम्। ननु यस्मात् प्रत्ययविधिस्तदङ्गमित्येवास्तु, किमादिग्रहणेनेत्यत आह—**भवामीति**। भूधातोर्लट्, मिप्, कर्तरि शबिति विकरणसंज्ञः शप्, गुणावादेशौ। 'अतो दीर्घो यञि' इति भव इत्यङ्गस्य दीर्घः, भवामीति रूपम्। तथा भूधातोर्लृट् मिप्, 'स्यतासी लृलुटोः' इति विकरणसंज्ञः स्यः, इट्, गुणावादेशौ, षत्वम्, 'अतो दीर्घो यञि' इति भविष्य इत्यङ्गस्य दीर्घः, भविष्यामीति रूपम्। अत्र आदिग्रहणाभावे मिप्प्रत्यये परतो भू इति प्रकृतिमात्रस्य अङ्गसंज्ञा स्यात्, भूशब्दादेव मिप्प्रत्ययविधेः, न तु भव इत्यस्य भविष्य इत्यस्य च विकरणविशिष्टस्य, ततो मिप्प्रत्ययविधेरभावात्। ततश्च 'अतो दीर्घो यञि' इति मिप्प्रत्यये परतो दीर्घो न स्यात्। अतः आदिग्रहणमित्यर्थः।

**विधिरिति किमिति**—यस्माद्यः प्रत्ययः परत्वेन श्रूयते तदादि शब्दरूपं तस्मिन् प्रत्यये अङ्गसंज्ञमित्येतावतैव सिद्धे विधिग्रहणं किमर्थमिति प्रश्नः। **स्त्री इयतीति**। इदं परिमाणमस्या इत्यर्थे इदंशब्दात् 'किमिदम्भ्यां वो घः' इति वतुप्, वस्य घश्च, तस्य इयादेशः। 'इदंकिमोः—' इति इदम ईश्। शित्त्वात् सर्वादेशः। ई इयत् इति स्थिते 'यस्येति च' इतीकारलोपः। इयत् इति प्रत्ययमात्रमवशिष्यते। 'उगितश्च' इति ङीपि इयतीति रूपम्। अत्र विधिग्रहणाभावे स्त्री इयतीत्यत्र रेफादीकारस्य 'स्त्रियाः' इत्यङ्गकार्यमियङ् स्यात्। स्त्रीशब्दात्परत्वेन[1] इयदिति प्रत्ययस्य श्रूयमाणत्वात्। न

---

जिह्वामूलीयोपध्मानीययमानामकारोपरि-इति। **णत्वं न स्यादिति**। 'न भाभूपूकमिगमि-' इत्यतो नेत्यनुवर्तत इति भावः। **यस्मात्। तदादीति**। तत्प्रकृतिरूपमादिर्यस्य शब्दस्वरूपस्येति बहुव्रीहिः। ननु 'यस्मात्प्रत्ययविधिस्तदङ्गम्' इत्येवास्तु

---

१ स्त्रीशब्दावयवत्वेन—इति क।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

च 'यस्य–' इति लोपस्याभीयत्वेनासिद्धत्वाद् अजादिप्रत्ययपरकत्वाभावान्नात्र इयङः प्राप्तिरिति वाच्यम्, अन्यूनानतिरिक्तसमानाश्रये कार्ये कर्तव्य एव आभीयासिद्धत्वस्य प्रवृत्तेः। अस्ति च 'यस्येति च' इति शास्त्रापेक्षया 'स्त्रियाः' इति सूत्रे अधिकस्य स्त्रीशब्दस्यापेक्षा। कृते तु विधिग्रहणे इयङत्र न भवति, वतुप इदम एवात्र विहितत्वेन तस्मिन् परे स्त्रीशब्दस्याङ्गत्वाभावात्। न च 'यस्य–' इति लोपस्य इयङि कर्तव्ये 'अचः परस्मिन्–' इति स्थानिवद्भावः शङ्क्यः, पदान्तविधौ तन्निषेधात्। स्त्रीशब्दस्य मुनिरूपिताङ्गत्वेऽपि नेयङ्, प्रत्यासत्त्या अजादिप्रत्ययनिरूपिताङ्गत्वे तत्प्रवृत्तेः। **प्रत्यये किमिति**। यस्मात् प्रत्ययविधिस्तदाद्यङ्गमित्येतावदेवास्त्वित्यर्थः। **प्रत्ययविशिष्टस्य ततोऽप्यधिकस्य वा मा भूदिति**। तदादि शब्दरूपं कियदित्यपेक्षयामविशेषात् प्रत्ययविशिष्टं वा ततोऽप्यधिकं वा निरवधिकमङ्गं स्यात्। न च 'यस्मात्प्रत्यय–' इति प्रत्ययस्य श्रुतत्वात् प्रत्ययावध्येवाङ्गत्वं भविष्यतीति वाच्यम्, यस्मात् प्रत्ययविधिस्तदादीत्यर्थसमर्पणेन तस्य प्रत्ययग्रहणस्य चरितार्थत्वात्। ततश्च प्रत्ययविशिष्टस्याङ्गत्वे वव्रश्चेत्यत्र प्रत्ययविशिष्टस्याङ्गत्वेन 'उरत्' इत्यादेशस्य परनिमित्तत्वालाभाद् 'अचः परस्मिन्–' इति स्थानिवत्त्वा-

---

किमादिग्रहणेनेत्यत आह—**भवामीत्यादि**। प्रकृतिमात्रस्य तु व्यपदेशिवद्भावेन तदादित्वादङ्गत्वम्, तेन कर्ता कारक इत्याद्यपि सिध्यतीति भावः। **अङ्गसंज्ञार्थमिति**। अन्यथा 'अतो दीर्घो यञि' इति दीर्घो न स्यादिति भावः। न चारम्भसामर्थ्यादेव दीर्घः स्यादिति वाच्यम्। 'पय् गतौ', 'वय् गतौ' आभ्यां यङ्लुकि पापामि पापावः, वावामि वावाव इत्यादौ चरितार्थत्वात्। **स्त्री इयतीति**। इदमः परिमाणे वतुप्। 'किमिदंभ्यां वो घः' इति घः, तस्य इयादेशः। 'इदंकिमो–' इति ईश्, 'यस्येति च' इति ईशो लोपः। 'उगितश्च' इति ङीप्। सत्यां हि संज्ञायां स्त्रीशब्दस्य 'यस्येति च' इति लोपः स्यात्। न चेशो लोपस्य 'असिद्धवदत्राभात्' इत्यसिद्धत्वान्नातिप्रसङ्ग इति वाच्यम्। 'प्राग् भादसिद्धत्वम्' इति पक्षाभ्युपगमादनित्यत्वाद्वेति व्याख्यातारः। नव्यास्तु—स्त्री अं पश्यतीत्यत्र स्त्रीशब्दस्य 'स्त्रियाः' इति इयङ् स्यात्। अकारादमि कृते 'अमि पूर्वः' इत्येकादेशस्य परादिवद्भावेन प्रत्ययत्वात्। अततेर्डप्रत्यये टिलोपे च सत्यकारस्य स्वत एव प्रत्ययत्वाच्च। विधिग्रहणे कृते तु नायं दोषः प्रसज्यते। अम्प्रत्ययस्य अकाराड्प्रत्ययस्य चाततेर्विहितत्वेऽपि स्त्रीशब्दादविधानात्। स्यादेतत्, मतुपोऽम्प्रत्ययस्य च स्त्रीशब्दादविधानेऽपि सोर्विधिरस्त्येवेति तद्दोषतादवस्थ्यमिति चेन्मैवम्। संनिधानबलेन यस्माद् यः प्रत्ययो विहितस्तस्मिन् तदङ्गमिति व्याख्यानात्। **प्रत्यये किमिति**। तदादिरूपं कियदित्यपेक्षायां यस्मात्प्रत्यय इति प्रत्ययस्य श्रुतत्वात्प्रत्ययपर्यन्तमेवाङ्गं भविष्यतीति मत्वा प्रश्नः। प्रत्ययस्य श्रुतत्वेऽपि प्रत्ययविशिष्टं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

२०० अङ्गस्य। ( ६-४-१ ) इत्यधिकृत्य। २०१ टाङसिङसामिनात्स्याः। ( ७-१-१२ ) अकारान्तादङ्गाट्टादीनां क्रमादिनादय आदेशाः स्युः। णत्वम्। रामेण। २०२ सुपि च। ( ७-३-१०२ ) यञादौ सुपि परे अतोऽङ्गस्य दीर्घः

---

प्रवृत्त्या 'न संप्रसारणे–' इति संप्रसारणनिषेधो न स्यात्। अधिकस्याङ्गत्वे च देवदत्त ओदनमपाक्षीदित्यादौ देवदत्तादिशब्दोत्तरं सुपं निमित्तीकृत्य लुङ्पर्यन्तमङ्गत्वात्तस्य लुङ्परत्वेन देवदत्तादिशब्दात्पूर्वमप्यडापत्तिः, अङ्गसंज्ञायाः प्रत्ययनिमित्तत्वाभावेन लुङादिनिरूपिताङ्गस्येत्यर्थस्य दुर्लभत्वात्। प्रत्यये इत्युक्तौ तु न कोऽपि दोष इत्यलम्।

**टाङसिङसाम्।** अङ्गस्येत्यधिकृतं पञ्चम्या विपरिणतम्। 'अतो भिस–' इत्यस्माद् अत इति पञ्चम्यन्तमनुवृत्तम् अङ्गस्य विशेषणम्। तदन्तविधिः। तदाह— **अकारान्तादङ्गादिति**। परेषामिति शेषः। क्रमादिति यथासंख्यसूत्रलब्धम्। **टादीनामिति**। टा–ङसि–ङसामित्यर्थः। **इनादय इति**। इन–आत्–स्य एते इत्यर्थः। राम इन इति स्थिते आद् गुणः। **णत्वमिति**। 'अट्कुप्वाङ्–' इति नकारस्य णकार इत्यर्थः। राम भ्याम् इति स्थिते 'न विभक्तौ–' इति मस्य नेत्त्वम्। **सुपि च**। 'अतो दीर्घो यञि' इत्यनुवर्तते। यञीत्यनेन सुपीति विशेष्यते। 'यस्मिन् विधिः–' इति तदादिविधिरित्याह—**यञादाविति**। **अतोऽङ्गस्येति**। अदन्तस्याङ्गस्येत्यर्थः। राम भिस्

---

ततोऽप्यधिकं वा निरवधिकमङ्गं स्यात्, तदादीत्यस्यार्थनिर्णये प्रत्ययश्रवणस्योपपत्तयादित्याशयेन व्याचष्टे—**प्रत्ययविशिष्टस्येत्यादिना**। प्रत्ययविशिष्टस्येति किम्, वव्रश्च। अत्र विशिष्टस्याङ्गसंज्ञायाम् 'उरत्' इत्यदादेशस्य परनिमित्तत्वालाभाद् 'अचः परस्मिन्–' इति स्थानिवत्त्वाप्रवृत्त्या 'न संप्रसारणे–' इति निषेधाभावादभ्यासस्य पुनरपि संप्रसारणं प्रवर्तेत। तथा भ्वर्थं श्र्यर्थमित्यत्र 'अचि श्नुधातुभ्रुवाम्–' इति इयङुवङौ स्याताम्, उक्तरीत्या अचीत्यनेनाजादौ प्रत्यय इत्यलाभात्। ततोऽधिकस्याङ्गसंज्ञायां तु 'देवदत्त ओदनमपाक्षीत्' इत्यत्र देवदत्तशब्दात्प्रागडागमः स्याद्देवदत्तशब्दात्सुप्रत्ययस्य विहितत्वेन लुङः प्राग्वर्तिसमुदायस्याङ्गत्वात्। द्वितीयप्रत्ययग्रहणे कृते तु न कोऽपि दोषः प्रसज्यते। अन्ये तु यस्माल्लुङादिविधिः प्रत्यासत्त्या तस्यैवाङ्गस्याडागमः स्यादिति ततोऽप्यधिकस्येत्येतदनास्थायोक्तम्, किं तु एतस्यापि प्रत्ययविशिष्टस्याङ्गत्वे यद्दूषणं तदेवेत्याहुः। **टाङसि**। 'अतो भिस ऐस्' इत्यस्मादनुवृत्तेन अत इत्यनेन सामानाधिकरण्येन विशेषणाद् 'अङ्गस्य' इत्यधिकृतं षष्ठ्यन्तमपि पञ्चम्या विपरिणम्यते, विशेषणेन तदन्तविधिस्तदाह—**अकारान्तादङ्गादिति**। **सुपि च**। यञीत्यनुवर्तते। अल्ग्रहणात्तदादिविधिरित्याह—**यञादौ सुपीति**। यञि किम्, रामः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्यात् । रामाभ्याम् । **२०३ अतो भिस ऐस्** । ( ७-१-९ ) अकारान्तादङ्गाद्भिस ऐस् स्यात् । अनेकाल्त्वात्सर्वादेशः । रामैः । **२०४ ङेर्यः** । ( ७-१-१३ ) अतोऽङ्गात्परस्य ङे इत्यस्य यादेशः स्यात् । रामाय । इह स्थानिवद्भावेन यादेशस्य

---

इति स्थिते 'न विभक्तौ–' इति सस्य नेत्त्वम् । **अतो भिस ऐस्** । अत इति पञ्चमी । अङ्गस्येत्यधिकृतं पञ्चम्या विपरिणम्यते । अत इति तस्य विशेषणम् । विशेषणत्वात्तदन्तविधिः । तदाह—**अकारान्तादिति** । रुत्वविसर्गौ सिद्धवत्कृत्याह—**रामैरिति** । यद्यपि एसि विहितेऽपि वृद्धौ रामैरित्यादि सिद्धम् । न च 'अतो गुणे' इति पररूपं शङ्क्यम्, एकारोच्चारणसामर्थ्यादेव तदसंभवात् अन्यथा इसमेव विदध्यात् । तथापि एदैतोर्द्विमात्रत्वाविशेषात् प्रक्रियालाघवाच्च ऐसो विधिः । 'अलोऽन्त्यस्य' इत्यन्तादेशमाशङ्क्याह—**अनेकाल्त्वादिति** ।

**अथ चतुर्थीविभक्तिः** । तत्र ङे इति ङकारस्य 'लशक्व–' इतीत्संज्ञायां लोपः । तदुच्चारणं तु 'घेर्ङिति' इत्याद्यर्थम् । राम ए इति स्थिते । **ङेर्यः** । ङेरित्येकारान्तात् षष्ठ्येकवचनम्, न तु ङि इति सप्तम्येकवचनात्, व्याख्यानात् । 'अतो भिस–' इत्यतः अत इति पञ्चम्यन्तमनुवर्तते । तेन च 'अङ्गस्य' इत्यधिकृतं पञ्चम्या विपरिणतं विशेष्यते । तदाह—**अतोऽङ्गादिति** । अदन्तादङ्गादित्यर्थः । 'सुपि च' इति दीर्घं मत्वा आह—**रामायेति** । ननु यादेशस्य सुप्त्वाभावात्तस्मिन् परतः कथं 'सुपि च' इति दीर्घ इत्यत आह—**इहेति** । नन्वत्र दीर्घो यञादित्वेन सुप्त्वेन च यादेशं परनिमित्तीकृत्य प्रवर्तते । स च यञंशे अलाश्रयः । तस्मिन् कर्तव्ये यादेशस्य कथमिह स्थानिवद्भावः ? अनल्विधाविति तन्निषेधादिति चेत्, सत्यम्—इह दीर्घस्य यञादिसुबाश्रयतया आदेशगतयकाररूपालाश्रयत्वेऽपि तस्मिन् कर्तव्ये यादेशस्य स्थानिवद्भावे सुप्त्वं भवत्येव, दीर्घस्य आदेशगतयकाररूपालाश्रयत्वेऽपि स्थान्यलाश्रयत्वाभावात् ।

---

अत इति किम्, अग्निभ्याम् । **अतो भिस ऐस्** । ननु एस् इत्येवास्तु । न च 'अतो गुणे' इति पररूपापत्तिः । एकारोच्चारणवैयर्थ्यापत्तेः । अन्यथा इसमेव विदध्यात् इति चेत्सत्यम् । एदैतोर्द्विमात्रत्वाविशेषेण गौरवाभावात्, 'बहुलं छन्दसि' इत्यत्र अनतोऽपि भवति, नद्यैरिति काशिकोदाहृतप्रयोगस्य ऐस्करणं विना अनिर्वाहाच्च । केचिदैस्करणं निर्जरसैरित्यैकारश्रवणार्थमिति व्याचख्युः । तच्चिन्त्यम्, संनिपातपरिभाषया जरसादेशाप्रवृत्तेर्निर्जरैरित्येव भाष्ये सिद्धान्तितत्वात् । **ङेर्यः** । ङेरिति चतुर्थ्येकवचनस्य ग्रहणं न सप्तम्येकवचनस्य, व्याख्यानात् । अत एव 'ङेराम्' इत्यत्रास्याग्रहणम्, 'समानाधिकरणे' 'स्त्रियाम्' इत्यादिनिर्देशाच्च । **स्थानिवद्भावेनेति** । आदेशालाश्रयविधौ

---

१ स्थानिवद्भावेन—इति क ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सुप्त्वात् 'सुपि च' ( सू २०२ ) इति दीर्घः। 'संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य' ( प ८६ ) इति परिभाषा तु नेह प्रवर्तते। 'कष्टाय क्रमणे' ( सू २६७० ) इत्यादिनिर्देशेन तस्या अनित्यत्वज्ञापनात्। रामाभ्याम्। २०५ **बहुवचने झल्येत्।** ( ७-३-१०३ ) झलादौ बहुवचने सुपि परे अतोऽङ्गस्यैकारः

---

'अकृत्सार्वधातुकयोर्दीर्घः' इति तु परमप्यत्र नोपन्यस्तम्, 'अकृत्सार्वधातुकयोः' इति पर्युदासबलेन तस्य असुप्येव प्रवृत्तेरित्याहुः। स्यादेतत्। 'संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य' इत्यस्ति परिभाषा। संनिपातः संश्लेषः लक्षणं निमित्तं यस्य स संनिपातलक्षणः। विधिः कार्यम्। तद्विघातस्य तं संनिपातं विहन्तीति तद्विघातः। 'कर्मण्यण्' इति कर्मण्युपपदे कर्तर्यण्। 'हनस्तोऽचिण्णलोः' इति तकारः। 'हो हन्तेः' इति कुत्वम्। संनिपातविघातकस्य न निमित्तमित्यर्थः। उपजीवकमुपजीव्यस्य विघातकं न भवतीति यावत्। प्रकृते च अदन्तसंबन्धमाश्रित्य प्रवृत्तो यादेशः अदन्तसम्बन्धविघातकस्य दीर्घस्य कथं निमित्तं स्यादित्याशङ्क्य परिहरति—**संनिपातलक्षण इत्यादिना।** तृतीयाद्विवचनवद् दीर्घं सिद्धवत्कृत्याह—**रामाभ्यामिति।** भ्यसि 'न विभक्तौ–' इति सस्य नेत्त्वम्। 'सुपि च' इति दीर्घे प्राप्ते। **बहुवचने झल्येत्।** 'अतो दीर्घो यञि' इत्यतः 'सुपि च' इत्यतश्च अत इति सुपीति चानुवर्तते। झलीत्यनेन सुपीति विशेष्यते। 'यस्मिन् विधिः' इति तदादिविधिः। तदाह—**झलादाविति। अतोऽङ्गस्येति।** अदन्तस्याङ्गस्येत्यर्थः। एत्वे सति रुत्वविसर्गौ सिद्धवत्कृत्याह—**रामेभ्य इति। राम इति।** अयोगवाहानामकारोपरि शर्षु चोपसंख्यातत्वेन विसर्गस्य झल्त्वात् स्थानिवद्भावेन सुप्त्वाच्च तस्मिन् परत एत्वं प्राप्तम्, रुत्वविसर्गयोरसिद्धत्वेऽपि राम स् इति दशायां

---

स्थानिवत्त्वनिषेधाभावादिति भावः। **सुपि चेति दीर्घ इति।** न च परत्वात् 'अकृत्सार्वधातुकयोः–' इति दीर्घोऽस्त्विति शङ्क्यम्। तत्र 'अयङ् यि क्ङिति' इत्यत्र क्ङितीत्यनुवर्तनात्। अन्यथा उरुयेत्यत्रापि दीर्घः स्यात्। उरुशब्दात्परस्य टा इत्यस्य 'सुपां सुलुक्–' इति यादेशः। एतच्च काशिकायां स्पष्टम्। यद्यपि ङेर्यादेशस्य ङित्त्वमस्ति 'न ल्यपि' इति ज्ञापकेन अनुबन्धकार्येष्वल्विधावपि स्थानिवत्त्वाभ्युपगमात्, तथापि शानचः शित्त्वेन लिङ्गेन क्वचिदनुबन्धकार्येषु स्थानिवत्त्वानभ्युपगमादादेशे ङित्त्वं नेत्यभ्युपेत्येदम्, विरोधाभावात्परत्वमत्राकिंचित्करमित्यनादरेण वा 'अकृत्सार्वधातुकयोः–' इति दीर्घो नोक्त इति स्थितस्य गतिमाहुः। ननु 'ज्यादादीयसः' इति ज्याशब्दात्परस्य ईयस आकारविधानमङ्गवृत्तपरिभाषाया लिङ्गम्। अन्यथा 'बहोर्लोपः–' इत्यतो लोप इत्यनुवर्त्य लोपमेव विदध्यादाकारं तु न विदध्यात्, 'अकृत्सार्वधातुकयोः–' इति दीर्घेण ज्यायानिति रूपसिद्धेरिति भाष्ये स्थितम् तदिदानीं विरुध्येत। क्ङितीत्यनुवृत्तौ तु ज्याया-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्यात् । रामेभ्यः । 'बहुवचने' किम्—रामः, रामस्य । 'झलि' किम्—रामाणाम् । 'सुपि' किम्—पचध्वम् । जश्त्वम् । **२०६ वाऽवसाने । ( ८-४-५६ )** अवसाने

---

झलादिसुप्परत्वात् । अतो बहुवचनग्रहणमित्यर्थः । **रामस्येति** । बहुवचनग्रहणस्य प्रयोजनान्तरम् । षष्ठ्येकवचनस्य ङसः स्यादेशे, तस्य स्थानिवद्भावेन सुप्त्वात् स्वतो झलादित्वाच्च तस्मिन् परत एत्वे प्राप्ते तन्निवृत्त्यर्थं बहुवचनग्रहणमित्यर्थः । संनिपात-परिभाषा तु सर्वेषामिति निर्देशादेत्वविधौ न प्रवर्तत इत्याहुः । **झलि किमिति** । 'उतो वृद्धिर्लुकि हलि' इत्यतो हलीत्यनुवर्त्य हलादौ बहुवचने सुपि एत्वमित्येव व्या-ख्यातुं शक्यते । तावतैव रामा इत्याद्यजादिबहुवचने एत्वनिरासादिति प्रश्नः । **रामाणा-मिति** । हलादौ बहुवचने सुपि एत्वमित्युक्तौ रामाणामित्यत्राप्येत्वं स्यात् । तन्निवृत्त्यर्थं झल्ग्रहणमित्यर्थः । यद्यप्यत्र संनिपातपरिभाषया ह्रस्वान्ताङ्गसंनिपातमुपजीव्य प्रवृत्तस्य नुटस्तद्विघातकमेत्वं प्रति निमित्तत्वासंभवादेव एत्वं न भविष्यति । तथापि झल्ग्रहण-मेत्वे संनिपातपरिभाषाया अप्रवृत्तिज्ञापनार्थम् । तेन 'हलि सर्वेषाम्' इति निर्देशात् सर्वशब्दे एत्वसिद्धावपि विश्वेषामित्यादावप्येत्वं भवति । **पचध्वमिति** । ध्वमो-झलादिबहुवचनत्वेऽपि सुप्त्वाभावान्न तस्मिन् परत एत्वमित्यर्थः । न च 'बहुवचने झलीक्' इत्येवास्तु । कित्त्वादन्तावयवे आद् गुणे च रामेभ्य इत्यादिसिद्धेरिति वाच्यम्, एवं सति 'ओसि च' इत्युत्तरसूत्रेऽपि इगागमविधौ ज्ञानयोरित्यत्र 'इकोऽचि विभक्तौ' इति नुमापत्तेः ।

**अथ पञ्चमीविभक्तिः** । तत्र 'उपदेशेऽजनुनासिक इत्' इति ङसेः इकार इत् । तस्य लोपः । ङकारस्तु 'लशक्व—' इति इत् । तस्य लोपः । तदुभयोच्चारणं तु 'ङसिङ्योः—' 'घेर्ङिति' इत्याद्यर्थम् । 'टाङसिङसाम्—' इति आत् सवर्णदीर्घः । **जश्त्व-मिति** । 'झलां जशोऽन्ते' इति नित्यतया जशत्वं प्राप्तम् । तदपवादश्चर्त्वविकल्प आर-

---

नित्यत्र 'अकृत्सार्व—' इति दीर्घप्रवृत्तेः । तथा च 'अकृत्—' इति सूत्रे क्ङितीति नानुवर्त-नीयम्, उरुया धृष्णुयेत्यत्र दीर्घाभावश्छान्दस इत्येवाभ्युपेयमिति चेत्, अत्राहुः—'ज्ञाज-नोर्जा' इत्याकारग्रहणमुक्तपरिभाषालिङ्गम् । अन्यथा जमेव विदध्यात् । 'अतो दीर्घो यञि' इति जायते जानातीत्यादौ दीर्घसिद्धेरित्यपि भाष्ये स्थितम्, तच्च ज्ञापकम् 'अकृत्—' इत्यत्र क्ङितीत्यनुवृत्तावपि संगच्छते । एवं च सति 'ज्यादात्' इत्याकारग्रहणं लिङ्गमिति तु भाष्ये प्रौढिवादमात्रमस्तु । **संनिपातेति** । संनिपातः संश्लेषः लक्षणं निमित्तं यस्य स संनिपातलक्षणः, तं संनिपातं विहन्तीति तद्विघातः । कर्मण्यण्, कुत्वतत्वे । उपजीवकविधिः स्वोपजीव्यविघातकविधेर्निमित्तं न भवतीत्यर्थः । **रामः । रामस्येति** । यद्यपि रामस्येत्यत्र संनिपातपरिभाषयाप्येत्वं सुपरिहरम्, तथापि 'अदः सर्वेषाम्'

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

झलां चरो वा स्युः । रामात्, रामाद् । द्वित्वे रूपचतुष्टयम् । रामाभ्याम् । रामेभ्यः । रामस्य । सस्य द्वित्वपक्षे 'खरि च' ( सू १२१ ) इति चर्त्वेऽप्यान्तरतम्यात्स एव, न तु तकारः । अल्पप्राणतया प्रयत्नभेदात् । अत एव 'सः सि–' ( सू २३४२ ) इति तादेश आरभ्यते । २०७ ओसि च । ( ७–३–१०४ ) ओसि

---

भ्यत इत्यर्थः । **वाऽवसाने** । 'झलां जश् झशि' इत्यतो झलामिति 'अभ्यासे चर्च' इत्यतश्चरिति चानुवर्तते । तदाह—**अवसान इत्यादिना** । **द्वित्वे रूपेति** । तकारदकारयोः 'अनाचि च' इति द्वित्वे तदभावे च रूपचतुष्टयमित्यर्थः । अत्र चर्त्वपक्षे द्वितकारमेकतकारं च रूपम् । जश्त्वपक्षे द्विदकारमेकदकारं च । **रामाभ्याम्** । **रामेभ्य इति** । चतुर्थीवत् प्रक्रिया सुगमेति भावः ।

**अथ षष्ठीविभक्तिः** । ङसो ङकारस्य 'लशक्वतद्धिते' इति इत्त्वम्, लोपः । ङकारोच्चारणं तु 'ङिति ह्रस्वश्च' इत्याद्यर्थम् । 'टाङसिङसाम्–' इति स्यादेशं सिद्धवत्कृत्याह—**रामस्येति** । नन्विह सकारस्य 'अनाचि च' इति द्वित्वे पूर्वसकारस्य 'खरि च' इति चर्त्वेन दन्तस्थानतोऽन्तरतमे तकारे सति रामत्स्येति स्यादित्यत आह—**सस्य द्वित्वेति** । **स एवेति** । सकार एवेत्यर्थः । एवकारव्यावर्त्यमाह—**न तु तकार इति** । ननु दन्तस्थानतः श्वासाघोषविवारात्मकबाह्यप्रयत्नतश्चान्तर्यं तकारेऽप्यविशिष्टमित्यत आह—**अल्पप्राणतयेति** । सकारः स्थानी महाप्राणः । तकारस्तु अल्पप्राणः । अतो बाह्यप्रयत्नभेदात् तकारो न भवति । इदमुपलक्षणम् । आभ्यन्तरप्रयत्नभेदादपि सकारस्य तकारो न भवतीति द्रष्टव्यम् । **अत एवेति** । 'वस् निवासे' इत्यादिधातोर्वत्स्यतीत्यादौ सकारस्य सकारे परे तकारो विधीयते । यदि तु तत्र 'खरि च' इति सकारस्य तकारः स्यात्तर्हि तद्विधानमनर्थकं स्यादित्यर्थः । 'राम ओस्' इति स्थिते वृद्धौ प्राप्तायाम् । **ओसि च** । 'अतो दीर्घो यञि' इत्यतोऽत इत्यनुवर्तते । अङ्गस्येत्यधिकृतम् । 'बहुवचने झल्येत्' इत्यत एदित्यनुवर्तते । तदाह—**ओसि पर इति** । **अतोऽङ्गस्येति** । अदन्ताङ्गस्येत्यर्थः । रामे ओस् इति स्थिते अयादेशं रुत्वविसर्गौ च सिद्धवत्कृत्याह—**रामयोरिति** । राम आम् इति स्थिते सवर्णदीर्घे

---

इति निर्देशादेत्वविधौ संनिपातपरिभाषा न प्रवर्तत इत्याशयेनोक्तमिति स्थितस्य गतिः समर्थनीया । **जश्त्वम्** । **वावसान इति** । अत्राहुः । जश्त्वे कृतेऽवसाने चर्त्वमिति न मन्तव्यम्, किं तु येन नाप्राप्तिन्यायेन अवसाने चर्त्वस्य जश्त्वापदत्वाच्चर्त्वाभावपक्षे जश्त्वमिति योज्यम् । **द्वित्व इति** । 'अनचि च' इत्यनेन । अनचीति प्रसज्यप्रतिषेध इति प्रागेवोक्तम् । पर्युदासाभ्युपगमे तु इह द्वित्वं न स्यात् । **तादेश आरभ्यत इति** । वत्स्यतीत्यादौ चर्त्वेन तकारो न लभ्यत इति 'सःस्यार्धधातुके' इत्यनेन सकारस्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

परे अतोऽङ्गस्यैकारः स्यात् । रामयोः । २०८ ह्रस्वनद्यापो नुट् । (७-१-५४) ह्रस्वान्तान्नद्यन्तादाबन्ताच्चाङ्गात्परस्यामो नुडागमः स्यात् । २०९ नामि । (६-४-३)

---

प्राप्ते । **ह्रस्वनद्या** । ह्रस्वश्च नदी च आप्चेति समाहारद्वन्द्वाद्दिग्योगे पञ्चमी । 'परस्य' इत्यध्याहार्यम् । 'अङ्गस्य' इत्यधिकृतं पञ्चम्या विपरिणाम्य ह्रस्वादिभिर्विशेष्यते । अतस्तदन्तविधिः । 'आमि सर्वनाम्नः–' इत्यतः 'आमि' इत्यनुवर्तते । तच्च 'उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्' इति न्यायात् 'तस्मादित्युत्तरस्य' इति षष्ठ्यन्तं सम्पद्यते ।

---

तकारो विधीयत इत्यर्थः । **ह्रस्वनद्यापो** । अङ्गस्येत्यनुवर्तते । तच्च पञ्चम्यन्तेन सामानाधिकरण्याद् अङ्गादिति विपरिणम्य ह्रस्वादिति विशेष्यते विशेषणेन तदन्तविधिरित्याशयेनाह—**ह्रस्वान्तादिति** । एतेन 'ह्रस्वनद्यापः–' इति पञ्चमी, न तु षष्ठीति स्फोटितम् । ज्ञापकं त्वत्र 'नामि' इति । न हि प्रकृत्यागमत्वे अङ्गसंज्ञानिमित्तं नाम् संभवति । एवं चानया पञ्चम्याऽनन्यार्थया 'तस्मादित्युत्तरस्य' इति परिभाषोपस्थित्या 'आमि सर्वनाम्नः सुट्' इत्यतोऽनुवृत्तमामीति सप्तम्यन्तं 'ङः सि धुट्' इत्यत्रेव षष्ठ्या विपरिणम्यते, आमीति सप्तम्याः 'त्रेस्त्रयः' इत्यत्र चरितार्थत्वादित्यभिप्रेत्याह—**आमो नुडागमः स्यादिति** । अत्र नव्याः—'नुट्' इति योगं विभज्य 'अङ्गात्परस्यामो नुट्' इत्युत्सर्गविधिं कृत्वा 'नद्यापः' इत्यंशेन दीर्घात्परस्यामो नुट् चेद्भवति तर्हि 'नद्याप एव' इति नियमविधिं व्याख्याय ह्रस्वग्रहणं प्रत्याख्येयम् । न चैवं लिहां दुहामित्यादौ अतिप्रसङ्ग इति वाच्यम् । हलन्ताच्चेद्भवति तर्हि षट्चतुर्भ्य एवेति नियमाभ्युपगमात् । 'ध्वंस्वनडुहाम्' 'कतिपयचतुराम्' 'युजिक्रुञ्चाम्' 'भ्रलाम्' इत्यादिनिर्देशाच्च । तस्माद् ह्रस्वग्रहणप्रत्याख्याने न कोऽपि दोष इत्याहुः । अत्र वदन्ति—नुडिति पृथग्योगे कृते सति ङेरामि कृते परमप्याटं बाधित्वा अन्तरङ्गत्वादामो नुट् स्यात् । तथा च—परत्वादाटा नुड् बाध्यते—इति वक्ष्यमाणग्रन्थेन 'आटि कृते सकृद्गतिन्यायाद् नुट् न' इति भाष्यग्रन्थेन च विरोधः स्यात् । यद्यपि नियमसूत्राणां विधिमुखेन प्रवृत्तिरिति पक्षे ङेरामि कृते तस्य 'नद्यापः' इत्यनेनैव नुडागमे प्रसज्यमाने 'आण् नद्याः' इत्यनेन स बाध्यत इति परत्वादाटा नुड् बाध्यत इत्यादिग्रन्थः संगच्छते, तथापि नियमसूत्राणां निषेधमुखेन प्रवृत्तिरिति पक्षे परमपि आटं बाधित्वा अन्तरङ्गत्वान्नुट् स्यादेव । किं च 'नद्यापः' इत्यत्र 'नद्यापः परस्यामो नुडेव स्यान्नान्यत्' इत्यर्थः स्यात् । तथा च गौर्यां रमायां सर्वासां सर्वस्यामिति न सिध्येत् । सुडागमस्य पुंसि, आड्याट्स्याडागमानां तु ङिदन्तरे चरितार्थत्वात् । अपि च गौर्यामित्यादौ ङेरामि कृते नुटं बाधित्वा प्राप्तमाटं बाधितुं नदीग्रहणम् । एवं रमायां सर्वासां सर्वस्यामित्यादौ प्राप्तं याटं सुटं स्याटं च बाधितुमाब्ग्रहणमिति 'नद्यापः' एतद्विध्यर्थमेव स्यान्न नियमार्थम् । ततश्च विश्वपां वातप्र-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नामि परेऽजन्तस्याङ्गस्य दीर्घः स्यात्। रामाणाम्। 'सुपि च' ( सू २०२ ) इति

---

तदाह—ह्रस्वान्तादित्यादिना। आम् अत्र षष्ठीबहुवचनमेव न तु 'ङेराम्–' इत्यादिविहितम् इति भाष्ये स्पष्टम्। नुटि टकार इत्। उकार उच्चारणार्थः। टित्वादाद्यवयवः। राम नाम् इति स्थिते।

**नामि**। 'ढ्रलोप–' इत्यतो दीर्घ इत्यनुवर्तते। दीर्घश्रुत्या च 'अचः' इत्युपस्थितम्। तेन चाङ्गं विशेष्यते। अतस्तदन्तविधिः। तदाह—**अजन्तस्येति**। 'नुटि' इति न सूत्रितम्। 'भृञ × किन्नुट् च' इत्यौणादिकगन्प्रत्ययान्ते भृङ्गशब्दे ऋकारस्य दीर्घापत्तेः। अङ्गनां पामनामित्यादौ तु न दीर्घः, अर्थवद्ग्रहणपरिभाषया अर्थवत

---

म्यामित्यादौ नुड् दुर्वार एव। 'नद्यां मतुप्' 'भाषायां सदवसश्रुवः' 'सर्वासां प्रायदर्शनम्' 'तदस्यां प्रहरणम्' इत्यादिनिर्देशान् शरणीकृत्य विध्यर्थतापादनस्य नुडेवेति प्रागुक्तनियमस्य च निवारणे तु प्रतिपत्तिगौरवम्। अपि च—'आकारान्तादीकारान्तादूकारान्ताच्चेद्भवति तर्हि नद्याप एव' इति नियमस्यापि संभावात्। विश्वपां वातप्रम्यां खलप्वामित्यादौ नुडागमाभावेऽपि गवामित्यादौ नुट् स्यात्। न च छन्दसि 'गोः पादान्ते–' इत्यारम्भाल्लोके गोशब्दात्परस्यामो नुड् न भवेदिति वाच्यम्। पादान्ते गोशब्दात्परस्यामो नुट् चेच्छन्दस्येवेति नियमेन लोके पादान्ते गोनामिति प्रयोगस्याभावेऽप्यपादान्ते तस्यानिवार्यत्वापत्तेः, रायां ग्लावां नावामित्यादौ दुर्निवारत्वाच्च। यदि तु दीर्घात्परस्य आमो नुट् चेदित्यादिनियमे 'गोः पादान्ते' इति सूत्रं विध्यर्थं भवेत्। आकारान्तादिभ्यः परस्यामो नुट् चेदित्यादिनियमे तु नियमार्थं स्यात्तत्र 'विधिनियमयोर्विधिरेव ज्यायान्' इति न्यायानुसंधानेन दीर्घान्तात्परस्यामो नुट् चेदित्यादिनियम एव स्वीक्रियत इत्युच्यते तदापि पुनः प्रतिपत्तिगौरवमस्त्येव, तस्माद् ह्रस्वग्रहणप्रत्याख्यानस्यातिक्लेशसाध्यत्वाद्यथाश्रुतमेव रमणीयमिति। **नामि**। 'ढ्रलोपे–' इत्यतो दीर्घ इत्यनुवर्तते दीर्घश्रुत्योपस्थितेनाच इत्यनेनाङ्गस्येति विशेष्यते। विशेषणेन च तदन्तविधिः। तदेतदाह—**अजन्ताङ्गस्येत्यादि**। अर्थवद्ग्रहणपरिभाषया नामीति नुट्सहित एवाम् गृह्यते। तेन पामनाम् अङ्गनामित्यादौ न भवति। तत्र हि पामादिलक्षणे नप्रत्यये, टापि, द्वितीयैकवचने च कृते त्रयाणामपि प्रत्ययानां प्रत्येकमर्थवत्त्वेऽपि नामिति समुदायस्यानर्थकत्वात्। यद्यपि नलोपस्यासिद्धत्वाद् अनेन पामनामित्यत्र दीर्घः सुपरिहरः, तथापि 'नोपधायाः' इत्यनेन तु स्यादेवेति बोध्यम्। 'नुटि' इति तु न सूत्रितम्। 'भृञः किन्नुट् च' इत्यौणादिकगन्प्रत्ययान्ते भृङ्गशब्दे मा भूदिति। स्यादेतत्, नुडागमस्याम्भक्तत्वादाम्ग्रहणेन सनकारोऽप्याम् ग्रहीष्यत इति 'आमि' इत्येव सूत्रमस्तु। न चामीति दीर्घस्य कृताकृतप्रसङ्गित्वेन नित्यत्वात्परमपि नुटं बाधित्वा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दीर्घो यद्यपि परस्तथापीह न प्रवर्तते, संनिपातपरिभाषाविरोधात्। 'नामि' इत्य-

एव नामो ग्रहणात्, पामादिलक्षणे नप्रत्यये टापि द्वितीयैकवचने अमि कृते त्रयाणामपि प्रत्ययानां प्रत्येकमर्थवत्त्वेऽपि समुदायस्यानर्थकत्वात्। ननु नामीति सनकारग्रहणं मास्तु 'आमि' इत्येव सूत्र्यताम्। न च राम आम् इत्यस्यां दशायां दीर्घे सति ह्रस्वान्तत्वाभावाद् 'ह्रस्वनद्यापः' इति नुट् न स्यादिति वाच्यम्। 'ह्रस्वान्तान्नुट्' इति वचनसामर्थ्यात् कृतेऽपि दीर्घे भूतपूर्वगत्याश्रयणेन नुडुपपत्तेरिति चेन्न, सनकारनिर्देशस्य नोपधाया इत्युत्तरार्थत्वात्। यदि हि आमीत्येवोच्येत तर्हि 'नोपधायाः' इत्युत्तरसूत्रेऽपि आमीत्येवानुवर्तेत। ततश्च नान्तस्योपधाया दीर्घः स्यादामीत्येव लभ्येत। एवं सति चर्मणां वर्मणामित्यादावपि दीर्घः स्यात्। अतो 'नामि' इति सनकारनिर्देश इति भाष्ये स्पष्टमित्यलम्। 'अट्कुप्वाङ्—' इति णत्वं सिद्धवत्कृत्याह—**रामाणामिति**। नन्वत्र परत्वात् 'सुपि च' इति दीर्घ एवोपन्यसनीयः, न तु 'नामि' इति दीर्घः, फलविशेषाभावेऽपि न्यायानुरोधेनैव शास्त्रप्रवृत्तेः 'इको झल्' इति सूत्रे भाष्ये प्रपञ्चितत्वाद् इति शङ्कते—**सुपि चेति दीर्घो यद्यपि पर इति**। परिहरति—**तथापीति**। **सन्निपातेति**। ह्रस्वान्तसन्निपातमुपजीव्य प्रवृत्तस्य नुटः ह्रस्वविघातकं 'सुपि च' इति दीर्घं प्रति निमित्तत्वासम्भवादिति भावः। नन्विह 'नामि' इति दीर्घप्रवृत्तावपि

अग्नीनामिन्दूनामित्यत्र दीर्घे कृते ह्रस्वाश्रयो नुड् न भवेदिति वाच्यम्। ह्रस्वान्तान्नुडिति वचनसामर्थ्यात् कृतेऽपि दीर्घे भूतपूर्वगत्याश्रयणेन तत्प्रवृत्तेः। नापि 'न तिसृचतसृ' इति निषेधात्तिसृणां चतसृणामित्यत्र ह्रस्वान्तान्नुडिति वचनस्य प्रयोजनमस्तीति वाच्यम्। चतसृणामित्यत्र 'षट्चतुर्भ्यश्च' इत्यनेनैव नुट्सिद्धेः, 'ह्रस्वनद्यापः–' इति सूत्रे 'त्रेस्त्रयः' इत्यतः त्रेरित्यनुवर्त्य त्रिशब्दात्परस्यामो नुडिति व्याख्यानात् तिसृणामित्यत्रापि तत्सिद्धेः। यद्यपि नृणामित्यत्र प्रयोजनमस्ति, तथापि नैकमुदाहरणं ह्रस्वग्रहणं प्रयोजयति। अन्यथा 'नृनद्यापः' इत्येव वदेत्। तस्मादामीत्युक्तौ न किंचिद्बाधकमस्तीत्यामः सनकारस्य ग्रहणं व्यर्थमिति चेत्। अत्रोच्यते—उत्तरार्थं सनकारग्रहणं कर्तव्यम्, 'नोपधायाः' इति दीर्घो नामि यथा स्यात्, चर्मणां वर्मणाम् इत्यत्र मा भूदिति। तदुक्तं वार्तिककृता—'नामि दीर्घ आमि चेत्स्यात्कृते दीर्घे न नुड् भवेत्। वचनाद्यत्र तन्नास्ति नोपधायाश्च वर्मणाम्' इति। अत्र वदन्ति—वचनाद् भूतपूर्वगत्याश्रयणेन तत्प्रवृत्तिरित्येतच्चिन्त्यम्। गौणत्वे 'षट्चतुर्भ्यश्च' इति नुटोऽप्रवृत्त्या प्रियचतसृणामित्यत्र नुडर्थं ह्रस्ववचनस्य चरितार्थत्वेन सामर्थ्यस्योपक्षयात्। तत्र हि 'नुमचिर–' इति रादेशात्पूर्वविप्रतिषेधेन नुडिष्यत इति तद्युक्तम्। 'ऋन्नद्यापः' इति सूत्रितेऽपि ऋदन्तान्नुट् सिध्यत्येवेति ह्रस्वग्रहणसामर्थ्यस्यानुपक्षीणत्वादिति दिक्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नेन त्वारम्भसामर्थ्यात्परिभाषा बाध्यते । रामे । रामयोः । सुप्येत्वे कृते । २१०

सन्निपातपरिभाषाविरोधस्तुल्य इत्यत आह—**नामीत्यनेन त्विति** । यद्यत्र नामीति दीर्घो न स्यात्तर्हि तदारम्भो व्यर्थः स्यात्। ततश्च निरवकाशत्वाद्रामाणामित्यादौ 'नामि' इति दीर्घः सन्निपातपरिभाषां बाधित्वा प्रवर्तते । 'सुपि च' इति दीर्घस्तु रामाभ्यामित्यादौ सावकाशत्वाद्रामाणामित्यादौ नामि परे सन्निपातपरिभाषां बाधितुमर्हति । तस्माद्रामाणामित्यादौ नामि परे दीर्घप्रवृत्तौ सन्निपातपरिभाषां बाधितुं 'नामि' इति दीर्घारम्भः । ननु 'नामि' इति दीर्घो निरवकाशत्वात्सन्निपातपरिभाषां बाधत इत्ययुक्तम्, यत्र ह्रस्वान्तसन्निपातमनुपजीव्यैव नुटः प्रवृत्तिस्तत्र सन्निपातपरिभाषानुपमर्देनैव 'नामि' इति दीर्घप्रवृत्तेः सावकाशत्वात्; यथा—कतीनामित्यत्र । तत्र हि 'षट्चतुर्भ्यः–' इति नुट्। षट्संज्ञकेभ्यश्चतुरश्च परस्याऽऽमो नुट् स्यादिति हि तदर्थ[1] इति चेत्, एवं हि सति कतेर्नामीत्येव सूत्र्येत । अजन्तस्याङ्गस्य नामि दीर्घ इत्येवंपरं 'नामि' इति सामान्य-

**परिभाषाविरोधादिति** । कृताकृतप्रसङ्गित्वेन 'नामि' इति दीर्घस्य नित्यत्वात्परोऽपि 'सुपि च' इति दीर्घो न प्रवर्तते इति नोक्तम् । 'शब्दान्तरस्य प्राप्नुवन्विधिरनित्यो भवति' इति 'नामि' इति दीर्घस्याप्यनित्यत्वात् । **आरम्भसामर्थ्यादिति** । 'सुपि च' इत्यस्य तु न सामर्थ्यम्, रामाभ्यामित्यादौ सावकाशत्वादिति भावः । ननु कतीनामित्यत्र परत्वात् 'षट्चतुर्भ्यश्च' इति नुटि 'नामि' इति दीर्घः संनिपातपरिभाषामबाधित्वैव प्रवर्तत इत्यारम्भसामर्थ्यस्योपक्षयाद् 'नामि' इति सूत्रमपि रामाणामित्यत्र संनिपातपरिभाषया न प्रवर्तते । तथा च 'आचार्याणाम्' इति निर्देशेनोक्तपरिभाषाया अनित्वत्यमाश्रित्य 'सुपि च' इति दीर्घ एव परत्वात् प्रवर्ततामिति चेद् अत्र केचित्समाधयन्ति । चतुर्ग्रहणसाहचर्याद् हलन्तषट्संज्ञकादेव परस्यामः षट्संज्ञाश्रयो नुड् भवति न तु कतिशब्दात् परस्यामः, तथा च कतीनामित्यत्र ह्रस्वाश्रय एव नुडित्यारम्भसामर्थ्यं नोपक्षीणमिति । तदपरे न क्षमन्ते । रेफो यथा हल्संज्ञकस्तथा अम्संज्ञकोऽपि भवतीत्यमन्तषट्संज्ञकादेव परस्यामः षट्संज्ञाश्रयो नुड् भवति न तु षकारान्तात्परस्येति वक्तुं शक्यतया षण्णामित्यत्र नुडभावप्रसङ्गात् । तस्मादिह साहचर्यं न ग्राह्यमेव । अन्ये तु 'षट्चतुर्भ्य–' इति बहुवचननिर्देशादर्थपरोऽयं निर्देशः, तथा चार्थे प्राधान्यं यत्र तत्रैव षट्संज्ञाश्रयो नुड् भवति, न तु प्रियपञ्चां प्रियषषामित्यादौ इति सिद्धान्ताद् बहिरङ्गः षट्संज्ञाश्रयो नुट् । तथा चान्तरङ्गत्वात्कतीनामित्यत्र ह्रस्वाश्रय एव नुडिति 'नामि इति दीर्घः संनिपातपरिभाषां बाधित्वैव प्रवर्तते, ततश्चारम्भसामर्थ्यादिति मूलोक्तग्रन्थस्य न काप्यनुपपत्तिरिति समादधुः । इतरे तु आरम्भसामर्थ्या-

१ तदर्थः । एवं हि सति सुपि चेतिवत् कतेर्नामीत्येव—इति क ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

**अपदान्तस्य मूर्धन्यः।** (८-३-५५) आ पादपरिसमाप्तेरधिकारोऽयम् । २११ **इण्कोः।** (८-३-५७) इत्यधिकृत्य। २१२ **आदेशप्रत्यययोः।** (८-३-५९) 'सहेः साडः सः' ( सू ३३५ ) इति सूत्रात् 'सः' इति षष्ठ्यन्तं पदमनुवर्तते। इण्कवर्गाभ्यां परस्यापदान्तस्यादेशः प्रत्ययावयवश्च यः सकारस्तस्य मूर्धन्यादेशः

---

सूत्रं नारभ्येत। उक्तं हि भाष्ये—'न ह्येकमुदाहरणं योगारम्भं प्रयोजयति' इति। एकस्य शब्दस्य साधनाय सामान्यसूत्रं नारम्भणीयमित्यर्थः। अन्यथा 'मुद्गादण्' इत्यनुपपत्तेरिति कैयटः। न चैवं सति कतिशब्दस्याधिकस्य प्रवेशे गौरवमिति वाच्यम्, 'न तिसृचतसृ' इति नामि दीर्घनिषेधाकरणेन लाघवात्। एवं च कतेर्नामीत्यनुक्त्वा 'नामि' इति सामान्यसूत्रारम्भसामर्थ्याद्रामाणामित्यादावपि 'नामि' इति दीर्घः सन्निपातपरिभाषां बाधित्वा निविशत इति युक्तम्। एवं च आरम्भसामर्थ्यादिति मूलमपि कतेर्नामीत्यनुक्त्वा 'नामि' इति सामान्यसूत्रारम्भसामर्थ्यादिति व्याख्येयमित्यलं विस्तरेण।

**अथ सप्तमीविभक्तिः।** ङेर्ङकार इत्। राम इ इति स्थिते 'आद् गुणः' इति मत्वाह—**राम इति। रामयोरिति।** षष्ठीद्विवचनवत्। **सुप्येत्वे कृत इति।** पकारस्येत्त्वे, लोपे, 'बहुवचने झल्येत्' इत्येत्वे कृत इत्यर्थः। रामे सु इति स्थिते 'आदेशप्रत्यययोः' इति षत्वं विधास्यन्नाह—**अपदान्तस्य।** मूर्धन्यः–मूर्धस्थानकः। अष्टमाध्यायस्य तृतीयपादे मध्यत इदं सूत्रं पठितम्। इत आरभ्यैतत्पादसमाप्तिपर्यन्तमिदमधिक्रियत इत्यर्थः। **इण्कोः। इत्यधिकृत्येति।** उत्तरत्र विधिष्वनुवर्तत इति भावः। इण् च कुश्चेति समाहारद्वन्द्वः। पुंस्त्वमार्षम्। इतरेतरयोगद्वन्द्वे त्वेकवचनमार्षम्। इणिति परणकारेण प्रत्याहारः। कुः कवर्गः। अथ षत्वविधायकं सूत्रमाह—**आदेश। षष्ठ्यन्तमिति।** 'सहेः साडः सः' इति सूत्रे स् इत्यस्मात् षष्ठ्येकवचने

---

दित्यस्यायमर्थः 'न तिसृचतसृ' इति निषेधारम्भसामर्थ्यादिति। तिसृणामित्यत्र ह्रस्वान्तलक्षणे नुटि कृते 'नामि' इति दीर्घप्रवृत्तौ हि 'न तिसृ–' इति निषेध आरभ्यते। संनिपातपरिभाषया दीर्घाप्रवृत्तौ तु किमनेन निषेधेन। अतो ज्ञायते 'नामि' इति दीर्घः संनिपातपरिभाषां बाधत इति। यैस्तु 'ह्रस्वनद्यापः–' इत्यत्र ह्रस्वग्रहणं प्रत्याख्यायते, तैस्तु 'नामि' इति दीर्घे आरम्भसामर्थ्यं नाश्रयणीयमेव। **अपदान्तस्य।** ष इत्येव सिद्धे मूर्धन्यग्रहणम् 'इणः षीध्वम्–' इति ढत्वार्थम्। चकृढ्वे। अकृढ्वम्। **इण्कोः।** समाहारद्वन्द्वे सौत्रं पुंस्त्वम्। कोः किम्, गवात्सु। गवाङ्क्षु। **आदेशप्रत्यययोः।** प्रत्ययशब्दः प्रत्ययावयवे लाक्षणिकः, 'हलि सर्वेषाम्' इति निर्देशात्, 'सात्पदाद्योः' इत्यत्र सातिग्रहणाच्च लिङ्गादित्याशयेन व्याचष्टे—**आदेशः प्रत्ययावयवश्चेति।** यदि तु आदेशावयवो गृह्येत, तर्हि तिसृणामित्यादौ दोषः। यद्यपि सकारोच्चारणसामर्थ्यात्तत्र

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्यात्। विवृताघोषस्य सस्य तादृश एव षः। रामेषु। 'इण्कोः' किम्—रामस्य।

---

सति 'सः' इति निर्दिष्टमिति भावः। तच्चेह द्विवचनान्ततया विपरिणम्य 'आदेशप्रत्यययोः' इत्यत्र संबध्यते। ततश्च इण्कवर्गाभ्यां परयोरपदान्तयोरादेशात्मकप्रत्ययावयवात्मकयोः सकारयोर्मूर्धन्यः स्यादित्यर्थः। फलितमाह—**इण्कवर्गाभ्यामित्यादिना**। प्रौढमनोरमायां तु आदेशप्रत्यययोरित्येकापि षष्ठी प्रत्ययविषये अवयवार्थिका (आदेशविषये चाभेदार्थिका) तथा च आदेशस्य प्रत्ययावयवस्य च सकारस्येति लभ्यत इति प्रत्ययशब्दस्य लक्षणां विनोक्तम्। सहविवक्षाभावेऽपि सौत्रो द्वन्द्व इति च स्वीकृतम्। यदि तु आदेशविषयेऽपि अवयवषष्ठी स्याद्—आदेशावयवस्य सस्य ष इति, तर्हि तिस्रः तिसृणामित्यादौ दोषः। न च 'त्रिचतुरोः स्त्रियाम्' इत्यत्रादेशे सकारोच्चारणसामर्थ्यान्न तत्र षत्वमिति वाच्यम्, तिस्र इत्यत्र 'न रपरसृपिसृजिस्पृशिस्पृहिसवनादीनाम्' इति षत्वनिषेधेन चरितार्थत्वात्। विसंविसमित्यादौ सकारस्य आदेशावयवतया षत्वापत्तेश्च, 'नित्यवीप्सयोः' इत्याष्टमिकद्विर्वचनस्यादेशरूपताया[२] वक्ष्यमाणत्वात्। प्रत्ययो यः सकारस्तस्येति व्याख्याने तु जिगीषुरित्यादावेव स्यात्, रामेषु इत्यादौ न स्यात्। अत आदेशः प्रत्ययावयवश्च यः सकारस्तस्येति व्याख्यातम्। प्रत्ययावयवलक्षणायां च 'हलि सर्वेषाम्' इति निर्देशो लिङ्गम्। **विवृताघोषस्येति**। मूर्धन्यत्वम् ऋटुरषेष्वविशिष्टम्। विवृतत्वरूपाभ्यन्तरप्रयत्नवतः अघोषरूपबाह्यप्रयत्नवतश्च सकारस्य तदुभयात्मकः षकार एव भवतीत्यर्थः। टकारनिवारणायाद्यं विशेषणम्। ऋकारवारणाय द्विती-

---

षत्वं न स्यात्, तथापि विसंविसं मुसलंमुसलमित्यादौ षत्वं दुर्वारं स्यात्। आष्टमिकद्विर्वचनस्यादेशरूपत्वात्। यदि तु प्रत्ययो यः सकार इति गृह्येत, तर्हि रामेषु करिष्यतीत्यादौ न स्यात्, किं तु 'इन्द्रो मा वक्षत्' इत्यादावेव स्यात्। इह मनोरमायामेकापि षष्ठी विषयभेदाद् भिद्यत इत्युक्त्वा सहविवक्षाभावेऽपि सौत्रत्वाद् द्वन्द्व इत्युक्तम्, तत्तु प्रत्ययशब्दे लक्षणामनङ्गीकृत्य यथाश्रुताभिप्रायेणोक्तमिति बोध्यम्। **विवृताघोषस्येति**। विवृतस्य सस्य तादृश एवेत्युक्ते ऋकारेऽतिप्रसङ्गस्तद्वारणायाघोषस्येति। अघोषस्येत्येतावदुच्यमाने ठकारेऽतिप्रसङ्गस्तद्वारणायोभयमुपात्तम्। **तादृश एव ष इति**। तादृशः ष एवादेशो भवति नान्य इत्यर्थः। ननु दधिसेचौ दधिसेच इत्यादौ प्राक् सुबुत्पत्तेः समासे षत्वं वारयितुं पदादादिः पदादिरिति पञ्चमीसमासो भाष्ये उक्तस्ततश्चेहापि 'सात्पदाद्योः' इति निषेधः स्यात्, करिष्यतीत्यादौ षत्वविधेः सावकाशत्वादिति चेन्मैवम्, 'स्वादिषु' इति या पदसंज्ञा तामाश्रित्य उक्तनिषेधो न प्रवर्तत इति सातिग्रहणेन ज्ञापितत्वात्। **रामस्येति**। 'टाङसिङसामिनात्स्याः' इति वक्तव्ये सका-

---

१ कोष्ठान्तर्गतः पाठो नास्ति—क। २ तया—इति क।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

'अदिशप्रत्ययोः' किम्—सुपीः । सुपिसौ । सुपिसः । 'अपदान्तस्य' किम्-हरिस्तत्र । एवं कृष्णमुकुन्दादयः । २१३ सर्वादीनि सर्वनामानि । (१-१-२७)

---

यम् । रामेष्विति । ननु सु इत्यस्य व्यपदेशिवद्भावेन सुबन्तत्वेन पदत्वात् सात्पदाद्योरिति षत्वनिषेधः स्यादिति चेन्न, प्रत्ययग्रहणे यस्मात्स विहितस्तदादेरेव ग्रहणादित्यलम् । सुपिसाविति । पिस् गतौ, क्विप्, धातुसकारोऽयम्, नत्वादेशः, नापि प्रत्ययावयव इति भावः । अथ सर्वादिशब्देषु सर्वनामकार्यं विधास्यन् सर्वनामसंज्ञामाह—सर्वादीनि । सर्व आदिः प्रथमावयवो येषां तानि सर्वादीनि । सर्वशब्दः स्वरूपपरः । नपुंसकवशात् शब्दरूपाणीति विशेष्यमध्याहार्यम् । तदाह—सर्वादीनि शब्देत्यादिना । ननु बहुव्रीहेरन्यपदार्थप्रधानत्वात् सर्वशब्दस्य च समासवर्तिपदार्थत्वादन्यपदार्थत्वाभावाद्विश्वादिशब्दानामेव सर्वादिशब्देन बहुव्रीहिणावगमात् सर्वनामसंज्ञा स्यात्, न तु सर्वशब्दस्यापीति चेत्, उच्यते—सर्व आदिर्यस्य समुदायस्येति विग्रहः । सर्वशब्दघटितः समुदायः समासार्थः । समुदाये च प्रवर्तमाना सर्वनामसंज्ञा क्वचिदपि अप्रयुज्यमाने तस्मिन् वैयर्थ्यादानर्थक्यात्तदङ्गेष्विति न्यायेनावयवेष्ववतरन्ती अविशेषात् सर्वशब्देऽपि भवति । एवं चात्र सर्वशब्दस्य स्वरूपेण वर्तिपदार्थता, समुदायरूपेण त्वन्यपदार्थप्रवेशः । न च समुदायस्यान्यपदार्थत्वे सर्वादीनीति बहुवचनानुपपत्तिः शङ्क्या, सर्वशब्दघटितस्य विवक्षितावयवसंख्यस्य समूहस्यान्यपदार्थत्वात् । उद्भूतावयवभेदः समुदायः समासार्थ इति कैयटोक्तेरप्ययमेवार्थः । अतो न बहुवचनस्यानुपपत्तिः । तदेवं व्याख्याने 'हलि सर्वेषाम्' इत्यादिनिर्देशः प्रमाणम् । सर्वशब्दस्य सर्वनामत्वाभावे तु सर्वेषामित्यादौ सर्वनामकार्याणि सुडादीनि न स्युः । तथा च सर्वादीनीति तद्गुणसंविज्ञानो बहुव्रीहिः । तस्यान्यपदार्थस्य गुणा विशेषणानि वर्तिपदार्थरूपाणि,

---

रोच्चारणसामर्थ्यात्षत्वं न भवेदिति, नडादिषु अमुष्येति निपातनात्ततः फगादौ 'आमुष्यायण—' इत्यादिवार्तिकनिर्देशाच्च अमुष्येत्यत्र तु षत्वं भवेद् इति यदि तर्हि विश्वपास्वित्यादि प्रत्युदाहर्तव्यम् । न च तत्रापि षुबिति वक्तव्ये सुबिति सकारोच्चारणसामर्थ्यादेव न भवेदिति शङ्क्यम्, लिट्सु प्रशान्त्सु इत्यत्र 'ङः सि धुट्' 'नश्च' इति धुटः प्रवृत्तये सकारोच्चारणस्यावश्यं स्वीकर्तव्यत्वादिति दिक् । सर्वादीनीति । तद्गुणसंविज्ञानो बहुव्रीहिरयम्, 'अदः सर्वेषाम्' इति लिङ्गात् । आदिशब्दोऽत्रावयववाची, सर्व आदिराद्यावयवो येषां तानीति विग्रहः, उद्भूतावयवभेदः समुदायः सामासार्थ इति बहुवचनम् । तस्य समुदायस्य युगपल्लक्ष्ये प्रयोगाभावाद् 'आनर्थक्यात्तदङ्गेषु' इति न्यायेन तदवयवेषु प्रवर्तमाना सर्वनामसंज्ञा अविशेषात्सर्वशब्देऽपि प्रवर्तत इति युक्तं तद्गुणसंविज्ञानत्वम् । तस्यान्यपदार्थस्य गुणा वर्तिपदार्थरूपाणि विशेषणानि तेषां

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्वादीनि शब्दस्वरूपाणि सर्वनामसंज्ञानि स्युः। 'तदन्तस्यापीयं संज्ञा' 'द्वन्द्वे च' (सू २२२) इति ज्ञापकात्। तेन 'परमसर्वत्र' इति त्रल् 'परमभवकान्' इत्यत्राकच्

---

तेषां संविज्ञानं क्रियान्वयितया विज्ञानं यत्र स तद् गुणसंविज्ञान इति व्युत्पत्तिः। यत्र संयोगसमवायान्यतरसंबन्धेनान्यपदार्थे वर्तिपदार्थान्वयः तत्र प्रायेण तद्गुणसंविज्ञानो बहुव्रीहिः। यथा—द्विवासा देवदत्तो भुङ्क्ते, लम्बकर्णं भोजयेत्यादौ। तत्र हि वाससोः कर्णयोश्च भुजिक्रियान्वयाभावेऽपि संनिहितत्वमात्रेण तद्गुणसंविज्ञानत्वम्। प्रकृते च समुदाये अन्यपदार्थे सर्वशब्दस्य समवायान्तर्गतारोपितावयवावयविभावसंबन्धसत्त्वात्तद्गुणसंविज्ञानत्वम्। स्वस्वामिभावादिसम्बन्धेनान्यपदार्थे वर्तिपदार्थान्वये त्वतद्गुणसंविज्ञानो बहुव्रीहिः। यथा—चित्रगुमानयेत्यादावित्यलम्। ननु सर्व विश्व इत्येवं सर्वादिशब्दानां केवलानामेव सर्वादिगणे पाठात् परमसर्वादिशब्दानां कथं सर्वनामतेत्यत आह—**तदन्तस्यापीति**। **द्वन्द्वे चेतीति**। 'द्वन्द्वे च' इत्यनेन सर्वादिशब्दान्तद्वन्द्वस्य सर्वनामसंज्ञा प्रतिषिध्यते वर्णाश्रमेतराणामित्यादौ। यदि केवलानामेव सर्वादिगणपठितानां सर्वनामता, न तु तदन्तानामपि, तर्हि तत्प्रतिषेधो व्यर्थः स्यात्। अतस्तदन्तस्यापीयं संज्ञेति विज्ञायत इत्यर्थः। ननु परमसर्वादिशब्देषु गणपठितानां केवलानामेव सर्वादिशब्दानामस्तु सर्वनामता, मास्तु तदन्तानामपि। 'सर्वनाम्नः स्मै' इत्यादिसर्वनामकार्याणामङ्गाधिकारस्थत्वेन पदाङ्गाधिकारे तस्य च तदन्तस्य चेति परिभाषया परमसर्वस्मै इत्यादिषु सिद्धेरित्यत आह—**तेनेति**। तदन्तस्यापि संज्ञाबलेनेत्यर्थः।

---

कार्यान्वयितया संविज्ञानं यत्र स तद्गुणसंविज्ञान इत्यक्षरार्थः। लोकवेदयोरपि संयोगसमवायान्यतरसंबन्धे 'लोहितोष्णीषा ऋत्विजश्चरन्ति', 'लम्बकर्णमानय' इत्यादौ तद्गुणसंविज्ञानत्वमेव। स्वस्वामिभावसंबन्धे त्वतद्गुणसंविज्ञानत्वं चित्रगुमानयेत्यादौ। ननु सर्वनामानीत्यत्र 'पूर्वपदात्संज्ञायाम्–' इति णत्वं कस्मान्न भवति। सौत्रत्वान्नेति चेल्लोके सर्वनामशब्दस्य साधुत्वापत्त्या सर्वनामसंज्ञानि स्युरित्युत्तरग्रन्थस्यासाधुत्वापत्तेरितिचेन्मैवम्, 'निपातनाण्णत्वं न' इति भाष्योक्तव्याख्याश्रयणादिष्टसिद्धेः। अत्र भाष्यानुसाराद् 'बाधकान्येव निपातनानि भवन्ति' इति पक्ष आश्रितः। 'अबाधकान्यपि निपातनानि भवन्ति' इति पक्षस्तु 'विभाषा फाल्गुनी–' इति सूत्रे श्रवणाशब्दे निपातितेऽपि श्रावणीति प्रयोगोऽपि साधुरित्येवमर्थमाश्रयिष्यते। विशेषणानुगुणं विशेष्यमध्याहरति—**शब्दरूपाणीति**। **द्वन्द्वे चेति**। स हि निषेधः समुदायस्यैव न त्ववयवानामिति वक्ष्यति, न च तदन्तविधिं विना समुदाये संज्ञाप्रसक्तिरस्तीति भावः। नन्वङ्गाधिकारे तदन्तविधिं विनैव परमसर्वस्मा इत्यादौ स्मायादिसिद्धेस्तदन्तसंज्ञायाः किं फलमित्यत आह—**तेनेति**। न चेहापि प्रातिपदिकादित्यनुवृत्तेः सर्वनाम्नस्तद्धि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सिध्यति । **२१४ जसः शी ( ७-१-१७ )** अदन्तात्सर्वनाम्नः परस्य जसः शी स्यात् । अनेकाल्त्वात्सर्वादेशः । न च 'अर्वणस्तृ-' ( सू ३६४ ) इत्यादाविव 'नानुबन्धकृतमनेकाल्त्वम्' ( प ६ ) इति वाच्यम् । सर्वादेशत्वात्प्रागित्संज्ञाया

---

**सिध्यतीति** । 'सप्तम्यास्त्रल्' इति सप्तम्यन्तात् सर्वनाम्नो विधीयमानस्त्रल् 'अव्यय-सर्वनाम्नामकच् प्राक्टेः' इत्यज्ञाताद्यर्थेषु विधीयमानोऽकच्च सिध्यतीत्यर्थः । चकारात् 'पञ्च-म्यास्तसिल्' इति तसिल् च । न चावयवगतसर्वनामत्वेन तत्सिद्धिरिति वाच्यम्, 'कुत्सिते' इति सूत्रस्थभाष्यरीत्या संख्याकारकाभ्यां पूर्णार्थस्य इतरान्वयेन सुबन्तादेव तद्धितो-त्पत्त्यवगमेन सर्वनामप्रकृतिकसुबन्तार्थगतकुत्सादिविवक्षायां सर्वनामावयवटेः प्रागक-जित्यर्थपर्यवसानात्तदन्तसंज्ञाभावे तदसिद्धेरिति भावः ।

सर्वशब्दाद् जसि पूर्वसवर्णदीर्घे प्राप्ते । **जसः शी** । अतो भिस इत्यस्मादत इत्यनुवर्तते । 'सर्वनाम्नः स्मै' इत्यतः सर्वनाम्न इत्यनुवर्तते । तदाह—**अदन्तादित्या-दिना** । शी इति दीर्घोच्चारणं 'नपुंसकाच्च' इत्युत्तरार्थम् । तेन वारिणी इति सिध्यति । **अनेकाल्त्वादिति** । न तु शित्त्वप्रयुक्तं सर्वादेशत्वमत्रेति भावः । ननु 'नानुबन्ध-कृतमनेकाल्त्वम्' इत्यस्ति परिभाषा । अनुबन्ध इत्, तत्प्रयुक्तमनेकाल्त्वं सर्वादेशनिमित्तं न भवतीत्यर्थः । ततश्च शी इत्यत्र शकारस्य लशकतद्धित इति इत्संज्ञकत्वात् कथं तत्प्रयुक्तमनेकाल्त्वम् । अत एव 'अर्वणस्त्रसावनञः' इत्यत्र ऋकारमितमादाय तृ इत्या-देशस्य नानेकाल्त्वम् । अन्यथा तस्यापि सर्वादेशत्वापत्तेः । अतः शित्त्वप्रयुक्तमेवात्र सर्वा-देशत्वमाश्रयितुं युक्तमित्याशङ्क्य निराकरोति—**न चेत्यादिना** । अर्वणस्तृ इत्यादा-विव नानुबन्धकृतमनेकाल्त्वमिति नेत्यन्वयः । शी इति शकारस्य 'लशक्वतद्धिते' इति इत्संज्ञा वक्तव्या । तेन च सूत्रेण प्रत्ययादिभूताना लशकवर्गाणामित्संज्ञा विहिता । प्रकृते च शी इत्यस्य प्रत्ययाधिकारस्थत्वाभावान्न स्वतः प्रत्ययत्वम्, किं तु जसादेशत्वेन स्थानिवद्भावात् प्रत्ययत्वं वक्तव्यम् । स्थानिवद्भावश्च आदेशभावमापन्नस्य शी इत्यस्य भवति । एवं चादेशत्वसिद्धेः प्रागादेशविधिदशायां शी इति शकारस्य इत्संज्ञाया असिद्धे-रनेकाल्त्वमप्रतिहतम् । अत एव शित्त्वात् सर्वादेश इत्यपि निरस्तम् । तृ इत्यत्र तु आदेशभावात् प्रागेव ऋकारस्य इत्संज्ञकत्वान्न तत्प्रयुक्तमनेकाल्त्वमिति वैषम्यमित्यभिप्रेत्य परिहरति—**सर्वादेशत्वात्प्रागिति** । शीभावे सति सर्व ई इति स्थिते आद् गुणः

---

शेषणत्वे तदन्तविधिर्न भविष्यतीति वाच्यम् । 'समासप्रत्ययविधौ प्रतिषेधः' इत्युक्त्वा-दिति भावः । **अकच्चेति** । चकारात् परमसर्वत्र इत्यत्र त्रल् । **जसः शी** । दीर्घो-च्चारणमुत्तरार्थम् । वारिणी, मधुनी । **अनेकाल्त्वादिति** । न तु शित्त्वादिति भावः । **इत्संज्ञाया एवाभावादिति** । तृ इत्यत्रोपदेशकाल एव ऋकारस्येत्संज्ञा, शीभावस्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवाभावात्। सर्वे। २१५ **सर्वनाम्नः स्मै (७-१-१४)** अतस्सर्वनाम्नो ङे इत्यस्य स्मै स्यात्। सर्वस्मै। २१६ **ङसिङ्योः स्मात्स्मिनौ। (७-१-१५)** अतस्सर्वनाम्न एतयोरेतौ स्तः। सर्वस्मात्। २१७ **आमि सर्वनाम्नः सुट्। (७-१-५२)** अवर्णान्तात्परस्य सर्वनाम्नो विहितस्यामः सुडागमः स्यात्। एत्वषत्वे। सर्वेषाम्। सर्वस्मिन्। शेषं रामवत्। एवं विश्वादयोऽप्यदन्ताः।

---

सिद्धवत्कृत्याह—**सर्वे इति**। सर्वशब्दात् चतुर्थ्येकवचने 'ङेर्यः' इति प्राप्ते। **सर्वनाम्नः स्मै**। 'अतो भिस–' इत्यस्मादत इत्यनुवर्तते, 'ङेर्यः' इत्यतो ङेरिति च। तदाह—**अतः सर्वेत्यादिना**। सर्वशब्दात् पञ्चम्येकवचने 'टाङसिङसाम्–' इति प्राप्ते। **ङसिङ्योः**। ङसिश्च ङिश्चेति द्वन्द्वः। 'अतो भिस' इत्यस्मादत इति, 'सर्वनाम्नः स्मै' इत्यतः सर्वनाम्न इति चानुवर्तते। तदाह—**अतः सर्वेति। एतयोरिति**। ङसि-ङ्योरित्यर्थः। **एताविति**। स्मात्स्मिनावित्यर्थः। स्मादादेशस्य स्थानिवद्भावेन विभक्तित्वात् 'न विभक्तौ–' इति तकारस्य नेत्त्वमिति मत्वाह—**सर्वस्मादिति**। सर्व आम् इति स्थिते 'ह्रस्वनद्यापः' इति नुटि प्राप्ते। **आमि सर्वनाम्नः**। 'आज्जसेरसुक्' इत्यतोऽनुवृत्तेन आदिति पञ्चम्यन्तेन 'अङ्गस्य' इत्यधिकृतं पञ्चम्या विपरिणतं विशेष्यते, तदन्तविधिः, परस्येत्यध्याहार्यम्। 'उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्' इति न्यायेन 'तस्मादित्युत्तरस्य' इति परिभाषया आमीति सप्तमी आम इति षष्ठ्यन्तमापद्यते। सर्वनाम्न इति तु विहितविशेषणम्। ततश्च अवर्णान्तादङ्गात् परस्य सर्वनाम्नो विहितस्यामः सुडागमः स्यादित्यर्थः सम्पद्यते। तदाह–**अवर्णान्तादित्यादिना**। अवर्णान्तादित्यनन्तरमङ्गादिति शेषः। अवर्णान्तात्सर्वनाम्नो विहितस्याम इति व्याख्याने तु येषां तेषामित्यादौ सुडागमो न स्यात्। तत्र आमो दकारान्ताद्विहितत्वात्। सर्वनाम्नः परस्येति तु न व्याख्यातम्। तथा सति वर्णाश्रमेतराणामित्यसिद्धेरित्यग्रे मूल एव स्पष्टीभविष्यति। **एत्वषत्वे इति**। 'बहुवचने झल्येत्' इत्येत्वम्। संनिपातपरिभाषा त्वत्र न प्रवर्तत इति 'बहुवचने झल्येत्' इत्यत्रोक्तम्। 'आदेशप्रत्यययोः' इति षत्वम् सुटोऽपि 'तदागमास्तद्ग्रहणेन गृह्यन्ते' इति प्रत्ययावयवत्वादिति भावः। **सर्वेषामिति**। नन्वामीति सप्तमीनिर्देशसामर्थ्यात् 'तस्मादित्युत्तरस्य' इति न प्रवर्तते। ततश्च आमि परे प्रकृतेरेव सुडागमो युक्त इति चेन्न, सप्तमीनिर्देशस्य 'त्रेस्त्रयः' इत्युत्तरार्थमावश्यकत्वादिति भावः। सप्तम्येकवचनस्य 'ङसिङ्योः–' इति स्मिन्नादेशं सिद्धवत्कृत्याह—**सर्वस्मिन्निति। शेषमिति**। शिष्यत इति शेषम् कर्मणि घञ्। 'घञजबन्ताः पुंसि' इति तु प्रायिकमिति भावः। **एवमिति**। सर्व-

---

तु सर्वादेशत्वानन्तरं स्थानिवत्त्वेन प्रत्ययत्वे लब्धे 'लशक्वतद्धिते' इति प्रत्ययादेशस्येत्संज्ञेति दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमिति भावः। **अवर्णान्तादिति**। अवर्णान्ता-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्वादयश्च पञ्चत्रिंशत्। सर्व विश्व उभ उभय डतर डतम अन्य अन्यतर इतर त्व त्व नेम सम सिम । 'पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायामसंज्ञायाम्'

---

शब्दवदित्यर्थः। न च सर्वशब्दस्य बहुत्वव्यापकसर्वत्वात्मकधर्मविशेषप्रवृत्तिनिमित्तकत्वाद् बहुवचनमेव न्याय्यमिति वाच्यम्, सर्वशब्दो हि बह्ववयवारब्धसमुदाये वर्तते। तत्र यदा अनुद्भूतावयवः समुदायो विवक्षितः तदा भवत्येकवचनम्। यथा—सर्वो लोक इति । अनुद्भूतत्वम् अविवक्षितसंख्याकत्वम्। यदा तु अनुद्भूतावयवकौ समुदायौ तदा द्विवचनम्। यथा सर्वौ व्यूहाविति। यदा तु उद्भूतावयवसमुदायः तदा बहुवचनम्। यथा सर्वे जना इति।

अथ के ते सर्वादय शब्दाः? कति च ते? इत्यत्राह—**सर्वादयश्च पञ्चत्रिंशदिति**। पञ्च च त्रिंशच्चेति द्वन्द्वः, पञ्चाधिकात्रिंशदिति शाकपार्थिवादित्वात् तत्पुरुषो वा। 'संख्यायास्तत्पुरुषस्योपसंख्यानम्' इति डच्तु समासान्तो न भवति। अन्यत्राधिकलोपादित्युक्तेः। **पूर्वपरावरेति**। गणान्तर्गतं सूत्रम्। व्यवस्थायामसंज्ञायां च पूर्वादीनि सप्त सर्वादिगणप्रविष्टानि वेदितव्यानीत्यर्थः। सर्वनामसंज्ञा तु 'सर्वादीनि सर्वनामानि' इत्येव सिध्यति। 'स्वमज्ञाति—' इति, 'अन्तरं बहिः—' इति च गणसूत्रद्वयमेवमेव योज्यम्। व्यवस्थादिशब्दा अग्रे मूल एव व्याख्यास्यन्ते। इतिशब्दः सर्वादि-

---

दन्तात्परस्येत्यर्थः। तेन येषां तेषामित्यादौ नाव्याप्तिः। **सर्वनाम्नो विहितस्येति**। सर्वनाम्नः परस्येति तु नोक्तं वर्णाश्रमेतराणामित्यत्र सुट्प्रसङ्गात्, 'द्वन्द्वे च' इत्यनेन समुदायस्य सर्वनामसंज्ञानिषेधेऽप्यवयवस्यानिषेधात्। विहितविशेषणत्वाश्रयणे प्रमाणं तु 'दक्षिणोत्तरपूर्वाणाम्' इति भाष्यकारप्रयोग एव। **आम इति**। सर्वनाम्न इति पञ्चम्या निरवकाशतया आमीति सप्तम्याः 'त्रेस्त्रयः' इत्युत्तरसूत्रे कृतार्थायाः षष्ठी प्रकल्प्यत इति भावः। **पञ्चत्रिंशदिति**। पञ्च च त्रिंशच्चेति द्वन्द्वः। पञ्चाधिका-त्रिंशदिति तत्पुरुषो वा। न च 'संख्यायास्तत्पुरुषस्य—' इति वक्ष्यमाणवार्तिकेन समासान्तो डच् स्यादिति वाच्यम्। तत्रैव वार्तिके 'अन्यत्राधिकलोपात्' इत्युक्त्वात्। ननु सर्वेषां नाम सर्वनामेत्यन्वर्थत्वात् संज्ञायाः सर्वविश्वादय एव संज्ञिनो भविष्यन्ति, नान्ये इति किमनेन पञ्चत्रिंशदिति परिगणनेन, 'सर्वादीनि—' इति सूत्रेण वा। मैवम्। परिगणनाभावे कृत्स्नसर्वसमस्तादिष्वतिप्रसङ्गात्। एवं च पञ्चत्रिंशत्संख्याकानि सर्वादीन्येव सर्वनामसंज्ञकानि, नान्यानीति नियमाय 'सर्वादीनि—' इति सूत्रमावश्यकम्, न त्वनुनासिकसंज्ञासूत्रमिव मन्दप्रयोजनमिति बोध्यम्। **पूर्वपरावर** । व्यवस्थायामसंज्ञायां यानि पूर्वपरावरदक्षिणोत्तरापराधराणि तानि सर्वादिगणसंनिविष्टानि, नान्यानीत्यर्थः। सर्वनामसंज्ञा तु 'सर्वादीनि सर्वनामानि' इत्यनेनैव सिध्यति। एवमुत्तरसूत्र-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

( ग सू १ ) । 'स्वमज्ञातिधनाख्यायाम्' ( ग सू २ ) 'अन्तरं बहिर्योगोपसंव्यानयोः' ( ग सू ३ )। त्यद् तद् यद् एतद् इदम् अदस् एक द्वि युष्मद् अस्मद् भवतु किम् इति । तत्र उभशब्दो द्वित्वविशिष्टस्य वाचकः । अत एव नित्यं द्विवचनान्तः । तस्येह पाठस्तु 'उभकौ' इत्यकजर्थः । न च कप्रत्ययेनेष्टसिद्धिः । द्विवचनपरत्वाभावेन 'उभयतः' 'उभयत्र' इत्यादाविवायच्प्रसङ्गात्।

---

गणसमाप्तिद्योतनार्थः । तत्र विश्वशब्दोऽपि सर्वशब्दवदेव । उभशब्दे तु विशेषमाह– **तत्रेति** । सर्वादिषु मध्य इत्यर्थः । **अत एवेति** । द्वित्वविशिष्टवाचकत्वादेवेत्यर्थः । **नित्यमिति** । सर्वदा द्विवचनान्त इत्यर्थः । द्विवचनान्त एव, नत्वेकवचनबहुवचने[1] इति यावत् । तेन टाबादि न निवार्यते । नन्वेवं सति 'जसः शीः' 'सर्वनाम्नः स्मै' 'ङसिङ्योः स्मात्स्मिनौ' 'आमि सर्वनाम्नः सुट्' इत्युक्तानां सर्वनामकार्याणां द्विवचने अभावादुभशब्दस्य सर्वादिगणे पाठो व्यर्थ इत्यत आह—**तस्येहेति** । तस्य–उभशब्दस्य, इह–सर्वादिगणे पाठस्तु उभकावित्यत्र 'अव्ययसर्वनाम्नामकच् प्राक्टेः' इत्यकच्प्रत्ययार्थ इत्यर्थः। ननु मास्तु उभशब्दस्य सर्वादिगणे पाठः । मास्तु च सर्वनामता । मास्तु च तत्प्रयुक्तः अकच् । उभशब्दात् स्वार्थिके कप्रत्यये सत्यपि उभकाविति रूपसिद्धेः । न च काकचोः स्वरभेदः शङ्क्यः । 'तद्धितस्य' इति प्रत्ययस्वरेण वा, 'चितः सप्रकृतेः–' इति चित्स्वरेण वा अन्तोदात्तत्वे विशेषाभावात् । उक्तं च भाष्ये 'काकचोः को विशेषः ?' इति । तत्राह—**न चेति** । कप्रत्ययेन उभकावितीष्टरूपसिद्धिर्नचेत्यन्वयः । कुत इत्यत आह— **द्विवचनेति** । द्विवचनपरत्वाभावे उभशब्दादयच् विहितः । अकचि तु सति 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते' इति न्यायेन उभशब्देन उभकशब्दोऽपि गृह्यते । तस्य च उभक औ इत्यस्यां दशायां द्विवचनपरत्वादयच्प्रत्ययो न भवति । कप्रत्यये तु सति तस्य उभशब्दात् परतो विहितत्वेन तन्मध्यपतितन्यायाप्रवृत्त्या उभकशब्दस्य उभशब्देन ग्रहणाभावाद् उभशब्दस्य कप्रत्ययव्यवधानेन द्विवचनपरकत्वाभावाद् अयचि उभयकौ इति स्यात् । यथा उभयत, उभयत्रेत्यत्र द्विवचनपरकत्वाभावादयच्प्रत्ययोऽस्ति

---

द्वयेऽपि बोध्यम् । **अत एवेति** । द्वयोर्द्विवचनस्यैव युक्तत्वादिति भावः । **नित्यं द्विवचनान्त इति** । सर्वदा द्विवचनान्त इत्यर्थः । न चैवम् 'उभादुदात्तो नित्यम्' 'उभस्य सर्वनामत्वे कोऽर्थः' इति सूत्रकारभाष्यकारप्रयोगो विरुध्यत इति शङ्क्यम् । अर्थपरस्यैव नित्यं द्विवचनान्तता, न तु स्वरूपानुकरणपरस्येत्यभ्युपगमात् । अथ सर्वादिषु उभशब्दपाठो व्यर्थः, सर्वनामकार्याणां स्मायादीनां द्विवचनेऽभावात् । न च 'सर्वनाम्नस्तृतीया च' इति सूत्रेणोभाभ्यां हेतुभ्यां उभयोर्हेत्वोरिति षष्ठीतृतीयासिद्धिस्तत्फलमिति वाच्यम् । 'निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम्' इति वार्तिकेनैव

---

१ '–नान्त' इति पाठस्तूचितः प्रतिभाति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तदुक्तम्। 'उभयोऽन्यत्र' (वा २३२)। अन्यत्र द्विवचनपरत्वाभावे।

---

तद्वदित्यर्थः। द्विवचने सति अयच्प्रत्ययो नेत्यत्र किं प्रमाणमित्यत आह—**तदुक्तमिति**। वार्तिककृतेति शेषः। द्विवचने सति अयच्प्रत्ययो नेति यदभिहितं तद् 'उभयोऽन्यत्र' इति वदता वार्तिककृता उक्तमित्यर्थः। अन्यत्रेत्येतद्व्याचष्टे—**अन्यत्र द्विवचनपरत्वाभावे इति**। उदाहृतवार्तिके अन्यत्रेत्यनेन द्विवचनादन्यस्मिन् परे इत्यर्थो विव-

---

गतार्थत्वात्। न च वृत्तिकृता 'सर्वनाम्नस्तृतीया च' इति सूत्रे पठितत्वादिदमपि वार्तिकं सर्वनाम्न एव सर्वविभक्तिप्रापकम्, नान्यस्येति वाच्यम्। भाष्ये 'हेतौ' इति सूत्रे तद्वार्तिकस्य पठितत्वात्। अत एव 'अन्नेन कारणेन वसति' 'अन्नस्य कारणस्य' इत्युदाहृतं हरदत्तेनेत्याशङ्क्याह—**तस्येह पाठस्त्विति**। ननु कप्रत्ययेनापीष्टसिद्धेः किमनेनाकजर्थपाठेन। न च काकचोः स्वरे विशेषोऽस्तीति वाच्यम्। प्रत्ययस्वरेण चित्स्वरेण वा अन्तोदात्तत्वे विशेषाभावादित्याशङ्क्याह—**न चेति**। उभशब्दस्य द्विवचनपरत्वमकच्प्रत्ययो न विहन्ति, टेः प्राग् जायमानत्वात् तन्मध्यपतितस्य तद्ग्रहणेन ग्रहणात्। कप्रत्ययस्तु विहन्त्येव, प्रातिपदिकात्परत्र जायमानत्वादित्याशयेनाह—**द्विवचनपरत्वाभावेनेति**। **अयच्प्रसङ्गादिति**। उभशब्दात्त्रतसोः परतः स्वार्थे यथा अयच् भवति तथा कप्रत्यये सति स्यादिति भावः। यद्यपि स्वार्थे अयच् दृष्टान्तेऽपि दुर्लभस्तथापि 'उभादुदात्तः—' इति सूत्रे 'नित्यम्' इति योगविभागात्सुलभ एव। तथा हि—'उभादुदात्तः'। 'द्वित्रिभ्याम्—' इति सूत्राद्वेति नानुवर्तते, अस्वरितत्वात्। अवयववृत्तेः संख्यावाचिन उभशब्दादवयविन्यर्थे अयच् स्यात्। उभयो मणिः। उभयः पाशः। ततो 'नित्यम्'। उभशब्दाद् वृत्तिविषये नित्यमयच् स्यात् स्वार्थे। तेन उभयतः, उभयत्र, उभयपक्षविनीतनिद्रा इत्यादि सिद्धम्। नन्वेवमकचि कृतेऽप्ययच् दुर्वारः, वृत्तिविषये स्वार्थे नित्यमयजिति त्वयैवोक्तत्वादिति चेत्, एवं तर्हि योगविभागस्येष्टसिद्ध्यर्थतया 'उभौ साभ्यासस्य' इति निर्देशेन च यत्र द्विवचनं न श्रूयते तत्रैवायमिति व्याख्यायते, न तु वृत्तिविषय इति न दोषः। **तदुक्तमिति**। वार्तिककृतेति शेषः। **उभयोऽन्यत्रेति**। उभयेति यः स्वार्थिकाऽयजन्तः सोऽन्यत्र प्रयुज्यते, न तु द्विवचने परत इत्यर्थः। न च उभावित्यादौ द्विवचनपरत्वं दुरुपपादम्, उभयत आश्रयणेऽन्तादिवद्भावविरहादिति वाच्यम्। उभशब्दादुत्पन्नं द्विवचनं लुका नापहृतं यत्र ततोऽन्यत्रायजिति विवक्षितोऽर्थ इति मनोरमायामुक्तत्वात्। एवं च सर्वादिषूभशब्दपाठोऽकजर्थ इति स्थितम्। भाष्ये तु कप्रत्ययस्य स्वार्थिकत्वेन स्वार्थाभिधानसमर्थत्वादुभशब्दात्परस्य द्विवचनपरत्वमस्तीत्याश्रित्योभशब्दपाठः सर्वादिगणे प्रत्याख्यातः। मनोरमायां तु भाष्ये प्रत्याख्यानं प्रौढिवादमात्रम्, कृत्रिमस्यैव द्विवचनस्येह ग्रहीतुमुचितत्वाद्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उभयशब्दस्य द्विवचनं नास्तीति कैयटः, अस्तीति हरदत्तः। तस्माज्जस्ययजादेशस्य

---

ज्ञितः, 'अन्याभावो द्विवचनटाब्विषयत्वात्' इति पूर्ववार्तिके द्विवचनस्यैव प्रस्तुतत्वादिति भावः। टाब्ग्रहणं तु तत्राविवक्षितमिति कैयटादिषु स्पष्टम्। ततश्च सर्वनामतानिमित्तकाकजर्थं उभशब्दस्य सर्वादिषु पाठ इति स्थितम्। अत्र यद्वक्तव्यं तत्तद्धितप्रक्रियायाम् 'उभादुदात्तो नित्यम्' इत्यत्र वक्ष्यते।

अथोभयशब्दे विशेषमाह—**उभयशब्दस्येति**। उभौ अवयवौ यस्यावयविनः स उभय मणिः। 'उभादुदात्तः—' इत्ययच्। अवयववृत्तेः संख्यावाचिन उभशब्दादवयविन्यर्थे अयच्प्रत्ययः स्यादिति तदर्थः। द्व्यवयवारब्धो मणिरित्यर्थः। मणेरवयविन एकत्वादुभय इत्येकवचनम्। उभयश्च उभयश्च उभयश्चेत्येवं द्व्यवयवारब्धत्र्यादिमणिविवक्षायां तु बहुवचनम्, उभये मणय इति। उभयश्च उभयश्चेति द्व्यवयवारब्धद्विमणिविवक्षायामुभयौ मणी इति द्विवचनं तु न भवति, उभयोऽन्यत्रेत्युदाहृतवार्तिके उभयशब्दस्य द्विवचनान्तादन्यत्रैव प्रयोगविध्यवगमात्। न च तत्र वार्तिके स्वार्थिकायजन्तस्यैवोभयशब्दस्य ग्रहणम्, स्वार्थिकायजन्तोभयशब्दोपक्रमेणैव तद्वार्तिकप्रवृत्तेरिति वाच्यम्, एतद्वार्तिकव्याख्यावसरे 'उभयो मणिः, उभये देवमनुष्याः' इति भाष्ये उदाहृतत्वेन तयप्समानार्थकायजन्तस्यापि तत्र ग्रहणावगमात्। एतदेवाभिप्रेत्य 'तद्धितश्चासर्वविभक्तिः' इत्यव्ययत्वमुभयशब्दस्य द्विवचनाभावेनासर्वविभक्तित्वेऽपि न भवति, तसिलादयः प्राक्पाशपः, शस्प्रभृतयः प्राक् समासान्तेभ्यः, अम्, आम्, कृत्वोऽर्थाः, तसिवती, नानाञौ, इति परिगणितत्वादिति कैयटेनोक्तम्। तदाह—**कैयट इति**। एवं च उभयः, उभये। उभयम्, उभयान्। उभयेन, उभयैः। उभयस्मै, उभयेभ्यः। उभयस्मात्, उभयेभ्यः। उभयस्य, उभयेषाम्। उभयस्मिन्, उभयेषु। इत्येव रूपाणि। न तूभयावित्यादिद्विवचनान्तप्रयोग इति सिद्धं भवति। हरदत्त इत्यस्वरसोद्भावनम्। तद्बीजं तु उभयोऽन्यत्रेति प्रागुक्तवार्तिकभाष्यविरोध एवेत्यन्यत्र विस्तरः। उभयशब्दाद् जसि 'सर्वादीनि—' इति नित्यां सर्वनामसंज्ञां बाधित्वा परत्वात् 'प्रथमचरमतयाल्पार्धकतिपयनेमाश्च' इति सर्वनामसंज्ञाविकल्पप्राप्तिमाशङ्क्य परिहरति—**तस्मादित्यादिना**। तस्माद्—उभयशब्दाद् जसि सति 'प्रथमचरम—'इति विकल्पे प्राप्ते नित्यैव संज्ञा भवती-

---

अन्यथा ऽतसिलादावतिप्रसक्तत्वादित्यादि स्थितम्। **उभयशब्दस्येति**। उभौ अवयवौ यस्य उभयः। 'उभादुदात्तो नित्यम्' इति तयपोऽयच्। **नास्तीति**। अनभिधानादिति भावः। तथा चोभयशब्दस्य द्विवचनानुत्पादादसर्वविभक्तित्वेनाव्ययत्वे प्राप्ते 'तद्धितश्चासर्वविभक्तिः' इति सूत्रे 'कृत्तद्धितानां ग्रहणं च पाठे' इति भाष्यं कैयटेनावतारितम्। **अस्तीति**। पचतिकल्पं पचतिरूपमित्यादिवारणेन पाठस्योपक्षीणत्वादनभि-

---

१ द्विवचनत्वादिति क, ख।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्थानिवद्भावेन तयप्प्रत्ययान्ततया 'प्रथमचरम' (सू २२६) इति विकल्पे प्राप्ते विभक्तिनिरपेक्षत्वेनान्तरङ्गत्वान्नित्यैव संज्ञा भवति। उभये। डतरडतमौ प्रत्ययौ। 'प्रत्ययग्रहणे तदन्ता ग्राह्याः' (प २४)। यद्यपि संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति, (प २८) 'सुप्तिङन्तम्–' (सू २१) इति ज्ञापकात्। तथापीह तदन्तग्रहणम्। केवलयोः संज्ञायाः प्रयोजनाभावात्। अन्यतरा-

---

स्यर्थः। 'सर्वादीनि–' इत्यनेनेति शेषः। ननु प्रथमचरमादिष्वनन्तर्भावात् कथमुभयशब्द-स्य 'प्रथमचरम'–इति विकल्पप्राप्तिरित्यत आह—**तयप्प्रत्ययान्ततयेति**। ननु तयपः अश्रवणात् कथमुभयशब्दस्य तयप्प्रत्ययान्तत्वमित्यत आह—**अयजादेशस्य स्थानिवद्भावेनेति**। 'उभादुदात्त–' इति सूत्रे 'संख्याया अवयवे तयप्' इति उभशब्दाद्विहितस्य तयपोऽयजादेशः, तयब्ग्रहणमननुवर्त्य अयच् स्वतन्त्रः प्रत्ययो वा, इति पक्षद्वयं भाष्ये स्थितम्। तत्र प्रथमपक्षाभिप्रायेणात्र सर्वनामसंज्ञाविकल्पशङ्का बोध्या। ननु 'प्रथमचरम–' इति विकल्पस्य परत्वात् कथमिह 'सर्वादीनि–' इति नित्यैव संज्ञेत्यत आह—**अन्तरङ्गत्वादिति**। तदेवोपपादयति—**विभक्तिनिरपेक्षत्वेनेति**। 'प्रथमचरम–' इति जसि विकल्पविधिः जसपेक्षत्वेन विभक्त्यपेक्षत्वाद् बहिरङ्गः। 'सर्वादीनि–' इति नित्यसंज्ञाविधिस्तु तदनपेक्षत्वाद् अन्तरङ्गः, अल्पापेक्षमन्तरङ्गमिति न्यायात्। अतोऽत्र परमपि 'प्रथमचरम–' इति विकल्पं बाधित्वा 'सर्वादीनि–' इति नित्यैव संज्ञा भवति, परादन्तरङ्गस्य बलीयस्त्वादिति भावः। तथा च शीभावो नित्य इत्याह—**उभये इति**।

ननु डतरडतमशब्दयोः क्वापि प्रयोगादर्शनात् किमर्थस्तयोः पाठ इत्यत आह—**डतरडतमौ प्रत्ययाविति**। 'किंयत्तदोर्निर्धारणे द्वयोरेकस्य डतरच्' 'वा बहूनां जातिपरिप्रश्ने डतमच्' 'एकाच्च प्राचाम्' इति तद्धिताधिकारविहितौ डतरडतमौ प्रत्ययौ, 'प्रत्ययः' इत्यधिकृत्य तद्विधेः। अतः प्रत्ययग्रहणपरिभाषया डतरग्रहणेन कतरादिशब्दानां डतमग्रहणेन कतमादिशब्दानां च ग्रहणमिति भावः। शङ्कते—**यद्यपीति सुप्तिङन्तमिति**। यदि संज्ञाविधावपि प्रत्ययग्रहणपरिभाषा प्रवर्तेत, तर्हि 'सुप्तिङ् पदम्' इत्येव सूत्र्येत, प्रत्ययग्रहणपरिभाषयैव सुप्तिङन्तमित्यर्थलाभात्। अतः संज्ञाविधौ प्रत्ययग्रहणपरिभाषा न प्रवर्तत इति विज्ञायते। एवं च प्रकृते सर्वनाम-

---

धाने प्रमाणं नास्तीति भावः। **तस्मादिति**। उभयशब्दादित्यर्थः। **तयप्प्रत्ययान्ततयेति**। उभयशब्दस्येति शेषः। यदि तूभशब्दादयच् स्वतन्त्रः, न तु तयप आदेश इति निष्कर्षः स्वीक्रियते, तदात्र 'प्रथमचरमतया–' इति वैकल्पिकप्राप्तिर्नास्त्येवेति बोध्यम्। **नित्यैवेति**। उभया अमित्रा इति तु छान्दसत्वाद्बोध्यम्। **डतरडतमाविति**। 'किंयत्तदोर्निर्धारणे द्वयोरेकस्य डतरच्' 'वा बहूनां जातिपरिप्रश्ने

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न्यतमशब्दावव्युत्पन्नौ स्वभावाद् द्विबहुविषये निर्धारणे वर्तेते। तत्रान्यतमशब्द-स्य गणे पाठाभावान्न संज्ञा। 'त्व' 'त्व' इति द्वावप्यदन्तावन्यपर्यायौ, 'एक उदात्तोऽपरोऽनुदात्तः' इत्येके। 'एकस्तान्तः' इत्यपरे। 'नेमः' इत्यर्धे। समः सर्व-

---

संज्ञाविधौ डतरडतमग्रहणे प्रत्ययग्रहणपरिभाषानुपस्थानात् कथं तदन्तग्रहणमित्याक्षेपः। परिहरति—**तथापीति**। अन्यत्र संज्ञाविधौ प्रत्ययग्रहणेन तदन्तग्रहणाभावेऽपि इह सर्वनामसंज्ञाविधौ डतरडतमग्रहणे तदन्तग्रहणमस्त्येवेत्यर्थः। कुत इत्यत आह—**केवलयोरिति**। 'न केवला प्रकृतिः प्रयोक्तव्या, नापि केवलः प्रत्ययः' इति न्यायेन केवलप्रत्यययोर्डतरडतमयोः प्रयोगानर्हत्वेन तयोः सर्वनामसंज्ञायां फलाभावादित्यर्थः। तस्माद् डतरडतमग्रहणेनात्र कतरकतमादिशब्दानां ग्रहणमिति स्थितम्।

ननु डतरग्रहणेनैव सिद्धे सर्वादिगणे अन्यतरशब्दपाठो व्यर्थः। अन्यतमशब्दस्यापि डतमप्रत्ययान्तत्वात् सर्वनामत्वापत्तिश्चेत्यत आह—**अन्यतरान्यतमशब्दावव्युत्पन्नाविति**। डित्थादिशब्दवत् प्रकृतिप्रत्ययविभागविहीनावित्यर्थः। किंयत्तदेकेभ्य एव डतरडतमविधानादिति भावः। नन्वेवं सत्यन्यतरान्यशब्दाभ्यां द्विबहुनिर्धारणावगमः कथमित्यत आह—**स्वभावादिति**। एवं चान्यतमशब्दस्य न सर्वनामत्वमित्याह—**तत्रेति**। एतयोर्मध्य इत्यर्थः। अन्यतरशब्दस्य तु डतरप्रत्ययान्तत्वाभावेऽपि सर्वादिगणे पाठादेव सर्वनामत्वमित्युक्तप्रायम्। अथ त्व त्वेत्येकप्रातिपदिकभ्रमं वारयन् अप्रसिद्धार्थत्वाद्व्याचष्टे—**त्व त्व इति द्वावप्यदन्तावन्यपर्यायाविति**। अन्यशब्दसमानार्थकावित्यर्थः। द्वयोरप्यदन्तत्वे अन्यतरपाठवैयर्थ्यं परिहरति—**एक इति**। **इत्येक इति**। इति कतिपये वृत्तिकृदादयो मन्यन्त इत्यर्थः। 'एतं त्वं मन्ये' इत्युदात्तत्वस्य 'उत त्वः पश्यन्' इत्यादावनुदात्तत्वस्य च ऋग्वेदे दर्शनादिति भावः। **एकस्तान्त इति**। संहितापाठे त्वद् इति छेदमाश्रित्य प्रथमस्तकारान्तः, द्वितीयः अदन्त इत्यपरे मन्यन्त इत्यर्थः। अन्यथा एकश्रुत्या वा स्वरविनिर्मुक्तं वा सकृदेव

---

डतमच्' 'एकाच्च प्राचाम्' इति विहितौ। **अव्युत्पन्नाविति**। एतच्च पस्पशायां कैयटे स्पष्टम्। **एके इति**। काशिकाकाराः। 'एतं त्वं मन्ये' इत्युदात्तस्य 'उत त्वः पश्यन्' इत्यनुदात्तस्य च दर्शनादिति भावः। **एक इति**। प्रथम इत्यर्थः। संहितया पाठे तान्तत्वस्यास्फुटत्वेऽपि त्वदिति तान्तश्छेत्तव्यः। अन्यथा एकश्रुत्या सकृदेव पठेत्। न च तान्ते विप्रतिपत्तव्यम्, 'त्वतत्वसमसिमेत्यनुचानि' इति फिट्सूत्रात्। तथा च ऋङ्मन्त्रः 'स्तरीरुत्वद्भवति सूत उ त्वत्' इति। जयदेवोऽपि प्रायुङ्क्त 'त्वदधरमधुरमधूनि पिबन्तम्' इति। त्वत्तोऽन्यस्या अधर इति विग्रहः, न तु तवाधर इति। 'पश्यति दिशि दिशि रहसि भवन्तम्' इति पूर्ववाक्येन सहानन्वयापत्तेः। **सम इति**।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पर्यायः। तुल्यपर्यायस्तु नेह गृह्यते, 'यथासंख्यमनुदेशः समानाम्' (सू० १२८) इति ज्ञापकात्। 'अन्तरं बहिर्योगोप-' (ग सू ३) इति गणसूत्रे 'अपुरीति वक्तव्यम्' (वा २४०) अन्तरायां पुरि । २१८ पूर्वपरावरदक्षिणोत्तराप-

---

पठेत्, तावतैव द्वयोरपि लाभात् 'त्वत्त्वसमसिमेत्यनुच्चानि' इति फिट्सूत्राच्च। स्तरीरु त्वद्भवति सूत उ त्वत् इति ऋग्व्याख्यावसरे वेदभाष्ये 'त्वदिति सर्वादिपठितः अनुदात्तोऽयम् अन्यपर्यायः' इत्युक्तत्वाच्च। 'त्वदधरमधुरमधूनि पिवन्तम्' इति जयदेवप्रयोगाच्च। तत्र हि त्वच्छब्दोऽन्यपर्यायः। त्वतः अधर इति विग्रहः। अन्यस्या अधर इत्यर्थः। न तु तवाधर इति विवक्षितम्, 'पश्यति दिशि दिशि रहसि भवन्तम्' इति पूर्ववाक्येनान्वयानुपपत्तेः। **नेम इत्यर्धे इति**। वर्तते इति शेषः। 'प्र नेमस्मिन् ददृशे सोमो अन्तः' इत्यृचि तथा दर्शनादिति भावः। **सम इति**। सर्वशब्दसमानार्थक एव समशब्दः सर्वादिगणे पठित इत्यर्थः। **तुल्यपर्यायस्त्विति**। तुल्यशब्दसमानार्थक इत्यर्थः। **ज्ञापकादिति**। अन्यथा तत्र समेषामिति निर्दिशेदिति भावः।

ननु अष्टाध्यायीपठिते 'अन्तरं बहिर्योगोपसंव्यानयोः' इति जसि सर्वनामसंज्ञाविकल्पविधायके सूत्रे 'अपुरीति वक्तव्यम्' इति वार्तिकपाठो भाष्ये दृश्यते। एवं चान्तराः पुर्य इत्यत्र जसि सर्वनामसंज्ञानिषेधेऽपि, अन्तरायां पुरीत्यत्र तन्निषेधाभावाद् अन्तरस्यामिति स्यादित्यत आह—**गणसूत्र इति**। यद्यपीदं वार्तिकं जसि विकल्पविधिप्रकरणे पठितम्, तथापि 'अन्तरं बहिर्-' इति गणसूत्रस्यैवायं शेषः। न त्वष्टाध्यायीपठितस्य 'अन्तरं बहिर्-' इति जसि विधायकस्य शेषः, 'जसश्शी' इत्यत्र अत इत्यनुवृत्त्या टाबन्तात्तत्प्राप्तिविरहात्। ततश्च पुर्या विशेष्यभूतायामन्तरशब्दः सर्वादिगणे पाठं न लभत इत्येतद्वार्तिकार्थः पर्यवस्यति। एवं च जसोऽन्यत्रापि अन्तरशब्दस्य पुर्या विशेष्यभूतायां सर्वनामत्वं नेति लभ्यते। अतः अन्तरायां पुरीत्यादौ सर्वनामकार्यं स्याडादि न भवतीत्यभिप्रेत्योदाहरति—**अन्तरायां पुरीति**। यद्यप्यन्तरशब्द एव सर्वादिगणे पठितः, न तु टाबन्तः। तथापि लिङ्गविशिष्टपरिभाषया वा एकादेशस्य पूर्वान्तत्वेन ग्रहणाद्वा सर्वनामत्वप्राप्तिर्बोध्या। सिमशब्दस्तु 'सिमः कृत्स्ने च शक्ते च स्यान्मर्यादावबद्धयोः' इति कोशे प्रसिद्धः। अथ सर्वादिगणान्तर्गतत्रिसूत्रीसमानाकारामष्टाध्यायीपठितां पूर्वपरेत्यादित्रिसूत्रीं पुनरुक्तिशङ्कां व्युदस्यन् व्याचष्टे—**पूर्वपर**।

---

तथा च श्रूयते 'मा नो वृकाय वृक्ये समस्मै' 'उतो समस्मिन्' इत्यादि। 'सिमः कृत्स्ने च शक्ते च स्यान्मर्यादावबद्धयोः'। **गणसूत्र इति**। यद्यपि भाष्येऽष्टाध्यायीस्थसूत्रे 'अपुरीति वक्तव्यम्' इति वार्तिकं पठितम्, तथापि तद्गणसूत्रस्यैव शेषो न तु जसि विभाषाविधायकस्य। अत इत्यधिकृत्य जसः शीविधानादाबन्तात्प्राप्त्यभावात्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राधराणि व्यवस्थायामसंज्ञायाम्। (१-१-३४) एतेषां व्यवस्थायामसंज्ञायां सर्वनामसंज्ञा गणपाठात्सर्वत्र या प्राप्ता सा जसि वा स्यात्। पूर्वे, पूर्वाः। स्वाभिधेयापेक्षावधिनियमो व्यवस्था। व्यवस्थायां किम्—दक्षिणा गाथकाः, कुशला इत्यर्थः। असंज्ञायां किम्—उत्तराः कुरवः। २१९ स्वमज्ञातिधनाख्यायाम्।

---

'सर्वनामानि' इति 'विभाषा जसि' इति चानुवर्तते। तदाह—**एतेषामिति**। पूर्वादिसप्तानामित्यर्थः। **गण इति**। सर्वादिगण इत्यर्थः। **या प्राप्तेति**। 'सर्वादीनि—' इत्यनेन नित्या संज्ञा या प्राप्तेत्यर्थः। अनेन 'पूर्वपर—' इति सूत्रं गणपठितं जसोऽन्यत्र नित्यतया सर्वनामसंज्ञार्थम्। अष्टाध्यायीपठितं तु जसि तद्विकल्पार्थमिति न पौनरुक्त्यमिति सूचितम्। **स्वाभिधेयेति**। अपेक्ष्यत इत्यपेक्षः कर्मणि घञ्। स्वस्य—पूर्वादिशब्दस्य, अभिधेयम्, वाच्यम्, तेन अपेक्षस्यापेक्ष्यमाणस्य—अवधेर्नियमः व्यवस्थाशब्देन विवक्षित इत्यर्थः। ततश्च नियमेनावधिसापेक्षार्थे वर्तमानानां पूर्वादिशब्दानां जसि सर्वनामसंज्ञाविकल्प इति फलति। **व्यवस्थायां किमिति**। पूर्वादिशब्दानां नियमेनावधिसापेक्ष एवार्थे विद्यमानत्वादिति प्रश्नः। **दक्षिणा गाथका इति**। अत्र दक्षिणशब्दो नावध्यपेक्ष इति भावः। दक्षिणपार्श्ववर्तिनो गाथका इत्यत्र कस्मादित्यवध्यपेक्षा अस्त्येवेत्यत आह—**कुशला इत्यर्थ इति**। यद्यपि प्रावीण्यमपि कस्मादित्यवध्यपेक्षमेव, तथापि उत्तरे प्रत्युत्तरे च शक्त इत्यादि प्रत्युदाहरणं बोध्यमित्याहुः। **असंज्ञायां किमिति**। 'संज्ञोपसर्जनीभूतास्तु न सर्वादयः' इति वक्ष्यमाणतया संज्ञायां सर्वनामत्वस्याप्रसक्तेरिति प्रश्नः। **उत्तराः कुरव इति**। कुरुशब्दो देशविशेषे नित्यं बहु-

---

**अन्तरायामिति**। प्राकाराद्बाह्यायां तदन्तर्वर्तिन्यां चेत्यर्थः। लिङ्गविशिष्टपरिभाषया एकादेशस्य पूर्वान्तत्वेन ग्रहणाद्वा सर्वनामतायाः प्राप्तिर्बोध्या। त्यद् तद् एतौ उक्तपरामर्शकौ। तत्राद्यश्छान्दस इति गणरत्नकारोक्तिर्नादर्तव्या। 'स्यश्छन्दसि बहुलम्' इति सूत्रे छन्दोग्रहणवैयर्थ्यापत्तेः। **एक इति**। 'एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा। साधारणे समानेऽल्पे संख्यायां च प्रयुज्यते'। इत्थं सर्वादिगणं व्याख्यायेदानीं तदन्तर्गतत्रिसूत्रीसमानाकारमष्टाध्यायीस्थां त्रिसूत्रीं व्याचष्टे—**पूर्वपरावरेत्यादिना**। **स्वाभिधेयेति**। स्वस्य पूर्वादिशब्दस्याभिधेयेनापेक्ष्यमाणस्यावधेर्नियम इत्यर्थः। अपेक्ष्यत इत्यपेक्षः। कर्मणि घञ्। कथं तर्हि 'दिशः सपत्नी भव दक्षिणस्याः' इति। अत्राहुः—अस्त्येवात्रापि व्यवस्था। प्रसिद्धत्वान्नावधिवाची शब्दः प्रयुज्यते। न च संज्ञात्वान्निषेधः। आधुनिकसंकेतो हि संज्ञा, न च दिक्षु साऽस्तीति।

---

१ अपेक्षः—अपेक्ष्यमाणः अवधेरिति क, ख।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

(१-१-३५) ज्ञातिधनान्यवाचिनः स्वशब्दस्य या प्राप्ता संज्ञा सा जसि वा स्यात्। स्वे, स्वाः । आत्मीया इत्यर्थः । आत्मान इति वा । ज्ञातिधनवाचिनस्तु स्वाः,

---

वचनान्तः । सुमेरुमवधीकृत्य तत्रोत्तरशब्दो वर्तत इत्यस्तीह व्यवस्था । किं तु संज्ञाशब्दत्वान्नास्य सर्वनामता । पूर्वादिशब्दानां तु दिक्षु अनादिस्संकेत इति न ते संज्ञाशब्दाः । कुरुषु तूत्तरशब्दस्याधुनिकस्सङ्केत इति भवत्ययं संज्ञाशब्द इति मन्यते । केचित्त्वसंज्ञायामित्यभावे संज्ञायामेव पूर्वादिशब्दानामप्राप्तविभाषा स्यादित्याहुः । **स्वमज्ञातीति** । अत्रापि 'सर्वनामानि' इति 'विभाषा जसि' इति चानुवर्तते । ज्ञातिश्च धनं च ज्ञातिधने, तयोराख्या ज्ञातिधनाख्या, न ज्ञातिधनाख्या, अज्ञातिधनाख्या तस्याम्, अज्ञातिधनाख्यायाम् । स्वमिति शब्दस्वरूपापेक्षया नपुंसकत्वम् । तदाह—**ज्ञातिधनान्येति स्वे स्वा इति** । सर्वनामत्वे शीभावः, तदभावे तदभाव इति भावः । आत्मा आत्मीयं ज्ञातिः धनं चेति स्वशब्दस्य चत्वारोऽर्थाः । 'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने, इत्यमरः । अत्र स्वो ज्ञातावात्मनीत्येकं वाक्यम् । ज्ञातावात्मनि च स्वशब्दः पुँल्लिङ्ग इत्यर्थः । स्वं त्रिष्वात्मीये इति द्वितीयं वाक्यम् । आत्मीये स्वशब्दो विशेष्यनिघ्न इत्यर्थः । स्वोऽस्त्रियां धन इति तृतीयं वाक्यम् । धने स्वशब्दः पुंनपुंसक इत्यर्थः । 'स्वः स्यात् पुंस्यात्मनि ज्ञातौ, त्रिष्वात्मीयेऽस्त्रियां धने' इति मेदिनीकोशः । तत्र ज्ञातिधनयोः पर्युदासाद् आत्मनि आत्मीये च सर्वनामत्वं जसि विकल्प्यत इत्यभिप्रेत्य व्याचष्टे—**आत्मीया इत्यर्थः । आत्मान इति वेति** । ज्ञातिधनपर्युदासस्य प्रयोजनमाह—**ज्ञातिधनवाचिनस्त्विवति** । ज्ञातिवाचिनो धन-

---

दिक्षु चिरंतनः कुरुषु त्वाधुनिकः संकेत इत्यत्र तु व्याख्यातृवचनमेव प्रमाणम् । एतेन 'विश्वेषां देवानाम्' इति व्याख्यातम्, वेदे प्रसिद्धत्वाद्देवगणविशेषे विश्वशब्दस्याधुनिकसंकेताभावात् । **दक्षिणा गाथका इति** । 'गस्थकन्' इति शिल्पिनि थकन् । इहामुकस्मात्कुशला इत्यवध्यन्वयसंभवेऽपि तन्नियमो नास्तीति भावः । एवमधरे ताम्बूलरागः, उत्तरे प्रत्युत्तरे च शक्त इत्यपि प्रत्युदाहर्तव्यम् । **उत्तराः कुरव इति** । सुमेरुमवधिमपेक्ष्य कुरुषु उत्तरशब्दो वर्तते इत्यस्तीह व्यवस्था, किं त्वाधुनिकसंकेतोऽयमित्याहुः । **स्वमज्ञाति** । आत्माऽऽत्मीयज्ञातिधनवाची स्वशब्दः, तत्र ज्ञातिधनयोः पर्युदासादात्मात्मीयौ परिशिष्टावित्याशयेन व्याचष्टे—**आत्मीया इत्यर्थः । आत्मान इति वेति** । यत्त्वाहुः—आत्मनि स्वशब्दो नपुंसकः, तेन स्वे स्वा इत्युदाहरणं तत्रायुक्तमिति । तद्भ्रमसात् । 'स्वो ज्ञातावात्मनि, स्वं त्रिष्वात्मीये, स्वोऽस्त्रियां धने' इत्यमरसिंहोक्तेरात्मन्यपि स्वशब्दस्य पुंस्त्वात् । न च 'स्वो ज्ञातौ–' इत्यमरकोशे आत्मनी-

---

१ दिक्कालेषु इति क ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ज्ञातयोऽर्थो वा। **२२० अन्तरं बहिर्योगोपसंव्यानयोः। (१-१-३६)** बाह्ये परिधानीये चार्थेऽन्तरशब्दस्य या प्राप्ता संज्ञा सा जसि वा स्यात्। अन्तरे, अन्तरा वा गृहाः। बाह्या इत्यर्थः। अन्तरे, अन्तरा वा शाटकाः। परिधानीया इत्यर्थः। **२२१ पूर्वादिभ्यो नवभ्यो वा। (७-१-१६)** एभ्यो नवभ्यो ङसिङ्योः स्मात्स्मिनौ वा स्तः। पूर्वस्मात्, पूर्वात्। पूर्वस्मिन्, पूर्वे। एवं परादीनामपि। शेषं सर्ववत्। एकशब्दः संख्यायां नित्यैकवचनान्तः। **२२२ न बहुव्रीहौ । (१-**

वाचिनश्च सर्वनामत्वपर्युदासाद् जसि स्वा इत्येव रूपमित्यर्थः। न च ज्ञातिधनयोरप्यात्मीयत्वपुरस्कारे सर्वनामत्वं न स्यादिति वाच्यम्, आख्याग्रहणबलेन ज्ञातित्वधनत्वपुरस्कार एव पर्युदासप्रवृत्तेः। **अन्तरम्।** अत्रापि 'सर्वनामानि' इति 'विभाषा जसि' इति चानुवर्तते। बहिः—अनावृतप्रदेशः, तेन योगः—सम्बन्धो यस्य स बहिर्योगः—बहिर्विद्यमानोऽर्थ इति यावत्। उपसंवीयते परिधीयत इति उपसंव्यानम् अन्तरीयं वस्त्रम्। तदाह—**बाह्य इत्यादिना। पूर्वादिभ्यो।** 'ङसिङ्योः स्मात्स्मिनौ' इत्यनुवर्तते इत्याह—**एभ्य इति।** 'पूर्वपर—' इत्यादित्रिसूत्रीनिर्दिष्टाः पूर्वादय इह विवक्षिताः। त्यदादयो हलन्ताधिकारे व्याख्यास्यन्ते। **एकशब्दः संख्यायामिति।** अर्थान्तरे तु द्विवचनबहुवचने अपि स्तः।

'एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा।
साधारणे समानेऽल्पे संख्यायां च प्रयुज्यते।' इति कोशः।

स्यादेतत्। त्वत्कपितृकः, मत्कपितृक इति बहुव्रीहिः। त्वकं पिता यस्य, अहकं पिता यस्येति लौकिकविग्रहवाक्यम्। लौकिकत्वं प्रयोगार्हत्वम्। युष्मदस्मदोरज्ञातावर्थे 'अव्ययसर्वनाम्नाम्—' इत्यकचि युष्मकद् स्, अस्मकद् स् इति स्थिते, 'ङेप्रथमयोः—' इत्यमि 'त्वाहौ सौ' इति त्वादेशे अहादेशे च सति 'शेषे लोपः' इति लोपे, अतो गुणे, अमि पूर्वे च त्वकम्, अहकम् इति रूपम्। युष्मद् स् पितृ स्, अस्मद् स् पितृ स्, इत्यलौकिकं विग्रहवाक्यम्। प्रयोगानर्हत्वम् अलौकिकत्वम् इति स्थितिः। तत्र त्वत्कपितृको मत्कपितृक इति बहुव्रीहिदशायां कप्रत्ययो न संभवति। युष्मदस्मदोः सर्वनामत्वेनाकच्प्रसङ्गात्। तत्रेदमारभ्यते—**न बहुव्रीहौ।** 'सर्वादीनि सर्वनामानि'

त्यस्य स्वमित्युत्तरेणान्वयादात्मवाची स्वशब्दो नपुंसक एवेति वाच्यम्। 'स्वः स्यात्पुंस्यात्मनि ज्ञातौ त्रिष्वात्मीयेऽस्त्रियां धने' इति मेदिनीकोशविरोधेनात्मनीति पूर्वान्वयि, न तु उत्तरान्वयि इति व्याख्यातुमुचितत्वात्। किं च 'विभाषा जसि' इति प्रकरणे 'स्वमात्मीये' इत्येव वक्तव्ये गुरुनिर्देशं कुर्वन्सूत्रकारोऽप्यात्मवाचिस्वशब्दस्य पुंस्त्वे

१ नास्ति क।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

१-२९ ) बहुव्रीहौ चिकीर्षिते सर्वनामसंज्ञा न स्यात्। त्वकं पिता यस्य स त्वत्कपितृकः। अहकं पिता यस्य स मत्कपितृकः। इह समासात्प्रागेव प्रक्रियावाक्ये

---

इत्यनुवर्तते। बहुव्रीहौ सर्वादीनि सर्वनामानि न स्युरित्यर्थः प्रतीयते। एवं सति सूत्रमिदं व्यर्थम्, प्रियसर्वायेत्यादीनां बहुव्रीहिवर्तिनां सर्वादीनां स्वार्थोपसंक्रान्तार्थान्तरप्रधानकतया उपसर्जनत्वादेव सर्वनामत्वनिषेधसिद्धेः, 'संज्ञोपसर्जनीभूतास्तु न सर्वादयः' इति वक्ष्यमाणत्वात्। अतो व्याचष्टे—**बहुव्रीहौ चिकीर्षित इति**। बहुव्रीहाविति विषयसप्तम्याश्रयणाद् अयमर्थो लभ्यते। तथा च बहुव्रीहौ प्रसक्ते सति ततः प्रागेव विग्रहवाक्येऽयं निषेधोऽर्थवान्। एकार्थीभावात्मकसामर्थ्यस्य समासदशायामेव सत्त्वेन विग्रहवाक्ये तदभावेन तदानीमुक्तोपसर्जनत्वस्याभावादिति भावः। अथ लौकिकविग्रहवाक्यं दर्शयन् लक्ष्यभूतं बहुव्रीहिं दर्शयति—**त्वकं पितेत्यादिना**। सर्वनामत्वाभावात् कप्रत्यये 'प्रत्ययोत्तरपदयोश्च' इति त्वमादेशे त्वत्क मत्क इति च रूपम्। ननु बहुव्रीहिप्रवृत्तेः प्राग् अलौकिकविग्रहवाक्ये सर्वनामत्वनिषेधात् त्वकं पितेति कथं लौकिकविग्रहवाक्यप्रदर्शनमित्यत आह—**इहेति**। 'न बहुव्रीहौ' इत्यस्मिन् सूत्र इत्यर्थः। **प्रक्रियावाक्य इति**। युष्मद् स् पितृ स्, अस्मद् स् पितृ स्,

---

प्रमाणम्। तस्मात् स्वे स्वा इत्यस्य आत्मान इति विवरणं सम्यगेवेति स्थितम्। **ज्ञातिधनवाचिनस्त्विति**। ताच्छील्येन णिनिना ज्ञातिधनयोरप्यात्मीयत्वं पुरस्कृत्य प्रवृत्तौ सर्वनामतास्त्येवेति ध्वनयति। एतदर्थमेव हि सूत्रे आख्याग्रहणं कृतम्। 'स्वमात्मात्मीयाख्यायाम्' इति वक्तव्ये ज्ञातिधनयोः पर्युदासाश्रयणं मात्रालाघवाय। न च 'स्वमात्मात्मीययोः' इत्युच्यमाने आख्याग्रहणं नापेक्षितमिति वाच्यम्। वस्तुतस्तु आत्मीयस्यापि ज्ञातित्वेन धनत्वेन विवक्षायां सर्वनामता मा भूदिति तस्यावश्यकत्वात्। **अन्तरं बहिर्योगोपसंव्यानयोरिति**। बहिरित्यनावृतो देशो बाह्यं चोच्यते। तत्राद्यमर्थं गृहीत्वाह—**बाह्या इत्यर्थ इति**। द्वितीये त्वाभ्यन्तरा इत्यर्थो बोध्यः। बाह्ये ह्याभ्यन्तरस्य योगोऽस्ति। अर्थद्वयमप्याकरे स्थितम्। इदमेवार्थद्वयं मनसि निधाय अन्तरायां पुरीत्यत्र प्राकाराद्बाह्यायां तदन्तर्वर्तिन्यां चेति व्याख्यातम्। उपसंव्यानशब्दोऽपि करणव्युत्पत्त्या उत्तरीयपरः। कर्मव्युत्पत्त्या त्वन्तरीयपरः। एकशब्दस्याष्टावर्था उक्तास्तत्र विशेषमाह—**संख्यायामिति**। अन्येषु तु समस्तवर्थेषु वचनान्तरमपि स्यादेव, एके एकेषामिति यथेति भावः। **न बहुव्रीहौ**। कृते बहुव्रीहौ निषेधो व्यर्थः। 'उपसर्जनीभूतास्तु न सर्वादयः' इति वक्ष्यमाणत्वात्। अत आह—**चिकीर्षित इति**। बहुव्रीहावित्यत्र विषयसप्तम्याश्रयणादयमर्थो लभ्यते। **त्वकमिति**। अज्ञाते कुत्सिते वा 'अव्ययसर्वनाम्नाम्—' इत्यकच्। एवमहकमित्यत्रापि।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सर्वनामसंज्ञा निषिध्यते । अन्यथा लौकिकविग्रहवाक्य इव तत्राप्यकच् प्रवर्तेत। स च समासेऽपि श्रूयेत । अतिक्रान्तो भवकन्तम् अतिभवकान् इतिवत् । भाष्य-

---

इत्यलौकिकविग्रहवाक्य एवेत्यर्थः । लौकिकविग्रहवाक्ये तु नायं निषेधः, बहुव्रीहि-वत्तस्य स्वार्थे परिनिष्ठितत्वेन स्वतन्त्रप्रयोगार्हतया बहुव्रीहेस्तत्र चिकीर्षितत्वाभावात्, अलौकिकविग्रहात्मके प्रक्रियावाक्य एव तस्य चिकीर्षितत्वात् । यथा चैतत्तथा समास-निरूपणे वक्ष्यते । ननु अलौकिकविग्रहवाक्ये मास्तु सर्वनामतानिषेधः को दोषः । तत्राह—**अन्यथेति** । 'न बहुव्रीहौ' इत्यलौकिकविग्रहवाक्ये निषेधाभावे सतीत्यर्थः । **तत्रापीति** । अलौकिकविग्रहवाक्येऽपीत्यर्थः । नन्वलौकिकविग्रहवाक्ये भवत्वकच् । सत्यप्यकचि तस्य प्रयोगानर्हत्वेन बाधकाभावादित्यत आह—**स चेति** । अलौकिक-विग्रहवाक्ये श्रुतस्य लौकिकविग्रहवाक्ये समासे च श्रवणनियमादिति भावः । उभय-त्रापि तन्नियमे दृष्टान्तद्वयमाह—**अतिक्रान्तो भवकन्तम् अतिभवकानितिवदिति**।

भवच्छब्दस्य सर्वादिगणे पाठात् सर्वनामत्वादलौकिकविग्रहदशायामकच् । ततश्च भवकत् अम् अति इत्यलौकिकविग्रहवाक्यं संपद्यते । तत्र 'अत्यादयः क्रान्ता-द्यर्थे द्वितीयया' इति समासे सति 'सुपो धातुप्रतिपदिकयोः' इति सुब्लुकि अतिभव-कच्छब्दात् प्रथमैकवचने अतिभवकानिति रूपम् । समासाभावपक्षे तु भवकन्तमति-क्रान्त इति लौकिकविग्रहवाक्यं भवति । तत्र समासदशायां भवच्छब्दार्थस्य स्वोप-संक्रान्तार्थान्तरप्रधानतया उपसर्जनत्वेऽपि अलौकिकविग्रहदशायां भवच्छब्दस्यानुप-सर्जनत्वात् सर्वनामत्वे सति प्रवृत्तः अकच् अतिक्रान्तो भवकन्तमिति लौकिकविग्रह-वाक्ये अतिभवकानिति समासे चानुवर्तते, लौकिकविग्रहदशायां भवच्छब्दस्य उक्तरीत्या अनुपसर्जनत्वात्, समासे तस्योपसर्जनत्वेऽपि योनिभूतालौकिकविग्रहदशायां प्रवृत्तस्या-कचो निवर्तकाभावात् । न च भवत् अम् इत्यलौकिकविग्रहदशायां सतोऽप्यनुपसर्ज-नत्वस्य समासदशायां विनाशं प्राप्स्यमानतया विनाशोन्मुखत्वाद् अकृतव्यूहपरिभाषया अलौकिकविग्रहवाक्येऽपि सर्वनामत्वाभावाद् अकज्दुर्लभः । ततश्च अतिक्रान्तो भव-कन्तमिति लौकिकविग्रहवाक्ये अतिभवकानिति समासे च कथमकच्प्रसक्त इति दृष्टा-न्तासिद्धिरिति वाच्यम् । एवं जातीयकालौकिकविग्रहवाक्ये सर्वनामत्वप्रवृत्तौ अकृतव्यूह-

---

**प्रक्रियावाक्य इति** । अलौकिकविग्रहवाक्यं इत्यर्थः । तच्च युष्मद् सु पितृ सु इत्या-द्याकारकम् । ननु तत्राकच् प्रवर्ततां को दोष इत्यत आह—**स चेति**। न च निमित्त-स्यानुपसर्जनत्वस्य विनाशोन्मुखत्वादकृतव्यूहपरिभाषया समासात्प्रागपि सर्वनामता भविष्यतीति वाच्यम् । तस्या अनित्यत्वात् । तत्र चैतत्सूत्रस्यैव ज्ञापकत्वात् । **अति-भवकानिति** । इदमेव ज्ञापनफलमिति भावः । 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कारस्तु त्वकत्पितृकः, मकत्पितृक इति रूपे इष्टापत्तिं कृत्वैतत्सूत्रं प्रत्याचख्यौ। यथोत्तरं मुनीनां प्रामाण्यम्। 'संज्ञोपसर्जनीभूतास्तु न सर्वादयः' (वा २२५) महासंज्ञाकरणेन तदनुगुणानामेव गणे संनिवेशात्। अतः संज्ञाकार्यमन्तर्गणकार्यं

---

परिभाषाया अनित्यत्वेनाऽप्रवृत्तेः। तदनित्यत्वे च 'न बहुव्रीहौ' इति सूत्रमेव ज्ञापकम्। तथा हि—यद्यकृतव्यूहपरिभाषा सार्वत्रिकी स्यात्, तर्हि बहुव्रीहिविषयेऽपि युष्मद् स् पितृ स् इत्याद्यलौकिकविग्रहवाक्ये अनुपसर्जनत्वस्य बहुव्रीहिकालिकविनाशोन्मुखतया सर्वनामत्वस्याप्रसक्तत्वाद् 'न बहुव्रीहौ' इति नारभ्येत। अकृतव्यूहपरिभाषायास्तत्र प्रवृत्तेः भविष्यद्बहुव्रीहिकालिकविनाशोन्मुखमनुपसर्जनत्वं पुरस्कृत्य तदलौकिकविग्रहवाक्ये सर्वनामत्वस्याप्रसक्तत्वाद् न तन्निषेधाय 'न बहुव्रीहौ' इत्यर्थवत्। न च उदाहृतबहुव्रीहिविषयालौकिकविग्रहवाक्ये अकृतव्यूहपरिभाषामाश्रित्यैव सर्वनामत्वाभाव आश्रीयताम्, किं 'न बहुव्रीहौ' इति सूत्रेणेति वाच्यम्। एवं सत्यतिक्रान्तो भवकन्तमतिभवकानित्यादि न सिध्येत्। अकृतव्यूहपरिभाषया तदलौकिकविग्रहवाक्येऽपि सर्वनामत्वाभावेनाकचः प्रवृत्त्यभावे तस्यातिक्रान्तो भवकन्तमित्यादिलौकिकविग्रहवाक्ये अतिभवकानिति समासेऽपि च श्रवणं न स्यात्। एवं च बहुव्रीहिविषये अलौकिकविग्रहवाक्ये अकृतव्यूहपरिभाषाया अप्रवृत्तिं सिद्धवत्कृत्य सर्वनामत्वनिषेधात्तदितरसमासविषयेऽप्यलौकिकविग्रहवाक्ये अकृतव्यूहपरिभाषाया अप्रवृत्त्या सर्वनामत्वं विज्ञायते। एतदर्थमेव 'न बहुव्रीहौ' इति सूत्रमित्यन्यत्र विस्तरः। **प्रत्याचख्याविति**। निराकृतवानित्यर्थः। सूत्रभाष्ययोरुभयोरपि स्मृतित्वाविशेषाद्विकल्पमाशङ्क्याह—**यथोत्तरमिति**। सूत्रकाराद्वार्तिककारस्य उभाभ्यामपि भाष्यकृत इत्येवं मुनीनामुत्तरोत्तरस्य ग्रन्थस्य प्रामाण्यं पूर्वपूर्वस्याप्रामाण्यमिति वैयाकरणसमय इति भावः। न चाकृतव्यूहपरिभाषाया उक्तरीत्या अनित्यत्वज्ञापनार्थमेतत्सूत्रमिति वाच्यम्। अकृतव्यूहपरिभाषाया निर्मूलत्वस्य निष्फलत्वस्य च हलन्ताधिकारे सेदिवश्शब्दनिरूपणे 'समर्थानां प्रथमाद्वा' इत्यत्र च वक्ष्यमाणत्वात्।

**संज्ञोपसर्जनीभूता इति**। आधुनिकसंकेतः संज्ञा। अन्यविशेषणत्वेन स्वार्थोपस्थापकमुपसर्जनम्। **न सर्वादय इति**। सर्वादिगणे पठिता न भवन्तीत्यर्थः। **महासंज्ञेति**। टिघुभादिवदेकाक्षरसंज्ञामकृत्वा सर्वेषां नामानीत्यन्वर्थसंज्ञाकरणबलेन प्राधान्येनोपस्थितस्वीयसर्वार्थवाचकत्वस्य सर्वनामशब्दप्रवृत्तिनिमित्तत्वमित्यवगततया तथाविधानामेव सर्वादिगणे पाठानुमानादित्यर्थः। प्राधान्येनोपस्थितेत्यनेन उपसर्जन-

---

प्रादिसमासः। **प्रत्याचख्याविति**। 'ऊर्ङः शूङ—' इति सतुग्ग्रहणं प्रकृतिप्रत्यापत्तिवचनं वा अनित्यत्वे ज्ञापकम्, लक्ष्यानुरोधाच्च व्यवस्थेति भावः। **यथोत्तरमिति**।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

च तेषां न भवति। सर्वो नाम कश्चित्तस्मै सर्वाय देहि। अतिक्रान्तः सर्वमतिसर्वस्तस्मा अतिसर्वाय देहि। अतिकतरं कुलम्। अतितत्। **२२३ तृतीयासमासे।** ( १-१-३० ) इह सर्वनामता न स्यात्। मासपूर्वाय। तृतीयासमासार्थवाक्येऽपि न। मासेन पूर्वाय। **२२४ द्वन्द्वे च।** ( १-१-३१ ) द्वन्द्वे

---

व्यावृत्तिः। प्राधान्येनोपस्थितसर्वार्थवाचकत्वमित्युक्ते पूर्वादिशब्देष्वव्याप्तिः, अतः स्वीयेति। सर्वार्थेत्यनेन संज्ञाशब्दव्यावृत्तिः, संज्ञाशब्दानामेकैकव्यक्तिविषयकत्वात्। **संज्ञाकार्यमिति।** सर्वनामसंज्ञाकार्यं शीस्मायादिकमित्यर्थः। **अन्तर्गणेति।** सर्वादिगणे अन्तर्गतो गणः अन्तर्गणः, तदीयं कार्यम् 'अद्ड्डतरादिभ्यः—' 'त्यदादीनामः' इत्यादिकमित्यर्थः। **सर्वाय देहीति।** संज्ञाशब्दत्वात् स्मायादेशो न। **अतिकतरमिति।** कतरमतिक्रान्तं कुलम् अतिकतरमित्यत्र कतरशब्दस्य उपसर्जनत्वान्नाद्ड्डादेशः। **अतितदिति।** तमतिक्रान्तो ब्राह्मणः अतितदित्यत्र त्यदाद्यत्वम्, 'तदोः सस्सौ—' इति च न भवति। **तृतीयासमासे।** 'सवादीनि—' इत्यतः सर्वनामग्रहणम्, 'न बहुव्रीहौ, इत्यतो नेति चानुवर्तत इत्यभिप्रेत्याह—**इहेति मासपूर्वायेति।** मासेन पूर्व इति विग्रहः। हेतौ तृतीया। 'पूर्वसदृश—' इति तृतीयातत्पुरुषसमासः। मासात् पूर्वभावीत्यर्थः। विभाषा दिक्समासे बहुव्रीहौ' इत्यतः समासग्रहणे अनुवर्तमाने पुनः समासग्रहणं तृतीयासमासीयलौकिकविग्रहवाक्यरूपगौणसमासस्यापि परिग्रहार्थम्'। ततश्च फलितमाह—**तृतीयासमासार्थेति।**

**द्वन्द्वे च।** 'सर्वादीनि—' इत्यतः सर्वनामग्रहणं 'न बहुव्रीहौ' इत्यतो नेति

---

तथा च संप्रति भाष्यकारोक्त्यैव व्यवस्थेति भावः। **गणे संनिवेशादिति।** एतेन 'पूर्वपरावर—' इति गणसूत्रे 'असंज्ञायाम्' इति ग्रहणं मन्दप्रयोजनमिति ध्वनितम्। संज्ञायां यानि पूर्वादीनि तेषां गणे संनिवेशाभावात्। एवमष्टाध्यायीस्थे 'पूर्वपरावर—' इति सूत्रेऽपि 'असंज्ञायाम्' इत्येतत्त्यक्तुं शक्यम्। न च तदभावे जसि परतः संज्ञायां उत्तराः कुरव इत्यत्राप्राप्तविकल्पः स्यादिति वाच्यम्। सर्वनामसंज्ञाया अन्वर्थत्वेन संज्ञायामप्राप्तविधेरसंभवादसंज्ञायामेव पूर्वेण प्राप्ता संज्ञा जसि वा स्यादिति वक्तुमुचितत्वात्। **संज्ञाकार्यमिति।** सर्वनामसंज्ञाप्रयुक्तं स्मायादिकमित्यर्थः। **अन्तर्गणकार्यमिति।** 'अद्ड्डतरादिभ्यः—' 'त्यदादीनामः' 'तदोः सः सौ—' इत्यादिकमित्यर्थः। **अतिकतरमिति।** अत्राद्ड्डादेशो न। अतितदित्यत्र तु त्यदाद्यत्वं 'तदोः सः सौ' इति सत्वं च नेति भावः। **तृतीयासमासे।** अत्र 'विभाषा दिक्समासे—' इत्यतः समासे इत्यनुवर्तमाने पुनः समासग्रहणं गौणार्थस्यापि संग्रहार्थमित्यभिप्रेत्याह—**तृतीयासमासार्थेति।** इह 'पूर्वसदृश—' इति विहितः समासो गृह्यते, प्रतिपदोक्तत्वात्। न तु

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उक्तसंज्ञा न। वर्णाश्रमेतराणाम्। समुदायस्यैवायं निषेधः, न त्ववयवानाम्। न चैवं तदन्तविधिना सुट्प्रसङ्गः। सर्वनाम्नो विहितस्यामः सुडिति व्याख्यातत्वात्।

---

चानुवर्तते। तदाह—**द्वन्द्वे उक्तसंज्ञा नेति**। सर्वनामसंज्ञा नेत्यर्थः। **वर्णाश्रमेतराणामिति**। 'वर्णाश्रमेतराणां नो ब्रूहि धर्मानशेषतः' इति याज्ञवल्क्यस्मृतिः। वर्णाश्च आश्रमाश्च इतरे चेति द्वन्द्वः। अत्र सर्वनामत्वाभावाद् 'आमि सर्वनाम्नः–' इति न सुट्। **समुदायस्यैवेति**। द्वन्द्वे विद्यमानानि यानि सर्वादीनि तानि सर्वनामानि न स्युरिति नार्थः। विद्यतिक्रियाध्याहारे गौरवात्। किन्तु द्वन्द्वे सर्वनामसंज्ञा न भवतीति प्रधानभूतया निषेध्यभवनक्रिययैव द्वन्द्वस्याधारतयान्वयः। द्वन्द्वाधारा सर्वनामसंज्ञा न भवतीत्यक्षरार्थः। द्वन्द्वस्य सर्वनामसंज्ञा नेति फलितम्। वर्णाश्रमेतरेत्यादिसमुदायस्यैव द्वन्द्वता। न तु तदवयवानाम्। एवं च वर्णाश्रमेतरेत्यादिसमुदायस्यैव सर्वनामत्वनिषेधः, न तु तदवयवानामित्यर्थः वस्तुस्थितिकथनम्। ननु द्वन्द्वावयवानां सर्वनामत्वनिषेधाभावे वर्णाश्रमेतरशब्दे इतरशब्दस्य सर्वनामतया ततः परस्यामः सुटि वर्णाश्रमेतरेषामिति स्यात्। न च अवर्णान्तात् सर्वनाम्नोऽङ्गात् परस्यामः सुड्विधानादिह चामि परे इतरशब्दस्य सर्वनामत्वेऽप्यङ्गत्वाभावान्न ततः परस्यामः सुट्प्रसक्तिरिति वाच्यम्। सुड्विधिर्ह्ययमङ्गाधिकारस्थः। ततश्च 'पदाङ्गाधिकारे तस्य च तदन्तस्य च' इति परिभाषया सर्वनामान्तादवर्णान्तादङ्गात् परस्यामः सुड् विधीयते। ततश्च वर्णाश्रमेतरशब्दस्य समुदायस्य द्वन्द्वतया सर्वनामत्वनिषेधेऽपि तदवयस्य इतरशब्दस्य सर्वनामतया तदन्ताङ्गात् परत्वादामः सुट् स्यात्। न चैवं सति द्वन्द्वस्य तन्निषेधो व्यर्थः स्यादित्याशङ्क्यम्, पदाङ्गाधिकारादन्यत्र तसिल्त्रलादिविधौ तन्निषेधस्यार्थवत्त्वादित्याशङ्क्य परिहरति—**न चैवमित्यादिना**। एवमित्यनन्तरं सतीति शेषः। एवं सति समुदायस्यैव निषेधे सति तदन्तविधिना सुट्प्रसङ्गो नेत्यन्वयः। कुत इत्यत आह—**सर्वनाम्नो विहितस्येति**। अवर्णान्तादङ्गात् परस्य सर्वनाम्नो विहितस्यामः सुडिति व्याख्यानादित्यर्थः। प्रकृते च वर्णाश्रमेतरशब्दात् समुदायादाम् विहितः, न च स समुदायः सर्वनामसंज्ञकः, द्वन्द्वस्य तन्निषेधात्। इतरशब्दस्तु सर्वनामसंज्ञकः, न ततो विहित

---

'कर्तृकरणे–' इति समासः, तेन त्वयका कृतमित्यत्र निषेधो न भवति। 'ओकारसकारभकारादौ सुपि–' इति व्यवस्थापयिष्यमाणत्वादिह सुपष्टेः प्रागकच्। **समुदायस्येति**। तत्रैव द्वन्द्वशब्दस्य मुख्यत्वात्। न च द्वन्द्वे यानि सर्वादीनीति संबन्धः, कारकाणां क्रिययैवान्वयात्। न च द्वन्द्वे विद्यमानानि यानीति संबन्धः। विद्यतिक्रियाध्याहारे गौरवात्, निषेध्याया भवतिक्रियाया एव प्राधान्येन तदन्वयस्यैव न्याय्यत्वाच्चेति भावः। **सुट्प्रसङ्ग इति**। न च 'द्वन्द्वे च' इति निषेधसामर्थ्यात् 'वर्णाश्रमेत-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

२२५ विभाषा जसि। ( १-१-३२ ) जसाधारं यत्कार्यं शीभावाख्यं तत्र कर्तव्ये द्वन्द्वे उक्ता संज्ञा वा स्यात्। वर्णाश्रमेतरे, वर्णाश्रमेतराः। शीभावं प्रत्येव विभाषेत्युक्तम्, अतो नाकच्, किं तु कप्रत्यय एव। वर्णाश्रमेतरकाः। २२६

आम्। आमः समुदायादेव विधानात्। अतो न सुडिति भावः। अवर्णान्तादङ्गात् सर्वनाम्नो विहितस्यामः सुडिति व्याख्याने तु येषां तेषामित्यत्राव्याप्तिः। अतः अवर्णान्तादङ्गात् परस्य सर्वनाम्नो विहितस्यामः सुडित्येव व्याख्येयम्। **विभाषा जसि।** सर्वनामग्रहणमनुवर्तते, द्वन्द्व इति च। जसि इत्यविभक्तिको निर्देशः। जस इः जसिः। आर्षः सप्तम्या लुक्। इशब्द इवर्णपरः सन् शी इतीकारमाचष्टे। ततश्च 'जसादेशे शीभावे कर्तव्ये' इति फलितम्। तदाह—**जसाधारमिति।** जस् आधारो यस्येति बहुव्रीहिः। जस्स्थानकमित्यर्थः। ननु जसि परतो द्वन्द्वे सर्वनामसंज्ञा वा स्यादित्येव कुतो न व्याख्यायत इत्यत आह—**शीभावं प्रत्येवेत्यादिना।** यदि तु अकच् स्यात्, तर्हि तस्याव्यवधायकत्वाच्छीभावः प्रसज्येत। कप्रत्यये तु सति तेन व्यवधानान्नोक्तदोष इत्याह—**वर्णाश्रमेतरका इति।** न चाकचि कर्तव्ये विकल्पाभावेऽपि 'सर्वादीनि—' इति नित्या सर्वनामसंज्ञा कुतोऽत्र न स्यादिति वाच्यम्, 'द्वन्द्वे च' इति तस्या नित्यनिषेधात्। न च द्वन्द्वे चेति निषेधस्य उक्तरीत्या अवयवेषु प्रवृत्त्यभावाद्वर्णाश्रमेतरशब्दे समुदाये इतरशब्दस्यावयवस्य सर्वनामत्वानपायादकज्दुर्वार इति वाच्यम्, द्वन्द्वावयवमात्रे सुन्दरादिविशेषणान्वयाभाववत् कुत्सादिविवक्षाया अभावात्। समुदाये तद्विवक्षायां समुदायोत्तरप्रत्ययेन अवयवगतकुत्सादेरपि बोधेनोक्तार्थत्वादवयवेभ्यः पृथक् तदनुत्पत्तेः। अन्यथा अवयवेभ्यः प्रत्येकं कप्रत्ययापत्तेः। एतदेवाभिप्रेत्योक्तं भाष्ये—'वर्णाश्रमेतरशब्दे अकच् न भवति' इति। एवं च यदा इतरशब्देन द्वन्द्वं कृत्वा कुत्सिता वर्णाश्रमेतरा इति कुत्सायोगः क्रियते तदा कप्रत्यये सति वर्णाश्रमेतरका इत्येव रूपम्। यदा तु कुत्सित इतर इतरक इति अकचं कृत्वा वर्णाश्च आश्रमाश्च इतरके चेति द्वन्द्वः क्रियते, तदा शीभावविकल्पः स्यादेव।

---

राणाम्' इत्यादौ सुट् न प्रसज्यत इति वाच्यम्। अनाङ्गस्य त्रतसिलादेर्व्यावृत्त्या तत्सामर्थ्यस्योपक्षीणत्वात्। **जसाधारमिति।** शीभावेन जस्यपहृतेऽप्यौपचारिकमाधारत्वमत्र बोध्यम्। यद्वा जस इर्जसि, तस्मिन्, सौत्रः सप्तम्या लुक्। इत्यर्थतो व्याचष्टे—**जसाधारमिति।** अन्यथा सत्यकचि 'जसः शी' इत्यस्य प्रवृत्तौ वर्णाश्रमेतरके इत्यपि रूपं स्यादिति भावः। यदा अज्ञातः कुत्सितो वा इतर इतरक इत्यकचं कृत्वा वर्णाश्च आश्रमाश्च इतरके चेति द्वन्द्वः क्रियते तदा रूपद्वयं स्यादेव। परं तु इतरशब्देन द्वन्द्वं कृत्वा अज्ञाता वर्णाश्रमेतरा इत्यज्ञाताद्यर्थयोगो यदा क्रियते तदा वर्णाश्रमेतरका इत्ये-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

**प्रथमचरमतयाल्पार्धकतिपयनेमाश्च । ( १-१-३३ )** एते जसः कार्यं प्रत्युक्तसंज्ञा वा स्युः । प्रथमे, प्रथमाः । शेषं रामवत् । तयप् प्रत्ययस्ततस्तदन्ता ग्राह्याः । द्वितये, द्वितयाः । शेषं रामवत् । नेमे, नेमाः । शेषं सर्ववत् । 'विभाषाप्रकरणे तीयस्य ङित्सूपसंख्यानम्' ( वा २४२ )। द्वितीयस्मै, द्वितीयाय इत्यादि।

**प्रथमचरमतया** । 'विभाषा जसि' इत्यनुवर्तते, सर्वनामानीति च । तदाह—**एत इति** । प्रथमादय इत्यर्थः । **उक्तसंज्ञा इति** । सर्वनामसंज्ञका इत्यर्थः । तत्र नेमशब्दस्य जसि सर्वनामसंज्ञा गणे पाठान्नित्या प्राप्ता । तद्विकल्पोऽत्र विधीयते । नेमशब्दव्यतिरिक्तानां प्रथमादिशब्दानां तु गणे पाठाभावादप्राप्तैव सर्वनामसंज्ञा जसि विकल्पेन विधीयते । अतो नेमशब्दव्यतिरिक्तानां प्रथमादिशब्दानां जसोऽन्यत्र न सर्वनामकार्यमित्याह—**शेषं रामवदिति** । तयशब्दो न प्रातिपदिकमित्याह—**तयप्प्रत्यय इति** । 'संख्याया अवयवे तयप्' इति विहित इति शेषः । **तत इति** । तस्मात् प्रत्ययत्वाद्धेतोः प्रत्ययग्रहणपरिभाषया तदन्ताः तयवन्ता ग्राह्या इत्यर्थः । **द्वितये, द्वितया इति** । द्वाववयवावस्येत्यर्थे तयप् । यद्यप्यवयवसमुदायः अवयवी तयबर्थः, तस्य च एकत्वादेकवचनमेव युक्तम् । तथापि यदा उद्भूतावयवभेदः समुदायस्तयबर्थः, उद्भूतत्वं च विवक्षितसंख्याकत्वम्, तदा अवयवबहुत्वाभिप्रायम् अवयविनः अवयवाभेदाभिप्रायं वा बहुवचनमिति न दोषः । अत्र च तयब्ग्रहणमेव प्रमाणम् । अन्यथा तयबन्ताज्जस एवाभावात् किं तेन । चरमे चरमाः, अल्पे अल्पाः, अर्धे अर्धाः, कतिपये कतिपयाः, इत्यपि प्रथमशब्दवदुदाहार्यम् । अर्धशब्दस्त्वेकदेशवाची पुँल्लिङ्गः । समांशवाची तु नपुंसकलिङ्गः । 'वा पुंस्यर्धोऽर्धं समेंऽशके' इति कोशात् । **शेषं सर्ववदिति** । नेमशब्दस्य सर्वादिगणे पाठादिति भावः । **विभाषाप्रकरण इति** । 'विभाषा जसि' इत्यधिकारे तीयान्तस्य ङे–ङसि–ङस्–ङि–इत्येतेषु ङित्सु परेषु सर्वनामसंज्ञावचनं कर्तव्यमित्यर्थः । **द्वितीयस्मै, द्वितीयायेति** । द्वयोः पूरणो द्वितीयः । द्वेस्तीय इति पूरणे तीयप्रत्ययः । **इत्यादीति** । द्वितीयस्मात्, द्वितीयात्, द्वितीयस्मिन्,

द्वितीये इत्यादि ।

क्वमेव रूपं साध्विति बोध्यम् । ननु द्वन्द्वावयवस्येतरशब्दस्याप्यकज् दुर्वारः, अवयवस्य सर्वनामतानपायात् । 'द्वन्द्वे च' इत्यनेन हि समुदायस्य निषेधो न त्ववयवानामिति चेत् । अत्राहुः—सिद्धान्ते हि जहत्स्वार्था वृत्तिरिति पक्षो मुख्यः तस्मिंस्तु पक्षे अवयवानां निरर्थकत्वाद् अज्ञाताद्यर्थयोगाभावेनाकचः प्राप्तिरेव नास्ति । यैस्तु 'द्वन्द्वे च' इति चकारेणावयवेष्वपि संज्ञा निषिध्यत इत्युच्यते, तेषामजहत्स्वार्थवृत्तिपक्षाभ्युपगमेऽपि न दोष इति । **प्रथमचरम** । नेमशब्दस्य नित्यं प्राप्ते अन्येषामप्राप्ते चायमारम्भः । **तयः प्रत्यय इति** । 'संख्याया अवयवे तयप्' इति विहितः । **तीयस्येति** ।

१ तत्त्वबोधिनी संमतः पाठः 'तयः' इति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एवं तृतीयः। अर्थवद्ग्रहणान्नेह। पटुजातीयाय। निर्जरः। **२२७ जराया जरसन्यतरस्याम्।** (७-२-१०१) जराशब्दस्य जरस् वा स्यादजादौ विभक्तौ। 'पदाङ्गाधिकारे तस्य च तदन्तस्य च' (प. ३०)। अनेकाल्त्वात्सर्वादेशे

---

द्वितीये इत्यादिशब्दार्थः। **एवं तृतीय इति।** ङित्सूदाहार्य इति शेषः। 'त्रेः संप्रसारणं च' इति पूरणे तीयप्रत्ययः। रेफस्य संप्रसारणम् ऋकारः। 'संप्रसारणाच्च' इति पूर्वरूपम्। ननु 'प्रकारवचने जातीयर्' इति पटुशब्दाद् जातीयरि पटुजातीयशब्दः। तस्यापि तीयान्तत्वाद् ङित्सु सर्वनामत्वविकल्पः स्यादित्यत आह—**अर्थवदिति।** 'अर्थवद्ग्रहणे नानर्थकस्य' इति परिभाषया अर्थवानेव तीयोऽत्र गृह्यते। जातीयरि तु समुदायस्यैवार्थवत्त्वं न तु तदेकदेशस्येति भावः।

निष्क्रान्तो जराया निर्जरः। 'निरादयः क्रान्ताद्यर्थे—' इति समासः। 'गोस्त्रियोः—' इति ह्रस्वत्वम्। निर्गता जरा यस्मादिति बहुव्रीहिर्वा। अस्य निर्जरशब्दस्य विशेषं दर्शयितुमाह—**जरायाः।** 'अष्टन आ विभक्तौ' इत्यतो विभक्तावित्यनुवृत्तम् 'अचि र ऋतः' इत्यतोऽनुवृत्तेन अचीत्यनेन विशेष्यते। 'यस्मिन् विधिः—' इति तदादिविधिः। तदाह—**जराशब्दस्येत्यादिना।** ननु जराशब्दस्य विधीयमानो जरसादेशः कथं निर्जरशब्दस्य भवेदित्यत आह—**पदेति।** पदाधिकारे अङ्गाधिकारे च यस्य यद्विहितं तत् तस्य तदन्तस्य च भवतीत्यर्थः। जरसादेशश्चायमङ्गाधिकारस्थत्वाद् जराशब्दस्य तदन्तस्य च भवति। जरसावित्यादौ तु व्यपदेशिवद्भावेन तदन्तत्वं बोध्यम्। यद्यपि जराया इत्यस्य अङ्गविशेषणत्वादेव तदन्तविधिः सिद्धः, तथापि 'येन विधिः—' इत्यस्य प्रपञ्चभूतेयं परिभाषेत्यदोषः। अत एव 'पदमङ्गं च विशेष्यं विशेषणेन च तदन्तविधिः' इति प्रौढमनोरमायामुक्तम्। ननु जराशब्दान्तस्य विधीयमानो जरसादेशो निर्जरशब्दस्य कृत्स्नस्य स्यात्, अनेकाल्त्वादित्याक्षिप्य समाधत्ते—**अनेकाल्त्वादिति।**

---

'द्वित्तीयः' 'त्रेः संप्रसारणं च' इति विहितस्य। **पटुजातीयायेति।** 'प्रकारवचने जातीयर्'। **जराया जर।** 'अष्टन आ विभक्तौ' इत्यतो विभक्तावित्यनुवर्त्य 'अचि र ऋतः' इत्यतोऽनुवृत्तेनाचीत्यनेन विशेष्यते, विशेषणेनेह तदादिविधिः, 'यस्मिन् विधिस्तदादावल्ग्रहणे' इत्यस्य तदन्तविधेरपवादत्वादित्याशयेनाह—**अजादौ विभक्ताविति।** अजादौ किम्, जराभ्याम्। जराभिः। विभक्ताविति किम्, जराया इदं जारम्। न च जराया अप्सुङ्वास्त्विति वाच्यम्। जराशब्दात् 'तत्करोति—' इति णिचि 'णाविष्ठवत्—' इति टिलोपे ततः क्विपि णिलोपे चैकदेशविकृतस्यानन्यतया जरित्यस्य जराशब्दत्वादसुङि सति 'ङिच्च' इत्यन्त्यस्य प्रवृत्त्या जसौ जस इति रूपापत्तेः। इष्यते त्वत्रापि जरसौ जरस इति। न च णिलोपस्य स्थानिवद्भावाद्विभक्ति-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्राप्ते 'निर्दिश्यमानस्यादेशा भवन्ति' ( प १३ )। एकदेशविकृतस्यानन्यत्वाद् जर-शब्दस्य जरस्। निर्जरसौ। निर्जरसः। इनादीन्बाधित्वा परत्वाज्जरस्। निर्जरसा। निर्जरसे। निर्जरसः। पक्षे हलादौ च रामवत्। वृत्तिकृता तु 'पूर्वविप्रतिषेधेनेना-

---

**निर्दिश्यमानस्यादेशा भवन्तीति**। प्रत्यक्षनिर्दिश्यमानस्यैवेत्यर्थः। अनया परि-भाषया जराशब्दस्यैव जरस्। जराशब्द एव ह्यत्र स्थानी प्रत्यक्षनिर्दिष्टः। जराशब्दा-न्तस्य तु निर्देशस्तदन्तविधिलभ्यत्वाद् आनुमानिक इति भावः। इयं च परिभाषा 'षष्ठी स्थानेयोगा' इति सूत्रसिद्धार्थकथनपरेति तत्रैव भाष्ये स्पष्टम्। ननु निर्जरशब्दस्य जरा-शब्दान्तत्वाभावात् कथमिह जरसादेश इत्यत आह—**एकदेशेति**। छिन्नेऽपि पुच्छे श्वा श्वैव, न चाश्वो न च गर्दभ इति न्यायादिति भावः। **निर्जरसौ। निर्जरस इति**। प्रथमाद्वितीययोर्द्विवचने बहुवचने च रूपम्। अमि निर्जरसमित्युदाहार्यम्। ननु तृतीयैकवचने पञ्चम्येकवचने च, निर्जर आ, निर्जर अस् इति स्थिते इनातोः कृतयोः जरसादेशे निर्जरसिन निर्जरसादिति प्राप्तम्। तथा चतुर्थ्येकवचने षष्ठ्येकवचने च, निर्जर ए, निर्जर अस्, इति स्थिते, यादेशे, स्यादेशे च सति अजादिविभक्त्य-भावाद् जरसादेशाभावे निर्जराय, निर्जरस्येति प्राप्तम्। तदाह—**इनादीनिति**। इन-य-आत्-स्य इत्यादेशान् नुटं च परत्वाद् बाधित्वा जरसादेशः। ततश्च अदन्तत्वा-भावाद् इनादयो न भवन्तीत्यर्थः। **निर्जरसेति**। तृतीयैकवचनम्। **निर्जरसे इति**। चतुर्थ्येकवचनम्। **निर्जरस इति**। पञ्चम्येकवचने षष्ठ्येकवचने च रूपम्। निर्जरसोः, निर्जरसाम्, निर्जरसीत्यप्युदाहार्यम्। **पक्ष इति**। जरसादेशाभावपक्ष इत्यर्थः। **हलादौ चेति**। भिस ऐसादेशे निर्जरैरित्येव रूपम्। न तु जरसादेशे निर्जरसैरिति। अदन्त-

---

परत्वाभावेन जरसत्त्वमित्यादि न सिध्यतीति शङ्क्यम्। 'क्वौ लुप्तं न स्थानिवत्' इति निषे-धात्। यद्यपि 'क्वौ लुप्तं न स्थानिवत्' इति क्वाचित्कम्, तथापीह तदाश्रयणे जरसिति गुर्वादेशकरणमेव मानमित्यवधेयम्। **पदाङ्गाधिकार इति**। परिभाषेयं 'येन विधिः–' इत्यस्य प्रपञ्चभूता। अत एव मनोरमायां 'पदमङ्गं च विशेष्यं विशेषणेन च तदन्त-विधिः' इत्युक्तम्। विशेष्यमिति तु प्रायेणेति बोध्यम्। तेन 'अल्लोपोऽनः' इति सूत्रे अङ्गावयवो योऽनिति वक्ष्यमाणग्रन्थः स्वरसतः संगच्छते। अत्र नव्याः—नन्वाकरे 'तस्य तदुत्तरपदस्य च' इति प्रचुरः पाठः। तदन्तस्य चेति पाठे तु बहुच्पूर्वकेष्वपि पदाङ्गाधिकारकार्याणि प्रवर्तेरन्नित्याशङ्क्य समादधुः—अनभिधानात्पदाङ्गाधिकारकार्याणि बहुच्पूर्वकेषु न प्रवर्तन्त इत्याशयेन फलितार्थकथनपरतया तदुत्तरपदस्य चेति पठितम्, न त्विदमपूर्वं वचनमिति। सोपसर्गस्य सर्वस्य स्थाने जरसादेशमाशङ्क्याह—**निर्दिश्येति**। ननु तदन्तविधिनापि जराशब्दान्तं यदङ्गं तत्रैव निर्दिश्यमानजराशब्दे जरसादेशेन

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तोः कृतयोः संनिपातपरिभाषाया अनित्यत्वमाश्रित्य जरसि कृते निर्जरसिन नि-र्जरसात् इति रूपे, न तु निर्जरसा निर्जरसः इति केचित्' इत्युक्तम्। तथा भिसि निर्जरसैः इति रूपान्तरमुक्तम्। तदनुसारिभिश्च षष्ठ्येकवचने 'निर्जरस्य' इत्येव रूपमिति स्वीकृतम्। एतच्च भाष्यविरुद्धम्। २२८ पद्दन्नोमास्हृन्निशसन्यूष-

---

मङ्गमाश्रित्य प्रवृत्तस्य ऐसः संनिपातपरिभाषया तद्विघातकजरसादेशानिमित्तत्वायोगात्।

अथ वृत्तिकृदुत्प्रेक्षितं मतान्तरं दूषयितुम् अनुवदति—**वृत्तिकृता त्वित्या-दिना**। पूर्वविप्रतिषेधेनेत्यादि केचिदित्यन्तो वृत्तिग्रन्थः। वृत्तिकृता तु इनातोः कृतयोः जरसि कृते निर्जरसिन निर्जरसादिति रूपम्, न तु निर्जरसा निर्जरस इति केचिदित्युक्त-मित्यन्वयः। ननु इनादेशमादादेशं च परत्वाद् बाधित्वा जरसि कृते, अदन्तत्वाभावात् कथमिनातौ स्यातामित्यत आह—**पूर्वविप्रतिषेधेनेति**। विप्रतिषेधे पूर्वस्य प्रवृत्तिर्यत्र बोध्यते तत् पूर्वविप्रतिषेधम्, 'विप्रतिषेधे परं कार्यम्' इति सूत्रं तेनेत्यर्थः। तत्र पर-शब्दस्येष्टवाचित्वमाश्रित्य विप्रतिषेधे क्वचित् पूर्वस्य कार्यस्य प्रवृत्त्यभ्युपगमेनेति यावत्। ननु इनातोः कृतयोः कथं जरसादेशः, संनिपातपरिभाषाविरोधादित्यत आह—**संनि-पातपरिभाषाया अनित्यत्वमाश्रित्येति**। **तथेति**। भिस ऐसादेशे जरसादेशा-भावपक्षे निर्जरैरिति रूपम्। संनिपातपरिभाषाया अनित्यत्वाद् जरसि कृते तु निर्जरसै-रिति रूपान्तरमुक्तमित्यर्थः। **तदनुसारीति**। निर्जरसिनेत्यादि रूपं यैरुक्तं तदनुसारिभि-रित्यर्थः। **निर्जरस्येत्येवेति**। पूर्वविप्रतिषेधेन स्यादेशे कृते अजादिविभक्त्यभावान्न जरस्। इनातोः पूर्वविप्रतिषेधे आश्रित सति एकसूत्रोपात्तत्वात् स्यादेशविषयेऽपि पूर्व-विप्रतिषेध आश्रयितुमुचितः। अतो निर्जरस्येत्येकमेव रूपम्, न तु निर्जरस इत्यपीति भावः। **एतच्चेति**। वृत्तिकृदुत्प्रेक्षितं केषांचिन्मतं तदनुसारिमतं चेत्यर्थः। **भाष्य-विरुद्धमिति**। 'टाङसिङसामिनात्स्याः' इत्यत्र नादेश एव विधेयः। इकारोच्चारणं मास्तु। तथा अदादेश एव विधेयः, न तु दीर्घ आदिति। रामेणेत्यत्र एकारस्तु योग-विभागाद् भवति। तथा हि 'बहुवचने झल्येत्' 'ओसि च' 'आङि चापः' 'संबुद्धौ च' इति सूत्रक्रमः। तत्र आङीति योगविभागः क्रियते। अत एकारः स्याद् आङि। रामेण। आपः संबुद्धौ चेत्यन्यो योगः। आप एकारः स्यात् संबुद्धौ आङि ओसि च।

---

भवितव्यं न त्वन्यत्रेत्यत आह—**एकदेशविकृतस्येति**। पदाधिकारेऽपि तदन्त-विधावुदाहरणं तदन्तस्यापि रुत्वरत्वे दीर्घाहो निदाघ इत्यादि वक्ष्यति। 'अलुगुत्तर-पदे' इत्ययमुत्तरपदाधिकारोऽपि पदाधिकारग्रहणेन गृह्यते। तत्फलं तु तत्रैव स्फुटी-करिष्यति। **पक्ष इति**। जरसादेशाभावे। **तदनुसारिभिरिति**। ये तु निर्जरसि-नेत्यादि व्याचक्षते तन्मतानुसारिभिरित्यर्थः। **निर्जरस्येत्येवेति**। पूर्वविप्रतिषेधेन

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न्दोषन्यकञ्छकन्नुदन्नासञ्छस्प्रभृतिषु । ( ६-१-६३ ) पाद दन्त नासिका मास हृदय निशा असृज् यूष दोष यकृत् शकृत् उदक आस्य एषां पदादय आदेशाः स्युः शसादौ वा । यत्तु 'आसनशब्दस्यासन्नादेशः' इति काशिकाया-मुक्तं तत्प्रामादिकम् । पादः । पादौ । पादाः । पादम् । पादौ । पदः, पादान् ।

---

हे रमे, रमया, रमयोः । ङसेरदादेशे अकारोच्चारणसामर्थ्याद् 'अतो गुणे' इति न पर-रूपमित्यादि 'टाङसिङसाम्-' इति सूत्रे भाष्ये स्थितम् । निर्जरसिन निर्जरसादिति रूप-सत्त्वे एतद्भाष्यासंगतिः स्पष्टैव । अत्र इकारस्य आकारस्य च श्रवणाय इनादेशे इकारो-च्चारणावश्यकत्वात् । किं च 'गोनर्दीयस्त्वाह--अतिजरैरित्येव भवितव्यं संनिपातपरि-भाषया' इति 'जराया जरसन्यतरस्याम्' इति सूत्रे भाष्ये स्थितम् । निर्जरसैरिति रूपा-भ्युपगमे एतदसंगतिः स्पष्टैव । अतः पूर्वविप्रतिषेधेनेत्यादि मतान्तरमशुद्धमित्यर्थः ।

अथ पादशब्दस्य शसादौ विशेषं दर्शयितुमाह--**पद्दन्नो** । पद्-दत्-नस्-मास्-हृद्-निश्-असन्-यूषन्-दोषन्-यकन्-शकन्-उदन्-आसन् इत्येषां समाहार-द्वन्द्वः । शस्-द्वितीयाबहुवचनं प्रभृतिः-आदिः येषामिति तद्गुणसंविज्ञानो बहुव्रीहिः । 'अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्' इत्यतः अन्यतरस्यामित्यनुवर्तते । शसादिषु परेषु पदादय आदेशाः स्युरित्यर्थः । पदाद्यादेशैश्च स्वानुरूपाः स्थानिन आक्षिप्यन्ते । तदाह-**पाददन्तेत्यादिना** । यथासंख्यपरिभाषया पादादीनां क्रमेण पदादय आदेशाः प्रत्ये-तव्याः । **तत् प्रामादिकमिति** । भ्रममूलकमित्यर्थः । 'हव्या जुह्वान आसनि' इति मन्त्रे 'आसन्यं प्राणमूचुः' इत्यादौ च आस्यार्थकत्वस्यैव दर्शनादिति भावः । दन्त-शब्दस्य सुटि रामवत् । शसि 'पद्दन्-'इति दत् आदेशः । दत् अस् इति स्थिते तकारस्य 'झलां जशोऽन्ते' इति पदान्ते विधीयमानजश्त्वमाशङ्कितुं पदसंज्ञाविधायकं सूत्रं

---

स्यादेशे कृते जरसादेशो न प्रवर्तत इत्येकमेव रूपमिति तेषामाशयः । अत एव 'वीत-जन्मजरसः परं शुचिर्ब्रह्मणः पदम्' इति भारविप्रयोगमसमञ्जसं मत्वा 'वीतजन्मरजसः' इति पठनीयमिति तैरुक्तम् । **एतच्चेति** । भाष्यकृता हि 'टाङसि-' इति सूत्रे इनातौ प्रत्याख्याय नादेशमदादेशं च विधाय नादेशे परे एत्वम् 'आङि चापः' इत्यत्र 'आङि च' इति योगं विभज्य साधितम् । तथा च निर्जरसिन निर्जरसादित्येतद्भाष्यविरुद्ध-मिति स्पष्टमेव । न च नादेशे कृते हलि लोपप्रवृत्त्या अनेनेत्येतन्न सिध्यतीति शङ्क्यम् । नशब्दे परतो विशिष्यानादेशविधानात् । तथा हि । 'अनाप्यकः' इत्यत्र 'अन् नापि' इति पदच्छेदः । नपुंसकत्वात्सोर्लुकि नलोपः 'नापि' इति समाहारद्वन्द्वात्सप्तम्येकवचनम् । न च ङसेरदादेशे कृते पररूपं स्यादित्यपि शङ्क्यम् । अकारोच्चारणसामर्थ्याद्दीर्घसंभ-वात् । तथा 'जराया जरसन्यतरस्याम्' इत्यस्मिन्नेव सूत्रे भाष्ये उक्तम्-'अतिजरैरिति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पदा, पादेनेत्यादि। २२९ सुडनपुंसकस्य। (१-१-४३) सुडिति प्रत्याहारः। स्वादिपञ्चवचनानि सर्वनामस्थानसंज्ञानि स्युरक्लीबस्य। २३० स्वादिष्वसर्वनामस्थाने। (१-४-१७) कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु परतः पूर्वं पदसंज्ञं स्यात्। २३१ यचि भम्। (१-४-१८) यकारादिष्वजादिषु च कप्प्रत्ययावधिषु स्वादिष्वसर्वनामस्थानेषु परतः पूर्वं भसंज्ञं

---

वक्ष्यति–'स्वादिष्वसर्वनामस्थाने' इति। तत्र किं सर्वनामस्थानमित्यत आह—**सुडनपुंसकस्य**। 'शि सर्वनामस्थानम्' इत्यतः सर्वनामस्थानमित्यनुवर्तते। अक्लीबम्–नपुंसकभिन्नप्रातिपदिकम्, तस्य सुट् सर्वनामस्थानसंज्ञं स्यादित्यर्थः। तत्र सुट्शब्दमप्रसिद्धार्थत्वाद्व्याचष्टे—**सुडिति प्रत्याहार इति**। सु इत्यारभ्य औटष्टकारेणेति शेषः। न तु टाटकारेण, प्रथमातिक्रमणे कारणाभावात्। तदेतदाह—**स्वादिपञ्चवचनानीति**। **स्वादिष्वसर्वनामस्थाने**। असर्वनामस्थान इति बहुत्वेऽप्येकवचनमार्षम्। **कप्प्रत्ययावधिष्विति**। पञ्चमाध्यायान्ते विधीयमानकप्प्रत्ययोत्तरावधिकेष्वित्यर्थः। तत्र च व्याख्यानमेव शरणम्। एवं च दत् अस् इत्यत्र दत्शब्दस्य सुबन्तत्वाभावेन पदत्वाभावेऽपि अनेन सूत्रेण पदत्वात् 'झलां जशोऽन्ते' इति तकारस्य जश्त्वं स्यादित्याक्षेपः सूचितः। भसंज्ञया पदसंज्ञाबाधाद् न जश्त्वमिति समाधातुं भसंज्ञासूत्रमाह—**यचि भम्**। य् च अच्चेति समाहारद्वन्द्वः। 'स्वादिष्वसर्वनामस्थाने' इत्यनुवृत्तं यचीत्यनेन विशेष्यते। 'यस्मिन् विधिः–' इति तदादिविधिः। तदाह—**यकारादिष्वित्यादिना**। एवं च दत्

---

भवितव्यं संनिपातपरिभाषया' इति। ततश्च निर्जरसैरित्यपि भाष्यविरुद्धमेव। एतेन 'अतो भिस–' इति सूत्रे एसिति वक्तव्ये ऐस्करणं निर्जरसैरिति रूपार्थमिति केषांचिद्व्याख्यानं प्रामादिकमिति स्पष्टमेव। **पदन्नो**। **शसादौ वेति**। 'अनुदात्तस्य चर्दुपधस्य–' इत्यतोऽन्यतरस्यामित्यनुवर्तत इति भावः। अत्र शस्प्रभृतयो निमित्ततयोपात्तास्ते च पदाद्यादेशानुरूपान् प्रकृतिविशेषानाक्षिपन्तीत्याह—**पाद्दन्तेति**। यद्यपि 'शीर्षश्छन्दसि' इत्यतः छन्दसीत्यनुवर्तते, तथापि भाषायामपि क्वचित्पदादयो भवन्ति 'मासश्छन्दसि' इति वार्तिके छन्दोग्रहणसामर्थ्यादिति वक्ष्यति। **प्रामादिकमिति**। तथा हि—'आस्नो वृकस्य वर्तिकाम्' इति मन्त्रे मुखादित्यर्थः, औचित्यात्। 'वृकस्य चिद् वर्तिकामन्तरास्यात्' इति मन्त्रान्तरसंवादाच्च। तथा 'हव्या जुह्वान आसनि' इति मन्त्रे मुखे इत्यर्थः। एवम् 'आसन्यं प्राणमूचुः' इत्यादावपि बोध्यम्। **सुडनपुंसकस्य**। 'सुट् स्त्रीपुंसयोः' इति वक्तव्ये अनपुंसकस्येति वचनं ज्ञापकम् 'प्रसज्यप्रतिषेधेऽपि नञ्समासोऽस्ति' इति कैयटः। तेन असूर्यंपश्यानि मुखानीत्यादि सिद्धम्। **स्वादिष्वसर्वनाम**। सुरत्र सप्तमीबहुवचनमिति न शङ्क्यम्, किं तु 'असर्वनाम-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्यात्। २३२ आ कडारादेका संज्ञा। (१-४-१) इत ऊर्ध्वं 'कडाराः कर्मधारये' (सू ७५१) इत्यतः प्रागेकस्यैकैव संज्ञा ज्ञेया। या परा अनवकाशा च। तेन शसादावचि भसंज्ञैव, न पदत्वम्। अतो जश्त्वं न। दतः। दता।

---

अस् इत्यत्र दत् इत्यस्य भसंज्ञया पदसंज्ञाबाधान्न जश्त्वमिति भावः। ननु पदभसंज्ञयोरिह समावेशः कुतो न स्यात्। न च विप्रतिषेधे परं कार्यमिति परैव भसंज्ञा भवतीति वाच्यम्। विरोधो हि विप्रतिषेधः। नह्यत्र द्वयोरपि संज्ञयोः समावेशे विरोधोऽस्ति। तव्यत्तव्यानीयरादौ कृत्कृत्यप्रत्ययादिसंज्ञासमावेशदर्शनादित्यत आह—आ कडारा। आङ्मर्यादायामित्याह—कडाराः कर्मधारय इत्यतः प्रागिति। आङिह नाभिविधौ। कडारशब्दस्यापि प्रवेशे प्रयोजनाभावात्। प्राक्कडारादिति कडारशब्दस्तु नोत्तरावधिः। 'कडाराः कर्मधारये' इति कडारशब्दस्य उत्तरावधित्वे अधिकलाभात्। प्राक्कडारादित्युत्तरं तत्पुरुषः द्विगुश्चेति चकाराच्च। संज्ञाद्वयसमावेशार्थो हि चकारः। तत्रैकसंज्ञाया नियमाप्रवृत्तौ किं तेन। नन्वस्त्विह एकैव संज्ञा। तथापि विनिगमनाविरहाद् भसंज्ञैवेति कुतो लाभः। तत्राह—या परा अनवकाशा चेति। विरोधाभावेन विप्रतिषेधसूत्रस्य सामान्याद्विशेषबलीयस्त्वस्य चाप्रवृत्तावपि परत्वनिरवकाशत्वयोः अन्यत्र बलवत्त्वेन दृष्टत्वादिहापि ताभ्यां व्यवस्था युज्यत इति भावः। द्वयोः सावकाशयोः परा संज्ञा बलवती। अन्यतरस्या निरवकाशत्वे तु सैवेति बोध्यम्। तत्र परा यथा—धनुषा शरैर्विध्यतीत्यत्र शराणां विश्लेषं प्रत्यवधिभूतस्यैव धनुषो व्यधनं प्रति साधकतमत्वादपादानत्वे करणत्वे च प्राप्ते परा करणसंज्ञैव भवति। अनवकाशा यथा—अतत्तदिति। अत्र तकारादकारस्य 'संयोगे गुरु' इति गुरुसंज्ञैव अनवकाशत्वाद् भवति, न तु लघुसंज्ञा। तस्या असंयोगे परे चरितार्थत्वात्। अतः 'सन्वल्लघुनि-' इति तत्र न प्रवर्तते। तेनेति। अनवकाशत्वेनेत्यर्थः। अत इति। पदत्वाभावाद् जश्त्वं नेत्यर्थः।

---

स्थाने' इति पर्युदासात्प्रथमैकवचनमेव। 'सुपि' इत्येव सिद्ध आदिग्रहणमधिकपरिग्रहार्थमित्याशयेनाह—कप्प्रत्ययावधिष्विति। नन्वेवं राजेत्यत्र नलोपो न स्यात्, प्रत्ययलक्षणेन सर्वनामस्थानपरतया पदत्वाभावात्। नैष दोषः। सौ परतः 'स्वादिषु-' इत्यनेन पदत्वासंभवेऽपि सुब्विशिष्टस्य 'सुप्तिङन्तम्' इति पदसंज्ञायां हल्ङ्यादिना सुलोपे एकदेशविकृतन्यायेन नकारान्तस्य पदत्वात्। यदि तु 'स्वादिषु' इति योगेन स्वादिषु परेषु पूर्वं पदं भवतीति पूर्वस्य पदसंज्ञां विधाय 'यचि भम्' इत्यत्र यचीति छित्त्वा यजादौ सर्वनामस्थाने परतः पूर्वं पदं नेति निषिध्यते, तदा औजसादिषु पदसंज्ञाभावेऽपि सौ परतः पदत्वसंभवात्। राजेत्यादौ नलोपे कार्ये न काप्यनुपपत्तिः। यचि भम्। यचीत्यल्ग्रहणे सप्तमीनिर्देशात्तदादिविधिरित्याह—यकारादिष्वित्यादि।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जश्त्वम् , दद्भ्यामित्यादि । मासः । मासा । भ्यामि रुत्वे यत्वे च यलोपः, माभ्याम् । माभिरित्यादि । २३३ भस्य । ( ६-४-१२९ ) इत्यधिकृत्य । २३४ अल्लोपोऽनः । ( ६-४-१३४ ) अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरो

---

जश्त्वमिति । दत् भ्यामिति स्थिते 'स्वादिष्वसर्वनामस्थाने' इति पदान्तत्वाद् 'झलां जशोऽन्ते' इति जश्त्वमित्यर्थः । इत्यादीति । दद्भिः, दते इत्यादिरादिशब्दार्थः । 'खरि च' इति चर्त्वे दत्सु । पक्षे रामवत् । मास इति । मासशब्दस्य शसि 'पद्दन्–' इति मास् इत्यादेशे रूपम् । मासेति तृतीयैकवचनम् । रुत्व इति । मास् भ्याम् इति स्थिते 'स्वादिषु–' इति पदत्वात् 'ससजुषोः–' इति रुः । 'भोभगो–' इति तस्य यकारे 'हलि सर्वेषाम्' इति तस्य लोपे माभ्यां माभिरिति रूपमित्यर्थः । इत्यादीति । माभ्य इत्यादिरादिशब्दार्थः । मास् सु इति स्थिते रुत्वे 'खरवसानयोः–' इति विसर्गे 'वा शरि' इति सत्वविकल्पः । मास्सु, माःसु ।

भस्य इति । इत्यधिकृतं स्पष्टमेव । यूषशब्दो मण्डवाची । 'मुद्गामलकयूषस्तु भेदी दीपनपाचकः' इत्यादि वैद्यशास्त्रे प्रसिद्धम् । तस्य शसि 'पद्दन्–' इति यूषन्नादेशे यूषन् अस् इति स्थिते । अल्लोपोऽनः । अत् इति लुप्तषष्ठीकं भिन्नं पदम् । अन इत्यवयवषष्ठ्यन्तम् अतो विशेषणम्—अनोऽवयवो योऽकारः तस्य लोप इति । अङ्गस्येत्यधिकृतम् इहावयवषष्ठ्यन्तमाश्रीयते । तच्चान इत्यत्रान्वेति—अङ्गावयवो यः अन् तदवयवस्य अकारस्य लोप इति । भस्येत्यधिकृतम् । अन इत्यनेनान्वेति । ततश्चानः असर्वनामस्थानयजादिस्वादिपरत्वं लभ्यते । तदाह—अङ्गावयव इत्यादिना ।

---

यकारादिषु किम् , गार्ग्यः । वात्स्यः । गर्गादिभ्यो यञि 'यस्येति च' इत्यकारलोपो यथा स्यात् । असर्वनामस्थानेषु किम् , सुपादौ सुपादः, विद्वांसौ विद्वांसः, दित्यवाहौ दित्यवाह इत्यादौ 'पादः पत्' 'वसोः संप्रसारणम्' 'वाह ऊठ्' इत्यादयो मा भूवन्निति । आ कडारा । इह 'प्राक्कडारात्समासः' इत्यस्य नावधित्वम् , व्याप्तिन्यायात् । 'तत्पुरुषो द्विगुश्च' इति लिङ्गाच्च । संज्ञाद्वयसमावेशार्थो हि तत्र चकारः । तदाह—कडाराः कर्मधारय इत्यत इति । एकस्यैकैव संज्ञेति । उभयोः सावकाशत्वे 'विप्रतिषेधे परम्–' इति परैव गृह्यते । निरवकाशत्वे तु सैव । तत्र परस्या उदाहरणं धनुषा विध्यतीति । अत्र शराणामपायं प्रत्यवधिभूतस्यैव धनुषो व्यधनं प्रति साधकत्वमित्युभयप्रसङ्गे परत्वात्करणसंज्ञा अपादानसंज्ञां बाधते । निरवकाशायाः पूर्वस्यास्तूदाहरणं 'भवतष्ठक्छसौ' भवदीय इति । अत्र हि 'सिति च' इति पदसंज्ञा परामपि भसंज्ञां बाधते, निरवकाशत्वात् । तेन तकारस्य जश्त्वं भवति । प्रकृते तु परा अनवकाशा भसंज्ञा पदसंज्ञां बाधते इति शसादावपि सैव ग्रहीतुमुचितेत्याशयेनाह—या

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

योऽन् तस्याकारस्य लोपः स्यात्। **२३५ रषाभ्यां नो णः समानपदे।** ( ८-४-१ ) एकपदस्थाभ्यां रेफषकाराभ्यां परस्य नस्य णः स्यात्। यूष्णः। यूष्णा।

---

अन्नन्तस्य भस्याङ्गस्याकारस्य लोपः स्यादिति प्राचां व्याख्याने तु तक्ष्णेत्यत्र तकारादकारस्यापि लोपप्रसङ्गः। भस्याङ्गस्यानोऽकारस्य लोप इति व्याख्याने तु अनसा मनसेत्यत्रातिव्याप्तिः। अन इत्यावर्त्य अन्नन्तस्य भस्याङ्गस्यानोऽकारस्य लोप इति व्याख्याने तु अनस्तक्ष्णेत्यत्रातिव्याप्तिरेव। तस्मादुक्तैव व्याख्येत्यन्यत्र विस्तरः। यूषन् अस् इत्यत्र षकारादकारस्य लोपे यूष् न् अस् इति स्थिते। **रषाभ्याम्।** रषाभ्यामिति दिग्योगे पञ्चमी। परस्येत्यध्याहार्यम्। समानशब्द एकपर्यायः। यथा—समानग्रामा वयमिति। आधारसप्तमीबलाद् विद्यमानाभ्यामिति लभ्यते। 'नः' इति षष्ठी। तदाह—**एकपदस्थाभ्यामिति।** एकत्वं चेहाखण्डत्वं विवक्षितम्, पदे इत्येतावतैव सिद्धे समानग्रहणसामर्थ्यात्। अन्यथा रामनामेत्यादौ 'अट्कुप्वाङ्—' इति णत्वापत्तिः। एतस्यैव समानपदशब्दस्य तत्राप्यनुवृत्तेः। मातृभोगीण इत्यत्र णत्वं तु तद्धिताधिकारे वक्ष्यते। **यूष्ण इति।** शसि रूपम्। **यूष्णेति।** तृतीयैकवचनम्। न चाल्लोपस्य स्थानिवद्भावाद् नकारस्य षात् परत्वं नेति शङ्क्यम्, 'रषाभ्याम्—' इति षात्परस्य हि नस्य णत्वे कर्तव्ये अल्लोपस्य स्थानिवद्भावो नापेक्षितः। किं तु णत्वाभावे तदपेक्षा। णत्वाभावश्चाशास्त्रीयत्वान्नातिदिश्यः। स्थानिनि सति यत्कार्यं भवति तदेव हि स्थानिवत्सूत्रेणातिदिश्यते। स्थानिनि सति यन्न भवति तदादेशेऽपि न भवतीत्येवं कार्याभावस्त्वशास्त्रीयत्वान्नातिदिश्यते इति स्थानिवत्सूत्रे अवोचाम।

---

**परेत्यादि। यलोप इति।** 'हलि सर्वेषाम्' इत्यनेन। 'लोपो व्योर्वलि' इति तु न प्रवर्तते, यत्वस्यासिद्धत्वात्। **अल्लोपोऽनः।** 'भस्य' इत्यनेनाक्षिप्तः प्रत्ययविशेषः अङ्गं चेति द्वयम् अनो विशेषणम्, अन् तु अकारस्येत्यभिप्रेत्य व्याचष्टे—**अङ्गावयव इत्यादि।** अन्नन्तस्य भस्याङ्गस्याकारस्य लोपः स्यादिति प्राचां व्याख्याने तक्ष्णेत्यादौ तकाराकारस्यापि लोपः स्यात्। भस्याङ्गस्यानोऽकारस्येति व्याख्याने तु अनसा मनसेत्यादौ स्यात्। तन्त्रावृत्त्यादिना अन्नन्तस्य भस्याङ्गस्यानोऽकारस्येति व्याख्यानेऽपि अनस्तक्ष्णेत्यादावतिव्याप्तिरेवेति भावः। सूत्रे तपरकरणं नञ्समासभ्रमनिवारणाय कृतमित्येके। ननु प्राणितीति प्राण्, ततः शसादिप्रत्यये प्राणः प्राणेत्यादौ 'अनितेः' इति णत्वस्यासिद्धतया अतिप्रसङ्गः स्यादिति तद्वारणायैव तपरकरणमस्त्विति चेन्मैवम्। सवर्णदीर्घे कृते अन एव तत्रासत्त्वात्। न च 'वार्णादाङ्गं बलीयः' इति सवर्णदीर्घात्प्रागेव लोपः प्रवर्तत इति अस्त्येवान्रूपमिति वाच्यम्। तथा हि सति व्यावर्त्यालाभेन तपरकरणवैयर्थ्यस्य तदवस्थत्वात्। वस्तुतो वार्णपरिभाषेह न प्रवर्तते,

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

'पूर्वस्मादपि विधौ स्थानिवद्भावः' इति पक्षे तु 'अड्व्यवाये' इत्येवात्र णत्वम्।

---

यद्यपि 'अचः परस्मि-' इत्यत्र अशास्त्रीयः कार्याभावोऽप्यतिदिश्यते इत्यभ्यधायि। तथापि नेह तस्यापि सूत्रस्य प्रवृत्तिरस्ति। स्थानिभूतादचः पूर्वत्वेन दृष्टस्यैव विधौ तत्प्रवृत्तेः। इह चाल्लोपस्थानीभूतादकारात् परस्यैव णत्वविधानादिति भावः। ननु 'अचः परस्मिन्-' इति सूत्रे स्थानिभूतादचः पूर्वस्मात् परस्य विधावजादेशः स्थानिवदिति पक्षोऽपि भाष्ये स्थितः। एवं चात्र लोपादेशस्थानिभूतादकारात् पूर्वो यः षकारः, तस्मात्परस्य नकारस्य णत्वविधौ लोपस्य स्थानिवद्भावे सति अकारेण व्यवधानात् षात्परत्वाभावात् कथं णत्वमित्यत आह—**पूर्वस्मादिति**। पक्षे त्वित्यादिना अस्य पक्षस्यानित्यत्वं सूचितम्। अत एव प्रविगण्य्येति भाष्ये प्रयुक्तं संगच्छते। चुरादौ 'गण संख्याने' इत्यदन्तो धातुः। णिच्। अतो लोपः। अल्लोपस्य स्थानिवद्भावाद् 'अत उपधायाः' इति वृद्धिर्न। ण्यन्तात् क्त्वो ल्यपि णिलोपं बाधित्वा 'ल्यपि लघुपूर्वात्' इति णेरयादेशः। पूर्वस्मात् परस्य विधौ स्थानिवद्भावस्य नित्यत्वे इह 'ल्यपि लघुपूर्वात्' इति णेरयादेशो न स्यात्। लोपस्थानिभूतादतः पूर्वस्मात् परस्य णेरयादेशविधावल्लोपस्य स्थानिवद्भावे सति अता व्यवहितत्वेन णेर्लघुपूर्वाद् णकारात् परत्वाभावात्। तस्माद् 'अचः परस्मिन्-' इत्यत्र पूर्वस्मात् परस्य विधौ स्थानिवद्भावस्यानित्यत्वं विज्ञायते। एवं च गोशब्दात् संबुद्धौ ओतो णित्त्वे वृद्धौ हे गौरिति सिध्यति। अन्यथा औकारस्य स्थानिभूतादोकारात् पूर्वो यो गकारः तस्मात् परस्याः संबुद्धेर्लोपविधौ स्थानिवद्भावे ओकारादेङः परत्वात् संबुद्धिलोपः स्यादिति शब्देन्दुशेखरे स्पष्टम्। **अड्व्यवाय इत्येवेति**। 'अट्कुप्वाङ्-' इति सूत्रेणैवेत्यर्थः। षादव्यवहितपरस्य नस्य णत्वविधा-

---

युगपत्प्रवृत्तावेव वार्णादाङ्गस्य बलीयस्त्वात्। क्विपि 'अनुनासिकस्य-' इति दीर्घे सवर्णदीर्घात्प्रागपि अनोऽभावाच्च। तस्माद् भ्रमनिरासार्थमेव तपरकरणं न तु प्राण इत्यादावनोऽकारलोपवारणार्थमिति तेषामाशयः। वस्तुतस्तु एकदेशविकृतन्यायेन भवत्येव तत्रातिप्रसङ्ग इति तपरकरणमत्रावश्यकमेवेति नव्याः। **रषाभ्यां नो णः**। अत्र 'अपदान्तस्य मूर्धन्यः' इत्यनुवर्त्य णग्रहणं 'पदान्तस्य' इति सूत्रं च भाष्ये प्रत्याख्यातम्। **समानपद इति**। निमित्तनिमित्तिनोरपदस्थत्वासंभवात्पदे इतीयतैव सामर्थ्यादेकपरत्वे लब्धे समानग्रहणं यत्समानमेव पदं निमित्तवत्पदभिन्नपदस्थत्वाभाववदिति यावत्, तत्र यथा स्यादित्येतदर्थम्। तेन समासे रामनाम गन्धर्वगानम् इत्यादौ न भवति। तत्र हि नकारस्यैकपदवृत्तित्वेऽपि निमित्तवत्पदभिन्नपदस्थत्वात्। भवति हि यूष्ण इत्यादौ णत्वम्, निमित्तवत्पदभिन्नपदत्वाभाववद्वृत्तित्वान्नकारस्य। मातृभोगीण इत्यादावपि नस्य णत्वं भवत्येव, प्रत्ययवृत्तित्वेऽपि निमित्तवत्पदभिन्नपदवृत्ति-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

'पूर्वत्रासिद्धे न स्थानिवत्' ( वा ४३३ ) इति त्विह नास्ति । 'तस्य दोषः संयोगादिलोपलत्वणत्वेषु' ( वा ४४० ) इति निषेधात् । २२६ न लोपः

---

वुदाहरणं तु पुष्णातीत्यादि बोध्यम् । वस्तुतस्तु 'तत्रापि ष्टुत्वेनैव सिद्धे षग्रहणम् उत्तरार्थम्' इति स्पष्टमाकरे ।

नन्वल्लोपस्य णत्वे कर्तव्ये कथं स्थानिवद्भावः । 'पूर्वत्रासिद्धे न स्थानिवत्' इति निषेधात् । णत्वस्य पूर्वत्रासिद्धीयत्वादित्यत आह—**पूर्वत्रेति** । संयोगादिलोपे लत्वे णत्वे च कर्तव्ये तस्य—पूर्वत्रासिद्धे न स्थानिवदित्यस्य, दोषः—बाधः, अप्रवृत्तिरिति यावत् । संयोगादिलोपे यथा । चक्र्यत्र । इह 'अचः परस्मिन्–' इति यणादेशस्य स्थानिवद्भावात् 'स्कोस्संयोगाद्योः–' इति ककारलोपो न । लत्वे यथा निगाल्यते । अत्र णिलोपस्य स्थानिवत्त्वाद् 'अचि विभाषा' इति लत्वम् । णत्वे यथा माषवपनी । वपतेर्ल्युट्, अनादेशः, उगित्त्वाद् ङीप्, 'यस्येति च' इति नकाराद् अकारस्य लोपः । इह अकारलोपस्य स्थानिवत्त्वेन नकारस्य प्रातिपदिकान्तत्वाभावात् 'प्रातिपदिकान्तनुम्विभक्तिषु च' इति णत्वं न । यूषन् भ्यामिति स्थिते । **न लोपः** । न इति स्थान-

---

त्वाभावात् । एतेन समानग्रहणमखण्डपदलाभार्थमिति व्याख्याय रामनामेत्यादावतिप्रसङ्गे निवारितेऽपि मातृभोगीण इत्यादावव्याप्तिः स्यादेवेति केषांचिदुक्तिः परास्ता । उक्तरीत्या त्वव्याप्तिशङ्काया निरस्तत्वात् । **यूष्ण इति** । यूषो मण्डः । 'मुद्गामलकयूषस्तु भेदी दीपनपाचनः' इति दर्शनात् । **पूर्वत्रासिद्धीये न स्थानिवदिति** । एतच्च न्यायसिद्धम् । त्रिपाद्या असिद्धत्वेन तत्रत्ये कर्तव्ये 'अचः परस्मिन्–' इत्यतिदेशस्याप्रवृत्तेः । **तस्येति** । तस्य—पूर्वत्रासिद्धे नेत्यस्य । तथा च स्थलत्रये स्थानिवद्भावो वक्तव्य इत्यर्थः । संयोगादिलोपे चक्र्यत्र । इह 'अचः परस्मिन्–' इति यणादेशस्य स्थानिवत्त्वात् 'स्कोः–' इति कलोपो न । लत्वे निगाल्यते । अत्र णिलोपस्य स्थानिवत्त्वाद् 'अचि विभाषा' इति लत्वम् । णत्वे माषवपनी । इह 'यस्येति च' इत्यल्लोपस्य स्थानिवत्त्वेन नकारस्य प्रातिपदिकान्तत्वाभावाण्णत्वं न । ननु गर्गभगिनीत्यत्रेव माषवपनीत्यत्रापि णत्वप्राप्तिर्नास्त्येव । उत्तरपदं यत्प्रातिपदिकं तदन्तस्येति वक्ष्यमाणत्वात् । अत्राहुः—'साधनं कृता' इति ल्युडन्तेन समासे पश्चान्ङीपि 'यस्येति च' इत्यल्लोपे कृते नकारस्योत्तरपदान्तत्वाण्णत्वप्राप्तिरस्त्येवेति । स्यादेतत्, यूष्ण इत्यादौ 'रषाभ्याम्–' इत्यस्य नोपयोगः, ष्टुत्वेनैव रूपसिद्धेः । अत एव च षग्रहणमुत्तरार्थमित्याकरे स्थितमिति चेत् । उच्यते—उत्तरार्थतयापीह षग्रहणं स्थितम्, ततश्च यूष्णः पुष्णातीत्यादौ 'रषाभ्याम्–' इति णत्वस्य प्रवृत्तिः केन वार्यताम् । ष्टुत्वेनेति चेन्न । तस्यासिद्धत्वात् । न च वचनप्रामाण्यात्सिद्धत्वं शङ्क्यम्, पुष्टः, पुष्टिः, षष्ठ इत्यादौ चरितार्थत्वात् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

**प्रातिपदिकान्तस्य । ( ८-२-७ )** नेति प्रातिपदिकेति च लुप्तषष्ठीके पदे। प्रातिपदिकसंज्ञकं यत्पदं तदन्तस्य नकारस्य लोपः स्यात् । नलोपस्यासिद्धत्वा-दीर्घं ऐस्त्वमेत्त्वं च न। यूषभ्याम्। यूषभिः । यूषभ्य इत्यादि । २३७ **विभाषा ङिश्योः । ( ६-४-१३६ )** अङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरो

---

षष्ठ्यन्तं पृथक्पदम्। आर्षः षष्ठ्या लुक्। नकारस्य लोपः स्यादित्यर्थः। अन्तस्येति नकारस्य विशेषणम्। अत एव च नस्य विशेषणसापेक्षत्वाल् लोपशब्देन समासो न भवति, असामर्थ्यात्। कस्यान्त इत्यपेक्षायां पदस्येत्यधिकृतम् अवयवषष्ठ्यन्तमन्वेति। पदस्य योऽयमन्तावयवः तस्य नकारस्य लोप इति। कीदृशं पदमित्यपेक्षायां प्राति-पदिकेति लुप्तषष्ठ्यन्तमन्वेति। प्रातिपदिकसंज्ञकं यत् पदं तस्य योऽयमन्तावयवो नकारः तस्य लोपः स्यादिति। अत एव प्रातिपदिकान्तस्येति न समस्तमेकं पदम्। तस्य पद-शब्देनान्वितत्वेनान्तशब्देनासामर्थ्यात्। तदाह—**नेति प्रातिपदिकेति च लुप्त-षष्ठीके पदे इति। तदन्तस्येति।** तस्य पदस्य अन्तावयवो यो नकारः तस्येत्यर्थः। प्रातिपदिकग्रहणं किम्, अहन् (इति) तिङन्तस्य न भवति। पदग्रहणं किम्, राजानौ। ननु नलोपे सति यूषभ्यामित्यत्र 'सुपि च' इति दीर्घः स्यात्। यूषभिरित्यत्र 'अतो भिस ऐस्' इति ऐसादेशः स्यात्। यूषभ्य इत्यत्र 'बहुवचने झल्येत्' इति एत्त्वं स्या-दित्यत आह—**नलोपस्यासिद्धत्वादिति। इत्यादीति।** यूष्णे, यूष्णः, यूष्णोः, यूष्णाम् इति आदिशब्दार्थः। यूषन् ङि इति स्थिते 'अल्लोपाऽनः' इति नित्ये अल्लोपे प्राप्ते। **विभाषा ङिश्योः।** 'अल्लोपोऽनः' इत्यनुवर्तते। 'अङ्गस्य' इति 'भस्य' इति चाधिकृतम्। भस्येत्यनेन च असर्वनामस्थानयजादिस्वादिपरत्वं पूर्ववदनो लभ्यते।

---

नस्य षयोगे ण इत्यंशोऽचरितार्थ इति चेन्न। तस्य पृथगनुक्तेः, इह षात्परस्येत्युक्ति-रप्यचरितार्थेत्यस्यापि तुल्यत्वाच्च। एवमप्युत्तरार्थं षग्रहणमित्याकरो विरुध्यत इति चेन्न। आकरेऽपीह षग्रहणं विना पुष्णातीत्यादिलक्ष्यस्यासिद्धिर्नास्तीत्येतावदभिप्रेतम्, न तु पुष्णातीत्यादौ 'रषाभ्याम्–' इत्यस्याप्रवृत्तिरिति। **नलोपः प्रातिपदिकान्त-स्य। लुप्तषष्ठीक इति।** सौत्रत्वात्। न तु षष्ठीतत्पुरुषौ, पूर्वपदे सापेक्षत्वेन समा-सासंभवात्, प्रातिपदिकस्य पदविशेषणत्वाच्चेति भावः। **तदन्तस्येति।** षष्ठीत-त्पुरुषोऽयम्। तस्य प्रातिपदिकसंज्ञकपदस्य अन्तो यो नकारस्तस्येत्यर्थः। यदि तु प्रातिपदिकेत्यनेनापि पदं विशेष्यते तदा विशेषणेन तदन्तविधौ सौत्रमन्तग्रहणं शक्य-मकर्तुमिति मनोरमायां स्थितम्। प्रातिपदिकेति किम्, अहन्। पदमिति किम्, राजानौ। राजानः। **विभाषा ङिश्योः।** शीति 'नपुंसकाच्च' इति विहितो गृह्यते, न तु 'जश्शसोः शिः'। तस्मिन् भत्वासंभवात्। 'भस्य' इत्यनेनासर्वनामस्थाने इत्यस्यैव

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

योऽन् तस्याकारस्य लोपो वा स्याद् ङिश्योः परयोः। यूष्णि, यूषणि। पक्षे रामवत्। 'पद्दन्नो-' (सू २२८) इति सूत्रे प्रभृतिग्रहणं प्रकारार्थम्। तथा च औङः श्यामपि दोषन्नादेशः। अत एव भाष्ये 'ककुद्दोषणी' इत्युदाहृतः। तेन 'पदङ्घ्रिश्चरणोऽस्त्रियाम्' 'स्वान्तं हृन्मानसं मनः' इत्यादि च संगच्छते। 'आसन्यं प्राणमूचुः' इति च। आस्ये भव आसन्यः। दोष्शब्दस्य नपुंसकत्वमत एव भाष्यात्। तेन 'दक्षिणं दोर्निशाचरः' इति संगच्छते। 'भुजबाहू प्रवेष्टो दोः' इति साहचर्या-

---

तदाह—अङ्गावयव इति। ङिश्योरिति। ङिश्च शी चेति विग्रहः। 'नपुंसकाच्च' इति विहित एवात्र शी गृह्यते, न तु जश्शसोश्शिः। तस्मिन् परे भत्वासम्भवात्। पक्षे इति। यूषन्नादेशाभावपक्ष इत्यर्थः।

अथ क्वचित् शसादिभ्योऽन्यत्रापि पदाद्यादेशं साधयितुमाह—पद्दन्नो इति सूत्र इति। प्रकारेति। प्रकारः सादृश्यम्। तच्च प्रत्ययत्वेन बोध्यम्। प्रभृतिग्रहणस्य प्रकारार्थत्वे प्रमाणं दर्शयति—अत एवेति। प्रभृतिग्रहणस्य प्रकारार्थकत्वादेवेत्यर्थः। 'ककुद्दोषणी याचते महादेवः' इत्येवं भाष्ये औङादेशभूतशीभावे परत उदाहृतो दोषन्नादेशः अत एव सङ्गच्छत इत्यन्वयः। तेनेति। प्रकारार्थकप्रभृतिग्रहणेनेत्यर्थः। पदङ्घ्रिरित्यत्र पदिति प्रथमैकवचनम्, स्वान्तं हृदित्यत्र हृदिति च संगच्छत इत्यर्थः। आदिना निशादिसंग्रहः। आसन्यं प्राणमिति। आसन्यं प्राणमूचुरिति च अत एव संगच्छत इत्यन्वयः। आसनशब्दस्य आसन्नादेश इति भ्रमं वारयति—आस्ये भव इति। प्राणशब्दसमभिव्याहारादियमेव व्युत्पत्तिरिति भावः। 'शरीरावयवाच्च' इत्यास्यशब्दाद् भवार्थे यत्प्रत्यये आसन्नादेशः। 'ये चाभावकर्मणोः' इति प्रकृतिभावाद् 'नस्तद्धिते' इति टिलोपो न। प्रभृतिग्रहणस्य प्रकारार्थत्वाभावे तु इह आसन्नादेशो न स्यात्, यत्प्रत्ययस्य शसादिषु सुप्सु अनन्तर्भावादिति भावः। ननु दोषणी इति भाष्ये नपुंसकप्रयोगोऽनुपपन्नः। 'दोषं तस्य तथा विधस्य' इत्यादौ पुंस्त्वस्यैव प्रयोगदर्शनादित्यत आह—दोष्शब्दस्येति। अत एवेति। ककुद्दोषणी इति भाष्यादेव ज्ञेयमित्यर्थः। तेन दक्षिणमिति। 'तमुपाद्रवदुद्यम्य दक्षिणं दोर्निशाचरः' इति रघुवंशे। दक्षिणं दोरुद्यम्य तमुपाद्रवदित्यन्वयः। दोष्शब्दस्य द्वितीयैकवचनं दोः इति। पुंस्त्वे दोषमिति स्यादिति भावः। ननु भाष्यानुसाराद् दोष्शब्दस्य नपुंसकत्वमेव स्यादित्यत आह—भुजेति। 'भुजबाहू प्रवेष्टो दोः' इति कोशात् पुंस्त्व-

---

यजादेराक्षेपात्। तदेतदाह—असर्वनामस्थानेत्यादि। ककुद्दोषणी इति। ककुद् दोषणी इति छेदः। एकपदत्वे त्वनुपपत्तिरनुपदमेव वक्ष्यते। आसन्यमिति। 'ये चाभावकर्मणोः' इति प्रकृतिभावात् 'नस्तद्धिते' इति टिलोपो न। अत एवेति।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्पुंस्त्वमपि। 'दोषं तस्य तथाविधस्य भजतः' इति। द्वयोरह्नोर्भवो द्व्यह्नः। २३८ संख्याविसायपूर्वस्याह्नस्याहन्नन्यतरस्यां ङौ। (६-३-११०) संख्यादिपूर्वस्याह्नस्याहन्नादेशो वा स्यान् ङौ। द्व्यह्नि, द्व्यहनि, द्व्यह्ने। विगतमहर्व्यह्नः। व्यह्नि, व्यहनि, व्यह्ने। अह्नः सायः सायाह्नः। सायाह्नि, सायाहनि, सायाह्ने।

इत्यदन्ताः॥

---

मपीत्यर्थः। नन्वयं कोशो दोष्शब्दस्य नपुंसकत्वेऽप्युपपन्न इत्यत आह—**साहचर्यादिति**। पुँल्लिङ्गभुजादिशब्दसाहचर्यादित्यर्थः। 'साहचर्याच्च कुत्रचित्' इति कोशे परिभाषितत्वादिति भावः। दोष्शब्दस्य पुंस्त्वसाधने फलं दर्शयति—**दोषं तस्येति**। 'दोषं तस्य तथाविधस्य भजतश्चापस्य गृह्णन् गुणम्' इति श्रीहर्षः। दोषं हस्तं दूषणं च भजतश्चापस्य गुणं मौर्वीम् अतिशयं च गृह्णन्नित्यन्वयः। अत्र दोषमिति दोष्शब्दस्य पुँल्लिङ्गद्वितीयैकवचनम्। अत्र सुप्रभृतिष्विति वाच्ये शस्प्रभृतिष्विति वचनात् सुपि क्वचिदेव पदाद्यादेशा इति गम्यते। **द्वयोरह्नोरिति**। 'तद्धितार्थ-' इति समासः। 'कालाट्ठञ्' इति ठञ्। 'द्विगोर्लुगनपत्ये' इति लुक्। 'राजाहस्सखिभ्यष्टच्' इति टच्। 'अह्नोऽह्न एतेभ्यः' इत्यह्नादेशः। रामशब्दवद्रूपाणि। ङौ विशेषमाह—**संख्याविसाय**। संख्या च विश्च सायश्च संख्याविसायाः, ते पूर्वे यस्मादिति विग्रहः। इत्यभिप्रेत्य आह—**संख्येत्यादिना**। संख्यापूर्वमुदाहरति—**द्व्यह्नि, द्व्यहनीति**। अल्लोपे तदभावे च रूपम्। **द्व्यह्ने इति**। अहन्नादेशाभावे रूपम्। एवं विपूर्वमुदहरति—**विगतमिति**। प्रादयो गताद्यर्थे प्रथमया' इति समासः। पूर्ववदह्नादेशः। सायपूर्वमुदाहरति—**अह्नः साय इत्यादिना**। अत एव ज्ञापकादेकदेशिसमासः।

इत्यदन्तप्रकरणम्।

---

'ककुद्दोषणी' इति भाष्यप्रयोगादेवेत्यर्थः। यद्यपि ककुच्च दोश्च तयोः समाहारः ककुद्दोः। ककुद्दोश्च ककुद्दोश्च ककुद्दोषणी इत्येकशेषे कृते भाष्यं सुयोजमिति दोःशब्दस्य नपुंसकत्वे नेदं प्रमाणम्, तथापि ककुदित्यस्य पृथक्पदत्वमेव न्याय्यम्। अन्यथा बाह्वोर्द्वित्वे लब्धेऽपि ककुद एकत्वं न लभ्येतेति भावः। 'तमुपाद्रवदुद्यम्य दक्षिणं दोर्निशाचरः' इति रघुः। तत्र दक्षिणं दोरुद्यम्य तमुपाद्रवदित्यन्वयः। **दोषं तस्येति**। अयं च श्रीहर्षप्रयोगः। दोषं हस्तं दूषणं च भजतः चापस्येति संबन्धः। **द्वयोरह्नोर्भव इति**। 'तद्धितार्थ-' इति समासः। 'राजाहःसखिभ्यः-' इति टच्, 'अह्नोह्न एतेभ्यः' इति अह्नादेशः, कालाट्ठञो 'द्विगोर्लुगनपत्ये' इति लुक्। **अह्नः साय इति**। स्यतेर्घञि अवसानवचनः सायशब्दः, 'संख्याविसाय-' इति ज्ञापकादेकदेशिसमासः।

इत्यदन्ताः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विश्वपाः। **२३६ दीर्घाज्जसि च।** ( ६-१-१०५ ) दीर्घाज्जसि इचि च परे पूर्वसवर्णदीर्घो न स्यात्। वृद्धिः विश्वपौ। सवर्णदीर्घः विश्वपाः। यद्यपीह औङि 'नादिचि' ( सू १६५ ) इत्येव सिद्धम्। जसि तु सत्यपि पूर्वसवर्णदीर्घे क्षतिर्नास्ति। तथापि 'गौर्यौ' 'गौर्यः' इत्याद्यर्थं सूत्रमिहापि-न्याय्यत्वादुपन्यस्तम्।

---

**अथ आकारान्ता निरूप्यन्ते। विश्वपा इति।** आबन्तत्वाभावाद् न सुलोपः। एतदर्थमेव हल्ङ्यादिसूत्रे सत्यपि दीर्घग्रहणे आब्ग्रहणमिति भावः। विश्वं पाति रक्षतीत्यर्थे 'आतोऽनुपसर्गे कः' इति प्राप्ते वाऽसरूपन्यायेन 'आतो मनिन्क्वनिब्वनिपश्च' इति चकाराद् विच्। यद्यपि तत्र 'विजुपे छन्दसि' इत्यतः छन्दसीत्यनुवर्तते। तथापि वेदे अनेन विच्। लोके तु 'अन्येभ्योऽपि दृश्यन्ते' इति विच्। अन्ये तु 'क्विप्च' इति सूत्रेण क्विपमाहुः। 'घुमास्था-' इतीत्त्वं तु न, 'वकारे ईत्त्वप्रतिषेधः' इति वार्तिकात्। क्वनिपि पावान इत्येतदर्थं तस्यावश्यकत्वात्। 'क्विपस्त्वादन्तेभ्यो भाष्यानुक्तक्विभ्योऽनभिधानमेव' इति शब्देन्दुशेखरे स्पष्टम्। अत एव भाष्ये पावान इत्यत्र वनिपा रूपसिद्धिमाश्रित्य 'ईत्त्वमवकारादाविति वक्तव्यम्' इति वार्तिकं प्रत्याख्यातम्। ततश्च 'विश्वपाः' इत्यत्र विजेव। विश्वपा औ इति स्थिते 'प्रथमयोः पूर्वसवर्णः' इति प्राप्ते। **दीर्घाज्जसि च।** 'प्रथमयोः-' इत्यतः पूर्वसवर्ण इति 'नादिचि' इत्यतो नेति इचीति च अनुवर्तते। तदाह—**दीर्घादित्यादिना।** नन्विदं सूत्रं व्यर्थम्, 'नादिचि' इत्येव सिद्धेरिति शङ्कते—**यद्यपीह औङि नादिचीत्येव सिद्धमिति।** ननु जसि विश्वपा अस् इति स्थिते पूर्वसवर्णदीर्घनिषेधार्थमिदं सूत्रमावश्यकम्। तत्र 'नादिचि' इत्यस्याप्रवृत्तेरित्यत आह—**जसि त्विति।** मास्तु पूर्वसवर्णदीर्घनिषेधः। पूर्वसवर्णदीर्घे सत्यपि जसि 'विश्वपाः' इति सिध्यति। तन्निषेधे सत्यपि 'अकस्सवर्णे दीर्घः' इति कृतेऽपि विश्वपाः इत्येव रूपं सिध्यति। अतः किं तन्निषेधेनेत्यर्थः। परिहरति—**तथापीति। इत्यादीति।** आदिना लक्ष्म्यावित्यादिसंग्रहः। तत्र 'नादिचि' इत्यस्याप्रसक्त्या तन्निषेध आवश्यक इति भावः। ननु 'दीर्घज्जसि च' इति सूत्रं यदि गौर्यौ इत्याद्यर्थमेव, तर्हि इदन्ताधिकारे गौरीशब्दनिरूपणावसर एव तदुपन्यासो युक्त इत्यत आह—**इहापि न्याय्यत्वादिति।** विश्वपावित्यत्र 'नादिचि' इत्यस्य 'दीर्घाज्जसि

---

**विश्वपा इति।** विश्वं पाति रक्षतीति विग्रहे 'पा रक्षणे' इत्यस्माद् 'आतोऽनुपसर्गे-' इति कं बाधित्वा 'आतो मनिन्क्वनिब्वनिपश्च' इति चकाराद्विजिति व्याख्यातारः। इह छन्दसि 'आतो मनिन्-' इति विच्, लोके तु 'अन्येभ्योऽपि दृश्यन्ते' इत्यनेनेति विवेकः। **दीर्घाज्जसि च।** चकारादिचीत्यनुकृष्यते नेति चानुवर्तते तदाह—**दीर्घाज्जसि इचि चेति।** सूत्रे चकाराभावे ह्रस्वाकारादिचि दीर्घाकारात्तु

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

**२४० आतो धातोः।** (६-४-१४०) आकारान्तो यो धातुस्तदन्तस्य भस्याङ्गस्य लोपः स्यात्। 'अलोऽन्त्यस्य' (सू ४२)। विश्वपः। विश्वपा। विश्वपाभ्यामित्यादि। एवं शङ्खध्मादयः। 'धातोः' किम्—हाहान्। टा सवर्णदीर्घः हाहा। ङे वृद्धिः हाहै। ङसिङसोर्दीर्घः हाहाः। ओसि वृद्धिः हाहौः। ङौ आद् गुणः हाहे।

---

च' इत्यस्य च प्राप्तौ परत्वेन 'दीर्घाज्जसि च' इत्यस्यैव उपन्यासौचित्यादित्यर्थः। 'अमि पूर्वः' विश्वपाम्। औटि विश्वपौ।

शसि विश्वपा अस् इति स्थिते पूर्वसवर्णदीर्घे प्राप्ते। **आतो धातोः**। 'अङ्गस्य' इति 'भस्य' इति चाधिकृतम्। धातोरित्यात इति षष्ठ्यन्तेन विशेष्यते। तदन्तविधिः। 'अल्लोपोऽनः' इत्यतो लोप इत्यनुवर्तते। तदाह—**आकारान्तो य इति**। **अलोऽन्त्यस्येति**। अन्त्यस्याकारस्य लोप इति शेषः। **विश्वपाभ्यामिति**। अभत्वादाल्लोपो नेति भावः। **इत्यादीति**। विश्वपाभिः। विश्वपे। विश्वपः। विश्वपोः। विश्वपाम्। विश्वपि। विश्वपासु। **एवं शङ्खध्मादय इति**। शङ्खेन शङ्खं वा धमतीति शङ्खध्माः। 'ध्मा शब्दाग्निसंयोगयोः' पूर्ववद् विच् क्विब्वा। आदिना सोमपादिसंग्रहः। सोमं पिबतीति सोमपाः। कीलालं पिबतीति कीलालपाः। वारिपर्यायेषु 'पयः कीलालममृतम्' इत्यमरः। मधु पिबतीति मधुपा इत्यादि। **धातोः किमिति**। 'आतो नापः' इत्येव सूत्र्यताम्। तावतैव रमा इत्याद्याबन्तेषु लोपव्यावृत्तेरिति प्रश्नः। **हाहानिति**। पूर्वसवर्णदीर्घे 'तस्माच्छसः–' इति नत्वम्। हाहा इति गन्धर्वविशेषवाचकमव्युत्पन्नं प्रातिपदिकमेतत्। 'हाहा हूहूश्चैवमाद्या गन्धर्वास्त्रिदिवौकसाम्' इत्यमरः। सुटि विश्वपावत्। शसि हाहा अस् इत्यत्रापि 'आतोऽनापः' इत्याल्लोपः स्यात्। अतो धातुग्रहणमित्यर्थः। **टा सवर्णदीर्घ इति**। टा इत्यविभक्तिकनिर्देशः प्रक्रियादशायां न दुष्यति। तृतीयैकवचने सवर्णदीर्घ इत्यर्थः। एवमग्रेऽपि योज्यम्। **ङे वृद्धिरिति**। हाहा ए इति स्थिते 'वृद्धिरेचि' इति वृद्धिरित्यर्थः। **ङसिङसोरिति**। हाहा अस् इत्यत्र सवर्णदीर्घ इत्यर्थः। **ओसि वृद्धिरिति**। हाहा ओस् इत्यत्र 'वृद्धिरेचि' इति वृद्धिरित्यर्थः। **ङौ आद् गुण इति**। हाहा इ इत्यत्र 'आद् गुणः' इति गुण एकार

---

जसीति व्यवस्था संभाव्येतेति भावः। **इत्याद्यर्थमिति**। ननु 'यू स्त्र्याख्यौ' 'ल्वादिभ्यः' इति निर्देशादिक्प्रत्याहाराच्प्रत्याहारयोरेव निरूढलक्षणेति व्याख्यायताम्, तथा च दीर्घस्याच्त्वाभावाद्गौर्यावित्यादौ पूर्वसवर्णदीर्घो न प्राप्नोतीति किमनेन निषेधसूत्रेणेति चेन्मैवम्। अस्मादेव निषेधाज्ज्ञापकादिगजिभन्नेष्वपि प्रत्याहारेषु लक्षणा स्वीक्रियते। अन्यथा गौरीरित्यादौ शसि परतः पूर्वसवर्णदीर्घो न स्यात्। किं च उपार्च्छतीत्यादौ 'उरण् रपरः', नैषादकर्षुक इत्यादौ 'इसुसुक्–' इति ठस्य कादेशः, अमीषा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शेषं विश्वपावत्। 'आतः' इति योगविभागाद्धातोरप्याकारलोपः क्वचित्। क्त्वः। श्रः।

॥ इत्यादन्ताः ॥

हरिः। 'प्रथमयोः पूर्वसवर्णः' (सू १६४)। हरी । २४१ जसि च। (७-३-१०९) ह्रस्वान्तस्याङ्गस्य गुणः स्याज्जसि परे । हरयः । २४२ ह्रस्वस्य गुणः। (७-३-१०८) ह्रस्वस्य गुणः स्यात्सम्बुद्धौ। 'एङ्ह्रस्वात्-' (सू १९३)

---

इत्यर्थः। क्त्वा, श्रा इति प्रत्ययौ आकारान्तौ विश्वपावत् । नन्वधातुत्वात् कथमिह आल्लोप इत्यत आह—आत इति योगेति। 'आतो धातोः' इत्यत्र आत इति विभज्यते। आकारान्तस्य भस्याङ्गस्य लोपः स्यादित्यर्थः। तेन क्त्वः, श्र इति शसि रूपं सिध्यति। धातोरिति योगान्तरम्। आकारान्तो यो धातुस्तदन्तस्य भस्याङ्गस्य लोपः स्यादित्यर्थः। आबन्तव्यावृत्त्यर्थं हाहादिव्यावृत्त्यर्थं चेदम् । आत् इति योगविभागस्तु क्त्वः श्र इत्यादौ क्वचिदाल्लोपार्थः। ननु मालेवाचरति माला । आचारक्विबन्तात् कर्तरि क्विप्। सुबुत्पत्तिः। अत्र कृतेऽपि धातुग्रहणे शसादावाल्लोपो दुर्वारः, 'सनाद्यन्ताः–' इति धातुत्वात्, आदन्तत्वाच्च। न च 'अनाप इति वक्तव्यम्' इति 'वार्तिकादाबन्तेषु नाल्लोप इति शङ्क्यम्, उक्तरीत्या योगविभागमभ्युपगम्य 'अनाप' इति वार्तिकस्य भाष्ये प्रत्याख्याततत्वात्, इति चेन्मैवम्, एतद्वार्तिकभाष्यप्रामाण्यादेव आबन्तेभ्यः आचारक्विबभावबोधनादिति शब्देन्दुशेखरे प्रपञ्चितम्। इत्यादन्तप्रकरणम्।

अथ इकारान्ता निरूप्यन्ते। **हरिरिति**। हरिशब्दात् सुः, रुत्वविसर्गौ। न च विसर्जनीयस्य अकारादुपरि उपसंख्यानेनाच्त्वात् तस्मिन् परतो रेफादिकारस्य यणादेशः शङ्क्यः, यणादेशे कर्तव्ये विसर्जनीयस्यासिद्धत्वात्। **प्रथमयोः पूर्वसवर्ण इति**। हरि औ इति स्थिते अनेन पूर्वसवर्णदीर्घे सति हरी इति रूपमित्यर्थः। जसि हरि अस् इति स्थिते पूर्वसवर्णदीर्घे प्राप्ते। **जसि च**। 'ह्रस्वस्य गुणः' इत्यनुवर्तते। 'अङ्गस्य' इत्यधिकृतं ह्रस्वेन विशेष्यते। तदन्तविधिः। तदाह— **ह्रस्वान्तस्येत्यादिना। हरय इति**। अलोऽन्त्यपरिभाषया अन्त्यस्य गुणः। इकारस्य तालुस्थानसाम्यादेकारः, अयादेशः, रुत्वविसर्गाविति भावः। हे हरि स् इति स्थिते। **ह्रस्वस्य गुणः**। 'संबुद्धौ च' इत्यतः 'संबुद्धौ' इत्यनुवर्तते। तदाह—

---

मित्यादौ इणः परस्य सस्य च षत्वं न सिध्यतीति दिक्। 'प्रथमयोः–' इति सूत्रानन्तरं 'दीर्घाच्छसि' इत्येव सुवचम्। दीर्घाच्छस्येव पूर्वसवर्णदीर्घ इति तस्यार्थः। एवं च चकारो न कर्तव्यो नेति च नानुवर्तनीयमिति महल्लाघवमित्येके। शसि दीर्घदेवेति विपरीतनियमवारणाय 'नॄन्पे' 'कानाम्रेडिते' इति निर्देशाश्रयणे प्रतिपत्तिगौरवं स्याद् इति यथान्यास एव श्रेय इत्यन्ये। **हाहानिति**। गन्धर्वविशेषवाचकमव्युत्पन्नं प्राति-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति संबुद्धिलोपः। हे हरे। हरिम्। हरी। हरीन्। **२४३ शेषो घ्यसखि।** (१-४-७) अनदीसंज्ञौ ह्रस्वौ याविवर्णोवर्णौ तदन्तं सखिवर्जं घिसंज्ञं स्यात्। 'शेषः' किम्—मत्यै। एकसंज्ञाधिकारात्सिद्धे शेषग्रहणं स्पष्टार्थम्। 'ह्रस्वौ' किम्—वातप्रम्ये। 'यू' किम्—मात्रे। **२४४ आङो नाऽस्त्रियाम्।** (७-३-१२०)

---

**ह्रस्वस्येत्यादिना।** अनेन रेफादिकारस्य गुण एकारः। **संबुद्धिलोप इति।** एङः परत्वादिति भावः। न त्वत्र ह्रस्वात् परत्वमस्ति, परत्वान्नित्यत्वाच्च संबुद्धिगुणे कृते ह्रस्वात् परत्वाभावात्। **हरिमिति।** अमि पूर्वरूपे रूपम्। **हरीनिति।** पूर्वसवर्णदीर्घे 'तस्माच्छसः—' इति नत्वम्।

तृतीयैकवचने हरि आ इति स्थिते घिकार्यं वक्ष्यन् घिसंज्ञामाह—**शेषो।** 'यू स्त्र्याख्यौ—' इत्यतो 'यू' इत्यनुवर्तते। इश्च उश्च यू—इवर्णश्च उवर्णश्च। 'ङिति ह्रस्वश्च' इत्यतो ह्रस्व इत्यनुवर्तते। तच्च यूभ्यां प्रत्येकमन्वेति। उक्ताद् नदीसंज्ञकाद् अन्यः शेषः। स च यूभ्यां प्रत्येकमन्वेति। शब्दस्वरूपमित्यध्याहार्यं यूभ्यां विशेष्यते। तदन्तविधिः। तदाह—**अनदीसंज्ञावित्यादिना। शेषः किमिति।** अनदीसंज्ञकत्वविशेषणं किमर्थमिति प्रश्नः। **मत्यै इति।** शेषग्रहणाभावे 'ङिति ह्रस्वश्च' इति नदीत्वपक्षेऽपि घिसंज्ञा स्यात्। ततश्च 'आण्नद्याः' इत्याडागमे वृद्धौ 'घेर्ङिति' इति गुणे अयादेशे मतयै इति स्यादिति भावः। शेषग्रहणाभावेऽपि मत्यै इत्यत्र घिसंज्ञा न भवति 'आकडारादेका संज्ञा' इत्यनवकाशया नदीसंज्ञया बाधादित्यत आह—**एकसंज्ञेति। वातप्रम्य इति।** ह्रस्वग्रहणाभावे वातप्रमी ए इति स्थिते ईकारान्तस्यापि घिसंज्ञा स्यात्। ततश्च 'घेर्ङिति' इति गुणे अयादेशे च वातप्रमये इति स्यात्। अतो ह्रस्वग्रहणमिति भावः। **मात्र इति।** यू इत्यभावे मातृ ए इति स्थिते ऋकारान्तस्यापि घिसंज्ञायां 'घेर्ङिति' इति गुणे अकारे रपरत्वे मातरे इति स्यात्। अत इदुता-

---

पदिकमिदम्। 'हाहा हूहूश्चैवमाद्या गन्धर्वाः' इत्यमरः। केचित्तु अकारो वासुदेवः, तेन सह वर्तन्त इति साः, तान् सान् इति प्रत्युदाहरन्ति। **क्त्वः। श्न इति।** यद्यपि '—क्त्वो ल्यप्' '—श्नः शानज्झौ' 'क्रमश्च क्त्वि' इति निर्देशादेतत्सूत्रेष्वातो लोपः सिध्यति, तथापि क्त्वो ल्यब् भवति, श्नः शानज् भवतीति व्याख्यानवाक्येष्वसाधुत्वशङ्कावारणायेदमुक्तम्। **इत्यादन्ताः।** सूत्रे शेषपदस्य प्रयोजनमाह—**अनदीसंज्ञाविति।** 'यू स्त्र्याख्यौ—' इत्यतो यू इति 'ङिति ह्रस्वश्च' इत्यतो ह्रस्व इति चानुवर्तते तदाह—**ह्रस्वौ यावित्यादि। मत्यै इति।** नदीसंज्ञापक्षेऽपि घिसंज्ञायां सत्याम् 'आण् नद्याः' इत्याडागमे 'घेर्ङिति' इति गुणे कृते अयादेशे च मतयै इति स्यादिति भावः। **आङो ना।** 'पुंसि' इति तु नोक्तम्, अमुना कुलेनेत्यत्र यथा स्यात्। न

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

घेः परस्याङो ना स्यादस्त्रियाम्। आङिति टासंज्ञा प्राचाम्। हरिणा। 'अस्त्रियाम्' किम्—मत्या। **२४५ घेर्ङिति।** ( ७–३–१११ ) घिसंज्ञकस्य ङिति सुपि गुणः स्यात्। हरये। 'घेः' किम्—सख्ये। 'ङिति' किम्—हरिभ्याम्। 'सुपि' किम्—पट्वी। 'घेर्ङिति' इति गुणे कृते। **२४६ ङसिङसोश्च।** (६–१–११०) एङो

---

विति भावः। वस्तुतस्तु इदुताविति व्यर्थमेव। 'मात्रे' इत्यत्र ऋकारान्तस्य घित्वेऽपि 'घेर्ङिति' इति गुणो न भवति 'ऋतो ङिसर्वनामस्थानयोः' इत्यत्र ङिग्रहणाद् ज्ञापकात्। तद्धि मातरि इत्यादौ सप्तम्येकवचने गुणार्थम्। ऋकारान्तस्यापि घित्वे तु घेर्ङिति इत्येव गुणसिद्धौ किं तेन। **आङो नाऽस्त्रियाम्। घेः परस्येति।** 'अच्च घेः' इत्यतो घिग्रहणानुवृत्तेरिति भावः। **हरिणेति।** नादेशे 'अट्कुप्वाङ्—' इति णत्वम्। ननु आङो विहितो नाभावः कथं टा इत्यस्य स्यादित्यत आह। **आङितीति।** प्राचामाचार्याणां शास्त्रे संज्ञितेत्यर्थः। **मत्येति।** 'स्त्रियां क्तिन्' इति क्तिन्नन्तमतिशब्दस्य स्त्रीलिङ्गत्वान्नाभावो नेति भावः। हरिभ्याम्। हरिभिः। हरि ए इति स्थिते। **घेर्ङिति।** 'सुपि च' इत्यतः सुपीति 'ह्रस्वस्य—' इत्यतो गुण इति चानुवर्तते। तदाह—**घिसंज्ञकस्येत्यादिना।** यणोऽपवादः। **हरय इति।** गुणे अयादेशे। **सुपि किं पट्वीति।** 'वोतो गुणवचनात्' इति ङीष्। तस्य ङित्वेऽपि सुप्त्वाभावात् तस्मिन् परतो न गुण इत्यर्थः। न च 'घेर्ङि' इत्येव सूत्र्यताम्, इद्ग्रहणं कर्तव्यम्। 'यस्मिन् विधिः—' इति परिभाषया ङकारादौ सुपीत्यर्थलाभादिति वाच्यम्। एवं सति 'आण्नद्याः' इत्यत्रापि ङीत्येवानुवृत्तौ ङकारादेराम आड् विधीयते। ततश्च मत्यामित्यत्र आण् न स्यात्। आमो ङादित्वाभावात्। न च स्थानिवद्भावेन ङादित्वं शङ्क्यम्, अल्विधित्वात् स्थानिनो ङेर्ङकारस्यादित्वेनाश्रयणात्। इद्ग्रहणे तु स्थानिवद्भावः संभवति। अनुबन्धकार्ये कर्तव्ये अनल्विधाविति निषेधाभावाद् आमादेशदशायां ङेर्ङकारस्य इत्संज्ञालोपाभ्यामपहृतत्वेन आम्स्थान्यल्त्वाभावाद् अनुबन्धानामनेकान्तत्वात्। एकान्तत्वपक्षेऽपि अल्ग्रहणेन अनुबन्धस्य ग्रहणं न भवति, 'अनेकाल्शित्सर्वस्य' इत्यत्र शिद्ग्रहणाद् ज्ञापकात्। अन्यथा 'इदम् इश्' इत्यादिशितां शकारेणानुबन्धेन सहानेकाल्त्वादेव सिद्धे किं तेन। अत एव तिबाद्यादेशेषु पित्त्वादि सिध्यति। अत एव 'सेर्ह्यपिच्च' इत्यत्र अपिदित्यर्थवत्। अन्यथा पित्कार्यस्याल्विधित्वात्तत्र स्थानिवद्भावस्यैवाप्रसक्त्या हेः पित्त्वस्यैवाप्रसक्तौ किं तन्निषेधेन। तदिदं स्थानिवत्सूत्रे शब्देन्दुशेखरे प्रपञ्चितम्।

**गुणे कृत इति।** ङसिङसोरिति शेषः। हरे अस् इति स्थिते अपदान्तत्वाद् 'एङः पदान्तात्—' इति पूर्वरूपे अप्राप्ते अयादेशे प्राप्ते। **ङसिङसोश्च।**

---

च नुमा रूपसिद्धिः। मुत्वस्यासिद्धत्वाद् 'इकोऽचि—' नुमोऽप्रवृत्तेः। नादेशे तु नासिद्ध-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ङसिङसोरति परे पूर्वरूपमेकादेशः स्यात्। हरेः। हरेः। हर्योः। हरीणाम्। **२४७ अच्च घेः।** (७-३-११९) इदुद्भ्यामुत्तरस्य ङेरौत्स्याद्धेरन्तादेशश्चाकारः। वृद्धिः। हरौ। हर्योः। हरिषु। एवं श्रीपत्यग्निरविकव्यादयः। **२४८ अनङ् सौ।** (७-१-९३) सख्युरङ्गस्यानङादेशः स्यादसंबुद्धौ सौ परे। 'ङिच्च' (सू ४३)

---

'एङः पदान्तात्–' इत्यत एङ इति, अतीति चानुवर्तते। 'अमि पूर्वः' इत्यतः पूर्व इत्यनुवर्तते। 'एकः पूर्वपरयोः' इत्यधिकृतम्। तदाह—**एङो ङसिङसोरित्यादिना। हरेः इति।** पूर्वरूपे रुत्वविसर्गौ। पञ्चम्येकवचनस्य षष्ठ्येकवचनस्य च रूपमेतत्। यद्यपि ङसिङसौ द्वौ, एङौ च द्वौ। तथापि न यथासंख्यमिष्यते। 'यथासंख्यमनुदेशस्समानां स्वरितेन' इति सूत्रच्छेदमभ्युपगम्य यत्र स्वरितत्वं प्रतिज्ञातं तत्रैव यथासंख्यविज्ञानादिति यथासंख्यसूत्रभाष्ये स्पष्टम्। 'अच्च घेः' 'उपसर्गे घोः किः' इत्यादिनिर्देशाच्च। **हर्योरिति।** षष्ठीद्विवचने यणादेशे रूपम्। **हरीणामिति।** 'ह्रस्वनद्यापः–' इति नुट्। 'नामि' इति दीर्घः। 'अट्कुप्वाङ्–' इति णत्वम्। हरि इ इति स्थिते 'घेर्ङिति' इति गुणे प्राप्ते। **अच्च घेः।** 'ङेराम्–' इत्यतो ङेरित्यनुवर्तते। 'इदुद्भ्याम्' इति 'औत्' इति च सूत्रमनुवर्तते। तदाह—**इदुद्भ्यामित्यादिना। अन्तादेश इति।** अलोऽन्त्यपरिभाषालभ्यमेतत्। **वृद्धिरिति।** हर औ इति स्थिते 'वृद्धिरेचि' इति वृद्धौ हरौ इति रूपमित्यर्थः। **हरिष्विति।** 'आदेशप्रत्यययोः' इति षत्वम्। अथ सखिशब्दात् सुः। सखि स् इति स्थिते। **अनङ् सौ।** 'सख्युरसंबुद्धौ' इत्यनुवर्तते। 'अङ्गस्य' इत्यधिकृतम्। तदाह–**सख्युरङ्गस्येत्यादिना।** 'सौ' इति प्रथमैकवचनम्, न तु सप्तमीबहुवचनम्, असंबुद्धाविति पर्युदासात्। अनङि ङकार इत्, नकारादकार उच्चारणार्थः। अनेकाल्त्वात् सर्वादेशत्वमाशङ्क्य आह—**ङिच्चेति।** सखन् स् इति स्थिते उपधाकार्यं वक्ष्यन् उपधा-

---

त्वम्। 'न मु ने' इति निषेधात्। न च 'न मु ने' इति निषेधो नुम्येव किं न स्यात्, न इत्यकारस्याविवक्षितत्वादिति वाच्यम्। अमुना घटेनेत्याद्यसिद्ध्यापत्तेः। अमुष्मै कुलायेत्यादौ नुम्प्रसङ्गाच्च। न च तत्र स्मायादेशे सति नुमोऽप्रवृत्तिरिति शङ्क्यम्। स्मायादेशं बाधित्वा परत्वान्नुमः प्रवृत्तेः। **प्राचामिति।** आचार्याणामिति शेषः। **ङसिङसोश्च।** इह ङसिङसौ द्वौ, एङावपि, तयोर्यथासंख्यं न, अस्वरितत्वात्। अल्पाच्तरस्य पूर्वनिपाताकरणाल्लिङ्गाद् 'अच्च घेः' 'उपसर्गे घोः किः' इति निर्देशाच्च। **अच्च घेः।** अत्र 'इदुद्भ्याम्' 'औत्' इति 'ङेराम्–' इत्यतो ङेरिति च पदत्रयमनुवर्तत इत्याशयेनाह—**इदुद्भ्यां परस्य ङेरौत्स्यादिति।** घेरुत्तरस्येति प्राचा व्याख्यातमिह तु नोक्तम्। सूत्रे घेरित्यस्य षष्ठ्यन्तत्वात् तन्त्रावृत्त्यादौ च प्रमाणाभावात्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इत्यन्तादेशः। २४९ अलोऽन्त्यात्पूर्व उपधा। (१-१-६५) अन्त्यादलः पूर्वो वर्ण उपधासंज्ञः स्यात्। २५० सर्वनामस्थाने चासंबुद्धौ। (६-४-८) नान्तस्योपधाया दीर्घः स्यादसंबुद्धौ सर्वनामस्थाने। २५१ अपृक्त एकाल्प्रत्ययः।

---

संज्ञामाह—**अलोन्त्यात्**। अल इति पञ्चमी। अन्त्यादिति सामानाधिकरण्यात्। अल्प्रत्याहारः वर्णपर्यायः। पूर्वोऽप्यलेव गृह्यते, साजात्यादित्याह—**अन्त्यादल इत्यादिना**। 'अलः' किम्। शिष्ट इत्यत्र शास्धातौ आस् इति संघातात् पूर्वशकारस्य उपधात्वं न भवति। अन्यथा 'शास इदङ्हलोः' इति शकारस्य इकारप्रसङ्गः। वर्णग्रहणं किम्। शास्धातौ शा इति समुदायस्य उपधात्वं न भवति। अन्यथा शा इति समुदायस्य इकारः स्यात्। न चालोन्त्यपरिभाषया आकारस्यैव इकारो भवतीति वाच्यम्, 'नानर्थकेऽलोन्त्यविधिः' इति तन्निषेधात्। **सर्वनामस्थाने**। 'नोपधायाः' इति सूत्रमनुवर्तते। न इति लुप्तषष्ठीकं पदम्। तेनाङ्गस्येत्यवयवषष्ठ्यन्तं विशेष्यते। तदन्तविधिः। 'ढ्रलोपे–' इत्यतो दीर्घ इत्यनुवर्तते। तदाह—**नान्तस्येत्यादिना**। सखान् स् इति स्थिते अपृक्तकार्यं वक्ष्यन् अपृक्तसंज्ञामाह—**अपृक्तः**। एकालिति कर्म-

---

'औत्' इति पूर्वसूत्रे इदुद्भ्यामुत्तरस्य ङेरिति क्लृप्तसंबन्धस्य त्यागायोगाच्च। यत्तु व्याचख्युः—अदिति तपरत्वं बुद्धावित्यादावत्वे कृते स्त्रियां टाप् मा भूदित्येतदर्थमिति, तच्चिन्त्यम्। तपरग्रहणाद्धि टापा सह दीर्घो मा भूत्, टाप् तु स्यादेव। लक्षणद्वयबाधे मानाभावात्। अत एव 'कृन्मेजन्तः' इति सूत्रे भाष्यादौ संनिपातपरिभाषया पद्धतावित्यत्र टाप् नेत्युक्तम्, टापा व्यवधाने ह्यानन्तर्यविघातः स्यादिति। तपरकरणात्त्वभावे तु संनिपातपरिभाषोपन्यासस्तत्र विरुध्येत। यदपि व्याचख्युः—औतस्तकारः स्वरितार्थ इति, तदपि न। 'स्तीर्णे बर्हिषि समिधाने अग्नौ' इत्यादौ स्वरितत्वादर्शनात्। 'न विभक्तौ–' इति सूत्रे ङेरौस्तु तकार उच्चारणार्थो नेत्संज्ञक इति स्वयमेव भावितत्वाच्च। तस्मादुभयत्र तपरकरणमुच्चारणार्थमेवेति मनोरमायां स्थितम्। **अनङ् सौ**। नकारादकार उच्चारणार्थः। 'असंबुद्धौ' इति पर्युदासात् साविति प्रथमैकवचनं गृह्यते, न तु सप्तमीबहुवचनम्। 'सोर्डा' इत्येव सिद्धे अनङ्विधानमन्यतोऽपि स्यादिति ज्ञापनार्थम्, तेन उशनसः संबुद्धावनङ् सिद्ध्यतीति प्राञ्चः। यद्यपि 'सोर्डा' इत्युक्ते 'ऋदुशन–' इत्युत्तरसूत्रेणापि डा स्यात्। ततश्च उशनेत्यत्र 'सर्वनामस्थाने चासंबुद्धौ' इति दीर्घः स्यात्। पुरुदंसेत्यत्र तु 'सान्तमहतः–' इति दीर्घः स्यात्, तथापि संज्ञापूर्वकविधेरनित्यत्वाद् अङ्गवृत्तपरिभाषया वा तत्समाधेयमिति तेषामाशयः। **अलोऽन्त्यात्पूर्व**। अल इति पञ्चमी अन्त्यादित्यनेन विशेष्यत इत्याह—**अन्त्यादल इति**। अलः किम्, शिष्टः शिष्टवानित्यादौ अन्त्यात्संघातात् पूर्वस्य शकारस्य मा भूत्। सत्यां हि संज्ञायां

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

( १-२-४१ ) एकाल्प्रत्ययो यः सोऽपृक्तसंज्ञः स्यात् । **२५२ हल्ङ्याब्भ्यो दीर्घात्सुतिस्यपृक्तं हल्।** (६-१-६८) हलन्तात्परं दीर्घौ यौ ङ्यापौ तदन्ताच्च परं सु ति सि इत्येतदपृक्तं हल् लुप्यते। 'हल्ङ्याब्भ्यः' किम्-ग्रामणीः । 'दीर्घात्'

---

धारयः । अत्रैकशब्दोऽसहायवाची । 'एके मुख्यान्यकेवलाः' इत्यमरः । स् इत्यस्यापृक्तसंज्ञायाम्। **हल्ङ्याब्भ्यो** । हल् च ङी च आप् च इति द्वन्द्वः। दिग्योगे पञ्चमी। परमित्यध्याहार्यम् । समासैकदेशयोरपि ङ्यापोरेव दीर्घादिति विशेषणम्, न तु हलः, असंभवात्। एवं च दीर्घादिति द्वित्वे एकवचनमार्षम्। हल्ङ्याब्भ्य इत्यस्य सुतिस्याक्षिप्तप्रकृतिविशेषणतया प्रत्ययग्रहणपरिभाषया च तदन्तविधिः। ततश्च हलन्ताच्च दीर्घङ्याबन्ताच्च परमिति लब्धम्। सुतिसि इति समाहारद्वन्द्वः। अपृक्तमिति हलिति च सामानाधिकरण्येनान्वेति। उकारे इकारे च लुप्ते परिशिष्टः सकारस्तकारश्च सुतिसि इत्यनेन विवक्षितः। ततश्च हलित्यनेन सामानाधिकरण्यं न विरुध्यते। 'लोपो व्योः-' इत्यतो लोप इत्यनुवर्तते। तच्च इह कर्मसाधनमाश्रीयते। लुप्यत इति लोपः, कर्मणि घञ्। तदाह—**हलन्तात्परमित्यादिना**। **हल्ङ्याब्भ्यः किमिति**। राम इत्यादावदीर्घान्तत्वान्न दोष इति प्रश्नः। **ग्रामणीरिति**। ग्रामं नयतीति विग्रहः। 'णीञ्

---

'शास इदङ्हलोः' इति शस्येत्त्वं स्यात्। नन्वेवमप्यन्त्यादलः पूर्वस्य संघातस्योपधासंज्ञायां शिष्ट इत्यादौ शकारविशिष्टस्याकारस्य इत्त्वं स्यादित्यतिप्रसङ्गदोषस्तदवस्थ एवेति चेदुच्यते—यथा हि लोके अमीषां ब्राह्मणानामन्त्यात्पूर्व आनीयतामित्युक्ते यथाजातीयकोऽन्त्यस्तथाजातीयकोऽन्त्यात्पूर्व आनीयते, तथात्राप्यन्त्योऽलात्मक इति तत्पूर्वोऽप्यलेव गृह्यते। तदेतदाह—**पूर्वो वर्ण इति**। अत्र 'अचोऽन्त्यादि टि' इत्यत्रेव अल इति निर्धारणे षष्ठीत्यपि सुवचमिति केचिदाहुः। अलां मध्ये योऽन्त्यस्तस्मात्पूर्वो वर्ण उपधासंज्ञः स्याद् इति व्याख्याया अपि संभवदुक्तिकत्वात्। **सर्वनामस्थाने**। 'नोपधायाः' इति सूत्रं 'ढ्रलोपे-' सूत्राद्दीर्घग्रहणं चानुवर्तत इत्याशयेनाह—**नान्तस्येत्यादि**। **अपृक्त एकाल्**। असहायवाच्यत्रैकशब्दः संख्यावाची वा। न च संख्यावाचित्वे अभैत्सीदित्यत्र हलन्तात्परस्य सिचोऽपृक्तत्वाल्लोपः स्यादिति वाच्यम्। विभक्तिसाहचर्याद्विभक्तेरेव लोप इति व्याख्यानात्। एकालिति किम्, जागृविः। 'वेरपृक्तस्य' इति लोपो न। अलित्यनेनैकत्वे लब्धे इदमेवैकग्रहणं वर्णग्रहणे जातिग्रहणं ज्ञापयतीति। फलं तु दम्भितुमिच्छति धिप्सतीत्यलो 'हलन्ताच्च' इति कित्वम्। तत्र हल्ग्रहणस्य व्यक्तिपरत्वे योऽत्रैकः समीपवर्ती हल् नकारः, ततः परः सन् न, यस्माच्च परः सन् भकारस्त्वसाविकः समीप इति कित्वं न स्यात्। ततश्च

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

किम्—निष्कौशाम्बिः। अतिखट्वः। 'सुतिसि' इति किम्—अभैत्सीत्। तिपा सहचरितस्य सिपो ग्रहणात्सिचो ग्रहणं नास्ति। 'अपृक्तम्' इति किम्—बिभर्ति।

---

प्रापणे' 'सत्सूद्विष—' इत्यादिना क्विप्। 'अग्रग्रामाभ्यां नयतेर्णो वाच्यः' इति णत्वम्। हल्ङ्याबन्तत्वाभावान्न सुलोपः। **दीर्घात् किमिति**। ङ्यापोर्दीर्घत्वाव्यभिचारात् किमर्थं दीर्घत्वविशेषणमिति प्रश्नः। **निष्कौशाम्बिः। अतिखट्व इति**। निष्क्रान्तः कौशाम्ब्याः, खट्वामतिक्रान्त इति विग्रहे 'निरादयः क्रान्ताद्यर्थे पञ्चम्या' 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति समासः। 'गोस्त्रियोः' इति ह्रस्वत्वम्। अत्र ङ्यापोर्ह्रस्वत्वान्न सुलोपः। **सुतिसि, इति किम् अभैत्सीदिति**। भिदेर्लुङि सिच्। अत्र तकारात् सकारस्य लोपो न, सुतिस्यन्यतमत्वाभावादित्यर्थः। ननु सिचस्सिरेवायमित्यत आह— **तिपेति**। तिपा सहचरितस्य विभक्तिरूपस्यैव ग्रहणात् सिचो ग्रहणं नेत्यर्थः। **अपृक्तमिति किं बिभर्तीति**। अत्र ति इति समुदायस्य न हल्त्वम्। तकारस्तु यद्यपि

---

नलोपो न स्यादित्यभ्युपगम्य 'निपात एकाजनाङ्' इत्यत्र एकाज्ग्रहणं त्यक्तुं शक्यमित्यवोचाम। **हल्ङ्याब्भ्यो**। दीर्घादित्येतद् ङ्यापोरेव विशेषणम्, न तु हलोऽसंभवादित्याह—**दीर्घौ याविति। परमिति**। न त्विदं विहितविशेषणम्, प्रमाणाभावात्, या सा का इत्यादावव्याप्तेश्च। न च तत्र हलन्ताद्विहितत्वेन निर्वाहः। यः स इत्यादावतिव्याप्तेः। कर्ता सखेत्यादावव्याप्तेश्च। यद्यपि त्यदाद्यत्वविधौ विभक्ताविति त्यस्य विषयसप्तमीत्वे स्वीकृते या सेत्यादौ नोक्तदोषः। सुविभक्तेराबन्ताद्विहितत्वस्य संभवात्। तथा अनङ्विधौ सावित्यस्य विषयसप्तमीत्वे कर्ता सखेत्यादावपि न दोषः। हलन्ताद्विहितस्य सोः संभवात्। तथापि बहुश्रेयसीत्यत्राव्याप्तिप्रसङ्ग इति भावः। **हलिति**। तस्य सुतिसीत्येवंरूपत्वमेकदेशविकृतन्यायेन बोध्यम्। **लुप्यत इति**। यद्यपीह 'लोपो व्योर्वलि' इत्यतो लोप इत्यनुवर्तते, तच्च तत्र भावसाधनम्, तथापीह कर्मसाधनम्, हलिति प्रथमान्तेन सामानाधिकरण्यादिति भावः। **निष्कौशाम्बिः। अतिखट्व इति**। प्रादिसमासे 'गोस्त्रियोः—' इति ह्रस्वः। नन्विह समस्तस्य ङ्याबन्तत्वं नास्ति। न च स्त्रीप्रत्यये तदादिनियमो नास्तीति वाच्यम्। अनुपसर्जने हि तथा, इह तूपसर्जनत्वात्तदादिनियमोऽस्त्येव। अन्यथा अतिकारीषगन्ध्यापुत्र इत्यत्र ष्यङन्तपूर्वपदलक्षणसंप्रसारणप्रसङ्गात्। सत्यम्, तथाप्युत्तरपदस्य ङ्याबन्तत्वेन सोस्ततः परत्वानपायाद्दीर्घग्रहणाभावे सुलोपः स्यादेव। नहीदं ङ्याब्ग्रहणं विहितविशेषणमित्यधुनैवोक्तम्। स्यादेतत्, गङ्गामात्मन इच्छति गङ्गीयति, ततः क्विपि अल्लोपे च गङ्गीः। इह ईकारस्य स्थानिवद्भावेनाप्त्वाद्दीर्घत्वाच्चातिव्याप्तिः। न चाल्लोपस्य स्थानिवत्त्वात्सोरापः परत्वं नेति शङ्क्यम्। 'क्वौ लुप्तं न स्थानिवत्' इति निषेधादिति चेन्मैवम्। ङी ई

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

'हल्' किम्–बिभेद। 'प्रथमहल्' किम्–राजा। नलोपादिर्न स्यात्, संयोगान्त-लोपस्यासिद्धत्वात्। सखा। हे सखे। २५३ सख्युरसंबुद्धौ। (७-१-९२)

---

तेरवयवो हल्, तथापि तस्य नापृक्तत्वम्। वस्तुतस्तु उकारे इकारे च लुप्ते परिशिष्टः सकारस्तकारश्च सुतिसि इत्यनेन गृह्यते, हल्शब्दसाम नाधिकरण्यादित्युक्तम्। नात्र इकारलोपोऽस्ति। अतो हल्ग्रहणेनैव बिभर्तीत्यत्र लोपाभावसिद्धेः अपृक्तग्रहणस्य नेदं प्रत्युदाहरणम्। द्वितीयहल्ग्रहणस्य प्रयोजनं पृच्छति—**हल् किमिति। विभेदेति।** भिदेर्लिट्, तिप्, णल्। णलः अकारस्य हल्त्वाभावान्न लोपः। **प्रथमहल् किमिति।** राजन् स् इति स्थिते उपधादीर्घे संयोगान्तलोपेनैव राजेत्यादिसिद्धेरिति प्रश्नः। नन्विदं राजेतिकथं प्रत्युदाहरणम्, संयोगान्तलोपेनैव अन्यथासिद्धत्वादित्यत आह—**न लोपा-दिर्न स्यादिति।** संयोगान्तलोपे न लोपो न स्यादिति भावः। अभिनोऽत्रेत्यत्र उत्व-मादिशब्दार्थः। भिदेर्लङि सिप्। 'इतश्च' इति इकारलोपः। 'सिपि धातो रुर्वा' इति रुत्वम्। सलोपः। अत्र 'अतो रोरप्लुतात्–' इत्युत्वं न स्यात्। कुत इत्यत आह—**संयोगान्तलोपस्यासिद्धत्वादिति।** हल्ङ्यादिलोपस्तु नासिद्धः, षष्ठप्रथमपादस्थ-त्वादिति भावः। अत्र क्वचित् पुस्तकेषु 'दीर्घात् किम्' इत्यारभ्य 'संयोगान्तलोपस्यासिद्ध-त्वात्' इत्यन्तः संदर्भो न दृश्यते। युक्तं चैतत्, मूलकृतैव प्रौढमनोरमायामस्य संदर्भस्य प्रदर्शितत्वात् इति शब्देन्दुशेखरे व्यक्तम्।

**सखेति।** सुलोपे सति 'न लोपः–' इति नकारलोपः। न चेह 'सु' माश्रित्य अनङि कृते तन्नकारमाश्रित्य सोर्लोपो न संभवति, संनिपातपरिभाषाविरोधादिति वाच्यम्। 'स्वतन्त्रः कर्ता' इत्यादिनिर्देशेन अनङो नकारमाश्रित्य सुलोपे कर्तव्ये सन्नि-पातपरिभाषाया अप्रवृत्तेरित्याहुः। **हे सखे इति।** 'अनङ् सौ' इत्यत्र असम्बुद्धा-वित्यनुवृत्तेरनङभावे ह्रस्वस्य गुणे 'एङ्ह्रस्वात्–' इति सुलोपे रूपम्। सखि औ इति स्थिते णित्कार्यं वृद्धिं वक्ष्यन् णिद्वद्भावं दर्शयति—**सख्युरसम्बुद्धौ।** सख्युरिति दिग्योगे

---

आ आव् इति प्रश्लिष्य दीर्घग्रहणस्य प्रत्याख्याततत्वेन प्रकृते आकाररूपस्य आपोऽभावा-दुक्तातिप्रसङ्गाभावात्। निष्कौशाम्बीयतेः क्विपि तु निष्कौशाम्बी इति भवत्येव। ईकार-रूपङीबन्तत्वेन सुलोपप्रवृत्तेः। **अपृक्तं किम्। बिभर्तीति।** इदं च प्रत्युदाहरणं चिन्त्यम्। विशिष्टस्याहल्त्वात्। सुतिसीनां हलिति क्लिष्टं व्याख्यायातिप्रसङ्गापादन-स्यानुचितत्वात्। यत्तु व्याचख्युः—सुरां सुनोतीति सुरासुत्, तमाचष्टे सुरासयति, ततः क्विप्। सुराः। सुरासौ। सुरासः। इह सुनोतेरवयवस्य सस्य लोपं व्यावर्तयि-तुमपृक्तग्रहणमिति। तदपि चिन्त्यम्। परस्परसाहचर्येण सुतिसीनां विभक्तीनामेव ग्रह-णात्। अन्यथा सिचो लोपापत्तेरुक्तत्वात्। प्रत्ययाप्रत्यययोः प्रत्ययस्यैव ग्रहणाच्च।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सख्युरङ्गात्परं संबुद्धिवर्जं सर्वनामस्थानं णिद्वत्स्यात् । **२५४ अचो ञ्णिति ।** (७-२-११५) ञिति णिति च परेऽजन्ताङ्गस्य वृद्धिः स्यात् । सखायौ । सखायः । सखायम् । सखायौ । घिसंज्ञाभावान्न तत्कार्यम् , सख्या । सख्ये । **२५५ ख्य-**

---

पञ्चमी । 'अङ्गस्य' इत्यधिकृतं पचम्या विपरिणम्यते । परमित्यध्याहार्यम् । 'इतोऽत् सर्वनामस्थाने' इत्यतः सर्वनामस्थाने इत्यनुवर्तते । असम्बुद्धावित्यभेदेनान्वेति । 'गोतो णित्' इत्यतो णिदिति प्रथमान्तमनुवृत्तम् । तत्सामानाधिकरण्याद् असम्बुद्धाविति सर्वनामस्थाने इति च सप्तमी प्रथमा कल्प्यते । तदाह—**सख्युरङ्गादित्यादिना । णिद्वदिति ।** णित्कार्यकृत् स्यादित्यर्थः । णिच्छब्दस्तत्कार्यातिदेशार्थ इति भावः । **अचो ञ्णिति ।** ञ् च ण् च ञ्णौ, तौ इतौ यस्य तत् ञ्णित् । 'मृजेः—' इत्यतो वृद्धिरित्यनुवर्तते । 'अङ्गस्य' इत्यधिकृतमचा विशेष्यते । तदन्तविधिः । तदाह—**अजन्तस्येत्यादिना ।** स्थानसाम्यादिकारस्य वृद्धिरैकारः, तस्य आयादेश इत्यभिप्रेत्य आह—**सखायाविति ।** एवं सखायः, सखायम् , सखायौ । सखीन् इति शसि हरिवद्रूपम् , असर्वनामस्थानत्वाण्णित्त्वाभ वाद् न वृद्धिः । **घिसंज्ञाभावादिति ।** 'शेषो घ्यसखि' इत्यत्र असखीति पर्युदासादिति भावः । **न तत्कार्यमिति ।** घिप्रयुक्तकार्यं नेत्यर्थः । **सख्येति ।** सखि आ इति स्थिते घित्वाभावाद् 'आङो नाऽस्त्रियाम्' इति नाभावाभावे यणि रूपम् । **सख्ये इति ।** सखि ए इति स्थिते घित्वाभावाद् 'घेर्ङिति' इति गुणाभावे यणि रूपम् ।

---

यत्तु 'तित्स्वरितम्' इति सूत्रे कैयटेनोक्तं न क्वचिदियं परिभाषा भाष्यवार्तिककाराभ्यामाश्रितेति तद्भ्रमसात् । 'अङ्गस्य' इति सूत्रे भाष्यादौ तस्याः पठितत्वात् , स्वयमपि तत्र व्याख्यातत्वाच्च । **संयोगान्तालोपस्यासिद्धत्वादिति ।** ननु संयोगान्तलोपो नासिद्धः । 'न ङिसंबुद्ध्योः' इति सूत्रे संबुद्धिग्रहणाज्ज्ञापकात् । न चैवं गोमानित्यादावपि नलोपापत्तिः, ज्ञापकस्य विशेषविषयत्वाद् यत्र हि नकारविभक्त्योरानन्तर्यं तत्रैव सिद्धत्वव्याख्यानात् । यत्त्वाहुः—हे ब्रह्मन्निति नपुंसकार्थत्वाद् नैतज्ज्ञापकमिति । तन्न, लुका लुप्ते प्रत्ययलक्षणाभावात् । 'संबुद्धौ वा नपुंसकानाम्—' इत्यस्यावश्यकत्वाच्च । संबुद्धिग्रहणस्य नपुंसकविषयत्वासंभवेनोक्तज्ञापकस्य सुस्थत्वात् । तस्मान्नलोपो न प्रयोजनमिति चेदिह तर्हि अभिनोऽत्रेत्यत्र रोरुत्वं न स्यात् । सिपि 'दश्च' इति रुत्वे विभक्तिसकारस्य संयोगान्तलोपे तस्यासिद्धत्वात् । तथा अबिभर्भवान्, अजागर्भवानित्यत्र तिलोपो न स्यात् । 'रात्सस्य' इति नियमात् । तदुक्तम्—'संयोगान्तस्य लोपे हि नलोपादिर्न सिध्यति । रात्तु तेनैव लोपः स्याद्धलस्तस्माद्विधीयते' इति । नलोपादिरित्यादिशब्देनोत्वं संगृह्यते । अत्रेदमवधेयम्—ङ्याब्ग्रहणं सोरेव विशेषणं न तु

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्यात्परस्य। ( ६-१-११२ ) खितिशब्दाभ्यां खीतीशब्दाभ्यां कृतयणादेशाभ्यां परस्य ङसिङसोरत उत्स्यात्। सख्युः। २५६ औत्। ( ७-३-११८ ) इदुद्भ्यां

---

ङसिङसोः सखि अस् इति स्थिते घित्वाभावाद् 'घेर्ङिति' इति गुणाभावे यणि सख्यस् इति स्थिते। ख्यत्यात् परस्य। खिखी इत्यनयोः, तिती इत्यनयोश्च कृतयणादेशयोः ख्यत्य इति निर्देशः। यकारादकार उच्चारणार्थः। 'एङः पदान्तात्-' इत्यतः अतीत्यनुवर्तते। तच्च परस्येति सामानाधिकरण्यात् षष्ठ्यन्तं विपरिणम्यते। 'ङसिङसोश्च' इत्यतो ङसिङसोरित्यनुवर्तते। अवयवषष्ठ्येषा। ततश्च ङसिङसोरवयवस्य अत इति लभ्यते। 'ऋत उत्' इत्यतः उदित्यनुवर्तते। 'एकः पूर्वपरयोः' इति तु निवृत्तम्। परग्रहणसामर्थ्यात्। अन्यथा ख्यत्यादिति पञ्चमीनिर्देशादेव सिद्धे किं तेन। तदाह—खितिशब्दाभ्यामित्यादिना। सख्युरिति। सख्यस् इति स्थिते यकारादकारस्य उकारे रुत्वविसर्गौ। ङौ सखि इ इति स्थिते घित्वाभावाद् 'अच्च घेः' इत्यस्याप्रवृत्त्या सवर्णदीर्घे प्राप्ते। औत्। 'इदुद्भ्याम्' इति सूत्रमनुवर्तते। 'ङेराम्-' इत्यतो ङेरिति च तदाह—इदुद्भ्यामित्यादिना। ननु घिसंज्ञकेषु हरिकन्यादिषु 'अच्च घेः'

---

तिस्योः, व्याख्यानात्। तेन मालेवाचरद् अमालात्, गङ्गेवाचरद् अगङ्गाद् इत्यत्र नातिप्रसङ्गः। तथा च हलन्तात्परं सुतिसीत्येतदपृक्तं हल् लुप्यते दीर्घौ यौ ङ्यापौ तदन्तात्परं 'सु' इत्येतदक्तं हल् लुप्यते इति वाक्यार्थोऽत्र पर्यवसन्नः, यत्तु व्याचख्युः—ङ्याब्भ्यां तिस्योरसंभव एवेति। तत्र ङ्यन्तादसंभव इति सत्यम्। आबन्तात्तु आचारक्विबन्ताल्लङस्तिप्सिपौ स्त एव। अगङ्गात्, अगङ्गा इति यथा। न च शपा व्यवधानम्, एकादेशस्य पूर्वान्तत्वेन ग्रहणात्। न च स्थानिवद्भावः, अपूर्वविधित्वात्। अन्ये त्वाहुः—ङ्याब्ग्रहणमसंभवादेव तिस्योर्विशेषणं न भवतीति यदुक्तं तत्सम्यगेव। न च अगङ्गादगङ्गा इत्यत्र संभवोऽस्तीत्युक्तमिति वाच्यम्। तत्र स्थानिभूतस्य शपः पूर्वस्मान्निमित्तभूतादापः परयोस्तिस्योर्लोपे कर्तव्ये स्थानिवद्भावेन शपा व्यवधानात् तिस्योर्लोपस्याप्रसक्तेः। न च फलाभावात्पञ्चमीसमासपक्षो न स्वीक्रियत इत्यपि वाच्यम्। तत्प्रयोजनस्य प्रागेव प्रदर्शितत्वादिति। सखेति। समानं ख्यायते जनैरिति सखा। 'ङिच्च' 'यलोपः' इति चानुवर्तमाने 'समाने ख्यः स चोदात्तः' इति ख्या इत्यस्मादिण्, समानशब्दस्योदात्तः सभावश्च। न चेह सुविभक्तिसंनियोगेन सखिशब्दस्यानङि कृते संनिपातपरिभाषया 'हल्ङ्याब्-' इति सुलोपो न भवतीति शङ्क्यम्। 'स्वतन्त्रः कर्ता' इत्यादिनिर्देशेनानङो नकारमाश्रित्य सुलोपे कर्तव्ये तत्परिभाषाया अप्रवृत्तेः—सख्युरसंबुद्धौ। इह 'इतोऽत्सर्वनामस्थाने' इत्यतः सर्वनामस्थान इत्यनुवर्तते, तदसंबुद्धावित्यनेन विशेष्यते। 'गोतो णित्' इति सूत्राण्णिदित्यनुवृत्तं तत्सामानाधिकरण्येन

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

परस्य ङेरौत्स्यात् । उकारानुवृत्तिरुत्तरार्था । सख्यौ । शेषं हरिवत् । शोभनः सखा सुसखा । सुसखायौ । सुसखायः । अनङ्णिद्वद्भावयोराङ्गत्वात्तदन्तेऽपि प्रवृत्तिः ।

---

इति प्रवर्तते । नदीसंज्ञकेषु तु 'इदुद्भ्याम्' इति पूर्वसूत्रं प्रवर्तते । अतः सूत्रद्वयविषयादन्यौ सखिपतिशब्दौ एवास्य सूत्रस्य विषयौ इति व्यक्तम् । एवं च उकारानुवृत्तिर्व्यर्थेत्यत आह—**उकारेति** । उकारानुवृत्तिः 'अच्च घेः' इत्युत्तरसूत्रेऽनुवृत्त्यर्थेत्यर्थः । **सख्यौ इति** । ङेरौत्त्वे यणि रूपमिति भावः ।

**सुसखेति** । प्रादिसमासः । 'राजाहस्सखिभ्यष्टच्' इति टच् तु न भवति, 'न पूजनात्' इति निषेधात् । अनङ् सौ, उपधादीर्घः, हल्ङ्यादिलोपः, 'न लोपः—' इति नकारलोप इति भावः । **सुसखायौ सुसखाय इति** । णिद्वद्भावो वृद्धिः आयादेश इति भावः । नन्वनङ्णिद्वत्त्वे सखिशब्दस्य विधीयमाने कथं सुसखिशब्दे स्यातामित्यत आह—**अनङ् इत्यादि** । अङ्गाधिकारस्थतया 'पदाङ्गाधिकारे—' इति परिभाष-

---

सप्तम्याः प्रथमा कल्प्यत इत्याह—**संबुद्धिवर्जं सर्वनामस्थानमिति** । 'सख्युरसंबुद्धिः' इत्येव सूत्रयितुं युक्तमिति मनोरमायां स्थितम् । ननु सखेत्यत्रोपधादीर्घं बाधित्वा परत्वाद् 'अत उपधायाः' इति वृद्ध्या भाव्यम्, सोर्णित्त्वादिति चेद् । अत्राहुः—कृताकृतप्रसङ्गित्वमात्रेणापि नित्यत्वस्वीकाराद् अन्तरङ्गत्वाच्च सखेत्यत्र वृद्धिं बाधित्वा 'सर्वनामस्थाने चासंबुद्धौ' इत्युपधादीर्घेणैव भवितव्यम्, 'सख्युरसंबुद्धौ' इति णिद्वद्भावमुपजीव्यात्र प्रवर्तमानस्य 'अत उपधायाः' इत्यस्य बहिरङ्गत्वादिति । **अचो ञ्णिति** । 'मृजेर्वृद्धिः' इत्यतो वृद्धिरित्यनुवर्तते, अङ्गस्येति चानुवृत्तमचा विशेष्यते, विशेषणेन तदन्तविधिरित्याशयेन व्याचष्टे—**अजन्ताङ्गस्येति** । **ख्यत्यात्**—पञ्चमीनिर्देशादेव परस्येति लब्धे परस्येति ग्रहणम् 'एकः पूर्वपरयोः' इति निवृत्तमिह तु नाधिक्रियते इति ध्वननार्थम् । ख्यश्च त्यश्चेति समाहारद्वन्द्वे ख्यत्यम्, तत्र खिखीशब्दयोः कृतयणादेशयोरनुकरणं ख्य इति । एवं तितीशब्दयोस्त्य इति, उभयत्राप्यकार उच्चारणार्थो न तु मुख्यापत्यादिशब्दैकदेशानुकरणमिदम्, 'सख्युर्यः' 'पत्युर्नः—' 'संख्यायाः संवत्सरसंख्यस्य च' 'आपत्यस्य च—' इत्यादिनिर्देशादित्यभिप्रेत्याह—**खितिशब्दाभ्यामिति** । एवं च यत्र यणप्रवृत्तिः तत्रैवोत्वं न त्वतिसखेरित्यादौ । न चैवं यणा निर्देशस्योक्तप्रयोजनत्वाद् ह्रस्वान्तयोरेव ग्रहणं स्यान्न तु दीर्घान्तयोरिति शङ्क्यम् । निर्देशस्य ह्रस्वदीर्घसाधारणत्वाच्छास्त्रस्य बहुविषयत्वसंभवे तत्संकोचस्यान्याय्यत्वाच्चेति भावः । **औत्** । एतच्च सूत्रं नदीसंज्ञकेषु 'इदुद्भ्याम्' इति पूर्वसूत्रेण बाध्यते । घिसंज्ञकेषु 'अच्च घेः' इति उत्तरसूत्रेण । तस्मात्संज्ञाद्वयशून्योऽस्य विषयः । न च तादृश उकारोऽस्तीत्यत आह—**उकारानुवृत्तिरिति** । प्राचा तु घिनदीसंज्ञावर्जिता-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

समुदायस्य सखिरूपत्वाभावाद् 'असखि' (सू २४३) इति निषेधाप्रवृत्तेर्घिसंज्ञा। सुसखिना। सुसखये। ङसिङसोर्गुणे कृते कृतयणादेशत्वाभावात् 'ख्यत्यात्—' (सू. २५९) इत्युत्वं न। सुसखेः। सुसखावित्यादि। एवमतिशयितः सखा अतिसखा। 'परमः सखा यस्य' इति विग्रहे परमसखा परमसखायौ इत्यादि। गौणत्वे-

---

या सखिशब्दान्तेऽपि प्रवृत्तिरित्यर्थः। नन्वेवं सति सुसखिशब्दे असखि इति पर्युदासात् घित्वाभावे नात्वादि न स्यादित्यत आह—**समुदायस्येति**। न च सुसखिशब्दस्य सखिशब्दरूपत्वाभावेऽपि सखिशब्दान्तत्वादसखीति पर्युदासोऽपि दुर्निवार इति वाच्यम्। 'शेषो घ्यसखि' इत्यस्य पदाङ्गाधिकारस्थत्वाभावादिति भावः। **सुसखिनेति**। घित्वान्नात्वे रूपम्। **सुसखये इति**। 'घेर्ङिति' इति गुणे अयादेशः। **ङसीति**। ङसिङसोः 'घेर्ङिति' इति गुणे कृते 'ख्यत्यात्—' इत्युत्वं नेत्यन्वयः। कुत इत्यत आह—**कृतयणादेशत्वाभावादिति**। 'ख्यत्यात्—' इत्यत्र कृतयणादेशनिर्देशेन यत्र यणादेशप्रवृत्तिस्तत्रैवोत्वप्रवृत्तेरिति भावः। **सुसखेरिति**। ङसिङसोरेतद्रूपम्। **सुसखाविति**। 'अच्च घेः' इत्यौत्वम्। **एवमिति**। सुसखिशब्दवदित्यर्थः। **अतिसखेति**। प्रादिसमासः। 'न पूजनात्' इति न टच्।

वस्तुतस्तु उदाहृते सुसखिशब्दे अतिसखिशब्दे च घिसंज्ञा न भवत्येव। 'शेषो घ्यसखि' इत्यत्र हि असखीति शेषविशेषणम्। तदन्तविधिः। सखिशब्दान्तभिन्नः शेषो घिसंज्ञक इति लभ्यते। अत एव 'यस्येति च' इति सूत्रे ईकारे परतः इकारलोपे किमुदाहरणम्। सखीत्यत्र 'सख्यशिश्वीति भाषायाम्' इति ङीषि इकारलोपः। न च सवर्णदीर्घेण निर्वाहः शङ्क्यः। सखीमतिक्रान्तः अतिसखिः। प्रादिसमासः। 'गोस्त्रियोः—' इति ह्रस्वः। अतिसखेरागच्छति इत्यत्र इकारलोपाभावात् सवर्णदीर्घे तस्य एकादेशस्य पूर्वान्ततया सखिग्रहणेन ग्रहणाद् असखीति पर्युदासे घिसंज्ञाप्रतिषेधापत्तेः। इकारलोपे तु सति ङीषो ह्रस्वत्वे कृते नायं सखिशब्दः, 'ङीषस्तदवयवत्वाभावाद्' इति भाष्यं सङ्गच्छत इति शब्देन्दुशेखरे प्रपञ्चितम्। **परमसखेति**। बहुव्रीहित्वात्तत्पुरुषत्वाभावान्न टच्। ननु बहुव्रीहौ सखिशब्दस्य गौणत्वात् कथमनङ्णित्त्वे, 'गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः' इति न्यायात्। इत्यत आह—**गौणत्वेऽपीति**। 'मिदचोऽ-

---

भ्यामिदुभ्यां परस्येत्युक्तम्। तदसत्। तादृशस्योकारस्याप्रसिद्धेः। **सुसखेति**। प्रादिसमासे 'राजाहःसखिभ्यः—' इति टचो 'न पूजनात्' इति निषेधः। 'शेषो घ्यसखि' इत्यत्रासखीति नायं प्रसज्यप्रतिषेधः, असमर्थसमासादिदोषापत्तेः, किं तु पर्युदास एवेति सुसखीत्यस्य सखिशब्दभिन्नत्वाद्घिसंज्ञा स्यादेव। न च समुदायस्य सखिशब्दभिन्नत्वेऽपि सखिशब्दान्तभिन्नत्वं नेति कथमसखीति निषेधाप्रवृत्तिरिति शङ्क्यम्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ऽप्यनङ्णित्त्वे प्रवर्तेते । सखीमतिक्रान्तोऽतिसखिः । लिङ्गविशिष्टपरिभाषया अनित्यत्वान्न टच् । हरिवत् । इहानङ्णित्त्वे न भवतः । 'गोस्त्रियोः–'(सू ६५६) इति ह्रस्वत्वेन सखिशब्दस्य लाक्षणिकत्वात् । 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव

---

न्त्यात्–' इति सूत्रे 'तृज्वत् क्रोष्टुः' 'स्त्रियां च' इति (अत्र च) भाष्यकैयटयोः तथा दृष्टत्वादिति भावः । **अतिसखिरिति** । 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति समासः । 'गोस्त्रियोः–' इति ह्रस्वः । 'राजाहस्सखिभ्यष्टच्' इति टच् तु न भवति । तस्मिन् कर्तव्ये ह्रस्वस्य बह्वपेक्षतया बहिरङ्गतया असिद्धत्वेन ईकारान्तत्वात् । नन्वेवमपि 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' इति परिभाषया सखीशब्दान्तादपि टच् स्यादित्याशङ्क्य आह—**लिङ्गविशिष्टेति** । 'शक्तिलाङ्गलाङ्कुश–' इति वार्तिके घटघटीग्रहणात्तस्या अनित्यत्वमिति भावः । ननु हरिवदिति कथम्, अनङ्णिद्वद्भावयोः प्रवृत्तौ रूपभेदादित्यत आह—**इहेति** । कुतो न भवत इत्यत आह—**गोस्त्रियोरिति** । **लाक्षणिकत्वादिति** । लक्षणं शास्त्रं तत्र भव इत्यर्थे 'बह्वचोऽन्तोदात्तात्' इति वा अध्यात्मादित्वाद्वा ठञ् । अतिसखिशब्दस्वरूपस्य सामान्यतश्शास्त्रादुन्नेयत्वादिति यावत् । सखिशब्दस्तु नैवम् । समानं ख्यायते जनैरित्यर्थे इणिति ङ्भिचेति यलोप इति चानुवर्तमाने 'समाने ख्यः स चोदात्तः' इति ख्याधातोरिणश्च विशिष्योपादानेन व्युत्पादितत्वेन तस्य प्रातिपदोक्तत्वादिति भावः । ननु लाक्षणिकस्यापि ग्रहणं कुतो नेत्यत आह । **लक्षणेति** । लक्षणशब्देन लाक्षणिकं विवक्षितम् । विशिष्य प्रत्यक्षोपदिष्टं[1] प्रतिपदोक्तमित्युच्यते । तयोर्मध्ये प्रतिपदोक्तस्यैव ग्रहणमिति परिभाषितत्वादित्यर्थः । प्रतिपदोक्तं झटित्युपस्थितिकम् । लाक्षणिकं तु लक्षणानुसंधानाद्विलम्बितोपस्थितिकम् । प्रतिपदोक्तमादाय शास्त्रस्य

---

विशिष्यासंनिधानादसखीत्यत्र 'येन विधिस्तदन्तस्य' इत्यस्याप्रवृत्तेः, तदेतत्सकलमभिप्रेत्याह—**समुदायस्येत्यादि** । एवमतिसखेत्यत्रापि समासान्तनिषेधादिकं बोध्यम् । **गौणत्वेऽपीति** । अतिदध्नेत्यादावस्थ्याद्यनङ्वदिति भावः । तथा च 'येन विधिः–' इति सूत्रे परमसखायाविति बहुव्रीहिः, तत्पुरुषे हि टचा भाव्यमिति कैयटः । तथा 'द्वितीया श्रिता–' इति सूत्रे सोमसखेति प्रतीकमुपादाय बहुव्रीहित्वान्न समासान्त इति स एवाह—'मिदचोन्त्यात्–'[2] इति सूत्रेऽपि भाष्यकैयटयोः स्फुटमेतत् । 'अनुयुक्तो वरुण इन्द्रसखा' 'आग्ने यहि मरुत्सखा' 'तीव्रं सोमं पिबति गोसखायम्' इत्यादिप्रयोगाश्चैवमेव संगच्छन्ते । तत्र तु बहुव्रीहिप्रयुक्तस्य पूर्वपदप्रकृतिस्वरस्य दर्शनेन गौणत्वात् । एतेन घिसंज्ञासूत्रे शोभनः सखा अस्य सुसखिरित्युदाहरन्तौ हरदत्तन्यासकारौ तदनुगामिनश्चान्ये उपेक्ष्याः । **अनित्यत्वादिति** । 'शक्तिलाङ्गलाङ्कुश–' इति

---

१ प्रत्यक्षोपपादितमिति क । २ एषा पङ्क्तिः क्वचित् पुस्तके नास्ति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ग्रहणात्' ( प ११४ ) २५७ **पतिः समास एव** । ( १-४-८ ) पतिशब्दः समास एव घिसंज्ञः स्यात्। पत्या। पत्ये। पत्युः। पत्युः। पतीनाम्। पत्यौ। शेषं हरिवत्। समासे तु भूपतये। कतिशब्दो नित्यं बहुवचनान्तः। २५८ **बहुगणवतुडति संख्या** । ( १-१-२३ ) एते संख्यासंज्ञाः स्युः। २५९

---

चरितार्थत्वान्न लाक्षणिके प्रवृत्तिरिति न्यायसिद्धा चेयं परिभाषा।

अथ पतिशब्दे विशेषं दर्शयति—**पतिः समास एव**। 'शेषो घ्यसखि' इत्यतो घीत्यनुवर्तते। तदाह—**पतिशब्द इत्यादिना**। **पत्या**। **पत्ये इति**। घित्वाभावान्नात्वगुणाभावे यणि रूपम्। **पत्युरिति**। 'ख्यत्यात्—' इत्युत्त्वम्। **पत्याविति**। घित्वाभावाद् 'अच्च घेः' इत्यभावे 'औत्' इति ङेरौत्त्वे यणि रूपम्। आरम्भसामर्थ्यादेव नियमार्थत्वे सिद्धे एवकारस्तु पतिरेव समासे घिरिति विपरीतनियमव्यावृत्त्यर्थः। तेन सुहरिणेत्यादि सिध्यति। **समासे तु भूपतये इति**। भूपतिनेत्याद्युपलक्षणम्। 'सीतायाः पतये नमः' इत्यादि त्वार्षम्। अथ कतिशब्दे विशेषं दर्शयति—**कतिशब्दो नित्यं बहुवचनान्त इति**। 'किमः संख्यापरिमाणे—' इत्यनेन किंशब्दाद् बहुत्वसंख्यावच्छिन्नसंख्येयविषयप्रश्न एव डतिः, इति भाष्ये स्पष्टत्वादिति भावः। अथ षट्संज्ञाकार्यं वक्ष्यन् षट्संज्ञोपयोगिनीं संख्यासंज्ञामाह—**बहुगण**। बहुश्च, गणश्च, वतुश्च, डतिश्च इति समाहारद्वन्द्वः। एतत् संख्यासंज्ञं स्यादित्यर्थः। फलितमाह—**एते इति**। बह्वादय इत्यर्थः। बहुगणशब्दाविह त्रित्वादिपरार्धान्त-

---

वार्तिके घटघटीग्रहणमत्र लिङ्गम्। **पतिः समास एव**। एवकार इष्टतोऽवधारणार्थः। अन्यथा हि 'समासे पतिरेव' इति नियमः संभाव्येत, ततश्च महाकविनेत्यादिप्रयोगो न सिध्येत्। '–अनल्विधौ' 'धात्वादेः–' इत्यादिज्ञापकानुसरणे तु प्रतिपत्तिगौरवं स्यादिति भावः। **पत्येत्यादि**। नन्वेवं 'शेषोऽघ्यसखिपती' इत्येवोच्यताम्, किमनेन 'पतिः समास एव' इति सूत्रेणेति चेन्न। समुदायस्य पतिरूपत्वाभावेन बहुच्पूर्वकपतिशब्दस्यापि घिसंज्ञा स्यात्। ततश्च सुसखिनेत्यादिवद्बहुपतिनेत्यादि प्रसज्येत, इष्यते तु बहुपत्येत्यादि। नापि 'सखिपती समास एव' इत्येव सूत्र्यतामिति शङ्क्यम्। बहुपत्येत्यादिवद् बहुसख्येत्याद्यापत्तेः, इष्यते तु बहुसखिनेत्यादि। अथ कथं 'सीतायाः पतये नमः' इति, 'नष्टे मृते प्रव्रजिते क्लीबे च पतिते पतौ' इति पराशरश्च। अत्राहुः–पतिरित्याख्यातः पतिः 'तत्करोति तदाचष्टे' इति णिचि टिलोपे 'अच इः' इत्यौणादिक इप्रत्यये 'णेरनिटि' इति णिलोपे च निष्पन्नोऽयं पतिशब्दः 'पतिः समास एव' इत्यत्र न गृह्यते, लाक्षणिकत्वादिति। एतेन 'कृष्णस्य सखिरर्जुनः' इति भारतम्, 'सखिना वानरेन्द्रेण' इति रामायणं च व्याख्यातम्। **कतिशब्द इति**। का संख्या

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

**डति च।** ( १-१-२५ ) डत्यन्ता संख्या षट्संज्ञा स्यात् । **२६० प्रत्ययस्य लुक्श्लुलुपः।** ( १-१-६१ ) लुक्श्लुलुप्शब्दैः कृतं प्रत्ययादर्शनं क्रमात्तत्तत्संज्ञं

---

संख्याव्यापकधर्मविशेषवाचिनौ गृह्येते, न तु वैपुल्यसंघवाचिनौ, संख्यायतेऽनयेति अन्वर्थसंज्ञाविज्ञानात्। वतुडती प्रत्ययौ। संज्ञाविधावपि इह तदन्तग्रहणम्, केवलयोः प्रयोगानर्हत्वात्। वतुरिह 'यत्तदेतेभ्यः परिमाणे वतुप्' इति तद्धितप्रत्ययो गृह्यते, न तु 'तेन तुल्यं क्रिया चेद्वतिः' इति वतिरपि, उकारानुबन्धात्। डतिरपि 'किमः संख्या-परिमाणे डति च' इति विहितः तद्धित एव गृह्यते, वतुना साहचर्यात्, न तु भातेर्ड-वतुरिति विहितः कृदपि। ननु 'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' इत्यादिसंख्या-प्रदेशेषु बह्वादीनामेव चतुर्णां ग्रहणं स्यात्, न तु लोकप्रसिद्धसंख्यावाचकानामपि, 'कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्ययः' इति न्यायात्। ततश्च पञ्चकृत्व इत्यादि न स्यादिति चेन्न—'संख्याया अतिशदन्तायाः कन्' इत्यत्र तिशदन्तपर्युदासबलेन संख्या-प्रदेशेषु कृत्रिमाकृत्रिमन्यायाप्रवृत्तिज्ञापनात्। न हि विंशतित्रिंशदादिशब्दानां कृत्रिमा संख्यासंज्ञाऽस्ति। न चैवं सति बहुगणग्रहणवैयर्थ्यं शङ्क्यम्, तयोर्नियतविषयपरिच्छेद-कत्वाभावेन लोकसिद्धसंख्यात्वाभावात्। अत एव भाष्ये 'एतत्सूत्रमतिदेशार्थं यदयम-संख्यां संख्येत्याह' इत्युक्तं सङ्गच्छत इत्यास्तां तावत्। **डति च।** डतीत्यविभक्तिको निर्देशः। प्रत्ययत्वात्तदन्तग्रहणम्। पूर्वसूत्रात् संख्येत्यनुवर्तते, 'ष्णान्ता षट्' इत्यतः षडिति च। तदाह—**डत्यन्तेति**। संख्येति किम्? पतिः।

अथ षट्संज्ञाकार्यं लुकं वक्ष्यन्नाह—**प्रत्ययस्य लुक्**। 'अदर्शनं लोपः' इत्यतोऽदर्शनमित्यनुवर्तते। प्रत्ययस्यादर्शनं लुक्श्लुलुप्संज्ञकं स्यादित्यर्थः प्रतीयते। एवं सति एकस्यैव प्रत्ययादर्शनस्य तिस्रोऽपि संज्ञाः स्युः। ततश्च हन्तीत्यत्र शब्लुकि 'श्लौ' इति द्वित्वं स्यात्, जुहोतीत्यत्र श्लौ सति 'उतो वृद्धिर्लुकि हलि' इति वृद्धिः स्यात्, अतो नैवमर्थः। किं तु लुक्श्लुलुप इत्यावर्तते। ततश्च लुक् श्लु लुप् इत्युच्चार्य विहितं प्रत्ययादर्शनं यथासंख्यपरिभाषया क्रमाद् लुगादिसंज्ञं स्यादिति लभ्यते। अतो नोक्तसंकर इत्यभिप्रेत्य आह—**लुक्श्लुलुप्शब्दैरित्यादिना**। 'फले लुक्' 'जुहो-

---

येषां ते कति। 'किमः संख्यापरिमाणे डति च' इति डतौ डित्त्वाट्टिलोपः। **बहुगण-वतु**। बहुगणौ प्रातिपदिके संख्यावाचके गृह्येते, न तु संघवैपुल्यवाचके अपि, संख्या-यते अनयेत्यन्वर्थसंज्ञाविधानात्। अत एव डतिरपि 'किमः संख्यापरिमाणे डति च' इति विहितस्तद्धित एव गृह्यते, वतुसाहचर्याच्च। न तु 'पातेर्डतिः'। यद्यपि संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति, तथापीह वतुडत्योः केवलयोः संज्ञाविधौ फलाभावाद-न्वर्थताबलाच्च तदन्तयोरेव संज्ञा प्रवर्तते। सानुबन्धनिर्देशस्तु ब्राह्मणवद्वसतिरित्यादा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्यात्। २६१ षड्भ्यो लुक्। (७-१-२२) षड्भ्यः परयोर्जश्शसोर्लुक् स्यात्। २६२ प्रत्ययलोपे प्रत्ययलक्षणम्। (१-१-६२) प्रत्यये लुप्तेऽपि तदाश्रितं

---

त्यादिभ्यः श्लुः, 'जनपदे लुप्' इत्यादिविधिप्रदेशेषु 'अस्य सूत्रस्य शाटकं वय' इतिवद्भाविसंज्ञाविज्ञानाद् नान्योन्याश्रयः। तदेवं कतिशब्दस्य षट्संज्ञायाम्। षड्भ्यो लुक्। जश्शसोरित्यनुवर्तते। तदाह—षड्भ्यः परयोरित्यादिना। जसि लुप्तेऽपि 'जसि च' इति गुणमाशङ्कितुमाह—प्रत्ययलोपे प्रत्ययलक्षणम्। प्रत्ययो लक्षणं निमित्तं यस्य तत् प्रत्ययलक्षणम्। प्रत्ययस्य लोपे सति प्रत्ययनिमित्तकं कार्यं स्यादित्यर्थः। फलितमाह—प्रत्यये लुप्तेऽपीत्यादिना। स्थानिवद्भावादेव सिद्धे अल्विध्यर्थमिदं सूत्रम्। यत्र प्रत्ययस्यासाधारणं रूपं प्रयोजकं तदेव कार्यं प्रत्ययलोपे सति भवतीति

---

वतिप्रसङ्गशङ्कां निराकर्तुमित्याहुः। न चैवं संख्याकार्येषु कृत्वसुजादिषु कृत्रिमसंख्याया एव ग्रहणं स्याद् न त्वकृत्रिमाया इति पञ्चकृत्व इत्यादि न सिध्येत्, 'कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्ययः' इति वाच्यम्। 'संख्याया अतिशदन्तायाः कन्' इत्यत्र तिशदन्तपर्युदासबलेन संख्याकार्येषु कृत्रिमाकृत्रिमन्यायाप्रवृत्तेः। नन्वेवं भूरिशब्दात्कृत्वसुच्प्रत्यय इति चेद् अत्राहुः—'अनियतसंख्यावाचिनां चेत्संख्याकार्यं स्यात्तर्हि बहुगणयोरेव' इत्येवंभूतनियमफलकसंख्याविज्ञानान्नास्त्यतिप्रसङ्ग इति। डति च। 'ष्णान्ता षट्' इत्यतः षडित्यनुवर्तते। संख्येति च प्रकृतं डतीत्यनेन विशेष्यते तदाह—डत्यन्ता संख्येति। संख्येति किम्, पतयः। प्रत्ययस्य लुक्श्लुलुपः। 'अदर्शनं लोपः' इत्यतोऽनुवृत्तस्यादर्शनस्यानेकसंज्ञाकरणसामर्थ्यात्तन्त्रावाश्रित्य तद्भावितसंज्ञा इह विज्ञायन्ते, तेन संज्ञासंकरोऽत्र न भवति। तदेतदाह—लुक्श्लुलुप्शब्दैरित्यादि। सति तु संज्ञासंकरे हन्तीत्यत्र शब्लुकि 'श्लौ' इति द्वित्वं स्यात्। जुहोतीत्यत्र श्लौ सति 'उतो वृद्धिर्लुकि हलि, इति वृद्धिः स्यात्। न च तत्र 'अभ्यस्तस्य न' इत्यनुवृत्तेः योयोति नोनोतीत्यादाविव वृद्धिर्न भविष्यतीति वाच्यम्, संज्ञासंकरपक्षे तदनुवृत्त्यसंभवात्। अन्यथा सूत्रस्य निर्विषयत्वापत्तेः। न च यौतीत्यादिरवकाशः, संज्ञासंकरे तत्रापिद्वित्वस्य दुर्वारत्वादिति भावः। 'फले लुक्' 'जुहोत्यादिभ्यः श्लुः' 'जनपदे लुप्' इत्यादिविधिप्रदेशेषु सूत्रशाटकवद्भाविसंज्ञाविज्ञानान्नान्योन्याश्रयः। षड्भ्यो लुक्। 'सर्वनाम्नः स्मै' इतिवत् 'षषो लुक्' इति वक्तव्ये बहुवचननिर्देशोऽत्रार्थप्राधान्यसूचनार्थः, कृत्रिमाकृत्रिमन्यायेन स्वरूपनिराससिद्धेः। तेन षडर्थगतसंख्याभिधायिनोरेव जश्शसोर्लुगित्यर्थपर्यवसानात्प्रियषष्ञान इत्यादौ नातिप्रसङ्गः। 'जश्शसोः शिः' इत्यतोऽनुवर्तनादाह—जश्शसोर्लुक् स्यादिति। प्रत्ययलोपे। विशेषविहिता अपि लुगादिसंज्ञा लोपसंज्ञां न बाधन्ते। एकसंज्ञाधिकारादन्यत्र संज्ञानां बाध्यबाधकभावानङ्गीकारादिति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कार्यं स्यात्। इति 'जसि च' (सू २४१) इति गुणे प्राप्ते। २६३ न लुमताङ्गस्य। (१-१-६३) लुक् श्लु लुप् एते लुमन्तः। लुमताशब्देन लुप्ते तन्निमित्तमङ्गकार्यं न स्यात्। कति। कति। कतिभिः। कतिभ्यः। कतिभ्यः। कतीनाम्। कतिषु। अस्मद्युष्मद्षट्संज्ञकास्त्रिषु सरूपाः। त्रिशब्दो नित्यं बहुवचनान्तः। त्रयः। त्रीन्।

---

नियमार्थं चेति भाष्यादिषु स्पष्टम्। इति जसि चेतीति। अनेन सूत्रेण लुप्तं प्रत्ययमाश्रित्य 'जसि च' इति गुणे प्राप्त इत्यर्थः। न लुमताङ्गस्य। 'प्रत्ययलोपे प्रत्ययलक्षणम्' इत्यनुवर्तते। लु इत्येकदेशोऽस्यास्तीति लुमान्—लुक्शब्दः श्लुशब्दः लुप्शब्दश्च। तेन शब्देन प्रत्ययलोपे विहिते सति प्रत्ययनिमित्तकमङ्गकार्यं न स्यादित्यर्थः। तदाह—लुक्श्लु इत्यादिना। अङ्गस्य इत्यनुक्तौ पञ्च सप्त इत्यादौ 'सुप्तिङन्तम्' इति पदसंज्ञा न स्यात्, जश्शसोर्लुका लुप्तत्वात्। ततश्च 'न लोपः प्रातिपदिकान्तस्य' इति नलोपो न स्यात्। अतोऽङ्गस्येत्युक्तम्। एवं च जसि लुका लुप्ते प्रत्ययलक्षणाभावाद् 'जसि च' इति गुणो न भवतीत्यभिप्रेत्योदाहरति—कतीति। प्रसङ्गादाह—अस्मदिति। त्रिष्विति। पुंस्त्रीनपुंसकेष्वित्यर्थः। सरूपा इति। समानानि रूपाणि येषामिति विग्रहः। लिङ्गविशेषबोधकटाबाद्यभावादिति भावः। न चैवं सति 'अलिङ्गे युष्मदस्मदी' इति 'साम आकम्' इति सूत्रस्थभाष्यविरोध इति वाच्यम्, पदान्तरसंनिधानं विना लिङ्गविशेषो युष्मदस्मच्छब्दाभ्यां न प्रतीयत इति हि तदर्थः। अत एव 'न षट्स्वस्रादिभ्यः' इति पञ्चनादिषट्संज्ञकेभ्यष्टाब्ङीब्निषेधः संगच्छते। अन्यथा स्त्रीत्वाभावादेव तदभावे सिद्धे किं तेन। अत एव च 'ङेप्रथमयोः—' इति सूत्रे भाष्ये युष्मानित्यत्र 'तस्माच्छसो नः पुंसि' इत्युपन्यासः संगच्छते। अत एव च 'नेतराच्छन्दसि' इति सूत्रे शिशीनुमादिभिर्युष्मदस्मदाद्यादेशानां विप्रतिषेधपरं वार्तिकं तद्भाष्यं च संगच्छत इति दिक्।

त्रिशब्दे विशेषमाह। त्रिशब्द इति। त्रि आम् इति स्थिते नुटि दीर्घे

---

भावः। स्थानिवत्सूत्रेण सिद्धे नियमार्थमिदं सूत्रम्, प्रत्ययस्यासाधारणं रूपं यत्र प्रयोजकं तदेव कार्यं प्रत्ययलोपे सति भवति, न तु प्रत्ययाप्रत्ययसाधारणमिति। तेन शोभना दृषदो यस्य सुदृषत् प्रसाद इत्यत्र 'नञ्सुभ्याम्' इत्यन्तोदात्ततां बाधित्वा 'सोर्मनसी अलोमोषसी' इत्युत्तरपदाद्युदात्तत्वम् 'अत्वसन्तस्य–' इति दीर्घश्च न भवति। यद्वा—यत्र प्रत्ययः प्राधान्येनाश्रीयते तत्राल्विधावपि विध्यर्थमिदम्, तेन अतृणेडित्यत्र हलादौ पिति सार्वधातुके विहित इम् लुप्तेऽपि तस्मिन् भवति। 'वर्णाश्रये नास्ति प्रत्ययलक्षणम्' इति तु वर्णप्राधान्यविषयकम्, तेन गवे हितं गोहितमित्यत्र अवादेशो न। यद्यपीदं पक्षद्वयमाकरारूढम्, तथापि नियमपक्ष एव प्रबल इति यङ्लुगन्ते मनो-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्रिभिः । त्रिभ्यः । त्रिभ्यः । २६४ त्रेस्त्रयः । (७-१-५३) त्रिशब्दस्य त्रयादेशः स्यादामि । त्रयाणाम् । परमत्रयाणाम् । गौणत्वे तु नेति केचित् । प्रियत्रीणाम् । वस्तुतस्तु प्रियत्रयाणाम् । त्रिषु । द्विशब्दो नित्यं द्विवचनान्तः । २६५ त्यदा-

---

णत्वे त्रीणामिति प्राप्ते । त्रेस्त्रयः । 'आमि सर्वनाम्नः—' इत्यत आमीत्यनुवर्तते । तदाह—**त्रिशब्दस्येत्यादिना** । अनेकाल्त्वात् सर्वादेशः । नुड् दीर्घश्च । तदाह—**त्रयाणामिति** । 'त्रेरयङ्' इति तु नोक्तम्, इयङ् अनङ् इत्यादिवद् ङकारात्पूर्वस्य अकारस्य उच्चारणार्थत्वशङ्काप्रसङ्गात् । अङ्गाधिकारस्थत्वात् 'पदाङ्गाधिकारे—' इति परिभाषया त्रेरिति तदन्तग्रहणमित्यभिप्रेत्योदाहरति—**परमत्रयाणामिति** । परमाश्च ते त्रयश्चेति विग्रहः । प्रियास्त्रयो यस्य इति प्रियत्रिशब्दो बहुव्रीहिः । तस्यान्यपदार्थप्रधानत्वादेकद्विबहुवचनानि सन्ति । अतो हरिवत्तस्य रूपाणि । तत्र त्रयादेशमाशङ्क्य आह—**गौणत्वे त्विति** । त्रिशब्दस्य उपसर्जनत्वे 'त्रेस्त्रयः' इति न भवतीति केचिदाहुरित्यर्थः । 'गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः' इति न्यायाद् इति भावः । **वस्तुतस्त्विति** । प्रियत्रयाणामित्येव रूपं वस्तुत्वेन ज्ञेयमित्यर्थः । प्रामाणिकमिति यावत् । गौणमुख्यन्यायस्त्वत्र न प्रवर्तते, तस्य पदकार्य एव प्रवृत्तेः । अत एव उपसर्जनानां सर्वनामत्वप्रतिषेध आरब्धो वार्तिककृता । अत एव च प्रियतिस्रेत्यादौ तिस्रादयो भाष्य उदाहृताः संगच्छन्त इत्यन्यत्र विस्तरः ।

अथ द्विशब्दे विशेषमाह—**द्विशब्द इति** । तस्य द्वित्वनियतत्वादिति भावः ।

---

रमायां स्थितम् । स्यादेतत् । सूत्रस्यास्यावश्यकत्वेऽपि 'प्रत्ययलोपे तल्लक्षणम्' इत्येव सूच्यतां किमनेन द्वितीयप्रत्ययग्रहणेन । अत्राहुः—प्रत्ययस्यासाधारणं रूपं यत्रेत्यादिलाभाय द्वितीयप्रत्ययग्रहणमिति । **न लुमताऽङ्गस्य** । लुमतेति किम्, कार्यते हार्यते । अत्र 'णेरनिटि' इति णिलोपेऽपि णिजपेक्षा वृद्धिर्भवत्येव । अङ्गस्येति किम्, पञ्च सप्त कतीत्यादौ प्रत्ययान्तकार्यं 'सुप्तिङन्तम्—' इति पदसंज्ञा यथा स्यात् । **अस्मादिति** । प्राचा त्वव्ययास्मदिति पठितम्, तत्र अव्ययेत्युपेक्षितम्, 'सदृशं त्रिषु' इति श्रुतेर्लिङ्गत्रयाद्यभावपरत्वेन अव्ययानामलिङ्गत्वात्, अव्ययीभावस्य तु वचनात्क्लीबत्वेऽपि लिङ्गान्तराभावाच्च । **त्रिशब्द इति** । 'तरतेर्ड्रिः' डित्वाट्टिलोपः । त्रेस्त्रयः । त्रेरिति षष्ठी, न तु पञ्चमी । त्रय इत्यदन्तम्, न तु सान्तम्, 'निजां त्रयाणाम्—' इति निर्देशादित्यभिप्रेत्याह—**त्रिशब्दस्य त्रयादेश इति** । ननु 'निजां त्रयाणाम्—' इति निपातनादेव त्रयादेशे सिद्धे किमनेन सूत्रेणेति चेन्मैवम् । 'अबाधकान्यपि निपातनानि भवन्ति' इत्यनेन ज्ञापनात् । तेन पुरातनमिति सिध्यति । अन्यथा 'पुराणप्रोक्तेषु—' इति निपातनादेतद्बाध्येत । 'त्रेरयङ्' इत्येव न सूत्रितम् । तत्करोति आचष्टे

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दीनामः । (७-२-१०२) एषामकारोऽन्तादेशः स्याद्विभक्तौ । 'द्विपर्यन्तानामेवेष्टिः' ( वा ४४६८ ) द्वौ । द्वौ । द्वाभ्याम् । द्वाभ्याम् । द्वाभ्याम् । द्वयोः । द्वयोः । 'द्विपर्यन्तानाम्' इति किम् । भवान् । भवन्तौ । भवन्तः । संज्ञायामुपसर्जनत्वे च नात्वम् सर्वाद्यन्तर्गणकार्यत्वात् । द्विर्नाम कश्चित् । द्विः । द्वी । द्वयः । द्वावति-

---

द्वि औ इति स्थिते । **त्यदादीनामः** । 'अष्टन आ विभक्तौ' इत्यतो विभक्तावित्यनुवर्तते । **एषामिति** । त्यदादीनामित्यर्थः । त्यद् आदिर्येषामिति विग्रहः । अन्तादेश इत्यलोऽन्त्यपरिभाषालभ्यः । विभक्तौ किम्? तत् फलं 'स्वमोर्नपुंसकात्' इति लुकि अत्वं न । **द्विपर्यन्तानामिति** । सर्वादिगणे ये त्यदादयः पठिताः, तेषामिह द्विपर्यन्तानामेव ग्रहणे भाष्यकारस्य इच्छेत्यर्थः । द्विशब्दस्य द्विवचनेषु परतोऽत्वे कृते रामशब्दवद्रूपाणीत्याह—**द्वावित्यादि** । **द्विपर्यन्तानामिति किमिति** । युष्मदस्मदोरात्वयत्वलोपैर्बाधात् किमः कादेशविधानाच्च तेषां त्यदादिष्वन्तर्भावेऽपि न दोष इति प्रश्नः । **भवान्** । **भवन्ताविति** । भवत् स् इति स्थिते 'उगिदचाम्–' इति नुमि हल्ङ्यादिलोपे संयोगान्तलोपे 'अत्वसन्तस्य च–' इति दीर्घे भवानिति रूपम् । द्विपर्यन्तानामित्यभावे तु भवत् स् इति स्थिते तकारस्य अत्वे कृते 'अतो गुणे' इति पररूपे 'उगिदचाम्–' इति नुमि 'सर्वनामस्थाने–' इति दीर्घे सुलोपे नलोपे भवा इति स्यात् । तथा भवत् औ इति स्थिते पूर्ववत्तकारस्य अत्वे पररूपे नुमि दीर्घे च भवानाविति स्यादिति भावः । अथ यदुक्तं 'संज्ञोपसर्जनीभूतानां सर्वादिगणकार्यमन्तर्गणकार्यं च न भवति' इति तत् स्मारयति—**संज्ञायामित्यादिना** । **द्विर्नामेति** । नामेत्यव्ययं प्रसिद्धौ ।

---

वेत्यर्थे 'तत्करोति–' इत्यादिना णिचि ततः क्विपि 'प्रकृत्यैकाच्' इति प्रकृतिभावाट्टिलोपाभावे 'ह्रस्वस्य पिति–' इति तुकि त्रित् । ततो बहुत्वविवक्षायामामि कृते त्रेरयङि त्रयाणामिति रूपासिद्धेः । न च 'वार्णादाङ्गं बलीयः' इति तुकः प्रागेवायं स्यादिति शङ्क्यम् । युगपत्प्रवृत्तावेवाङ्गस्य बलीयस्त्वात् । **केचिदिति** । त्रेः संबन्धिन्यामीति विज्ञानाद्गौणत्वे त्रयादेशो न भवतीति तेषामाशयः । **वस्तुतस्त्विति** । अर्थप्राधान्यबोधकस्य बहुवचनस्याभावाद्गौणत्वेऽपि त्रयादेशो न्याय्यः प्रियास्थ्नेत्यादावस्थ्याद्यनङ्वदिति भावः । **त्यदादीनामः**, 'अष्टन आ विभक्तौ' इत्यतोऽनुवर्तनादाह—**विभक्ताविति** । विभक्ताविति किम् । तद् । यद् । सोर्लुका लुप्तत्वात्प्रत्ययलक्षणं न । **द्विपर्यन्तानां किमिति** । युष्मदस्मच्छब्दयोरिष्ट्यभावेऽपि दोषो नास्ति, आत्वयत्वलोपैर्विशेषविहितैरत्वस्य बाधनात् । तथा किंशब्देऽपि न दोषः, किमः कादेशस्य विशिष्यविधानादिति प्रश्नः । **भवानिति** । भवत् सु इति स्थिते तकारस्थाने अत्वे कृते 'अतो गुणे' इति पररूपे 'उगिदचाम्–' इति नुमि सति 'सर्वनामस्थाने–' इत्यनेन दीर्घे सुलोपे

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्रान्तोऽतिद्विः । हरिवत् । प्राधान्ये तु परमद्वावित्यादि । औडुलोमिः । औडुलोमी। बहुवचने तु उडुलोमाः । 'लोम्नोऽपत्येषु बहुष्वकारो वक्तव्यः' (वा २१६०)। बाह्वादीञोऽपवादः । औडुलोमिम् । औडुलोमी । उडुलोमान्॥ इति इदन्ताः॥ 'वातप्रमीः' (उ ४४१) इत्युणादिसूत्रेण माङ ईप्रत्ययः । स च कित् । वातं प्रमिमीते इति वातप्रमीः' । 'दीर्घाज्जसि च' (सू २३६) । वातप्रम्यौ । वातप्रम्यः।हे

---

द्विरिति प्रसिद्धः कश्चिद् इत्यर्थः । अत्र च संज्ञाभूतस्य द्विशब्दस्य एकद्विबहुवचनानि सन्ति, एकद्वित्र्यादिष्वपि द्विसंज्ञकत्वसंभवादित्यभिप्रेत्य आह—**द्विः। द्वी। द्वय इति। अतिद्विरिति** । 'अत्यादयः–' इति समासः । **परमद्वाविति**। कर्मधारयोऽयम्। संज्ञोपसर्जनत्वाभावादिह अत्वं भवत्येव । आङ्गत्वेन पदाङ्गाधिकारपरिभाषया तदन्तग्रहणादिति भावः ।

उडूनि नक्षत्राणीव लोमानि यस्य स उडुलोमा, तस्यापत्यमौडुलोमिः । 'बाह्वादिभ्यश्च' इति इञ् । 'नस्तद्धिते' इति टिलोपः । आदिवृद्धिः । अस्य एकवचनद्विवचनयोः सर्वत्र हरिवद्रूपम् । तदाह—**औडुलोमिः । औडुलोमी इति** । **बहुवचने तु उडुलोमा इति** । ननु तथा रूपं कथम् , बाह्वादिगणस्थत्वेन इञः प्रसङ्गादित्यत आह—**लोम्नोऽपत्येषु बहुष्वकारो वक्तव्यः** । लोमन्शब्दाद् बहुष्वपत्येषु विवक्षितेषु अकारः प्रत्ययो वक्तव्य इत्यर्थः । **बाह्वादीञ इति** । बाह्वादिगणविहितस्य इञोऽपवाद इत्यर्थः उडुलोमन् अ इति स्थिते 'नस्तद्धिते' इति टिलोपः ञित्त्वाभावात् कित्वाभावाच्च नादिवृद्धिः । उडुलोमशब्द अकारान्तः । तस्य सर्वत्र बहुवचनेषु रामवद्रूपमिति भावः ॥ इति इदन्तप्रकरणम् ॥

**अथेदानीमीकारान्ता निरूप्यन्ते** । तत्र वातप्रमीशब्दो द्विधा । 'माङ् माने' इति धातोरीप्रत्ययान्तः क्विबन्तश्च । तत्र प्रथमं व्युत्पादयति—**वातप्रमीरित्यादिना** । क्विदित्यनन्तरं निपात्यत इति शेषः । **वातमिति** । वातमित्युपपदे कर्तरि माङ् धातोरीप्रत्यये कित्त्वाद् 'आतो लोप इटि च' इत्याल्लोपे 'उपपदमतिङ्' इति समासे तस्मात् सुबुत्पत्तौ वातप्रमीरिति प्रथमैकवचनम् । अङ्यन्तत्वान्न सुलोपः । एतदर्थमेव हल्ङ्यादिसूत्रे सत्यपि दीर्घग्रहणे ङीब्ग्रहणमिति भावः । **दीर्घादिति** । वातप्रमी अस् इति स्थिते 'दीर्घाज्जसि च' इति पूर्वसवर्णदीर्घे निषिद्धे, 'इको यणचि' इति यणि वात

---

नलोपे च सति भवा इति रूपं स्यादिति भावः । **भवन्ताविति** । पूर्ववत्ताकारस्याते पररूपे नुमि दीर्घे भवानाविति रूपं स्यादिति भावः । उडूनीव लोमानि यस्य तस्यापत्यमौडुलोमिः । **इञोऽपवाद इति** । तथा च बहुत्वे अकारान्तोऽयमुडुलोमशब्दः स औडुलोमिशब्दादन्य एव, तस्य च इकारान्तेषु व्युत्पादनं प्रासङ्गिकमिति बोध्यम्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वातप्रमीः । 'अमि पूर्वः' (सू १९४) । वातप्रमीम् । वातप्रम्यौ । वातप्रमीन् । वातप्रम्या । वातप्रमीभ्याम् । वातप्रम्ये । वातप्रमीभ्याम् । वातप्रम्यः । वातप्रमीभ्याम् । वातप्रम्यः । वातप्रम्योः । वातप्रम्याम् । दीर्घत्वान्न नुट् । ङौ तु सवर्णदीर्घः । वातप्रमी । वातप्रम्योः । वातप्रमीषु । एवं ययीपप्यादयः । यान्त्यनेनेति ययीर्मार्गः । पाति लोकमिति पपीः सूर्यः । 'यापोः किद्द्वे च' ( उ ४३९ ) इति ईप्रत्ययः । क्विबन्तवातप्रमीशब्दस्य त्वमि शसि ङौ च विशेषः । वातप्रम्यम् । वातप्रम्यः । वातप्रम्यि । 'एरनेकाचः—' (सू २७२) इति वक्ष्यमाणो यण् । प्रधीवत् वक्ष्यः

---

प्रम्याविति रूपमित्यर्थः । **हे वातप्रमीरिति** । दीर्घान्तत्वाद् 'ह्रस्वस्य गुणः' इति न । **अमीति** । वातप्रमी अम् इति स्थिते 'अमि पूर्वः' इति पूर्वरूपे वातप्रमीमिति रूपमित्यर्थः । 'एरनेकाचः—' इति यण् तु न, ईप्रत्ययान्तस्य धातुत्वाभावात् । **वातप्रमीनिति** । पूर्वसवर्णदीर्घे 'तस्माच्छसः' इति नत्वम् । **वातप्रम्येति** । अघित्वाद् 'आङो नाऽस्त्रियाम्' इति नाभावस्याभावे यण् । **वातप्रम्ये इति** । अघित्वाद् ङेङसिङस्सु 'घेर्ङिति' इति गुणो न । **वातप्रम्यामिति** । आमि यणादेशे रूपम् । दीर्घत्वान्न नुट्, 'ह्रस्वनद्यापः' इति ह्रस्वग्रहणादिति भावः । **ङौ त्विति** । वातप्रमी इ इति स्थिते परत्वाद्यणादेशं बाधित्वा सवर्णदीर्घे वातप्रमी इति रूपम् । अघित्वादिदुदन्तत्वाभावाच्च 'अच्च घेः' इति 'औत्' इति च न भवति । वस्तुतस्तु 'ईदूतौ च सप्तम्यर्थे' इति सूत्रे 'सप्तम्यन्तमीदूदन्तं लोके नास्ति । अतः 'सोमो गौरी अधिश्रितः' 'मामकी तनू' इति 'वेद एव तदुदाहरणम्' इति भाष्यविरोधाद्वातप्रमी इति सप्तम्यन्तस्य लोके प्रयोगो नेत्यनुमीयत इति शब्देन्दुशेखरे स्पष्टम् । **यापोरिति** । 'यापोः किद् द्वे च' इति औणादिकसूत्रम् । याधातोः पाधातोश्च ईप्रत्ययः स्यात्, स कित्, प्रकृतिभूतयोर्द्वित्वं चेत्यर्थः । कित्त्वाद् 'आतो लोप इटि च' इत्याल्लोपः । अभ्यासह्रस्वः । **क्विबन्तवातेति** । 'माङ् माने' इत्यस्मात् कर्तरि क्विपि 'घुमास्था—' इति ईत्त्वे वातप्रमीशब्द इति केचित् । तन्न, 'ईत्त्वमवकारादौ' इति वार्तिकविरोधात् । मीञ् हिंसायाम् इति मीधातोः क्विपि तु वातप्रमीशब्दो निर्बाधः । **वक्ष्यमाणो यणिति** । अमि पूर्वरूपं शसि पूर्वसवर्णदीर्घं च बाधित्वा परत्वाद् 'एरनेकाचः—' इति यण्, ईकारान्तधातुत्वादिति भावः । **प्रधीवदिति** । प्रकृष्टं ध्यायतीति प्रधीः । 'ध्यायतेः संप्रसारणं च' इति क्विपि यकारस्य संप्रसारणमिकारः ।

---

इति इदन्ताः । **किदिति** । तेन 'आतो लोप इटि च' इत्यालोप इति भावः । **क्विबन्तवातप्रमी इति** । माङ्धातोः क्विपि 'ईत्वमवकारादौ' इति निषेधादीत्वं नेति शङ्कायां मीनातेरेव क्विप् बोध्यः । यद्वा ईप्रत्ययान्तवातप्रमीशब्दादाचारक्विबन्तात्कर्तरि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रेयस्यो यस्य सः बहुश्रेयसी। दीर्घङ्यन्तत्वात् 'हल्ङ्याप्—' (सू २५२) इति सुलोपः। **२६६ यू स्त्र्याख्यौ नदी। (१-४-३)** ईदूदन्तौ नित्यस्त्रीलिङ्गौ

---

'संप्रसारणाच्च' इति पूर्वरूपम्। 'हलः' इति दीर्घः। अस्य च ईकारान्तधातुत्वाद् अमि शसि ङौ च 'एरनेकाचः—' इति यणादेशः।

**बह्व्य इति।** 'बह्वादिभ्यश्च' इति ङीष्। **श्रेयस्य इति।** अतिप्रशस्ता इत्यर्थः। 'द्विवचनविभज्योपपदे—' इति ईयसुन्। 'प्रशस्यस्य श्रः' इति श्रः। 'उगितश्च' इति ङीप्। **बहुश्रेयसीति।** 'स्त्रियाः पुंवत्—' इति पुंवत्त्वम्। 'गोस्त्रियोः—' इति ह्रस्वस्तु न 'ईयसो बहुव्रीहेर्नेति वाच्यम्' इति तन्निषेधात्। बहुश्रेयसी स् इति स्थिते प्रक्रियां दर्शयति—**दीर्घङ्यन्तत्वादिति।** ननु श्रेयसीशब्द एव ङ्यन्तः, प्रत्ययग्रहणे यस्मात् स विहितस्तदादेरेव ग्रहणात्। न च 'स्त्रीप्रत्यये न तदादिनियमः' इति निषेधान्नेह तदादिनियम इति वाच्यम्, अनुपसर्जन एव स्त्रीप्रत्यये हि 'न तदादिनियमः' इति प्रतिषेधः। इह तूपसर्जनत्वात्तदादिनियमोऽस्त्येवेति चेत्, अस्तु श्रेयसीशब्दस्यैव ङ्यन्तत्वम्, न तु बहुश्रेयसीशब्दस्य। तथापि हल्ङ्यादिलोपोऽत्र निर्बाधः। सोः ङ्यन्तात् श्रेयसीशब्दात्परत्वस्य अनपायात्। न हि हल्ङ्याब्भ्य इति विहितविशेषणम्, प्रमाणाभावात्। या सा का इत्यादावव्याप्तेश्च, तत्र सोष्टाबन्ताद्विहितत्वाभावाद्, यत्तत्किमिति हलन्तेभ्यस्सुबुत्पत्तौ त्यदाद्यत्वे (किमः कत्वे च) सत्येव टापः प्रवृत्तेः। न च तत्र हलन्ताद्विहितत्वेन निर्वाहः शङ्क्यः, यः स क इत्यादावतिव्याप्तेः, कर्ता सखा इत्यादावव्याप्तेश्चेत्यास्तां तावत्। 'दीर्घज्जसि च' इति पूर्वसवर्णदीर्घनिषेधे यणि बहुश्रेयस्यौ। बहुश्रेयस्यः। हे बहुश्रेयसी स् इति स्थिते नदीकार्य

---

क्विप् बोध्यः। **श्रेयस्य इति।** 'प्रशस्यस्य श्रः' इतीयसुनि श्रादेशः। 'उगितश्च' इति ङीप्। **बहुश्रेयसीति।** 'स्त्रियाः पुंवत्—' इति पुंवद्भावः। 'ईयसश्च' इति न कप्। नाप्युपसर्जनह्रस्वः 'ईयसो बहुव्रीहेर्न' इति निषेधात्। **यू स्त्र्याख्यौ।** ईश्च ऊश्च यू, व्याख्यानाद्दीर्घयोरेव ग्रहणम्। अविभक्तिकोऽयं निर्देश इत्येके। 'दीर्घाजसि च' इति निषेधस्य 'वा छन्दसि' इति पाक्षिकत्वात् 'प्रथमयोः पूर्वसवर्णः' इति दीर्घ इत्यन्ये। इह 'प्रत्ययस्यैव ग्रहणम्' इति परिभाषा नोपतिष्ठते। 'नेयङुवङ्स्थानावस्त्री' इति निषेधाल्लिङ्गात्। तेन प्रध्यै प्रध्य इत्यादौ नदीकार्यं स्यादेव। स्त्रियमाचक्षाते स्त्र्याख्यौ। मूलविभुजादित्वात्कः, चक्षिङः ख्याञ्, 'आतो लोप इटि च' इत्यालोपः। **ईदूदन्ताविति।** इह वर्णयोरेव संज्ञेत्यपि पक्षोऽस्ति। 'आच्छीनद्योः—' इति सूत्रस्वरसात्। तयोः स्त्र्याख्यत्वं तु ङ्यादिषु स्वतः, तन्त्रीर्लक्ष्मीरित्यादौ तु स्त्रीवाचकवर्णसमुदाये घटकत्वेन प्रवेशात्। तेन नद्यन्तादिव्यवहारो न विरुध्यते। एवं 'शेषो

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नदीसंज्ञौ स्तः। 'प्रथमलिङ्गग्रहणं च' (वा १०३६)। पूर्वं स्त्र्याख्यस्योपसर्जनत्वेऽपि इदानीं नदीत्वं वक्तव्यमित्यर्थः। २६७ अम्बार्थनद्योर्ह्रस्वः। (७-३-१०७) अम्बार्थानां नद्यन्तानां च ह्रस्वः स्यात् सम्बुद्धौ। हे बहुश्रेयसि। शसि बहुश्रेय-

---

वदयन् नदीसंज्ञामाह—यू स्त्र्याख्यौ नदी। ईश्च ऊश्च यू। पूर्वसवर्णदीर्घः। 'दीर्घाज्जसि च' इति निषेधाभावश्छान्दसः। व्याख्यानाद्दीर्घयोरेव ग्रहणम्। स्त्रियमाचक्षाते स्त्र्याख्यौ। शब्दावित्यर्थाल्लभ्यते। यू इति तद्विशेषणम्। तदन्तविधिः। स्त्रियामित्येव सिद्धे आख्याग्रहणं नित्यस्त्रीलिङ्गलाभार्थम्। द्वित्वे नदीत्येकवचनं छान्दसम्। तदाह—ईदूदन्तावित्यादिना। 'यू' किम्? मात्रे। 'आण् नद्याः' इति न भवति। 'स्त्रीलिङ्गौ' इति किम्? वातप्रम्ये। 'नित्य' इति किम्? ग्रामण्ये। ननु प्रकृते बहुश्रेयसीशब्दस्य पुँल्लिङ्गत्वात् कथं नदीसंज्ञेत्यत आह—प्रथमलिङ्गग्रहणं चेति। वार्तिकमेतत्। प्रथमस्य समासादिवृत्तिप्रवृत्तेः पूर्वं प्रवृत्तस्य स्त्रीलिङ्गस्य 'यू स्त्र्याख्यौ—' इत्यत्र ग्रहणं कर्तव्यमित्यर्थः। नन्वेवं सति समासादिवृत्त्यभावे गौर्यादिशब्दानां नदीत्वं न स्यादित्याशङ्क्य अपिशब्दमध्याहृत्य व्याचष्टे—पूर्वमित्यादिना। समासादिवृत्तिप्रवृत्तेः पूर्वं स्त्रीलिङ्गस्य सतः वृत्तिदशायामुपसर्जनतया स्त्रीलिङ्गत्वाभावेऽपि नदीत्वं वक्तव्यमिति वार्तिकार्थ इति भावः। अम्बार्थनद्योर्ह्रस्वः। अम्बार्थानामिति। अम्बापर्यायाणामित्यर्थः। नद्यन्तानामिति। अङ्गाधिकारस्थत्वात्तदन्तविधिः। तुल्यन्यायत्वादम्बार्थानामित्यत्रापि तदन्तविधिर्बोध्यः। सम्बुद्धाविति। 'सम्बुद्धौ च' इत्यतस्तदनुवृत्तेरिति भावः। अम्बागौर्यादिशब्देषु ह्रस्वत्वं तु व्यपदेशिवद्भावेन तदन्तत्वाद् ज्ञेयम्। हे बहुश्रेयसि इति। ह्रस्वे सति 'एङ्ह्रस्वात्—' इति सम्बुद्धि-

---

घ्यसखि' इत्यत्रापि इवर्णोवर्णयोरेव घिसंज्ञेति पक्षोऽप्यस्तीति बोध्यम्। तेन 'घ्यन्ताजाद्यदन्तयोर्घ्यन्तं परम्' इति व्यवहारः संगच्छते। वर्णसंज्ञापक्षे 'असखि' इत्यस्य सखिभिन्नस्यावयव इत्यर्थः, न तु सखिशब्दावयवं वर्जयित्वेति। तेन समुदायस्य सखिशब्दभिन्नत्वादतिसखिनेत्यादि निर्बाधमित्यवधेयम्। स्त्रियामित्येव वक्तव्य आख्याग्रहणं नित्यस्त्रीत्वलाभार्थमित्याशयेनाह—नित्यस्त्रीलिङ्गाविति। यू किम्, मात्रे। स्त्र्याख्याविति किम्, ग्रामण्ये। पूर्वमिति। वृत्तेः प्रागित्यर्थः। संज्ञायां यथोद्देशप्रवृत्तौ न्यायसिद्धमिदम्, कार्यकालपक्षे तु वाचनिकमित्याहुः। वर्णसंज्ञापक्षाश्रयेणाह—नद्यन्तानामिति। हे बहुश्रेयसीति। अत्र ह्रस्वविधानसामर्थ्याद् गुणो न प्रवर्तते। अन्यथा 'अम्बार्थनद्योर्गुणः' इत्येव ब्रूयात्। न च लाघवाभावः शङ्क्यः। ह्रस्वग्रहणे मात्राधिक्याद् 'ह्रस्वस्य गुणः' इत्युत्तरसूत्रे गुणग्रहणत्यागेन सुतरां लाघवसंभावाच्च। अन्ये तु कृतेऽपि ह्रस्वे यदि गुण इष्टः स्यात्तर्हि 'अम्बार्थानां ह्रस्वः' इत्युक्त्वा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सीन्। २६८ आण् नद्याः। (७-३-११२) नद्यन्तात्परेषां ङितामाडागमः स्यात्। २६९ आटश्च। (६-१-९०) आटोऽचि परे वृद्धिरेकादेशः स्यात्। बहुश्रेयस्यै। बहुश्रेयस्याः। बहुश्रेयस्याः। नद्यन्तात्परत्वान्नुट्, बहुश्रेयसीनाम्। २७० ङेराम्नद्याम्नीभ्यः। (७-३-११६) नद्यन्तादाबन्तान्नीशब्दाच्च ङेराम्

---

लोपः। ह्रस्वे गुणस्तु न। प्रक्रियालाघवाय 'अम्बार्थनद्योर्ह्रस्वः' इत्यनुक्त्वा 'अम्बार्थनद्योर्गुणः' इति वाच्ये ह्रस्वविधिसामर्थ्यादिति स्पष्टं भाष्ये। बहुश्रेयस्यौ। बहुश्रेयस्यः। 'दीर्घाज्जसि च' इति पूर्वसवर्णदीर्घनिषेधे यण्। 'अमि पूर्वः' बहुश्रेयसीम्। बहुश्रेयस्यौ। **बहुश्रेयसीन् इति**। पूर्वसवर्णदीर्घे सति 'तस्माच्छसः—'इति नत्वमिति भावः। बहुश्रेयस्या। अघित्वान्नाभावो न, किन्तु यणादेशः। बहुश्रेयसीभ्याम्। बहुश्रेयसीभिः। बहुश्रेयसी ए इति स्थिते घित्वाभावान्न तत्कार्यम्। यणि बहुश्रेयस्ये इति प्राप्ते। **आण् नद्याः**। 'अङ्गस्य' इत्यधिकृतं पञ्चम्या विपरिणम्यते। नद्या इति पञ्चम्यन्तेन विशेष्यते। तदन्तविधिः। 'घेर्ङिति' इत्यतो ङितीत्यनुवृत्तं षष्ठ्या विपरिणम्यते। तदाह—**नद्यन्तादित्यादिना**। टित्त्वादाद्यवयवः। बहुश्रेयसी आ ए इति स्थिते। **आटश्च**। 'इको यणचि' इत्यतः अचीति 'वृद्धिरेचि' इत्यतः वृद्धिरिति चानुवर्तते। 'एकः पूर्वपरयोः' इति चाधिकृतम्। तदाह—**आटोऽचीत्यादिना**। **बहुश्रेयस्यै इति**। बहुश्रेयसी आ ए इति स्थिते 'आटश्च' इति वृद्धौ यणादेशे च रूपमिति भावः। यद्यपि 'वृद्धिरेचि' इत्येव सिद्धम्, तथापि ऐक्षत इत्याद्यर्थम् 'आटश्च' इति सूत्रम् इहापि न्याय्यत्वादुपन्यस्तम्। **बहुश्रेयस्या इति**। ङसिङसोर्बहुश्रेयसी आ अस् इति स्थिते 'आटश्च' इति वृद्धौ आकारे यणि रूपमिति भावः। अत्रापि सवर्णदीर्घेण सिद्धम्। न्याय्यत्वाद् 'आटश्च इति वृद्धिः। **नद्यन्तात्परत्वादिति**। श्रेयसीशब्दस्य ईकारान्तनित्यस्त्रीलिङ्गतया नदीत्वेन बहुश्रेयसीशब्दस्य नद्यन्तत्वादिति भावः। बहुश्रेयसी इ इति स्थिते 'अच्च घेः' इति 'इदुद्भ्याम्' इति च न भवति, अघित्वात्। सवर्णदीर्घे प्राप्ते। **ङेराम्नद्याम्नीभ्यः**। आङ्गत्वात् प्रत्ययग्रहणपरिभाषया च तदन्तविधिमभिप्रेत्य आह—**नद्यन्तादित्यादिना**। ङेरिति सप्तम्येकवचनम्, व्याख्यानात्। नन्वामि कृते 'ह्रस्वनद्यापः—' इति नुटि

---

'नदीह्रस्वयोर्गुणः' इत्येव ब्रूयादित्याहुः। तत्र पदलाघवाभावेऽपि प्रक्रियालाघवमस्ति, परन्तु 'जसि च' इत्यत्र ह्रस्वस्येत्येकदेशानुवृत्तौ क्लेशोऽस्तीति बोध्यम्। **आण् नद्याः**। 'अण् नद्याः' इत्येव सुवचम्; विधानसामर्थ्याद् 'अतो गुणे' इत्यस्याप्रवृत्तौ यथायथं वृद्धिसवर्णदीर्घाभ्यां बहुश्रेयस्यै बहुश्रेयस्या इत्यादिरूपसिद्धेः। ननु 'परत्वादाटा नुड् बाध्यते' इत्युत्तरग्रन्थपर्यालोचनया ङेरामि कृते तस्य नुडागमनिवारणार्थमड्विधेरावश्यकत्वात्सामर्थ्यमुपक्षीणमिति चेद् एवं तर्हि 'ह्रस्वनद्यापः—' इत्यनन्तरं 'ङेर्ने' इत्येव

---

१ एतदग्रे 'ह्रस्वेकारान्तत्वाभावाच्च' इत्यभिप्रायकः पाठोऽप्यावश्यकः, स च लेखकप्रमादाद् भ्रष्ट इव लक्ष्यते।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्यात्। इह परत्वादाटा नुड् बाध्यते, बहुश्रेयस्याम्। शेषमीप्रत्ययान्तवातप्रमीवत्। अङ्यन्तत्वान्न सुलोपः, अतिलक्ष्मीः। शेषं बहुश्रेयसीवत्। कुमारीमिच्छन् कुमारीवाचरन् वा ब्राह्मणः कुमारी, क्यजन्तादाचारक्विबन्ताद्वा कर्तरि क्विप्।

---

'यदागमाः—' इति न्यायेन नामोऽप्याम्ग्रहणेन ग्रहणाद् आण् नद्याः, इति आडागमः स्यादित्याशङ्क्य आह—**इह परत्वादिति**। न च कृतेऽप्याडागमे नुट् किं न स्यादिति वाच्यम्, 'विप्रतिषेधेन यद्बाधितं तद्बाधितमेव' इति न्यायादिति भावः। **शेषमीप्रत्ययान्तेति**। वातप्रमीशब्दस्यापि इवर्णान्तधातुत्वाभावेन अमि शसि ङौ च 'एरनेकाचः' इति यणः प्राप्त्यभावादिति भावः। 'लक्षेर्मुट् च' इति लक्षधातोरीप्रत्यये तस्य मुटि च लक्ष्मीशब्दः। लक्ष्मीमतिक्रान्त इति विग्रहे 'अत्यादयः क्रान्ताद्यर्थे—' इति समासः। अस्त्रीप्रत्ययान्तत्वान्नोपसर्जनह्रस्वः। **अङ्यन्तत्वादिति**। औणादिकप्रत्ययान्तत्वादिति भावः। **शेषं बहुश्रेयसीवदिति**। 'प्रथमलिङ्गग्रहणं च' इति नदीत्वादिति भावः।

अथ धातुत्वमापन्ने कुमारीशब्दे पुँल्लिङ्गे बहुश्रेयसीशब्दाद्वैलक्षण्यं दर्शयितुमाह—**कुमारीमिच्छन्नित्यादिना**। **क्यजन्तादिति**। कुमारीमात्मन इच्छतीत्यर्थे 'सुप आत्मनः क्यच्' इति क्यच्। कचावितौ। 'सनाद्यन्ताः—' इति क्यजन्तस्य धातुत्वात् तदवयवसुपः अमः 'सुपो धातुप्रातिपदिकयोः' इति लुक्। ततः 'क्विप् च' इति कर्तरि क्विप्। कपावितौ। इकार उच्चारणार्थः। अतो लोपः, 'लोपो व्योः—' इति यलोपः। 'वेरपृक्तस्य' इति वलोपः। कुमारी इति रूपम्। **आचारक्विबन्तादिति**।

---

सूच्यताम्, आमीत्यनुवृत्त्या ङेरामो नुट् नेत्यर्थलाभात्। तस्माद् 'आण् नद्याः' इति विधानसामर्थ्याद् 'अतो गुणे' इति न प्रवर्तत इति दिक्। **आटश्च**। यद्यपि इह ङयि 'वृद्धिरेचि' इत्येव सिद्धम्, ङसिङसोर्ङेरामि च सवर्णदीर्घेण, तथाप्यैन्दिंददित्याद्यर्थं सूत्रमिहापि न्याय्यत्वादुपन्यस्तम्। अजादीनामटा सिद्धम् 'आडजादीनाम्' इति सूत्रं मास्तु, इति वदतो वार्तिककारस्य मते तु 'अटश्च' इत्येव सूत्रमिति बोध्यम्। **ङेराम्**। ङेरिति सप्तम्येकवचनस्य ग्रहणम्, '—समानाधिकरणे स्त्रियाम्—' इत्यादिनिर्देशात्। **आटा नुड् बाध्यत इति**। आटि कृते तु पुनर्न प्रवर्तते, 'सकृद्गतौ—' इति न्यायाश्रयणादिति भावः। **न सुलोप इति**। 'लक्षेर्मुट् च' इत्यौणादिक ईप्रत्ययान्तो लक्ष्मीशब्द इत्युपसर्जनह्रस्वोऽपि नेति बोध्यम्। **कुमारीति**। यद्यपि क्विबर्थं प्रति ङ्यन्तस्योपसर्जनत्वाद् ह्रस्वत्वं प्राप्तम्, तथापि 'गोस्त्रियोः—' इत्यत्र कृत्रिमोपसर्जनत्वं गृह्यते, न त्वप्रधानरूपमिति नात्र ह्रस्वः प्रवर्तते। अत एव हरीतक्याः फलानि हरीतक्य इत्यत्रापि ह्रस्वो न भवति। 'लुक् तद्धितलुकि' इत्यत्र त्वप्रधानरूपमुपसर्जनमेव गृह्यते, न

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

'हल्ङ्याप्—' ( सू २५२ ) इति सुलोपः । २७१ अचि श्नुधातुभ्रुवां य्वोरियङुवङौ । ( ६-४-७७ ) श्नुप्रत्ययान्तस्य इवर्णोवर्णान्तस्य धातोः 'भ्रू' इत्यस्य चाङ्गस्येयङुवङौ स्तोऽजादौ प्रत्यये परे । 'ङिच्च' ( सू ४३ ) इत्यन्तादेशः ।

---

कुमारीवाचरतीत्यर्थे 'सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः' इति क्विप् । कपावितौ । 'वेरपृक्तस्य' इति वलोपः । 'सनाद्यन्ताः—' इति धातुत्वात् कर्तरि क्विप् । तस्य च पूर्ववत् कृत्स्नलोपः । कुमारीति रूपम् । न च क्विबर्थं प्रति कुमारीशब्दस्य उपसर्जनत्वाद् 'गोस्त्रियोः—' इति ह्रस्वः शङ्क्यः, 'गोस्त्रियोः—' इत्यत्र शास्त्रीयोपसर्जनस्यैव ग्रहणात् कृत्रिमाकृत्रिमयोः कृत्रिमस्यैव ग्रहणात् । हल्ङ्याबिति सुलोप इति । न च क्यजन्ते कथं सोर्लोपः, पूर्वस्माद्विधावल्लोपस्य स्थानिवद्भावादिति वाच्यम् , 'क्वौ लुप्तं न स्थानिवत्' इति निषेधादिति भावः । कुमारी औ इति स्थिते 'इको यणचि' इति यणपवादमियङमाशङ्कितुमाह—अचि श्नु । इश्च उश्च यू , तयोः य्वोः इवर्णोवर्णयोरित्यर्थः । श्नुश्च धातुश्च भ्रूश्चेति द्वन्द्वः । प्रत्ययग्रहणपरिभाषया श्नुप्रत्ययान्तं विवक्षितम् । य्वोरिति धातोरेव विशेषणम् । तदन्तविधिः । श्नुभ्रुवोस्तु नित्यमुवर्णान्तत्वान्न तद्विशेषणम् । इवर्णान्तत्वं तु असंभवान्न तद्विशेषणम् । 'संभवव्यभिचाराभ्यां स्याद्विशेषणमर्थवत्' इति न्यायात् । 'अङ्गस्य' इत्यधिकृतम् । ततश्च प्रत्यये परत इति लभ्यते । अचीति तद्विशेषणम् । तदादिविधिः । तदाह—श्नुप्रत्ययान्तस्येत्यादिना । 'य्वोः' किम् ? चक्रतुः । 'अचि' इति किम् ? आप्नुयात् । इयङ् उवङ् इत्यनयोरनेकाल्त्वात् सर्वादेशत्वमाशङ्क्य आह—ङिच्चेत्यन्तादेश इति । न च 'श्नुधातुभ्रुवामिवर्णोवर्णयोः' इत्येवं व्याख्यायतां ङित्त्वं च न क्रियतामिति वाच्यम् , एवं सति क्षिपति इत्यादावतिव्याप्तेः । न च अजादिप्रत्यये परत इत्यनेन तन्निरासः शङ्क्यः, अङ्गा-

---

तु कृत्रिमोपसर्जनम् , असंभवादिति वक्ष्यामः । अचि श्नु । 'भ्रमेश्च डूः' इति डूप्रत्ययान्तत्वाद् भ्रूशब्दस्य धातोः पृथग्ग्रहणम् । अन्ये त्वाहुः—'गमः क्वौ' इत्यत्र 'ऊङ् च गमादीनाम्—' इति वार्तिकादनुनासिकलोपे ऊङादेशे च कृते निष्पन्नोऽयं भ्रूशब्दः । तथा च धातुग्रहणेनैव सिद्धे भ्रूग्रहणं निरर्थकमिति । इण इति वक्तव्ये य्वोरिति गुरुनिर्देश इण्प्रत्याहारः परेणैव णकारेण गृह्यत इति ज्ञापनार्थः । इह य्वोरिति धातोरेव विशेषणम् , न तु श्नुभ्रुवोः, अव्यभिचारादित्याशयेनाह—इवर्णोवर्णान्तधातोरिति । श्नुधातुभ्रुवामिवर्णोवर्णयोरिति व्याख्याने तु इयङुवङोर्ङित्त्वं व्यर्थं स्याद्वैयधिकरण्यं च प्रसज्येतेति भावः । ननु सामानाधिकरण्यपक्षेऽपि ङित्त्वं व्यर्थम् , 'निर्दिश्यमानस्यादेशा भवन्ति' इति इवर्णोवर्णान्तधातोः सर्वादेशत्वनिवृत्तिसंभवादिति चेन्न । श्नुभ्रुवोरपि निर्दिश्यमानत्वेन सर्वादेशत्वप्रसङ्गात् । इ उ इत्यष्टादशानां संज्ञेत्युक्तत्वाद् यथा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आन्तरतम्यादेरियङ् । ओरुवङ् , इतीयङि प्राप्ते । २७२ **एरनेकाचोऽसंयोगपूर्वस्य ।** ( ६-४-८२ ) धात्ववयवसंयोगपूर्वो न भवति य इवर्णस्तदन्तो यो धातुस्तदन्तस्यानेकाचोऽङ्गस्य यण् स्यादजादौ प्रत्यये परे । इति यण् , कुमार्यौ ।

---

क्षिप्तप्रत्ययपरकत्वस्याङ्गविशेषणताया एवोचितत्वादित्यलम् । **आन्तरतम्यादिति ।** तालुस्थानकस्य इवर्णस्य तादृश एव इयङ् । ओष्ठस्थानकस्य उवर्णस्य तादृश एवोवङित्यर्थः । **इतीयङि प्राप्ते इति ।** कुमारी औ इत्यादाविति शेषः । **एरनेकाचः ।** 'इणो यण्' इत्यतः यणित्यनुवर्तते । एरिति षष्ठ्यन्तम् , इवर्णस्येत्यर्थः । पूर्वसूत्रे 'श्नुधातुभ्रुवाम्' इति द्वन्द्वनिर्देशेऽपि धातोरिति पृथक्कृत्य षष्ठ्यन्तमनुवर्तते । न तु श्नुभ्रुवावपि । तत्र इवर्णाभावात् । धातोरित्यनुवृत्तं चावर्तते । एकमवयवषष्ठ्यन्तम् । अन्यत् स्थानषष्ठ्यन्तम् । एरिति च धातोरिति षष्ठ्यन्तस्य विशेषणम् । तदन्तविधिः । इवर्णान्तधातोरित्यर्थः । अवयवषष्ठ्यन्तकृतधातोरित्येतद् असंयोगपूर्वस्येत्यत्र संयोगांशे अन्वेति । धात्ववयवसंयोगः पूर्वो यस्मात् स धात्ववयवसंयोगपूर्वः, तद्भिन्नः असंयोगपूर्वः, तस्येति । इवर्णविशेषणम् । अङ्गस्येत्यधिकृतं स्थानषष्ठ्यन्तधातुना विशेष्यते । तदन्तविधिः । अनेकः अच् यस्य तस्य अनेकाच इति अङ्गान्वयि । 'अचि श्नुधातुभ्रुवाम्' इत्यतोऽचीत्यनुवर्तते । तच्चाङ्गाक्षिप्तस्य प्रत्ययस्य विशेषणम् । तदादिविधिः । तदाह—**धात्ववयवेत्यादिना ।** हरिं हरीन् इत्यादौ यण्निवृत्त्यर्थं धातोरित्यङ्गविशेषणम् । अन्यथा प्रध्यमित्यादाविव पूर्वरूपादीन् बाधित्वा यण् स्यात् । धात्ववयवेति संयोगविशेषणस्य तु प्रयोजनम् उन्नीशब्दनिरूपणावसरे मूल एव स्फुटीभविष्यति । अनेकाचोऽसंयोगादित्येव सुवचम् । य्वोरित्यनुवर्तते । धात्ववयवसंयोगात् परौ न भवतो यौ इवर्णोवर्णौ, तदन्तस्येत्यर्थलाभः । 'ओः सुपि' इति तु नियमार्थः, उवर्णस्य सुप्येव यणिति । ततश्च लुलुवतुरित्यादावतिप्रसङ्गाभाव इत्यलम् । **इति यणिति ।** कुमार्यौ कुमार्य इत्यत्र 'एरनेकाचः–' इति इयङपवादो यणित्यर्थः । नन्वन्तर्वर्तिसुपा अमा क्यजन्तस्य कुमारीशब्दस्य पदत्वाद् 'इको-

---

संख्यमिह न प्रवर्तत इत्याह—**आन्तरतम्यादिति ।** स्थानत इति भावः । य्वोः किम् , चक्रतुः, चक्रुः । अचीति किम् , आप्नुयात् , जुहुयात् । **एरनेकाचः ।** 'इणो यण्' इत्यतो यण् इति वर्तते । 'अचि श्नुधातु–' इति सूत्रादिह धातुरेवानुवर्तते न तु श्नुभ्रुवौ । तयोरिवर्णासंभवात् । धातुग्रहणं चावृत्त्योभयोर्विशेषणं संयोगस्याङ्गस्य चेति व्याचष्टे—**धात्ववयवसंयोगेत्यादि ।** तत्र धातुना संयोगस्य विशेषणादिह यण् । उन्न्यौ, उन्न्यः । हरी, हरीन् इत्यादि सिद्धयर्थं धातुना अङ्गं विशेष्यते । अन्यथा प्रध्यं प्रध्य इत्यादाविव पूर्वरूपं पूर्वसवर्णदीर्घं च बाधित्वा यण् स्याद्,

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कुमार्यः। हे कुमारि। अमि शसि च कुमार्यम्, कुमार्यः। कुमार्यै। कुमार्याः। कुमार्याः। कुमारीणाम्। कुमार्याम्। कुमार्योः। प्रधीः। प्रध्यौ। प्रध्यः। प्रध्यम्। प्रध्यः। उन्नयतीत्युन्नीः। धातुना संयोगस्य विशेषणादिह स्यादेव यण् , उन्न्यौ। उन्न्यः। हे उन्नीः। उन्न्यम्। ङेराम् उन्न्याम्। एवं ग्रामणीः। 'अनेकाचः'

---

ऽसवर्णे–' इति प्रकृतिभावः स्यात्। अल्लोपस्य स्थानिवद्भावेऽपि तमाश्रित्यैव स दुर्वार इति चेन्नैवम्—'नः क्ये' इति क्यचि नान्तस्यैव पदत्वनियमात्। **अमि शसि चेति**। अमि पूर्वरूपं शसि पूर्वसवर्णदीर्घं च बाधित्वा इयङि प्राप्ते तदपवादे 'एरनेकाचः–' इति यणि अमि कुमार्यम्, शसि कुमार्य इति रूपम्। 'तस्माच्छसः–' इति नत्वं तु न, कृतपूर्वसवर्णदीर्घात् परत्वाभावात्। तथा च बहुश्रेयसीशब्दापेक्षया अम्-शसोरेव रूपे विशेष इति भावः।

**प्रधीरिति**। प्रध्यायतीति प्रधीः। 'ध्यायतेः संप्रसारणं च' इति क्विप्। यकारस्य संप्रसारणमिकारः। 'संप्रसारणाच्च' इति पूर्वरूपम्। 'हलः' इति दीर्घः। कृदन्तत्वेन प्रातिपदिकत्वात् सुबुत्पत्तिः। अङ्यन्तत्वान्न सुलोपः। अजादौ सर्वत्र 'एरनेकाचः–' इति यणेव। अस्त्रीत्वान्नदीकार्यं न। हे प्रधीः, प्रध्यौ, प्रध्यः। प्रध्यम्, प्रध्यः। प्रध्या। प्रध्ये। प्रध्योः। प्रध्यि। प्रकृष्टा धीर्यस्य स इति विग्रहे तु धीशब्दस्य नित्यस्त्रीत्वात् 'प्रथमलिङ्गग्रहणं च' इति नदीत्वान्नदीकार्यम्। अङ्यन्तत्वान्न सुलोपः। प्रधीः। शेषमुदाहृतक्विबन्तकुमारीशब्दवत्। हे प्रधि, प्रध्यौ, प्रध्यः। प्रध्यम्, प्रध्यौ, प्रध्यः। प्रध्या। प्रध्यै। प्रध्याः। प्रधीनाम्। प्रध्याम्। **उन्नीरिति**। 'सत्सूद्विष–' इत्यादिना उत्पूर्वान्नीधातोः क्विप्। सुबुत्पत्तिः। अङ्यन्तत्वान्न सुलोपः। अजादौ तु प्रत्यये परे 'एरनेकाचः–' इति यण्। नन्वत्र इवर्णस्य संयोगपूर्वकत्वात् कथमत्र यणित्यत आह—**धातुनेति**। धात्ववयवसंयोगपूर्वस्यैव यण् पर्युदस्यते। न चात्र संयोगो धात्ववयव इति भावः। **हे उन्नीरिति**। अस्त्रीत्वादनदीत्वात् 'अम्बार्थ–' इत्यादिना नदीकार्यं नेति भावः। **उन्न्यमिति**। पूर्वरूपापवादो यणिति भावः। शसादौ उन्न्यः। उन्न्या। उन्न्ये। उन्न्यः। उन्न्योः। **ङेरामिति**। नदीत्वाभावेऽपि 'ङेराम्–' इति सूत्रे नीशब्दस्य पृथग्ग्रहणादाम् आङ्गत्वेन नीशब्दान्तादपि भवतीति भावः। **एवं ग्रामणीरिति**। ग्रामं नयति नियच्छतीति ग्रामणीः। 'अग्रग्रामाभ्यां नयतेर्णो वाच्यः'

---

धात्ववयवसंयोगपूर्वो न भवति य इवर्णस्तदन्तत्वादङ्गस्य। **प्रधीरिति**। प्रध्यायतीति प्रधीः। 'ध्यायतेः संप्रसारणं च' इति क्विपि संप्रसारणे पूर्वरूपे च कृते 'हलः' इति दीर्घः। यदा तु प्रकृष्टा धीर्बुद्धिर्यस्येति विगृह्यते तदा धीशब्दस्य नित्यस्त्रीत्वात् 'प्रथमलिङ्गग्रहणं च' इति नित्यस्त्रीलिङ्गातिदेशे यथासंभवं नदीकार्यं बोध्यम्। 'प्रथम-

CC-0. Mumukshu Bhawan Varanasi Collection: Digitized by eGangotri

किम्—नीः। नियौ। नियः। अमि शसि च परत्वादियङ्, नियम्, नियः। ङेराम् नियाम्। 'असंयोगपूर्वस्य' किम्—सुश्रियौ, यवक्रियौ। 'गतिकारकेतरपूर्वपदस्य यण् नेष्यते' (वा ५०३४)। शुद्धधियौ, परमधियौ। कथं तर्हि 'दुर्धियः'

---

इति णत्वम्। **अनेकाचः किमिति**। 'एरनेकाचः-' इत्यत्रेति शेषः। **नीरिति**। नीधातोः केवलात् पूर्ववत् क्विप्। अनेकाच्त्वाभावान्न यण्। किं तु 'अचि श्नुधातु-' इति इयङ्। एतावदेव उन्नीशब्दादस्य वैलक्षण्यमिति भावः। **सुश्रियाविति**। 'श्रिञ् सेवायाम्'। 'क्विब्वचि-' इत्यादिना क्विप्, प्रकृतेर्दीर्घश्च। सु श्रयतीति शोभना श्रीरस्येति वा सुश्रीः। तत अजादिप्रत्यये यण् न भवति। इवर्णस्य धात्ववयवसंयोगपूर्वकत्वादिति भावः। **यवक्रियाविति**। यवान् क्रीणातीति यवक्रीः। क्रीञ्धातोः क्विपि रूपम्। अत्रापि धात्ववयवसंयोगपूर्वकत्वान्न यणिति भावः। 'एरनेकाचः-' इति सूत्रे 'गतिकारकपूर्वस्यैवेष्यते' इति वार्तिकं पठितम्। तत्तात्पर्यतः संगृह्णाति—**गतिकारकेतरेति**। यथाश्रुते तु उदाहृतक्विबन्तकुमारीशब्दे यण् न स्यात्। **शुद्धधियाविति**। शुद्धा धीर्यस्येति विग्रहः। अत्र शुद्धशब्दस्य गतिकारकेतरत्वात् तत्पूर्वकस्य न यणिति भावः। शुद्धं ब्रह्म ध्यायतीति विग्रहे तु स्यादेव यण्—शुद्धध्यौ इत्यादि।

**कथं तर्हीति**। यदि गतिकारकेतरपूर्वस्यैव यण् पर्युदस्यते, गतिकारकपूर्वस्य

---

लिङ्गग्रहणं च' इति वार्तिकस्य प्रथमलिङ्गं गृहीत्वा 'यू स्त्र्याख्यौ-' इत्यनेन नदीत्वं वक्तव्यमित्यर्थाद् 'एरनेकाचः-' इति यण्विषयत्वेन 'नेयङुवङ्-' इति निषेधस्याप्रवृत्तेश्चेत्येके। अन्ये त्वाहुः—एवं तर्हि यथोद्देशप्रवृत्तौ न्यायसिद्धमिति मनोरमाग्रन्थो विरुध्येत, यथोद्देशपक्षेऽपि प्रधीशब्दाद्यर्थतया वचनस्यावश्यकत्वात्। मूले हि उपसर्जनत्वेऽपि नदीत्वं वक्तव्यमित्युक्तम्, न तु नित्यस्त्रीत्वमिति। तस्माद् 'प्रथमलिङ्गग्रहणम्-' इत्यनेन लिङ्गप्रयुक्तं यन्नदीत्वं वृत्तेः प्राक् स्थितं तदिहातिदिश्यते। धीशब्दे तु 'नेयङुवङ्' इति निषेधेन नदीत्वाभावान्नास्त्येव प्रधीशब्दे नदीत्वातिदेश इति। 'ङिति ह्रस्वश्च' इति वैकल्पिकनदीत्वमपीह नातिदिश्यते। प्रथमलिङ्गेति वचनं यथोद्देशे न्यायसिद्धमिति ग्रन्थानुरोधेन वृत्तेः प्रागवस्थायामवयवत्वेनाभिमते विद्यमानाया एव नदीसंज्ञायाः समुदाये अभ्युपेयत्वात्। न च प्रकृष्टा धीर्यस्य तस्मै प्रध्ये प्रध्य इत्यादौ प्रथमान्तधीशब्दस्य ङिति परे प्रवर्तमाना नदीसंज्ञास्तीति दिक्। **उन्नीरिति**। 'सत्सूद्विष-' इत्यादिना क्विप्। **ङेरामिति**। आङ्त्वान्नीशब्दान्तादपि ङेराम् भवतीति भावः। ग्रामं नयतीति ग्रामणीः। 'अग्रग्रामाभ्यां नयतेः-' इति णत्वम्। **नीरिति**। नयतीति नीः, क्विप्। **गतिकारकेतरेति**। 'गतिकारकपूर्वस्यैव यणिष्यते' इति तु नोक्तम्, कुमारीमिच्छन् ब्राह्मणः कुमारी, कुमार्यौ, कुमार्य इत्यत्र यणभावप्रस-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

'वृश्चिकभियः' इत्यादि। उच्यते। 'दुःस्थिता धीर्येषाम्' इति विग्रहे 'दुर्' इत्यस्य धीशब्दं प्रति गतित्वमेव नास्ति। यत्क्रियायुक्ताः प्रादयस्तं प्रत्येव गत्युपसर्गसंज्ञाः। वृश्चिकशब्दस्य बुद्धिकृतमपादानत्वं नेह विवक्षितम्। वृश्चिकसंबन्धिनी भीर्वृश्चिक-

---

तु अवश्यं यण्, तदा दुर्धियः वृश्चिकभिय इत्यादि कथमित्यन्वयः। आदिना दुर्धियौ वृश्चिकभियौ इत्यादिसंग्रहः। दुस्स्थिता धीर्येषामिति विग्रहः। 'प्रादिभ्यो धातुजस्य वाच्यो वा चोत्तरपदलोपः' इति बहुव्रीहिः। पूर्वपदे उत्तरखण्डस्य लोपश्च। वृश्चिकाद् भीरिति विग्रहः। अत्र दुरो गतित्वाद् वृश्चिकस्यापादानत्वाच्च गतिकारकपूर्वत्वात् पर्युदासाभावे सति इयङपवादोऽत्र यण् दुर्वार इत्याक्षेपः। **उच्यत इति**। परिहार इति शेषः। **गतित्वमेव नास्तीति**। 'उपसर्गाः क्रियायोगे' 'गतिश्च' इति प्रादीनां क्रियान्वये गत्युपसर्गसंज्ञे विहिते। धीशब्दश्च बुद्धिगुणवाची, न तु क्रियावाची। अतो न तं प्रति दुरो गतित्वमिति गतिपूर्वकत्वाभावाद् नात्र यण्। किं तु इयङेवेत्यर्थः। ननु लुप्तस्य स्थिताशब्दस्य क्रियाप्रवृत्तिनिमित्तकत्वात् तं प्रति दुरो गतित्वमस्त्येवेत्यत आह—**यत्क्रियेति**। यया क्रियया युक्ताः प्रादयः तं प्रत्येव—तद्वाचकशब्दं प्रत्येव गत्युपसर्गसंज्ञका इत्यर्थः। न चैवमप्यत्र स्थिताशब्दं लुप्तं प्रति प्रवृत्तं दुरो गतित्वमादाय दुर्धीशब्दस्य गतिपूर्वकत्वमस्त्येवेति वाच्यम्। यत्क्रियायुक्ताः प्रादयः, तत्क्रियावाचकं प्रत्येव गत्युपसर्गत्वम्। तथाविधक्रियावाचकस्यैव च गत्युपसर्गकार्यमित्यर्थस्य विवक्षितत्वात्। 'यत्क्रियायुक्ताः' इति च प्रत्यासत्तिन्यायलभ्यम्। **वृश्चिकेति**। वृश्चिकशब्दस्यापादानत्वं नेह विवक्षितमित्यन्वयः। कुत इत्यत आह। **बुद्धिकृतमिति**। आरोपितमित्यर्थः। अपादानत्वं हि विश्लेषावधित्वम्। नह्यत्र वृक्षात् पर्णं पततीत्यत्र पर्णविश्लेषे वृक्षस्येव भयविश्लेषे वृश्चिकस्य अवधित्वमस्ति, वृक्षे पर्णवद् भयस्य वृश्चिके संश्लेषाभावाद् विश्लेषस्य संश्लेषपूर्वकत्वात्। उक्तं च भाष्ये—'विवक्षातः कारकाणि भवन्ति' इति। प्रकृते च वृश्चिके अपादानत्वारोपस्य वक्त्रधीनत्वाद् इह च तदवि-

---

ज्ञात्। **शुद्धधियाविति**। यदा तु शुद्धं ब्रह्म ध्यायतीति विगृह्यते तदा भवत्येव यण्। शुद्धध्यौ शुद्धध्यः। एवमग्रेऽपि। **कथं तर्हीति**। गतिकारकेतरपूर्वपदत्वमिह नास्तीति यणैव भाव्यमिति प्रश्नः। दुर्धिय इत्यत्र 'प्रादिभ्यो धातुजस्य—' इति वार्तिकेन उत्तरपदलोपो बोध्य इत्याशयेनाह—**दुःस्थिता धीर्येषामिति**। **वृश्चिकशब्दस्येति**। भाष्यकृता हि बुद्धिपरिकल्पितमपायमाश्रित्य 'भीत्रार्थानाम्—' इति सूत्रं प्रत्याख्यातम्, ततश्च संबन्धमात्रविवक्षायां षष्ठ्येवेति नास्त्यत्र कारकपूर्वत्वमिति भावः। **वृश्चिकसंबन्धिनी भीरिति**। एवं च भययोगाभावाद् वृश्चिकस्य नापादानकारकत्वमिति सूत्रमतेऽपि न दोष इति भावः। 'ओः सुपि' इत्यतः सुपीत्यनु-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भीरित्युत्तरपदलोपो वा । **२७३ न भूसुधियोः । ( ६-४-८५ )** एतयोर्यण् न स्यादचि सुपि । सुधियौ, सुधिय इत्यादि । सखायमिच्छति सखीयति । ततः क्विप् । अल्लोपयलोपौ । अल्लोपस्य स्थानिवत्त्वाद्यणि प्राप्ते 'क्वौ लुप्तं न स्थानिवत्'

---

रोपात् संबन्धमात्रविवक्षया षष्ठीमाश्रित्य वृश्चिकस्य भीरिति षष्ठीसमासे वृश्चिकभीशब्दस्य व्युत्पत्तिराश्रीयते । ततश्च कारकेतरपूर्वकत्वाद् नात्र यणिति भावः । न च वृश्चिकाद्भीरित्यादौ बुद्धिकृतमेवापादानत्वमादाय पञ्चम्युपपत्तेः 'भीत्रार्थानाम्–' इति व्यर्थमिति वाच्यम् , तस्य सूत्रस्य भाष्ये प्रत्याख्याततत्वेन इष्टापत्तेरित्यलम् । परिहारान्तरमाह—**वृश्चिकसंबन्धिनीति । उत्तरपदेति ।** वृश्चिकसंबन्धिनीति पूर्वपदे उत्तरखण्डस्य संबन्धिनीशब्दस्य लोपः । शाकपार्थिवादित्वादित्यर्थः ।

सुष्ठु ध्यायतीति, सु—शोभना धीर्यस्येति वा विग्रहे सुधीशब्दः । अत्र अजादौ परे 'एरनेकाचः–' इति प्राप्ते । **न भूसुधियोः ।** 'इणो यण्' इत्यतो यणिति 'ओः सुपि' इत्यतः सुपीति 'इको यणचि' इत्यतो अचीति चानुवर्तते । तदाह—**एतयोरित्यादिना ।** एतयोरिति सूत्रोक्तभूसुधियोः परामर्शः । **अचीति ।** अजादावित्यर्थः । यणि प्रतिषिद्धे इयङमभिप्रेत्य आह—**सुधियाविति ।** आदिना अजादिसर्वसंग्रहः । प्रधीवद्रूपाणि । इयङेव विशेषः अचीति वस्तुस्थितिः । अनजादौ यणः प्रसक्त्यभावात् सुपीति किम् ? सुधीभिरुपास्यः सुध्युपास्यः । वस्तुतस्तु सुपीति नानुवर्तनीयम् । 'एरनेकाचः–' इति यणो ह्यत्र न प्रसक्तिः, तस्य अजादिप्रत्यये विधानात्, उपास्यशब्दस्य प्रत्ययत्वाभावात् । 'इको यणचि' इति तु भवत्येव, 'अनन्तरस्य–' इति न्यायेन 'एरनेकाचः–' 'ओः सुपि' इति च विहितयण एव प्रतिषेधात् । 'सुधिया उपास्यः सुध्युपास्यः' इत्यत्र तु अन्तर्वर्तिनीं विभक्तिमाश्रित्य 'एरनेकाचः–' इति यणो 'न भूसुधियोः' इति प्रतिषेधेऽपि उपास्य इत्यचमाश्रित्य 'इको यणचि' इति यण् भवत्येव, 'अनन्तरस्य–' इति न्यायेन तस्यात्र प्रतिषेधाभावादित्यलम् । **सखीयतीति ।** 'सुप आत्मनः–' इति

---

वर्तनादाह—**अचि सुपीति ।** सुपि किम् , सुध्युपास्यः । वस्तुतस्तु सुपीत्यननुवृत्तावपि न क्षतिः, 'अनन्तरस्य–' इति न्यायेन 'एरनेकाचः–' इति 'ओः सुपि' इति च सूत्रद्वयेन प्रापितस्यैव यणो 'न भूसुधियोः' इति निषेधाभ्युपगमात् । **स्थानिवत्त्वाद्यणि प्राप्त इति ।** 'एरनेकाचः–' इत्यनेन । न चान्तर्वर्तिनीं विभक्तिमाश्रित्य सखिशब्दस्य पदत्वाद् 'न पदान्त–' इति निषेधेन अल्लोपो न स्थानिवदिति वाच्यम् । 'नः क्ये' इति नियमेन क्यचि नान्तस्यैव पदत्वात् अत आह—**क्वौ लुप्तमिति ।** 'नपुंसके भावे क्तः' क्वौ लोप इत्यर्थः । इदं सर्वं कुमारीमिच्छन् कुमारीत्यत्रापि बोध्यम् । क्वौ लुप्तमित्येतत्काचित्कम् , क्वौ विधिं प्रति न स्थानिवदित्यभ्युपगमात् । अन्यथा बेभिदि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

( वा ४३१ )। एकदेशविकृतस्यानन्यतयानङ्णित्त्वे, सखा, सखायौ, सखायः। हे सखीः। अमि पूर्वरूपात्परत्वाद्यणि प्राप्ते ततोऽपि परत्वात् 'सख्युरसंबुद्धौ'

---

सखिशब्दात् क्यचि कृते 'अकृत्सार्वधातुकयोः–' इति दीर्घे सखीयतीति रूपम्। ततः **क्विबिति**। तस्मात् सखीयशब्दात् 'सनाद्यन्ताः–' इति धातुसंज्ञकात् 'क्विप्च' इति सूत्रेण क्विबित्यर्थः। **अल्लोपयलोपाविति**। 'अतो लोपः' इति यकारादकारस्य लोपः, 'लोपो व्योः–' इति यलोप इत्यर्थः। यलोपे कर्तव्ये अल्लोपस्तु न स्थानिवत्, 'न पदान्त–' इति यलोपे स्थानिवत्त्वनिषेधात्। **स्थानिवत्त्वादिति**। 'अचः परस्मिन्–' इत्यनेनेति शेषः। **यणि प्राप्त इति**। खकारादीकारस्य 'इको यणचि' इत्यनेनेति शेषः। न चान्तर्वर्तिसुपा पदान्तत्वाद् 'न पदान्त–' इति निषेधः शङ्क्यः, 'नः क्ये' इति क्यचि नान्तस्यैव पदत्वात्। **क्वौ लुप्तमिति**। न पदान्तसूत्रे 'क्विलुगुपधात्वचङ्परनिर्ह्रासकुत्वेषूपसंख्यानम्' इति वार्तिके क्विलुगित्यंशस्यायमनुवादः। तत्र लुगिति लोपो विवक्षित इति तत्रैव भाष्ये स्पष्टम्। लुप्तमिति भावे क्तः। क्विप्प्रत्ययपरको लोपो न स्थानिवदित्यर्थः। ततश्च खकारादीकारस्याच्परकत्वाभावाद् न यणिति भावः। यद्यपि 'न पदान्त–' इति सूत्रे 'क्वौ लुप्तं न स्थानिवत्' इति निराकृत्य 'क्वौ विधिं प्रति न स्थानिवत्' इत्येव स्वीकृतम्, तथापि 'गोमत्यतेः क्विपि गोमान्' इति भाष्यात् 'क्वौ लुप्तं न स्थानिवत्' इत्यपि क्वचिदस्तीति शब्देन्दुशेखरे स्थितम्। ततश्च सखायमिच्छतीत्यर्थे सखी इति ईदन्तं रूपं स्थितम्। ततः सुबुत्पत्तिः।

**अनङ्णित्वे इति**। 'अनङ् सौ' 'सख्युरसम्बुद्धौ' इत्युभाभ्यामिति शेषः। इदन्तसखिशब्दस्य विधीयमाने अनङ्णित्त्वे कथं सखीशब्दस्य ईदन्तस्य भवेतामित्यत आह—**एकदेशेति**। **हे सखीरिति**। अव्यन्तत्वान्न सुलोपः। स्त्रीत्वाभावान्नदीत्वाभावाद् नदीकार्यं न भवति। **यणि प्राप्त इति**। 'एरनेकाचः–' इत्यनेनेति शेषः।

---

ब्राह्मणकुलानीति हलन्तनपुंसके वक्ष्यमाणं न संगच्छेत। बेभिद्यतेः क्विपि अल्लोपे यलोपे च क्वौ लुप्तत्वेनाल्लोपस्य स्थानिवत्त्वाभावे झलन्तलक्षणनुम्प्रसङ्गात्। क्वौ विधिं प्रति न स्थानिवदित्यस्योदाहरणं तु लवमाचक्षाणो लौः। अत्र णिचि यष्टिलोपः, यथा क्वौ णिलोपः तदुभयं 'च्छ्वोः शूड्–' इति वकारस्य क्विनिमित्ते ऊठि कर्तव्ये न स्थानिवत्। 'एत्येधत्यूठ्सु' इति वृद्धिः। अत्रेदमवधेयम्। 'न पदान्त–' इति सूत्रे 'क्विलुगुपधात्वचङ्परनिर्ह्रासकुत्वेषूपसंख्यानम्' इति वार्तिकमस्ति। तदेकदेशानुवादोऽयं 'क्वौ लुप्तम्–' इत्यादीति। 'लुका लुप्तं न स्थानिवत्' इत्यादीनामप्युदाहरणान्यत्रोच्यन्ते। पञ्चभिः पट्वीभिः क्रीतः पञ्चपटुः। 'आर्हात्–' इति ठक्, तस्य 'अध्यर्धपूर्व–' इति लुक्, 'लुक् तद्धितलुकि' इति ङीषो लुक्, तस्य लुका लुप्तत्वेन स्थानिवत्त्वाभावाद्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

(सू २९३) इति प्रवर्तते, सखायम्, सखायौ । शसि यण्, सख्यः । सह खेन वर्तत इति सखः, तमिच्छतीति सखीः । सुखमिच्छतीति सुखीः । सुतमिच्छतीति सुतीः । सख्यौ । सुख्यौ । सुत्यौ । 'ख्यत्यात्–' (सू २९९) इति दीर्घस्यापि

---

**शसि यणिति** । पूर्वसवर्णदीर्घापवादो यण् । कृतपूर्वसवर्णदीर्घत्वाभावान्नत्वं नेति भावः । सख्या । सख्ये । सख्युः । सख्योः । सख्यौ । **सह खेनेति** । खमाकाशं खकारो वा । 'तेन सहेति तुल्ययोगे' इति बहुव्रीहिः । 'वोपसर्जनस्य' इति सभावः । **तमिच्छतीति** । सखमात्मन इच्छति इत्यर्थे 'सुप आत्मनः–' इति क्यच् । 'क्यचि च' इतीत्वम्, 'सनाद्यन्ताः–' इति धातुत्वात् क्विपि अल्लोपयलोपयोः सखीशब्दः । एवं सुखीशब्दः सुतीशब्दश्च । **सखीरिति** । अङ्यन्तत्वान्न सुलोपः । **सख्यावित्यादि** । अजादौ 'एरनेकाचः–' इति यणिति भावः । सख्यम् । सख्यः । सख्या । सख्ये । **दीर्घस्यापीति** । एतदर्थमेव तत्र कृतयणो निर्देश इति भावः । सख्याम् । सख्यि ।

---

अत्र यणादेशो न भवति । न च ङीषो लुकः परनिमित्तकत्वाभावात् स्थानिवत्त्वं न भवेदिति शङ्क्यम्, ङीषो लुकं प्रति स्थानिद्वारा तद्धितलुकः परत्वस्वीकारात् । यद्वा बुद्धिपरिकल्पितं पौर्वापर्यमभावेऽप्यस्तीति नास्त्यत्रानुपपत्तिः । न च अढे ताद्धिते विवक्षिते 'भस्याढे–' इति पुंवद्भावादुक्तनिषेधं विनैवेष्टसिद्धिरित्यपि शङ्क्यम्, यत्र भावि-भत्वं तत्रैव पुंवद्भावः, इह तु लुकि भत्वाभावात् कुतः पुंवद्भाव इति कैयटेनोक्तत्वात् । तथा पञ्चेन्द्राण्यो देवता अस्य पञ्चेन्द्रः । 'सास्य देवता' इत्यण् । 'द्विगोर्लुगनपत्ये' इति लुक् । ततो ङीषो लुकि तस्य स्थानिवत्त्वाभावाद् ङीषा संनियुक्त आनङ् न श्रूयते । पुंवद्भावस्यात्र शङ्कापि नास्ति, इन्द्रे इन्द्रत्वमिन्द्राण्यामिन्द्रस्त्रीत्वमिति प्रवृत्तिनिमित्तभेदे भाषितपुंस्कत्वस्यानभ्युपगमात् । ये तु 'न पदान्त–' इति सूत्रे 'वर ई' इति ईकारप्रश्लेषं कुर्वन्ति, तेषामिह लुग्ग्रहणं न कार्यम् । उपधात्वे कर्तव्ये न स्थानिवत् । तेन परिखा-शब्दाच्चातुरर्थिके अणि कृते 'वृद्धादकेकान्त–' इत्यादिना परिखाशब्दात् खोपधलक्षणे स्वार्थिके छप्रत्यये पारिखीयः सिध्यति । अन्यथा उपधासंज्ञायाः पूर्वविधित्वेन तस्यां कर्तव्यायामालोपः स्थानिवत्स्यात् । नन्वेवं पटयतीत्यादौ वृद्धिः स्यादिति चेन्न, यत्रो-पधासंज्ञामुपजीव्य प्रत्ययो विहितस्तत्रैवायं निषेध इति भाष्ये स्थितत्वात् । तत्र चङ्पर-निर्ह्रासग्रहणमेव ज्ञापकम् । चङ्परो यो ह्रस्वः स चङ्परनिर्ह्रासः, तत्र न स्थानिवत् । वादि-तवन्तं प्रयोजितवान् अवीवदद्वीणां परिवादकेन । अत्र प्रथमणिलोपस्य स्थानिवत्त्वादा-कारोऽनुपधेति 'णौ चङि–' इत्युपधाह्रस्वो न प्राप्नोति । णिसामान्यग्रहणादेतत्सिद्ध-मिति चेत्, तर्ह्यन्यदुदाहर्तव्यं वारि आख्यदवीवरत् । न च 'अग्लोपि' इति निषेधः शङ्क्यः, परत्वाद् वृद्धौ सत्यां टिलोप इत्यभ्युपगमेनाग्लोपित्वाभावात् । अत एव 'सुराङ्-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ग्रहणादुकारः, सख्युः, सुख्युः, सुत्युः। लूनमिच्छतीति लूनीः। क्षाममिच्छतीति क्षामीः। प्रस्तीममिच्छतीति प्रस्तीमीः। एषां ङसिङसोर्यण्। नत्वमत्वयोरसिद्धत्वात् 'ख्यत्यात्–' ( सू २५५ ) इत्युत्वम्, लून्युः, क्षाम्युः, प्रस्तीम्युः। शुष्कीयतेः क्विप्। शुष्कीः। पक्कीः। इयङ्, शुष्कियौ, शुष्कियः। ङसिङसोः शुष्किय इत्यादि। इति ईदन्ताः॥ शंभुर्हरिवत्। एवं विष्णुवायुभान्वादयः।

---

सुखीसुतीशब्दयोरप्येवम्। **लूनीरिति**। 'लूञ् छेदने' क्तः। 'ल्वादिभ्यः' इति नत्वम्। क्यचि ईत्वम्। अङ्यन्तत्वान्न सुलोपः। 'क्षै क्षये' क्तः। 'आदेच उपदेशेऽशिति' इत्यात्त्वम्। 'क्षायो मः' इति मत्वम्। क्यजादि पूर्ववत्। **प्रस्तीमीरिति**। 'स्त्यै ष्ट्यै शब्दसङ्घातयोः' क्तः। 'आदेचः–' इत्यात्त्वम्। 'प्रस्त्योऽन्यतरस्याम्' इति मः। 'स्त्यः प्रपूर्वस्य' इति सम्प्रसारणम्। 'सम्प्रसारणाच्च' इति पूर्वरूपम्। 'हलः' इति दीर्घः। क्यजादि पूर्ववत्। सखी सुतीत्यादिवद्रूपाणि। **ङसिङसोर्यणिति**। 'एरनेकाचः–' इत्यनेनेति शेषः। असिद्धत्वादित्यनन्तरं स्यात् परत्वादिति शेषः। **शुष्कीयतेरिति**। 'इक्श्तिपौ धातुनिर्देशे' इति श्तिपा निर्देशोऽयम्। शुष्धातोः क्तः, शुष्कः। 'शुषः कः' इति कत्वम्। शुष्कमात्मन इच्छतीत्यर्थे क्यजन्तात् शुष्कीयधातोः क्विपि शुष्कीरिति रूपमित्यर्थः। अङ्यन्तत्वान्न सुलोपः। सखी सुतीत्यादिशब्दवत् शुष्कीशब्दः। **शुष्कियावित्यादि**। संयोगपूर्वत्वान्न यण्। किं तु इयङिति विशेष इति भावः। **ङसिङसोः शुष्किय इति**। न च कत्वस्यासिद्धत्वात् ख्यत्यात् परत्वादुत्त्वं शङ्क्यम्, इयङादेशे सति कृतयणादेशत्वाभावाद् इति भावः। इति ईदन्तप्रकरणम्।

**अथ उदन्ता निरूप्यन्ते। शम्भुर्हरिवदिति**। तत्र पूर्वसवर्णदीर्घ

---

मिश्र–' इति सूत्रे इलिकल्योर्हलकलेत्यदन्तनिपातनं सार्थकम्। कुत्वे न स्थानिवत्। अर्चयतेरर्कः 'कृदाधारार्चिकलिभ्यः' इति कः। पाचयतेः पाक्तिः। इह 'चोः कुः' इति कुत्वे णिलोपो न स्थानिवत्। वार्तिकेऽस्मिन् क्विचङ्परनिर्ह्रासोपधानां ग्रहणमावश्यकम्, लुक ईकारप्रश्लेषेण गतार्थत्वात् कुत्वस्य पूर्वत्रासिद्धीयत्वाच्चेत्यवधेयम्। 'चजोः' इति कुत्वे चोदाहरणमन्वेषणीयम्। **सख इति**। 'तेन सहेति–' इति बहुव्रीहौ 'वोपसर्जनस्य' इति सभावः। **सखीरित्यादि**। 'सुप आत्मनः क्यच्' 'क्यचि च' इतीत्वम्। **दीर्घस्यापीति**। एतदर्थं कृतयणादेश इति भावः। ननु अतिसखेर्भूपतेरिति गुणविषयं व्यावर्तयितुं यणा निर्देश इति चेद्, अस्त्वेवम्, तथापि दीर्घे प्रवृत्तिः केन वार्यताम्, न हि ह्रस्वे यणा भाव्यं न दीर्घेष्वित्यत्र प्रमाणमस्ति। सौत्रस्य विकृतनिर्देशस्याव्याप्त्यतिव्याप्त्युभयवारकत्वे सारवत्त्वलाभेन तथैवौचित्याद्भाष्यारूढत्वाच्च।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

**२७४ तृज्वत्क्रोष्टुः । ( ७-१-९५ )** क्रोष्टुस्तृजन्तेन तुल्यं वर्तते, असंबुद्धौ सर्वनामस्थाने परे। क्रोष्टुशब्दस्य स्थाने क्रोष्टृशब्दः प्रयोक्तव्य इत्यर्थः। **२७५ ऋतो ङिसर्वनामस्थानयोः । ( ७-३-११० )** ङौ सर्वनामस्थाने च परे

ऊकारः, गुणस्तु ओकारः, अव् इत्यादयो विशेषास्त्वान्तरतम्यात् संगता इति भावः। 'कुश् आह्वाने रोदने च' इति धातोः 'सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन्' इति तुन्प्रत्यये 'व्रश्च–' इति शस्य षकारे ष्टुत्वेन टकारे च क्रोष्टुशब्दः। क्रुश्धातोः कर्तरि तृचि तु क्रोष्टृशब्दः। द्वावपि शृगालवाचिनौ। तयोरविशेषेण सर्वत्र प्रयोगे प्राप्ते विशेषं दर्शयितुमाह—**तृज्वत्क्रोष्टुः**। प्रत्ययग्रहणपरिभाषया 'तृच्' इति तृजन्तं गृह्यते। 'तेन तुल्यम्–' इति तृतीयान्ताद्वतिः। 'इतोऽत् सर्वनामस्थाने' इत्यतः सर्वनामस्थान इति 'सख्युरसंबुद्धौ' इत्यतोऽसंबुद्धाविति चानुवर्तते। तदाह—**क्रोष्टुस्तृजन्तेनेत्यादिना**। 'कार्यरूपनिमित्तार्थशास्त्रतादात्म्यशब्दिताः। व्यपदेशश्च सप्तैतानतिदेशान् प्रचक्षते।' इति अतिदेशाः सप्त। तत्र प्राधान्यादिह तृजन्तरूपमेव अतिदिश्यते। तच्च न कर्तृ भर्तृ इत्यादि तृजन्तरूपम्, किंतु क्रोष्टृ इत्येव तृजन्तरूपम् अतिदिश्यते, क्रुश्धातोरुपस्थितत्वाद् अर्थत आन्तर्याच्च। इत्यभिप्रेत्य फलितमाह—**क्रोष्टुशब्दस्य स्थाने इति**। निमित्तादीनामुदाहरणानि तु तत्र तत्र प्रदर्शयिष्यामः। क्रोष्टृ स् इति स्थिते। **ऋतो ङि**। 'ह्रस्वस्य गुणः' इत्यतो गुण इत्यनुवर्तते। 'अङ्गस्य' इत्यधिकृतम् ऋत

---

**लूनमिति**। 'ल्वादिभ्यः' इति निष्ठातस्य नः। **क्षाममिति**। 'क्षायो मः' इति मः। **प्रस्तीममिति**। 'प्रस्त्योऽन्यतरस्याम्' इति मः। 'स्त्यः प्रपूर्वस्य' इति संप्रसारणम्। **शुष्कीरिति**। 'शुषः कः' इति निष्ठातस्य कः। **पक्वीरिति**। 'पचो वः' इति वः। **इयङिति**। संयोगपूर्वत्वादिवर्णस्य यण् नेति भावः। इतीदन्ताः। **हरिवदिति**। तद्वत्साध्य इत्यर्थः। **तृज्वत्क्रोष्टुः**। 'कुश् आह्वाने रोदने च'। अस्मात् 'सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन्' इति तुन्प्रत्यये क्रोष्टुशब्दः, तृचि तु क्रोष्टृशब्दः, द्वावपि शृगालवचनौ, तत्राविशेषेण द्वयोः प्रयोगे प्राप्ते सर्वनामस्थाने स्त्रियां च तृजन्त एव तृतीयादावच्युभयम्, अन्यत्र तुन्नन्त एवेति नियमार्थं त्रिसूत्री आरभ्यते। क्रोष्टुरिति तुन्नन्तात्प्रथमा। तृज्वदिति तृतीयान्ताद्वतिः। निमित्त-व्यपदेश-तादात्म्य-शास्त्र-कार्य-रूप-विषयत्वेनातिदेशस्यानेकविधत्वेऽपि प्राधान्यादिह रूपमेवातिदिश्यते। तच्च न पचादेर्यस्य कस्यचित्, किं तु क्रुशेरेव, उपस्थितत्वात्, अर्थत आन्तर्याच्चेत्यभिप्रेत्य फलितमाह—**क्रोष्टुशब्दस्य स्थाने क्रोष्टृशब्द इति**। निमित्तातिदेशो यथा—चिकीर्षति, चिकीर्षते। अत्र सन्नन्तस्य 'पूर्ववत्सनः' इत्यनेन ञित्वातिदेशे कर्तृगामिनि क्रियाफले आत्मनेपदं सिध्यति। ननु कार्यातिदेशेनाप्येतद्वतार्थमिति चेत्, अत्राहुः–

---

१ 'क्रोष्टुशब्दस्तृजन्तवद् रूपं लभते' इति क्वचित् पाठः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ऋदन्ताङ्गस्य गुणः स्यात्। इति प्राप्ते। २७६ ऋदुशनस्पुरुदंसोऽनेहसां च। (७-१-९४) ऋदन्तानामुशनसादीनां चानङ् स्यादसंबुद्धौ सौ परे । २७७ अप्तृन्तृच्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तॄणाम्। (६-४-११)

---

इत्यनेन विशेष्यते। तदन्तविधिः। तदाह—ङौ सर्वेत्यादिना । ऋदुशनस्। 'सख्युरसंबुद्धौ' इत्यतः असंबुद्धाविति 'अनङ् सौ' इत्यतः अनङिति चानुवर्तते। अङ्गस्येत्यधिकृतम् ऋदादिभिर्विशेष्यते तदाह—ऋदन्तानामित्यादिना । उशनसादिष्वपि तदन्तविधिर्बोध्यः। अनङि ङकार इत्। नकारादकार उच्चारणार्थः । 'ङिच्च' इत्यन्तादेशः। क्रोष्टन् स् इति स्थिते। अप्तृन्। 'नोपधायाः' इत्यतः उपधाया इत्य-

---

निमित्तप्रतिसंधानपूर्वकत्वात्तस्येति निमित्तातिदेशः पृथगुक्त इति । व्यपदेशातिदेशो यथा— 'आद्यन्तवदेकस्मिन्' इत्यनेन कर्तव्यमित्यादौ सावकाशप्रत्ययाद्युदात्तत्वफलक आदित्वव्यपदेश औपगवादावतिदिश्यते। तादात्म्यातिदेशो यथा—'सुबामन्त्रिते पराङ्गवत्स्वरे' इत्यनेन 'द्रवत्पाणी शुभस्पती' इत्यत्र शुभस्शब्दस्य पराङ्गवत्त्वे सति षाष्ठिकेन 'आमन्त्रितस्य' इत्यनेन शकारादुकारस्याद्युदात्तत्वं सिध्यति । शास्त्रातिदेशो यथा— 'कालेभ्यो भववत्' इत्यनेन कालवाचिभ्यः 'तत्र भवः' इत्यधिकारे यत् शास्त्रं तत् 'सास्य देवता' इत्यर्थे अतिदिश्यते। तेन मासिकं प्रावृषेण्यमित्यत्र यथाविहितं 'कालाट्ठञ्' 'प्रावृष एण्यः' इति सिध्यति। कार्यातिदेशे तु—इह प्रकृतिप्रत्ययादीनां सांकर्यं स्यात्। कार्यातिदेशो यथा—'गोतो णित्' गौः, गावौ, गावः। अत्र णित्कार्यं वृद्धिरतिदिश्यते, प्राधान्यात्। केचित्तु निमित्तातिदेशे 'गोतो णित्' इत्युदाहरन्ति, तन्मते कार्यातिदेशस्य 'कर्मवत्कर्मणा–' 'स्थानिवदादेशः–' इत्याद्युदाहर्तव्यम्। रूपातिदेशो यथा— वतण्डी चासौ वृन्दारिका च वातण्ड्यवृन्दारिका । अत्र वतण्डीशब्दे 'पुंवत् कर्मधारय–' इत्यनेन पुंवाचकवातण्ड्यशब्दरूपमतिदिश्यते । इह मनोरमायामतिदेशस्य षड्विधत्वमुक्तम्। अन्ये तु—'कार्यरूपनिमित्तार्थशास्त्रतादात्म्यशब्दिताः। व्यपदेशश्च सप्तैतानतिदेशान्प्रचक्षते।' इति सप्तविधत्वमाहुः । अर्थातिदेशस्योदाहरणं तु गार्गी च गार्ग्यायणौ च गर्गाः। अत्र 'स्त्री पुंवच्च' इत्यनेन गोत्रप्रत्ययान्तस्त्रीवाचकस्य 'वृद्धो यूना–' इत्येकशेषे सति स्त्र्यर्थस्य पुमर्थोऽतिदिश्यते, तेन स्त्रियामपत्यकृतबहुत्वे 'यञञोश्च' इति लुक् सिध्यति। ऋतो ङि। कृतॄ एतयोरनुकरणे ऋकारान्ते गुणवारणाय तपरकरणमिति बोध्यम्। अप्तृन्। 'तुरिष्ठेमेयस्सु' इतिवत् तृ इत्येव सिद्धे तृन्तृचोर्भेदेनोपादानं 'क्वचित्सामान्योक्तावपि विशेष एव गृह्यते' इति ज्ञापनार्थम्। तेन 'न कोपधायाः' इत्यत्र सामान्योक्तावपि अकतद्धितयोरेव को गृह्यते, न कमात्रम्। तेन यदग्रे वक्ष्यति 'कोपधप्रतिषेधे तद्धितवुग्रहणम्' इति तदुपपन्नं भवतीत्येके।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अबादीनामुपधाया दीर्घः स्यादसंबुद्धौ सर्वनामस्थाने परे। नप्त्रादिग्रहणं व्युत्पत्तिपक्षे नियमार्थम्। उणादिनिष्पन्नानां तृन्तृजन्तानां संज्ञाशब्दानां चेद्भवति तर्हि नप्त्रादीनामेव । तेन पितृभ्रातृप्रभृतीनां न। उद्गातृशब्दस्य तु भवत्येव । 'समर्थ-'

---

नुवर्तते । 'सर्वनामस्थाने चासंबुद्धौ' इति चकारवर्जमनुवर्तते । तदाह—**अबादीनामिति** । अत्र अष्टाध्याय्यां तावत् 'तृन्' इति सूत्रेण 'ण्वुल्तृचौ' इति सूत्रेण च कर्तरि तृन्तृचौ विहितौ । तथा उणादिषु 'तृन्तृचौ शंसिक्षदादिभ्यः संज्ञायां चानिटौ' 'बहुलमन्यत्रापि' इति सूत्राभ्यां तृन्तृचौ विधाय 'नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृमातृपितृदुहितृ' इति सूत्रेण नप्त्रादयो निपातिताः । ततश्च संज्ञाशब्दाः तृन्तृजन्ता औणादिका इति स्थितिः । तत्र तृजन्तादेव सिद्धे नप्त्रादिग्रहणं व्यर्थमित्यत आह—**नप्त्रादिग्रहणमिति** । नियमशरीरमाह—**उणादीति । तेनेति** । औणादिकेषु नप्त्रादिसप्तानामेव तृन्तृजन्तानां दीर्घ इति नियमेन तदितरेषां पितृभ्रात्रादीनां न दीर्घ इति भावः। न च प्रशास्तृशब्द औणादिको न भवतीति भ्रमितव्यम्, तस्यापि संज्ञाशब्दस्य शंसिक्षदादिगणप्रविष्टत्वेन औणादिकत्वात्। अत्र मूले 'व्युत्पत्तिपक्षे' इत्युक्त्या अव्युत्पत्तिपक्षे नप्त्रादिसप्तानां तृन्तृजन्तत्वाभावादप्राप्तौ नप्त्रादिग्रहणमर्थवत् । तदितरपितृमात्रादिशब्दानां तु औणादिकानामव्युत्पन्नतया तृन्तृजन्तत्वाभावादेव न दीर्घ इति सूचितम्। नन्वेवं सति उद्गातृशब्दस्यापि संज्ञाशब्दस्य शंसिक्षदादित्वेन औणादिकत्वात् तस्य च नप्त्रादिसप्तस्वनन्तर्भावात् कथं दीर्घ इत्यत आह—**उद्गातृशब्दस्येति** । 'ण्वुल्तृचौ' इति सूत्रस्थभाष्ये तु 'अप्तृ' इत्येवास्तु, तृन्तृचोर्ग्रहणं मास्त्विति प्रपञ्चितम्। 'तृन्' इति भाष्ये तु तृन्विधौ 'ऋत्विक्षु चानुपसर्गस्य' इति वक्तव्यम्। होता। पोता। अनुपसर्गस्य किम्। प्रशास्ता। प्रतिहर्ता। औणादिकतृजन्त एवायम्। 'नयतेस्तृन् वक्तव्यः पुक्च'। नेष्टा। 'त्विषेर्देवतायां तृन् वक्तव्यः, अकारश्चोपधाया अनिट्त्वं च'। त्वष्टा 'क्षदेश्च युक्ते तृन् वक्तव्यः'। क्षत्ता। इत्येवं होतृपोतृनेष्टृत्वष्टृक्षत्तृशब्दाः तृन्नन्ता व्युत्पादिताः। तन्मते तु तेषां पञ्चानामिह ग्रहणं प्रपञ्चार्थम्। नप्तृप्रशास्तृग्रहणमेव उक्तनियमार्थमित्यन्यत्र विस्तरः।

---

अन्ये त्वाहुः—'अप्तृ-' इत्येव वक्तव्ये तृन् तृज् इति भेदेनोपादानमर्थवणस्तृव्यावृत्तये। यद्यप्यर्थवत्परिभाषया तन्निवृत्तिः सिध्यति, तथापि तस्याः परिभाषाया अनित्यत्वज्ञापनाय तयोः पृथगुपादानम्। तेन 'अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति' इति सिद्धमिति। व्युत्पत्तिपक्षे तृन्नन्तत्वात्तृजन्तत्वाद्वा सिद्धे नप्त्रादिग्रहणं व्यर्थमित्यत आह—**नियमार्थमिति** । औणादिकानामन्येषां संज्ञाशब्दानां मा भूदित्येतदर्थमित्यर्थः। धातृशब्दस्त्वौणादिकः संज्ञाशब्दो न भवतीति तत्र दीर्घो भव-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

( सू ६४७ ) सूत्रे 'उद्गातारः' इति भाष्यप्रयोगात्। क्रोष्टा, क्रोष्टारौ, क्रोष्टारः, क्रोष्टारम्, क्रोष्टारौ। क्रोष्टून्। **२७८ विभाषा तृतीयादिष्वचि**। (७-१-९७) अजादिषु तृतीयादिषु क्रोष्टुर्वा तृज्वत्। क्रोष्ट्रा, क्रोष्ट्रे। **२७९ ऋत उत्**। ( ६-१-१११ ) ऋदन्तान् ङसिङसोरति परे उकार एकादेशः स्यात्। रपरत्वम्। **२८० रात्सस्य**। ( ८-२-२४ ) रेफात्संयोगान्तस्य सस्यैव लोपो नान्यस्य।

---

**क्रोष्टेति**। क्रोष्टन् स् इति स्थिते एकदेशविकृतस्यानन्यतया तृजन्तत्वाद्दीर्घः। हल्ङ्यादिना सुलोपः। नलोपः। यद्यपि 'सर्वनामस्थाने च-' इत्येवात्र दीर्घः सिध्यति, तथापि परत्वादप्तृन्नित्येव दीर्घो न्याय्यः। **क्रोष्टाराविति**। क्रोष्टु औ इति स्थिते तृज्वद्भावे, 'ऋतो ङि-' इति गुणे अकारे, रपरत्वे, एकदेशविकृतस्यानन्यतया तृजन्तत्वाद्दीर्घे रूपम्। एवं क्रोष्टारः, क्रोष्टारम्, क्रोष्टारौ। हे क्रोष्टो। असंबुद्धावित्यनुवृत्तेर्न तृज्वद्भावः। शसि शंभुवद्रूपम्। **क्रोष्टूनिति**। सर्वनामस्थाने इत्यनुवृत्तेः न तृज्वद्भावः। क्रोष्टु आ इति स्थिते। **विभाषा तृतीयादिष्वचि**। तृज्वत्क्रोष्टुरित्यनुवर्तते। अचीति तृतीयादिविभक्तिविशेषणम्। तदादिविधिः। तदाह। **अजादिष्विति**। **क्रोष्ट्रेति**। तृज्वद्भावे क्रोष्टृ आ इति स्थिते ऋकारस्य यण् रेफः। एवं क्रोष्ट्रे इति। तृज्वद्भावाभावपक्षे क्रोष्टुना, क्रोष्टवे शंभुवत्। ङसिङसोस्तृज्वत्त्वे क्रोष्टृ अस् इति स्थिते। **ऋत उत्**। 'एङः पदान्तादति' 'ङसिङसोश्च' इत्यतः अतीति ङसिङसोरिति चानुवर्तते। ङसिङसोरित्यवयवषष्ठी अतीत्यत्रान्वेति। अङ्गस्येत्यधिकृतम्। ऋत इत्यनेन विशेष्यते। तदन्तविधिः। तदाह—**ऋदन्तादित्यादिना**। **रपरत्वमिति**। ऋकारस्य अकारस्य च स्थाने प्राप्नुवत उकारस्य ऋकारस्थानिकत्वानपायादिति भावः। उदिति तपरकरणं द्विमात्रनिवृत्त्यर्थम्। न च 'भाव्यमानोऽण् सवर्णान् न गृह्णाति' इत्येव तन्निवृत्तिः सिध्यतीति वाच्यम्। तस्यानित्यत्वादिह द्विमात्रप्राप्तौ तन्निवृत्त्यर्थत्वात्। तदनित्यत्वं तु अनेनैव तपरकरणेन ज्ञाप्यते। ततश्च 'यवलपरे यवला वा' इति मकारस्य अनुनासिका एव भवन्तीति 'च्छ्वोः-' इति सूत्रे कैयटः। यत्तु तपरत्वं 'ढ्रलोपे-' इति दीर्घनिवृत्त्यर्थम्, इति, तन्न। 'उरण् रपरः' इति सूत्रे 'ऊ रपरः' इति भाष्यप्रयोगविरोधात्। "सुपत्रवाहिता बाणा ज्वलिता इव पन्नगाः। नैर्ऋतोरस्यभाव्यन्त सवितू रश्मयो यथा।" इति रामायणप्रयोगविरोधाच्चेत्यलम्। क्रोष्टुर् स् इति स्थिते—**रात्सस्य**। 'संयोगान्तस्य लोपः' इत्येव सिद्धे नियमार्थमिद-

---

त्येव। धातारौ। धातारः। अव्युत्पत्तिपक्षे तु नप्त्रादिग्रहणं विध्यर्थमिति पितृभ्रातृप्रभृतीनां दीर्घशङ्कैव नास्तीति बोध्यम्। **तेनेति**। पितरौ। पितरः। भ्रातरौ। भ्रातरः। इत्यादौ दीर्घो नेत्यर्थः। **क्रोष्टेति**। अनङ्। हल्ङ्यादिलोपात्परत्वादुपधा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति रेफस्य विसर्गः । क्रोष्टुः । आमि परत्वात् तृज्वद्भावे प्राप्ते 'नुमचिरतृज्वद्भावेभ्यो नुट् पूर्वविप्रतिषेधेन' ( वा ४३७४ ) । क्रोष्टूनाम् । क्रोष्टरि । क्रोष्ट्रोः । पक्षे हलादौ च शंभुवत् ॥ इत्युदन्ताः ॥ हूहूः, हूह्वौ, हूह्वः । हूहूम्, हूह्वौ, हूहून्

मित्याह—सस्यैवेति । तेन ऊर्क् इत्यादौ न संयोगान्तलोपः । रेफस्य विसर्ग इति । 'खरवसानयोः–' इति विसर्ग इत्यर्थः । परत्वादिति । परत्वान्नुटं बाधित्वा तृज्वत्त्वे कृते ततो नुटि 'नामि' इति दीर्घे णत्वे कृते क्रोष्टॄणामिति स्यादित्यर्थः । न च नुट् नित्य इति वाच्यम् , तृज्वत्त्वे कृते संनिपातपरिभाषया नुटो दुर्लभत्वात् । नुमचिरेति । अचिरेत्यनुकरणम् । 'अचि र–' इति विहितो रेफो विवक्षितः । 'प्रकृतिवदनुकरणं भवति इति त्वनित्यम् । ततश्च अचिरेत्यस्य समासप्रवेशेऽपि न लुक् । क्रोष्टूनामिति । तृज्वत्त्वं बाधित्वा नुटि कृते 'नामि' इति दीर्घे रूपम् । क्रोष्टरीति । तृज्वत्त्वे क्रोष्टृ इ इति स्थिते 'ऋतो ङि–' इति गुणे रपरत्वे रूपम् । क्रोष्ट्रोरिति । तृज्वत्त्वे ऋकारस्य यण् रेफः । पक्ष इति । तृतीयादिष्वजादिषु तृज्वत्त्वाभावपक्षे इत्यर्थः । ननु "तृज्वत्क्रोष्टुः' 'स्त्रियां च' 'विभाषा तृतीयादिष्वचि' इति त्रिसूत्री व्यर्था । शृगालवाचिनोः क्रोष्टृक्रोष्टुशब्दयोः स्वतन्त्रयोः सत्त्वादिति चेत् , शृणु— सर्वनामस्थाने स्त्रियां च ऋदन्तस्यैव क्रोष्टृशब्दस्य प्रयोगः, तृतीयादिष्वजादिषु तु उभयस्य, शसि हलादिषु च उदन्तस्यैवेति नियमार्था त्रिसूत्रीति ॥ इत्युदन्ताः ॥

अथ ऊदन्ता निरूप्यन्ते । हूहूरिति । गन्धर्वविशेषवाचि अव्युत्पन्नं प्रातिपदिकमेतत् । हूह्वौ, हूह्वः इत्यादि । 'दीर्घाज्जसि च' इति पूर्वसवर्णदीर्घनिषेधः । 'इको यणचि' इति यणि रूपम् । हे हूहूः । हूहूम्, हूह्वौ, हूहून् । हूह्वा । हूह्वे ।

दीर्घः । स च 'सर्वनामस्थाने च–' इत्यनेन यद्यपि लभ्यते, तथापि परत्वाद् 'अप्तृन्–' इत्येव न्याय्यः । कृतेप्यनङि एकदेशविकृतस्यानन्यत्वेन तृच्त्वात् । अन्यथा गुणे कृतेऽपि क्रोष्टारावित्यादौ दीर्घो न स्यादिति भावः । विभाषा तृ । 'यस्मिन्विधिस्तदादौ–' इति तदादिविधिरित्याह—अजादिष्विति । ऋत उत् । ऋकाराकारयोरेकादेशे सति ह्रस्व एव उकारः स्यान्न तु दीर्घ इत्येतदर्थकेन तपरकरणेन भाव्यमानोऽण् क्वचित् सवर्णान् गृह्णातीति ज्ञाप्यते, तेन यवलपरे हकारे मस्य विधीयमाना यवला अनुनासिका भवन्ति । रात्सस्य । 'संयोगान्तस्य लोपः' इत्यनेनैव सिद्धे नियमार्थमिदमित्याह—सस्यैवेति, नान्यस्येति । ऊर्क्, परिमार्ट् इत्यादौ रेफात्संयोगान्तस्य लोपो नेत्यर्थः, रादेव सस्येति विपरीतनियमोऽत्र न भवति, उरःप्रभृतिषु कृतसंयोगान्तलोपस्य पुमानित्यस्य दर्शनात् । परत्वादिति । न च नुट् नित्य इति वाच्यम्, तृज्वद्भावे कृते संनिपातपरिभाषया नुटो दुर्लभत्वाद् इति भावः । नुमचिरेति ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इत्यादि । अतिचमूशब्दे तु नदीकार्यं विशेषः, हे अतिचमु । अतिचम्वै । अति-चम्वाः । अतिचम्वाः अतिचमूनाम् । अतिचम्वाम् । खलपूः । २८१ ओः सुपि । ( ६-४-८३ ) धात्ववयवसंयोगपूर्वो न भवति य उवर्णस्तदन्तो यो धातुस्तदन्त-स्यानेकाचोऽङ्गस्य यण् स्यादजादौ सुपि । 'गतिकारकेतरपूर्वपदस्य यण् नेष्यते' (वा २०३४) । खलप्वौ, खलप्व इत्यादि । एवं सुल्वादयः । 'अनेकाचः' किम्—लूः, लुवौ, लुवः । 'धात्ववयव–' इति किम्—उल्लूः, उल्लुवौ, उल्लुवः । 'असं-

---

हूहः । हूहोः । हूहाम् । हूहि । अतिचमूशब्दे त्विति । चमूमतिक्रान्तः अति-चमूः । 'अत्यादयः क्रान्ताद्यर्थे–' इति समासः । स्त्रीप्रत्ययान्तत्वाभावाद् 'गोस्त्रियोः–' इति ह्रस्वो न भवति । नदीकार्यमिति । 'प्रथमलिङ्गग्रहणं च' इति वचनादिति भावः । खलपूरिति । खलं पुनातीति क्विप् । खलपू औ, खलपू अस् इति स्थिते 'अचि श्नुधातु–' इति उवङि प्राप्ते । ओः सुपि । 'एरनेकाचः–' इति सूत्रं एरितिवर्जमनु-वर्तते । 'अचि श्नुधातु–' इत्यतः अचीत्यनुवृत्तम् तेन सुपीति विशेष्यते । तदादिविधिः । 'इणो यण्' इत्यतः यणित्यनुवर्तते । तदाह—धात्ववयवेत्यादिना । गतिका-रकेति । इदमपि वार्तिकम् अत्रानुवर्तत इति भावः । खलप्वौ, खलप्व इति । कारकपूर्वकत्वादिह यणिति भावः । हे खलपूः । खलप्वम्, खलप्वौ, खलप्वः । खल-प्वा । खलप्वे । खलप्वः । खलप्वः, खलप्वोः । खलप्वि । इह अजादौ 'एरनेकाचः–' इति यणः असंभवाद् उवङि प्राप्ते अनेन सूत्रेण यणिति भावः । उवङोऽपवादो यणिति फलितम् । इयङुवङौ 'एरनेकाचः–' इति 'ओः सुपि' इति यण् च सर्वत्र पूर्व-रूपसवर्णदीर्घापवादाः । एवं सुल्वादय इति । सुष्ठु लुनातीति सुलूः । गतिपूर्व

---

वारीणां तिसृणां क्रोष्टूनामिति क्रमेणोदाहरणानि । ननु रेण स्वविषये प्राप्तं सर्वं बाध्यम् बाध्यसमान्यचिन्ताश्रयणात् । अत एव 'गुणादीर्घोत्वानामपवादः' इति वक्ष्यति । तथा चाविशेषान्नुडप्यनेन बाध्यत इति कथमिह विप्रतिषेधः, उत्सर्गापवादयोस्तदयोगा-दिति चेत्, अत्राहुः—अत एव तदंशे विप्रतिषेधं दूषयित्वा 'न तिसृचतसृ' इति-ज्ञापकान्नुडिति भाष्यकृतोक्तम् । एवं च नुम्तृज्वद्भावाभ्यामित्येव सुवचमिति । इत्यु-दन्ताः । हूहूरिति । गन्धर्वविशेषवाचकमव्युत्पन्नं प्रातिपदिकमिदम्—हूह्वाविति । 'दीर्घाज्जसि च' इति पूर्वसवर्णदीर्घनिषेधे सति 'इकः–' इति यण् । अतिचमूशब्दे त्विति । 'प्रथमलिङ्गग्रहणं च' इत्युक्तेः । तथा च 'एवमतिचम्वादयः' इति प्राचोक्तं नादर्त-व्यमिति भावः । खलपूरिति । खलं पुनातीति पूञः क्विप् । ओः सुपि । 'इणो यण्–' इत्यतो यण् 'एरनेकाचः–' इति सूत्रं च सर्वमनुवर्तते इवर्णवर्जम्, ओरित्यु-कारस्य कार्यिणो निर्देशात् । 'अचि श्नुधातु–' इति सूत्राद्धातुः 'एरनेकाचः–' इत्यत्रैव

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

योगपूर्वस्य' किम्—कटप्रूः, कटप्रुवौ, कटप्रुवः। 'गति-' इत्यादि किम्—परमलुवौ। 'सुपि' किम्—लुलुवतुः। स्वभूः। 'न भूसुधियोः' (सू २७३)। स्वभुवौ, स्वभुवः। एवं स्वयम्भूः। **२८२ वर्षाभ्वश्च।** (६-४-८४) अस्योवर्णस्य यण् स्यादचि सुपि। वर्षाभ्वौ, वर्षाभ्वः। दृभतीति दृम्भूः। 'अन्दूदृम्भूजम्बूकफेलूकर्कन्धूदिधिषूः' (उ ९३) इत्युणादिसूत्रेण निपातितः। दृम्भ्वौ दृम्भ्वः। दृम्भूम्, दृम्भ्वौ, दृम्भून्। शेषं हूहूवत्। 'दृन्' इति नान्ते हिंसार्थेऽव्यये

---

क्त्वादिहापि यण्। आदिना केदारलूरित्यादिसंग्रहः। **कटप्रूरिति।** 'प्रू गतौ' 'क्विब्वचि-' इत्यादिना क्विप् उकारस्य दीर्घश्च। **परमलुवाविति।** परमश्चासौ लूश्चेति विग्रहः। गतिकारकेतरपूर्वकत्वान्न यण्। **लुलुवतुरिति।** अतुसि लुलू इत्यस्य अनेकाच्त्वेऽपि सुप्परकत्वाभावान्न यणिति भावः। **स्वभूरिति।** स्वस्माद् भवतीति क्विप्। कारकपूर्वकत्वाद्यणि प्राप्ते आह—**न भूसुधियोरिति।** वर्षासु भवति वर्षाभूः। वर्षर्तावुत्पन्न इत्यर्थः। वर्षाशब्दो नित्यस्त्रीलिङ्गबहुवचनान्तः। 'अप्सुमनस्समासिकतावर्षाणां बहुत्वं च' इति लिङ्गानुशासने स्त्र्यधिकारे सूत्रकृतोक्तेः। 'वर्षाभूर्दर्दुरे पुमान्' इति यादवः। 'न भूसुधियोः' इति निषेधे प्राप्ते। **वर्षाभ्वश्च।** ओः सुपि इत्यनुवर्तते। 'अचि श्नुधातु-' इत्यतःअचि इति 'इणो यण्' इत्यतो यणिति चानुवर्तते। तदाह—**अस्येति।** वर्षाभूशब्दस्येत्यर्थः। **दृभतीति।** 'दृभी ग्रन्थे' तुदादिः। शविकरणस्य 'सार्वधातुकमपित्' इति ङित्त्वान्न गुणः। **निपातित इति।** कूप्रत्ययो नुम् चेह निपात्यत इत्यर्थः। 'नश्चापदान्तस्य-' इत्यनुस्वारः' 'अनुस्वारस्य ययि-' इति तस्य परसवर्णो मकारः। अत्र च ऊकारो न धात्ववयवः, अत उवङ् 'ओः सुपि' इति यण् च न। किंतु 'इको यणचि' इत्येव यण्। स च 'अमि पूर्वः' इत्यनेन बाध्यत इत्याशयेनाह—**दृम्भूमिति।** शसि 'दीर्घाज्जसि च' इति निषेधाप्रवृत्त्या पूर्वसवर्णदीर्घेण 'इको यणचि' इति यण् बाध्यत इत्यभिप्रेत्याह—**दृम्भूनिति।** दृम्भ्वा। दृम्भ्वे। दृम्भ्वः। दृम्भ्वः, दृम्भ्वोः, दृम्भ्वाम्। इह तु 'दृन्कर-' इति यण् न भवति, भूशब्दस्यार्थवत एव तत्र ग्रहणात्, इह च भूशब्दस्य अनर्थकत्वात्। **दृन्निति** नान्तमव्ययं हिंसायां वर्तते। तस्मिन्नुपपदे भूधातोः क्विबित्यर्थः। दृन्-हिंसाम्, भवते-प्राप्नो-

---

संबध्यत इत्याशयेन व्याचष्टे—**धात्ववयवसंयोगेत्यादि। वर्षाभ्वौ, वर्षाभ्व इति।** अत्र 'इको यणचि' इति यणं बाधित्वा 'प्रथमयोः-' इति पूर्वसवर्णदीर्घः प्राप्तः, तस्य 'दीर्घाज्जसि च' इति निषेधे पुनरपि यणादेशप्रसक्तौ 'अचि श्नुधातुभ्रुवाम्-' इत्युवङ् बाध्यते, तं च बाधित्वा 'ओः सुपि' इति यण्, तस्य 'न भूसुधियोः' इति निषेधे पुनरुवङादेशस्य प्रसक्तौ 'वर्षाभ्वश्च' इति यणिति बोध्यम्। एवमन्यत्रा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भुवः क्विप्, दृन्भूः। 'दृन्करपुनःपूर्वस्य भुवो यण् वक्तव्यः' (वा ४११८)। दृन्भ्वम्, दृन्भ्व इत्यादि खलपूवत्। करभूः। करभ्वम्। करभ्वः। दीर्घपाठे तु कर एव कारः। स्वार्थिकः प्रज्ञाद्यण्। कारभ्वम्। कारभ्वः। पुनर्भूर्यौगिकः पुंसि।

---

तीति विग्रहः। **दृन्भूरिति**। तरुविशेषः। सर्पविशेष इत्यन्ये। स्वाभाविक एवात्र नकारः। तस्य पदान्तत्वाद् 'नश्चापदान्तस्य–' इति नानुस्वारः। अत एव न परसवर्णः। 'न भूसुधियोः' इति निषेधे प्राप्ते—**दृन्करपुनःपूर्वस्य भुवो यण् वक्तव्यः**। **दृन्भ्वमिति**। यणा पूर्वरूपं बाध्यत इति भावः। **दृन्भ्व इति**। शसि यणा पूर्वसवर्णदीर्घो बाध्यत इति भावः। करात् करे वा भवतीति करभूः। दृन्भूवदित्यभिप्रेत्याह—**करभ्वम्। करभ्व इति**। 'दृन्कर–' इत्युदाहृतवार्तिके दीर्घमध्यकारशब्दपाठ इति मतान्तरम्। तत्राह—**दीर्घेति। स्वार्थिक इति**। स्वस्याः प्रकृतेरर्थः स्वार्थः, तत्र भवः स्वार्थिकः। अध्यात्मादित्वाट्ठञ्। **प्रज्ञाद्यणिति**। 'प्रज्ञादिभ्योऽण्' इति प्रज्ञादिभ्यः स्वार्थे अणिवधानादिति भावः। दीर्घपाठे करपूर्वस्य उवङेव। ह्रस्वपाठे करपूर्वस्य यणेवेति विवेकः। पुनर्भवतीति पुनर्भूः। ननु 'पुनर्भूर्दिधिषूरूढा' इति कोशात् पुनर्भूशब्दस्य स्त्रीलिङ्गत्वात् स्त्रीलिङ्गाधिकार एव तन्निरूपणं युक्तमित्यत आह—**पुनर्भूर्यौगिकः पुंसीति**। पुनर्भवतीति क्रियानिमित्तस्य पुनर्भूशब्दस्य पुँल्लिङ्ग-

---

प्युत्सर्गापवादविधय ऊह्याः। 'भेके मण्डूकवर्षाभूशालूरप्लवदर्दुराः' इत्यमरः। 'भेक्यां पुनर्नवायां स्त्री वर्षाभूर्दर्दुरे पुमान्' इति यादवः। **दृभतीति**। 'दृभी ग्रन्थे' तुदादिः। दृम्भूर्ग्रन्थकर्ता। कथक इत्यन्ये। **व्युत्पादित इति**। कूप्रत्ययो नुमागमश्चात्र निपात्यत इत्यर्थः। दशपादीवृत्तौ तु 'दर्भेर्णो दृम्भूः' नुमागमोऽनुस्वारश्च निपात्यते इत्युक्तम्। अयमूकारो न धातोरिति उवङोऽप्रसङ्गात् 'इको यणचि' इति यण्, स च 'अमि पूर्वः' इत्यनेन बाध्यत इत्याशयेनाह—**दृम्भूमिति**। शसि 'दीर्घाज्जसि च–' इति निषेधाप्रवृत्त्या पूर्वसवर्णदीर्घेणापि बाध्यत इत्याह—**दृम्भूनिति। दृन्नितीति**। इदं च श्रीपतिमतम्, माधवेन तु 'अन्दूदृम्भू–' इत्यादिसूत्रेण दृढशब्दे उपपदे भुवः कूप्रत्यय उपपदस्य दृन्नादेशश्च निपात्यत इत्युक्तम्। **दृन्भूरिति**। तरुः सर्पजातिभेद इत्येके। कपिरित्यन्ये। **वक्तव्य इति**। 'वर्षाभ्वश्च' इति चकारस्यानुक्तसमुच्चयार्थत्वादिति भावः। एवं च 'ओः सुपि' इति प्राप्तस्य यणो 'न भूसुधियोः' इति निषेधे 'वर्षादृन्करपुनःपूर्वस्य भुवः' इत्येतद्विध्यर्थमिति स्थितम्। अत्र नव्याः—'वर्षादृन्कर–' इत्यस्य नियमार्थतां स्वीकृत्य 'न भूसुधियोः' इत्यत्र भूग्रहणं त्यक्तुं शक्यमिति तन्न। दृन्करपुनःपूर्वस्य चेद्भवेदिति विपरीतनियमापत्तेः। तथा च पुनर्भ्वौ वर्षाभ्वौ इत्यादिसिद्धावपि पुनर्ल्वौ, वर्षाल्वौ इत्यादि न सिद्ध्येदिति। **दीर्घपाठ इति**। 'दृन्कार–'

---

१ दृम्भतीति क्वाचित्कः पाठस्तु प्रामादिकः प्रतिभाति। धातुपाठे 'दृभी ग्रन्थे' इति मरहितपाठस्यैवोपलम्भात्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पुनर्भ्वौ इत्यादि। दृग्भूकाराभूशब्दौ स्वयंभूवत् ॥ इत्यूदन्ताः ॥ धाता। हे धातः। धातारौ। धातारः। 'ऋवर्णान्नस्य णत्वं वाच्यम्' (वा ४१६६) धातॄणामित्यादि। एवं नप्त्रादयः। उद्गातारौ। पिता। व्युत्पत्तिपक्षे नप्त्रादिग्रहणस्य नियमार्थत्वान्न

---

त्वमप्यस्तीत्यर्थः। **दृग्भू इति**। दृशो भवतीति दृग्भूः। कारायां भवतीति काराभूः। कारा बन्धनालयः। **स्वयंभूवदिति**। तत्र 'न भूसुधियोः' इति यणः प्रतिषेधात्। प्रतिप्रसवाभावाच्चेति भावः ॥ इत्यूदन्ताः ॥

**अथ ऋदन्ता निरूप्यन्ते। धातेति**। 'डुधाञ् धारणपोषणयोः'। तत्र तृन् तृज्वा स्यात्। क्रोष्टुशब्दवद् अनङ्दीर्घसुलोपनलोपाः। **हे धातरिति**। 'ऋदुशनस्—' इत्यत्रासंबुद्धावित्यनुवृत्तेर्नानङ्। 'ऋतो ङि—' इति गुणः अकारः, रपरत्वम्, हल्ङ्यादिलोपः, विसर्गः। 'अप्तृन्—' इति दीर्घस्तु न। असंबुद्धावित्यनुवृत्तेः। **धाताराविति**। ङिसर्वनामस्थानयोः 'ऋतो ङि—' इति गुणः अकारः रपरत्वम्, 'अप्तृन्—' इति दीर्घश्च। धातारः। धातारम्, धातारौ। शसि पूर्वसवर्णदीर्घे ॠकारः, नत्वम्। धातॄन्। टा यण्, धात्रा। ङे यण्, धात्रे। ङसिङसोः ऋत उत्, रपरत्वम्, सलोपः, विसर्गः, धातुः। धातुः। धात्रोः। धात्रोः। आमि 'ह्रस्वनद्यापः—' इति नुट्। 'नामि' इति दीर्घः। नकारस्य रेफषकाराभ्यां परत्वाभावादप्राप्ते णत्वे। **ऋवर्णान्नस्य णत्वं वाच्यम्**। ऋवर्णात् परस्येत्यर्थः। इदं तु वार्तिकं णत्वविधायकसूत्राणां सर्वेषां शेषभूतम्। ङौ 'ऋतो ङि—' इति गुणः अकारः, रपरत्वम्। धातरि। धातृषु। न च धातृशब्दस्य हिरण्यगर्भसंज्ञाशब्दत्वाद् औणादिकशंसिच्छदादितृन्तृजन्तत्वादिह कथम् 'अप्तृन्—' इति दीर्घः, औणादिकतृन्तृजन्तेषु नप्त्रादिसप्तानामेव दीर्घ इति नियमादिति वाच्यम्। धाञ्धातोः शंसिच्छदादित्वकल्पनायां प्रमाणाभावेन धातृशब्दस्य औणादिकत्वाभावादिति भावः। **एवं नप्त्रादय इति**। नप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तृशब्दा धातृशब्दवदित्यर्थः। उद्गातृशब्दस्य औणादिकतृन्तृजन्तस्य नप्त्रादिष्वनन्तर्भावेऽपि समर्थसूत्रे 'उद्गातारः' इति भाष्यप्रयोगादेव दीर्घ इत्युक्तं प्राक्। तदेतत् स्मारयति—**उद्गातारा विति। पितेति**। धातृवदनङादि। सर्वनामस्थाने तु 'ऋतो ङि—' इति गुणः अकारः, रपरत्वम्। 'अप्तृन्—' इति दीर्घस्तु नेत्याह—**व्युत्पत्तीति**। पातीति पिता।

---

इति पाठ इत्यर्थः। एवं च ह्रस्वपाठे कारपूर्वस्योवङेव, दीर्घपाठे तु करपूर्वस्योवङिति विवेकः। 'पुनर्भूर्दिधिषूरूढा द्विः' इत्यमरोक्तेः पुनर्भूशब्दो नित्यस्त्रीलिङ्गः। तथा च स्त्रीलिङ्गप्रकरण एव वक्तुमुचितो न त्वत्रेत्याशङ्कायामाह—**यौगिकः पुंसीति**। पुनर्भवतीति पुनर्भूरिति क्रियाशब्दः पुँल्लिङ्गेऽप्यस्तीत्यर्थः। **स्वयंभूर्वा ति**। प्राचा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दीर्घः। पितरौ, पितरः। पितरम्, पितरौ। शेषं धातृवत्। एवं जामातृभ्रात्रादयः। ना, नरौ, नरः। हे नः। २८३ नृ च। (६-४-६) 'नृ' इत्येतस्य नामि वा दीर्घः स्यात्। नृणाम्, नृणाम्॥ इत्यृदन्ताः॥ 'कॄ' 'तॄ' अनयोरनुकरणे 'प्रकृति-

तृच्प्रत्ययः, इट् आकारलोपश्चेति व्युत्पत्तिर्बोध्या। अव्युत्पत्तिपक्षे तु अप्तृन्तृजादिष्वनन्तर्भावाद् दीर्घशङ्कैव नास्तीति भावः। पितरौ, पितरः। पितरम्, पितरौ, पितॄन् इत्यादि धातृवत्। **एवं जामातृभ्रात्रादय इति**। उणादिषु 'नप्तृनेष्टृत्वष्टृहोतृपोतृभ्रातृजामातृमातृपितृदुहितृ' इति सूत्रे पितृजामातृभ्रातृशब्दा व्युत्पादिताः। तत्र पितृशब्दस्य व्युत्पत्तिरुक्ता। भ्राजेस्तृनि तृचि वा जलोपः। भ्राता, जायां मातीति जामाता, तृन्प्रत्ययः तृज्वा, यालोपश्च। अनयोरप्यौणादिकयोर्नप्त्रादिष्वनन्तर्भावाद् न दीर्घ इत्यर्थः। आदिना मन्तृ हन्तृ इत्यनयोर्ग्रहणम्, तयोरुणादिषु 'तृन्तृचौ शंसिक्षदादिभ्यः' इति प्रकरणे 'बहुलमन्यत्रापि' इत्यत्र उदाहृतत्वात्। **नेति**। नृशब्दो मनुष्यवाची, तस्मात् सुः, 'ऋदुशनस्-' इत्यनङ्, 'अप्तृन्-' इति सूत्रे अनन्तर्भावात् 'सर्वनामस्थाने च-' इति नान्तत्वप्रयुक्तो दीर्घः, हल्ङ्यादिलोपः, नलोपः, ना इति रूपम्। **नरौ, नर इति**। 'ऋतो ङि-' इति गुणो रपरः। अप्तृन्नाद्यनन्तर्भावाद् नान्तत्वाभावाच्च न दीर्घः। **हे नः इति**। 'ऋतो ङि-' इति गुणो रपरः। हल्ङ्यादिलोपो विसर्गश्च। नरम्, नरौ। शसि पूर्वसवर्णदीर्घ ऋकारः, नत्वम्, नॄन्। टादावचि यण् रेफः। त्रा। त्रे। ङसिङसोः 'ऋत उत्' रपरः, सलोपः, विसर्गश्च, नुः। नुः, त्रोः। आमि नुट्, 'नामि' इति नित्यं दीर्घे प्राप्ते। **नृ च**। नृ इति लुप्तषष्ठीकम्। 'नामि' इति सूत्रमनुवर्तते। 'ढ्रलोपे-' इत्यतो दीर्घ इत्यनुवर्तते। 'छन्दस्युभयथा' इत्यतः उभयथेत्यनुवर्तते। तदाह—**नृ इत्येतस्येत्यादिना। नॄणाम्, नृणाम् इति**। 'ऋवर्णान्नस्य-' इति णत्वम्। ङौ 'ऋतो ङि-' इति गुणः, रपरत्वम्, नरि। त्रोः, नृषु। ॥ इत्यृदन्ताः ॥

**अथ ॠदन्ता निरूप्यन्ते—कॄ इत्यादिना**। कॄ तॄ इत्यनयोरनुकरणे

तु दृन्भूकाराभूशब्दौ वर्षाभूवदुदाहृतौ, तदुपेक्ष्यमिति भावः॥ इत्यूदन्ताः॥ **धातेति**। दधातीति धाता-अब्जयोनिः। डुधाञस्तृच् तृन् वा, अनङ्दीर्घसुलोपनलोपाः। **व्युत्पत्तिपक्ष इति**। अव्युत्पत्तिपक्षे दीर्घशङ्कैव नास्ति, अबादिष्वपठनादिति भावः। **नेति**। 'नयतेर्डिच्च' इति ऋप्रत्ययान्तो नृशब्दः। अनङादि प्राग्वत्। **नृ च**। इह 'छन्दस्युभयथा' इति सूत्रादुभयथेत्यनुवर्तत इत्यभिप्रेत्याह—**वा दीर्घः स्यादिति**। केचित्त्विह छन्दसीत्यप्यनुवर्तयन्ति, तेषां हि 'चिन्ताजर्जरचेतसां बत नृणां का नाम शान्तेः कथा' 'नृणामेको गम्यस्त्वमसि-' इत्यादिप्रयोगा न संगच्छेरन्। किं च 'छन्द-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वदनुकरणम्' ( प ३७ ) इति वैकल्पिकातिदेशादित्त्वे रपरत्वे कीः, किरौ, किरः। तीः, तिरौ, तिर इत्यादि गीर्वत्। इत्त्वाभावपक्षे तु 'ऋदुशनस्–' ( सू २७४ )

---

इत्त्वे रपरत्वे इत्यन्वयः। 'कॄ विक्षेपे' 'तॄ प्लवनतरणयोः'। कॄ तॄ इत्याभ्यां शब्दाभ्याम् अनुकरणे क्रियमाणे अनुकरणभूताभ्यां ताभ्यां धातुपाठपठितौ कॄ तॄ इत्येतौ विवक्षितौ। अत एवानुकरणस्य अनुकार्यमर्थः। अनुकार्यं च अनुकरणाद् भिन्नमिति 'मतौ छः–' इति सूत्रभाष्ये स्थितम्। आनुपूर्व्यव्यत्ययेऽपि वाचकसादृश्याद् अर्थोपस्थापकत्वमिति अत्र कैयटे, 'प्राग्दीव्यतोऽण्' इत्यत्र भाष्ये च स्पष्टमेतत्। ततश्च अनुकार्याभ्यां कॄ तॄ इत्याभ्याम् अनुकरणभूतयोः कॄ तॄ इत्यनयोरर्थवत्त्वेन प्रातिपदिकत्वात् सुबुत्पत्तिः। ननु अनुकरणभूतयोरनुकार्यशब्दस्वरूपवाचकत्वात् क्रियावाचकत्वाभावेन धातुत्वाभावात् 'ॠत इद्धातोः' इति कथमित्वम्। न च 'प्रकृतिवदनुकरणम्' इति वचनाद् अनुकरणभूतयोः धातुत्वमिति वाच्यम्, एवं सति अधातुरिति धातुपर्युदासात् प्रातिपदिकत्वानुपपत्तेरित्यत आह—**प्रकृतिवदनुकरणमिति वैकल्पिकातिदेशादिति**। 'यत्तदेतेभ्यः परिमाणे वतुप्' इत्यत्र त्यदाद्यत्वनिर्देशात् 'त्यदादीनि सर्वैर्नित्यम्' इत्येकशेषाकरणाद् 'ओ यङि' 'क्षियो दीर्घात्' इत्यादौ धात्वनुकरणे विभक्तिनिर्देशाच्च प्रकृतिवदनुकरणमिति पाक्षिकम्। ततश्चात्रातिदेशभावमादाय धातुत्वाद् 'ॠत इद्धातोः' इतीत्त्वम्। अतिदेशाभावमादाय धातुत्वाभावात् प्रातिपदिकत्वात् सुबुत्पत्तिश्च न विरुध्यत इति भावः। **कीरिति**। कॄधातुरित्यर्थः। ॠकारस्य इत्त्वे रपरत्वे 'र्वोरुपधायाः–' इति दीर्घः, सोर्हल्ङ्यादिलोपः, विसर्गश्च। **किराविति**। अपदान्तत्वात् 'र्वोः–' इति न दीर्घः। **तीरिति**। तॄ धातुरित्यर्थः। **गीर्वदिति**। गीः शब्दवद्रूपाणीत्यर्थः। किरम्, किरौ, किरः। किरा, कीर्भ्याम्, कीर्भिः। किरे। किरः। किरोः। कीर्षु। भ्यामादौ 'स्वादिष्वसर्वनामस्थाने' इति पदत्वाद् दीर्घः। **इत्त्वाभावेति**। प्रकृतिवदनुकरणमित्यस्यानित्यत्वाद् अनुकरणस्य धातुत्वाभावाद् 'ॠत इद्धातोः' इति इत्त्वाभावे सतीत्यर्थः।

---

स्युभयथा' इति पूर्वसूत्रेणैव नृणां नॄणामिति सिद्धे 'नृ च' इति सूत्रस्य वैयर्थ्यं स्यात्। यदपि पूर्वसूत्रे तिसृचतसृ इत्यनुवर्तयन्ति, तदप्ययुक्तम्। अविशेषेण विकल्पदर्शनात्। तथा च 'धाता धातृणाम्' इति मन्त्रे तैत्तिरीयैर्ह्रस्वः पठ्यते, बह्वृचैस्तु दीर्घ इति दिक्॥ इत्यृदन्ताः॥ **प्रकृतिवदनुकरणमित्यादि**। 'यत्तदेतेभ्यः परिमाणे' इति निर्देशोऽत्र लिङ्गम्। भवति हि तत्र त्यदाद्यत्वकरणादनुकरणस्य प्रकृतिवत्त्वम्, एकशेषाभावदर्शनाच्च वैकल्पिकत्वमिति। **इत्त्वे रपरत्वमिति**। 'ॠत इद्धातोः' इतीत्वे 'उरण् रपरः' इति रपरत्वम्। **कीरिति**। कॄधातुरित्यर्थः। एवं **तीरिति**। तॄ धातुः। **इत्यादीति**। 'ॠत उत्' इति तपरकरणाद् ङसिङसोरत उदादेशो न, क्रः। दीर्घा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति 'ऋतो ङि–' ( सू २७१ ) इति च तपरकरणादनङ्गुणौ न । कॄः, क्रौ, क्रः । कॄम्, क्रौ, कॄन् । क्रा । क्रे इत्यादि ॥ इत्यॄदन्ताः ॥ 'गम्लृ' 'शक्लृ' अनयोरनुकरणे अनङ् । गमा । शका । गुणविषये तु लपरत्वम् । गमलौ, गमलः । गमलम्, गमलौ, गमॄन् । गम्ला । गम्ले । ङसिङसोस्तु 'ऋत उत्' (सू २७६) इत्युत्त्वे लपरत्वे 'संयोगान्तस्य लोपः' ( सू ५४ ) । गमुल् । शकुल् इत्यादि ॥ इति लृदन्ताः ॥ इना सह वर्तते इति सेः । सयौ सयः । स्मृतेः । स्मृतयौ स्मृतयः ।

---

**अनङ्गुणौ नेति** । 'ऋत् उत्' इत्युत्त्वमपि तपरकरणान्नेति द्रष्टव्यम् । अत एव 'ओ यङि' इत्यादिनिर्देशाः संगच्छन्ते । **कॄरिति** । कॄधातुरित्यर्थः । क्रौ क्र इत्यादौ यण् । **इत्यादीति** । क्रः । क्रः, क्रोः, क्राम् । क्रि ॥ इत्यॄदन्ताः ॥

**अथ लृदन्ता निरूप्यन्ते । गम्लृ शक्लृ इति** । 'गम्लृ गतौ' 'शक्लृ शक्तौ' अजन्तौ धातू । **अनङिति** । 'ऋदुशनस्–' इत्यनेनेति शेषः । ऋलृवर्णयोः सावर्ण्यादिति भावः । **गुणविषये त्विति** । ङौ सर्वनामस्थाने च 'ऋतो ङि–' इति गुणः अकारः, लपर इत्यर्थः । 'उरण् रपरः' इत्यत्र रप्रत्याहारग्रहणादिति भावः । **गमॄनिति** । लृवर्णस्य दीर्घाभावाद् ऋवर्ण एव पूर्वसवर्णदीर्घे नत्वमिति भावः । **ङसिङसोस्त्विति** । गम्लृ अस् इति स्थिते ऋत उत्, लपरः । गमुल् स् इति स्थिते 'संयोगान्तस्य लोपः' गमुल् इति रूपम् । **इत्यादीति** । गम्लृभ्याम् । गम्लृभिः । गम्लृभ्यः । गम्लृभ्यः । आमि तु गमॄणाम् । गमलि, गम्लोः, गम्लृषु । वस्तुतस्तु 'उरण् रपरः' इत्यत्र अजिति वक्तव्ये अण्ग्रहणसामर्थ्याद् अण् पूर्वेणैवेत्युक्तं भाष्ये । यदि लृकारस्य यण् लकारः स्यात् तर्हि लपरत्वार्थं परेणाण्ग्रहणस्यावश्यकत्वात् तदसंगतिः स्पष्टैव । तस्मादेवंजातीयकानां प्रयोगो न भाष्यसंमत इत्याहुः ॥ इति लृदन्ताः ॥

**अथ एदन्ता निरूप्यन्ते । इनेति** । अः–विष्णुः, तस्यापत्यम् इः । 'अत इञ् ।' 'यस्येति च' इत्यकारलोपः । इना सहेत्यर्थे 'तेन सहेति तुल्ययोगे' इति बहु-

---

न्तत्वादामो न नुट्, क्राम् । ङौ तु क्रि इत्यादि ॥ इत्यॄदन्ताः ॥ **अनङिति** । ऋलृवर्णयोः सावर्ण्याद् 'ऋदुशन–' इति सूत्रप्रवृत्तेः । **गुणविषय इति** । 'ऋतो ङि–' इति गुणविषये । **गमॄनिति** । लृवर्णस्य दीर्घाभावात् 'प्रथमयोः–' इति यः पूर्वसवर्णदीर्घः स लृकाराकारयोः स्थाने ऋकार एव भवति । नन्वत्र लकारद्वयगर्भो लृकारो दीर्घोऽस्त्विति चेत्, अत्राहुः—'प्रथमयोः पूर्वसवर्णः' इत्यस्याकः प्रथमाद्वितीययोरचि पूर्वस्य सवर्णो यो दीर्घः स पूर्वपरयोः स्थाने भवतीत्यर्थाद् ऋलृवर्णयोर्वचनेन सावर्ण्यसद्भावाद् ऋकार एव लृकाराकारयोः स्थाने भवति, न तु लकारद्वयगर्भो दीर्घः, तस्य ईषत्स्पृष्टप्रयत्नत्वात् प्रयत्नभेदेन लृकारसावर्ण्याभावादिति । एवं च होतृनित्यादौ

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

व्रीहिः। 'वोपसर्जनस्य' इति सत्त्वम्। 'आद् गुणः' से इति रूपम्। ततः सुः, रुत्वविसर्गौ, सेः। एवं स्मृतेः। स्मृत इः कामो येनेति विग्रहे 'अनेकमन्यपदार्थे' इति बहुव्रीहिः। न च एकादेशस्य पूर्वान्तत्वात् से इत्यस्य अव्ययत्वाद् 'अव्ययादाप्सुपः' इति लुक् शङ्क्यः, अव्ययमिति महासंज्ञया लिङ्गाद्यनन्वितार्थकस्यैव अव्ययत्वात्। अजादौ अयादेशं मत्वाह—**सयौ, सय इति**। 'एङ्ह्रस्वात्–' इति संबुद्धिलोपः,

---

रेफद्वयगर्भो दीर्घ ऋकाराकारयोः स्थाने न भवत्येवेति बोध्यम्। **इत्यादीति**। गम्लृभ्याम्। गम्लृभिः। गम्लृभ्यः। आमि तु गमॄणामिति केचित्। वस्तुतस्तु लृकारस्थाने लृकारद्वयगर्भेणैव दीर्घेण भवितव्यम्, स्थानत आन्तर्यस्य बलीयस्त्वात्। होतॄणामित्यत्र तु ॠकार एव भवति, स्थानप्रयत्नोभयसाम्यात्। स्यादेतत्—रेफद्वययुक्तस्य लकारद्वययुक्तस्य चेषत्स्पृष्टप्रयत्नत्वात् प्रयत्नभेदेन ऋलृवर्णाभ्यां सावर्ण्याभावेनाच्त्वाभावाद् 'ऊकालोऽच्–' इत्यादिना दीर्घसंज्ञा नास्तीति कथमत्र लकारद्वयगर्भेण भवितव्यम्, 'ऋति ऋ वा' 'लृति लृ वा' इति वार्तिकप्रत्याख्यानं वा कथं संगच्छताम्, 'अकः सवर्णे–' इत्यनेन इष्टरूपाणामसिद्धेः। अत्राहुः—उभयोरप्यच्त्वसिद्धये वर्णसमाम्नाये 'ऋलृक्' सूत्रोत्तरं पाठः कर्तव्यः, तेन सर्वेष्टसिद्धिः। न च दीर्घत्वसिद्धावपि विवृतप्रयत्नसाम्याद् होतृॠकार इत्यत्र ऋकारो दीर्घ एव स्यात्, न तु रेफद्वययुक्तो दीर्घ इति शङ्क्यम्। ऋकारद्वयस्थाने रेफद्वयवतः साम्येन कदाचित्तस्यापि प्रवृत्तेः। होतृलृकार इत्यत्र लृकारेण आन्तर्यात्कदाचिल्लकारद्वययुक्तः कदाचिदृकारेण आन्तर्यादृकारश्च भवति। परन्तु वार्तिकमते होतृॠकार इत्यत्र रेफद्वयगर्भो न भवति। प्रत्याख्यानपक्षे तु कदाचिद्भवतीति वैषम्यमस्ति। तत्रेष्टापत्तिर्वा प्रत्याख्यानस्य प्रौढिवादमात्रता वा अभ्युपगन्तव्येति। अत्रेदं बोध्यम्—'अकः सवर्णे–' इति सूत्रस्थभाष्ये 'ऋति ऋ वा' 'लृति लृ वा' इत्येतन्न प्रत्याख्यातम्, 'तुल्यास्य–' इति सूत्रस्थभाष्ये तु तस्य प्रत्याख्यानेऽपि फलभेदे तदयोगात्। स्वीकृते तु तस्मिन् 'अकोऽकीत्येव सुवचम्' इति ग्रन्थोऽनुपपन्न एव। यदि तु 'ऋति ऋ वा' इति वार्तिकम् 'उर्ऋत्' 'ऋ वा' इति पठ्यते, तदा वार्तिकयोः सवर्ण इति पदानुवृत्त्यनपेक्षणात्सुवचमेवाऽकोकीति। प्रकृतमनुसरामः। ङौ तु 'ऋतो ङि–' इति गुणो लपरः। गमलि। गम्लोः। गम्लृषु। एवं शक्लृशब्देऽप्यूह्यम्॥ इति लृदन्ताः॥ **सेरिति**। अस्यापत्यम् इः—कामः, अस्य स्त्री ई—लक्ष्मीः, तेन तया वा सह वर्तत इति विग्रहे 'तेन सहेति तुल्ययोगे' इति बहुव्रीहौ 'वोपसर्जनस्य' इति सहस्य सभावे 'आद् गुणः'। **सय इति**। ननु से इत्येकारस्य अन्तवद्भावेन पदान्तत्वादयादेशं बाधित्वा जसि परतः 'एङः पदान्तात्–' इति पूर्वरूपमेकादेशः स्यात्, तथा च सेरित्येव रूपं स्यात्, न तु सय इति चेत्। अत्र केचित्—एवं तर्हि 'थासः से' 'ईशः से' इति विहितादेशस्यानुकरणशब्दोऽयमस्तु, तत्र हि जसि परतोऽयादेशस्य निर्बाधत्वादिति। **स्मृतेरिति**। इः—कामः स्मृतो येन सः, ई—लक्ष्मीः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

॥ इत्येदन्ताः ॥ २८४ गोतो णित्। (७-१-९०) गोशब्दात्परं सर्वनामस्थानं

हे से। नन्वेवं सति हे हरे इत्यत्र संबुद्धिलोपो न स्यात्, संबुद्धिं परनिमित्तमाश्रित्य प्रवृत्तस्य गुणस्य संबुद्धिविघातकं सुलोपं प्रति संनिपातपरिभाषया निमित्तत्वायोगात्। न चैवं सत्येङ्ग्रहणवैयर्थ्यं शङ्क्यम्, हे से इत्यत्र चरितार्थत्वादिति चेत्, शृणु—हे हरे इत्यत्र संबुद्धिरूपस्य स्वोपजीव्यगुणविघात्यत्वमेव नास्ति। सत्यपि तल्लोपे प्रत्ययलक्षणमाश्रित्य संबुद्धिसत्त्वात्, तेन च गुणस्य निर्बाधत्वात्। केचित्तु 'गुणात् संबुद्धेः' इत्यनुक्त्वा 'एङ्ह्रस्वात्—' इत्युक्तेः संनिपातपरिभाषां बाधित्वापि संबुद्धिलोपः प्रवर्तत इत्याहुः। न च जसि सय इति कथम्, अन्तर्वर्तिविभक्त्या से इत्यस्य पदत्वेनायादेशं बाधित्वा 'एङः पदान्तात्—' इति पूर्वरूपापत्तेरिति वाच्यम्, 'उत्तरपदत्वे चापदादिविधौ—' इति प्रतिषेधात्। उत्तरपदस्य तद्घटितस्य वा पदत्वे कर्तव्ये अन्तवर्तिर्विभक्तेः प्रत्ययलक्षणं नास्तीति हि तदर्थः। सेनासेवकादिशब्दगतस्य से इत्यस्य अनुकरणं वा अस्तु। तत्र जसि अयादेशस्य निर्बाधत्वात् ॥ इत्येदन्ताः ॥

अथ ओदन्ता निरूप्यन्ते। गो स् इति स्थिते। **गोतो णित्।** गोत इति तपरकरणम्। 'इतोऽत् सर्वनामस्थाने' इत्यतः सर्वनामस्थाने इत्यनुवृत्तं प्रथमया

स्मृता येनेति वा विग्रहः। 'निष्ठा' इति स्मृतशब्दस्य पूर्वनिपातः। **स्मृतय इति।** नन्वत्र पूर्वोक्तरीत्या 'एङः पदान्तादति' इति पूर्वरूपेण भाव्यम्, न त्वयादेशेन, न ह्यत्रानुकरणशब्दत्वकल्पनमौचित्यं लभत इति चेत्। अत्र नव्याः—'उत्तरपदत्वे चापदादिविधौ प्रतिषेधः' इति प्रत्ययलक्षणप्रतिषेधाद् 'एङः पदान्तादति' इत्यस्याप्रवृत्तिः। किं च 'स्वादिष्वसर्वनामस्थाने' 'यचि भम्' इत्यत्र भाष्यकृता स्वादिषु पूर्वं पदसंज्ञं भवतीति व्याख्याय ततोऽसर्वनामस्थाने यचीति छित्त्वा नञं च क्रियया संबध्य यजादौ सर्वनामस्थाने परतः पूर्वं पदसंज्ञं न भवतीति व्याख्यातम्। ततश्चानेन 'सुप्तिङन्तम्—' इति 'स्वादिषु—' इति च द्विविधापि संज्ञा निषिध्यत इति पूर्वान्तत्वप्रयुक्ता पदान्ततेह दुर्लभेति स्मृतय इति रूपं निर्बाधमेव। तथा सय इत्यत्र इना सहेत्यादिव्युत्पत्तिपक्षेऽपि नानुपपत्तिः। न चैकादेशस्य पूर्वान्तत्वेनाव्ययत्वात्सुपो लुक् स्यादिति शङ्क्यम्। अव्ययसंज्ञाया अन्वर्थत्वेनोपसर्जने तदभावात्। न चैवमपि सह इ इति स्थिते अन्तरङ्गत्वाद् गुणे कृते सहशब्दस्य सादेश एव न स्यात्, एकादेशस्य परादिवद्भावे सहशब्दाभावात्पूर्वान्तत्वे तूत्तरपदत्वाभावात्, उभयत आश्रयणे अन्तादिवद्भावनिषेधाच्च। अस्तु वा सहशब्दस्य सभावः, तथापि स इत्यदन्तमेव रूपं स्यात्, न तु से इत्येदन्तमिति

१ यद्यपि गुणो न संबुद्धिरूपस्य उपजीव्यः, प्रत्युत उपजीवकः, तदाश्रित्य तत्प्रवृत्तेः, तथापि उपजीव्येत्यत्र ण्यन्ताज्जीवेर्यत्प्रत्ययं मत्वा स्वेन-संबुद्धिरूपेण, उपजीव्यः-जनितात्मलाभः, यो गुणस्तेनेति व्याख्येयम्। स्वं संबुद्धिरूपमुपजीव्यं यस्येति बहुव्रीहिर्वा।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

णिद्वत्स्यात् । गौः, गावौ, गावः । २८५ **औतोऽम्शसोः । ( ६-१-९३ )** 'आ ओतः' इति च्छेदः । ओकारादम्शसोरचि परे आकार एकादेशः स्यात् । शसा साहचर्यात्सुबेव अम् गृह्यते । नेह—अचिनवम् , असुनवम् । गाम् , गावौ, गाः ।

---

विपरिणम्यते । तदाह—**गोशब्दादित्यादिना । णिद्वत्स्यादिति** । णिति परे यत् कार्यं तत्कार्यकारीत्यर्थः । **गौरिति** । णिद्वत्त्वे 'अचो ञ्णिति' इति वृद्धिः औकारः । रुत्वविसर्गाविति भावः । **गावौ, गाव इति** । णिद्वत्त्वे वृद्धिः आवादेशश्चेति भावः । हे गौः । वृद्धौ एङः परत्वाभावाद् न संबुद्धिलोपः । अमि गो अम् इति स्थिते णिद्वत्त्वाद् वृद्धौ प्राप्तायाम् । **औतोऽम्शसोः । छेद इति** । आ ओत इति च्छेदो व्याख्यानादिति भावः । ओत इति तपरकरणम् । ओकारादित्यर्थः । अम् च शस् च अम्शसौ, तयोरिति विग्रहः । अवयवषष्ठ्यन्तमेतत् । 'इको यणचि' इत्यतः अचीत्यनुवर्तते । 'एकः पूर्वपरयोः' इत्यधिकृतम् । तदाह—**ओकारादित्यादिना** । शस् इह सुबेव गृह्यते, न तु 'बह्वल्पार्थात्—' इति तद्धितः शस्, अचीत्यनुवृत्तेः, तद्धितस्य च शसः अजादित्वासंभवाद् 'लशक्वतद्धिते' इत्यत्र तद्धितपर्युदासात् । ननु 'चिञ् चयने' लङ्, अडागमः, उत्तमपुरुषो मिप् । 'तस्थस्थमिपाम्—' इति तस्य अमादेशः । श्नुर्विकरणः । 'सार्वधातुकार्धधातुकयोः' इति गुण ओकारः । अचिनो अम् इति स्थिते अवादेशं बाधित्वा 'औतोऽम्शसोः' इत्यात्वे 'अचिनाम्' इति स्यादित्यत आह—**शसेति । गामिति** । परापि 'अचो ञ्णिति' इति वृद्धिरिह न भवति, आत्वस्य निरवकाशतया तदपवादत्वादिति भाष्यम् । न हि वृद्धिविषयादन्यत्र आत्वस्य प्रवृत्तिरस्तीति तदाशयः । न च द्योशब्दादमि आत्वं सावकाशम्, 'गोतो णित्' इति णित्त्वस्य तत्राभावे वृद्धेरप्रसक्तेरिति वाच्यम् । अस्मादेव भाष्याद् 'ओतो णित्' इति णित्त्वस्य वक्ष्यमाणत्वेन तस्यापि वृद्धिविषयत्वादिति भावः ।' **गा इति** । असर्वनामस्थानत्वान्न

---

शङ्क्यम्, 'नेन्द्रस्य परस्य' इत्युत्तरपदवृद्धिप्रतिषेधेन 'पूर्वोत्तरपदयोः प्रथमं कार्यं भवति, तत एकादेशः' इति सामान्यज्ञापनादित्याहुः । **गोतो णित्** । 'इतोऽत्सर्वनामस्थाने' इत्यतोऽनुवृत्तं सप्तम्यन्तं सर्वनामस्थानग्रहणं प्रथमया विपरिणम्यते, णिदित्यनेन सामानाधिकरण्यात्, तदाह—**सर्वनामस्थानमिति । णिद्वत्स्यादिति** । णिति परे पूर्वस्य यत्कार्यं तत्करोतीत्यर्थः । **गौरित्यादि** । चित्रगुरित्यत्र तु न भवति, ओत इति वक्ष्यमाणत्वात् । तद्धितो यः शस् स ओकारान्तान्न संभवतीत्याशयेनाह—**शसा साहचर्यादिति** । 'सुपि' इत्यनुवर्तनाच्चेत्यपि काशिकायामुक्तम् । कैयटस्तु तद्धितोऽपि शसस्तीति कथमिह साहचर्यादमः सुप्त्वमित्याशङ्क्य अचीत्यधिकारादजादिः शस् सुबेव संभवति, न तु तद्धित इत्याह—**अचिनवमिति** । चिनोते-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गवा। गवे। गोः-इत्यादि। ओतो णिदिति वाच्यम्। विहितविशेषणं च। तेन सुद्यौः,सुद्यावौ, सुद्यावः। सुद्यामित्यादि। 'ओकारान्ताद्विहितं सर्वनामस्थानम्' इति व्याख्यानान्नेह-हे भानो, हे भानवः। उः-शम्भुः स्मृतो येन स स्मृतौः, स्मृता-

---

णिद्वत्त्वम्। नापि वृद्धिः। 'औतोऽम्शसोः' इत्यात्वमिति भावः। टादावचि अवादेशं मत्वाह—**गवा, गवे इति। गोरिति।** 'ङसिङसोश्च' इति पूर्वरूपमिति भावः। **इत्यादीति।** गवोः, गवाम्, गवि इत्यादिशब्दार्थः। द्योशब्द ओकारान्तः स्त्रीलिंगः। 'सुरलोको द्योदिवौ द्वे स्त्रियाम्' इत्यमरः। सु-शोभना द्यौः यस्येति बहुव्रीहौ पुँल्लिङ्गः। सुद्यो स् इत्यादिसर्वनामस्थाने 'गोतो णित्' इत्यप्राप्ते। **ओतो णिदिति वाच्यम्।** गोत इति गकारमपनीय 'ओतो णित्' इति वाच्यमित्यर्थः। तत्र प्रमाणमनुपदमेवोक्तम्। नत्विदं वार्तिकम्। तत्र ओत् इति तपरकरणम्। ओकारात् सर्वनामस्थानं णिदिति लभ्यते। **विहितेति।** ओकाराद्विहितं सर्वनामस्थानमित्येवमोत इत्येतद्विहितविशेषणमाश्रयणीयमित्यर्थः। **तेनेति।** गोतः इति गकारमपनीय ओत इति वचनेनेत्यर्थः। **सुद्यामित्यादीति।** गोशब्दवद्रूपाणीति भावः। **हे भानो इति।** ओकारात् परं सर्वनामस्थानं णिदिति व्याख्याने तु भानुशब्दात् सम्बुद्धौ 'ह्रस्वस्य गुणः' इति गुणे ओकारे सति, सोः ओकारात् परत्वाद् णिद्वत्त्वे, वृद्धौ औकारे, एङः परत्वाभावात् सुलोपाभावे रुत्वविसर्गयोः हे भानौः इति स्यात्। अतो विहितविशेषणमित्यर्थः। ननु 'एङ्ह्रस्वात् सम्बुद्धेः' इत्यत्र एङ्ग्रहणसामर्थ्यादेव हे भानोः इत्यत्र णित्वं तत्प्रयुक्तवृद्धिश्च न भवति। अन्यथा 'एद्ध्रस्वात्-' इत्येव ब्रूयात्। अतो विहितविशेषणमनर्थकमित्यस्वारस्यादाह—**हे भानव इति।** तत्र 'जसि च' इति गुणे भानो अस् इति स्थिते ओतः परत्वाण्णिद्वत्त्वे वृद्धौ आवादेशे भानाव इति स्यात्। अतो विहितविशेषणमिति भावः। वस्तुतस्तु लक्षणप्रतिपदोक्तपरिभाषया हे भानो, हे भानव इत्यत्र णिद्वत्त्वाभावोपपत्तेः विहितविशेषणत्वाश्रयणं व्यर्थमेव। **उः शम्भुरिति।** उः इत्यस्य विवरणं शम्भुरिति। उः स्मृतो येनेति विग्रहे बहुव्रीहिः। 'निष्ठा' इति स्मृतशब्दस्य पूर्वनिपातः। आद् गुणः। स्मृतो इति रूपम्। ततः सुबुत्पत्तौ गोशब्दवद्रूपाणि। वस्तुतस्तु 'गोतो णित्' इति सूत्रशेषतया 'द्योश्च वृद्धिर्वक्तव्या' इत्येव वार्तिकं भाष्ये दृश्यते। 'औतोऽम्शसोः' इत्यत्र ओतो णिदिति तु न दृश्यते। अतोऽन्यदोकारान्तं प्रातिपदिकं नास्तीत्याहुः॥ इत्योदन्ताः॥

**अथैदन्ता निरूप्यन्ते।** रैशब्दो धनवाची। 'अर्थरैविभवा अपि' इत्यमरः,

---

लङादेशस्य मिपः 'तस्थस्थमिपाम्-' इत्यम्। **ओतो णिदिति वाच्यमिति।** गोत इत्यपहाय ओत इति वाच्यमित्यर्थः। एवं च गामित्यत्र परत्वाद् वृद्धिः स्यादिति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वौ, स्मृतावः । स्मृतावम्, स्मृतावौ, स्मृताः—इत्यादि ॥ इत्योदन्ताः ॥ २८६ रायो हलि । ( ७-२-८५ ) रैशब्दस्य आकारोऽन्तादेशः स्याद्धलि विभक्तौ । राः । अच्यायादेशः । रायौ, रायः । रायम्, रायौ, रायः । राया, राभ्यामित्यादि ॥ इत्यैदन्ताः ॥ ग्लौः, ग्लावौ, ग्लावः । ग्लावम्, ग्लावौ, ग्लावः—इत्यादि । 'औतोऽम्शसोः' ( सू २८५ ) इतीह न प्रवर्तते । 'ऐऔच्' ( म सू ४ ) इति सूत्रेण ओदौतोः सावर्ण्याभावज्ञानात् ॥ इत्यौदन्ताः ॥

इत्यजन्तपुँल्लिङ्गप्रकरणम् ।

---

तस्य हलादिविभक्तिषु विशेषं दर्शयति—**रायो हलि** । राय इति रैशब्दस्य षष्ठ्यन्तम् । 'अष्टन आ विभक्तौ' इत्यत आ इति विभक्ताविति चानुवर्तते । हलीत्यनेन विभक्ताविति विशेष्यते । तदादिविधिः । तदाह—**रैशब्दस्येत्यादिना** । हल्ग्रहणादचि आत्वं न, किं तु आयादेश एवेत्यत आह—**अचीति** । राः । आत्वे रुत्वविसर्गौ । अचि आयादेशमुदाहरति—**रायौ, राय इति** । **इत्यादीति** । राभिः । राये, राभ्याम्, राभ्यः । रायः, राभ्याम्, राभ्यः । रायः, रायोः, रायाम् । रायि, रायोः, रासु । रैशब्दः छान्दस इति भाष्यम् । क्यजन्त एव छान्दस इति पक्षान्तरम् ॥ इत्यैदन्ताः ॥

**अथ औदन्ता निरूप्यन्ते** । ग्लौशब्दश्चन्द्रवाची । 'ग्लौर्मृगाङ्कः कलानिधिः' इत्यमरः । तस्य हलादौ न कश्चिद्विकारः । अचि तु आवादेश इति मत्वाह—**ग्लौः, ग्लावौ, ग्लाव इति** । ग्लावम्, ग्लावौ, ग्लावः । ग्लावा, ग्लौभ्याम्, ग्लौभिः । ग्लावे, ग्लौभ्याम्, ग्लौभ्यः । ग्लावः, ग्लौभ्याम्, ग्लौभ्यः । ग्लावः, ग्लावोः, ग्लावाम् । ग्लावि, ग्लावोः, ग्लौषु । ननु 'औतोऽम्शसोः' इत्यत्र ओद्ग्रहणेन सावर्ण्यादौकारस्यापि ग्रहणाद् अम्शसोर्ग्लौशब्दस्य आत्वं कुतो न स्यादित्यत आह—**औतोऽम्शसोरितीह न प्रवर्तत इति** । 'ऐऔच्' इत्यादिग्रन्थस्तु संज्ञाप्रकरणे व्याख्यातः । एवं जनानवतीति जनौः । क्विप् । 'ज्वरत्वर–' इत्यूठ् । 'एत्येधति–' इति वृद्धिः । जनावौ । जनाव इत्यादि ॥ इत्यौदन्ताः ॥

इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमायां अजन्तपुँल्लिङ्गनिरूपणं समाप्तम् ॥

---

शङ्काया अनवकाशः, निरवकाशतया आत्वेन वृद्धेरेव बाधनात् ॥ इत्योदन्ताः ॥ **रायो हलि** । 'अष्टन आ विभक्तौ' इत्यत आ इति विभक्ताविति च वर्तते तदाह—**आकारोऽन्तादेश इति** । 'अर्थरैविभवा अपि' इत्यमरः । 'रायिश्छान्दसः' इति भाष्यम्, तच्च क्यजन्तस्य रैशब्दस्य छान्दसत्वपरं न तु केवलस्यापीति 'वान्तो यि–' इति सूत्रे कैयटः । स एव केवलोऽपि छान्दस इति पक्षान्तरमप्याह ॥ इत्यैदन्ताः ॥ **ग्लौ-**

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# अथाजन्तस्त्रीलिङ्गप्रकरणम् ।६।

रमा । २८७ औङ आपः । (७-१-१८) आबान्तादङ्गात्परस्यौङः शी

अथ अजन्तस्त्रीलिङ्गा निरूप्यन्ते । **रमेति** । रमत इति रमा । 'रमु क्रीडायाम्' पचाद्यचि 'अजाद्यतष्टाप्' प्रत्ययान्तत्वादप्रातिपदिकत्वेऽपि 'ङ्याप्प्रातिपदिकात्' इति ङ्यापोः पृथग्ग्रहणात्, लिङ्गविशिष्टपरिभाषया वा स्वादयः । 'हल्ङ्याप्–' इति सुलोपः । अथ रमा औ इति स्थिते—**औङ आपः** । आप इति पञ्चमी । प्रत्ययग्रहणपरिभाषया आबन्तं विवक्षितम् । अङ्गस्येत्यधिकृतं पञ्चम्या विपरिणम्यते । 'औङः' इति षष्ठी । 'जसः शी' इत्यतः शीत्यनुवर्तते । तदाह—**आबन्तादित्यादिना** ।

**रिति** । 'ग्लौर्मृगाङ्कः कलानिधिः' इत्यमरः । एवं जनानवतीति जनौः । 'ज्वरत्वर–' इत्यूठ् । 'एत्येधत्यूठ्सु' इति वृद्धिः । अच्यावादेशः, जनावौ, जनाव इत्यादि । **न प्रवर्तत इति** । हे ग्लौरित्यत्र संबुद्धिलोपः, ग्लाव इत्यत्र 'ङसिङसोश्च' इति पूर्वरूपं च न प्रवर्तत इत्यपि बोध्यम् । **सावर्ण्याभावज्ञापनादिति** । सति तु सावर्ण्ये एचश्चतुर्विंशतेः संज्ञा भवन्तीति 'वृद्धिरादैच्' इत्येतत् 'वृद्धिरादेङ्' इति पठितुं शक्यत्वाद् 'ऐ औच्' इति सूत्रं व्यर्थं सत् सावर्ण्याभावं ज्ञापयति । अत एव 'एदैतोरोदौतोश्च न मिथः सावर्ण्यम्, ऐ औच् इति सूत्रारम्भसामर्थ्यात्' इत्यादि 'अणुदित्सवर्णस्य–' इति सूत्र एवोक्तमिति भावः । ननु 'ऐ औच्' इति सूत्राभावे 'न य्वाभ्याम्–' इति सूत्रे ताभ्यामैजिति प्रत्याहारोऽयं न सिध्येत्, 'पूर्वौ तु ताभ्यामेङ्' इत्युक्ते तु विधीयमानस्य सवर्णाग्राहकतया वैयाकरणः सौवश्व इत्यादावेदोतावेवागमौ स्तः, न त्वैदौतौ । ततश्च वैयर्थ्याभावाद् 'ऐ औच्' इति सूत्रं सावर्ण्याभावं न ज्ञापयतीति चेन्मैवम् । 'पूर्वौ तु ताभ्यामै औ' इति पठनेनापि इष्टसिद्धेस्तत्सूत्रवैयर्थ्यस्य तदवस्थत्वात् । स्थितस्य गतिप्रदर्शनमिदम् । वस्तुतस्तु 'एओङ्' इति सूत्रारम्भसामर्थ्यादित्युक्ते तु 'ताभ्यामैच्' इत्यत्रानुपपत्तिर्नास्त्येव । न च 'एओङ्' इति सूत्राभावे 'अदेङ् गुणः' 'एङि पररूपम्', 'एङः पदान्तादति' इत्यादावेङ्प्रत्याहारः कथं सिध्येदिति वाच्यम् । सति तु सावर्ण्ये 'अदेज् गुणः' 'एचि पररूपम्' 'एचः पदान्तादति' इति पठितुं शक्यत्वात् अतिप्रसङ्गस्य एच्ग्रहणेऽपि तुल्यत्वात् । न चैवमप्येचां चतुर्णां क्रमादयाद्यादेशसिद्ध्यर्थमेव 'एओङ्' 'ऐऔच्' इति सूत्रद्वयमप्यावश्यकमिति वाच्यम् । 'स्थानेऽन्तरतमः' इत्यनेनैव एचां क्रमादयादयः सिध्यन्तीति प्रागेवास्माभिरुपपादितत्वाच्च । यदा हि 'स्वराणामूष्मणां चैव' इत्यादिप्रागुक्तशिक्षावचनानुरोधाद् 'एङौ विवृततरौ, ऐचौ विवृततमौ' इत्यभ्युपगम्यते, तदा त्वेदैतोरोदौतोश्च मिथः सावर्ण्यप्रसक्तिरेव नास्तीति 'ऐऔच्' इति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्यात् । औङ् इत्यौकारविभक्तेः संज्ञा । रमे । रमाः । २८८ सम्बुद्धौ च । (७-३-१०६) आप एकारः स्यात्सम्बुद्धौ । 'एङ्ह्रस्वात्-' ( सू १९३ ) इति सं-

---

औङ्शब्दस्याप्रसिद्धार्थत्वादाह—**औङितीति** । **संज्ञेति** । प्राचां शास्त्रे स्थितेति शेषः । **रमे इति** । रमा औ इति स्थिते, शीभावे तस्य स्थानिवत्त्वेन प्रत्ययत्वाद् 'लशक्वतद्धिते' इति शस्येत्संज्ञायां लोपे 'आद् गुणः' इति एकारः । 'यस्येति च' इति लोपस्तु न, अभत्वात् । जसि सवर्णदीर्घं मत्वाह—**रमा इति** । पूर्वसवर्णदीर्घस्तु न भवति, 'दीर्घाज्जसि च' इति निषेधात् । हे रमा स् इति स्थिते—**संबुद्धौ च** । 'बहुवचने झल्येत्' इत्यतः एदिति 'आङि चापः' इत्यत आप इति चानुवर्तते । तदाह—**आप इत्यादिना** । आबन्तस्येत्यर्थः । 'अलोऽन्त्यस्य' । हे रमे स् इति स्थिते प्रक्रियां दर्शयति—**एङ्ह्रस्वादिति** । हल्ङ्यादिलोपस्तु न, परत्वात् प्रतिपदोक्तत्वाच्च एत्त्वे कृते हल्ङ्यादिलोपस्याप्राप्तेः[1], 'एङ्ह्रस्वात्-' इति लोपस्यैव परत्वेन न्याय्य-

---

'एओङ्' इति वा सूत्रं नोक्तज्ञापकमिति ज्ञेयम् । केचित्तु विवृततरयोरेङोर्विवृततमत्वाभावेऽपि विवृततरे विवृततमे च विवृतत्वस्य सत्त्वात्तदादाय तुल्यप्रयत्नत्वमेङोरैचोश्चास्तीति सावर्ण्यप्रसक्तावुक्तज्ञापकाश्रयणं सम्यगेवेत्याहुः । तदपरे न क्षमन्ते, तथा हि सति 'इको गुणवृद्धी' इति सूत्रस्थशब्दकौस्तुभग्रन्थेन सह विरोधप्रसङ्गात् । तत्र हि—'स्वराणामूष्मणां च-' इत्यादिशिक्षानुरोधाच्चेता नेतेत्यादौ गुणप्रवृत्तिः स्याद्विवृततरत्वरूपवैलक्षण्यस्य सत्त्वादिति न शङ्क्यम्, विधेर्निर्विषयत्वापत्तेः । 'जयः करणम्' 'धान्यानां भवने' इत्यादिनिर्देशैरिकारादिषु गुणप्रवृत्त्यनुमानाच्च—इति प्रकारान्तरेण समाहितम् । त्वदुक्तरीत्या तुल्यप्रयत्नवत्त्वे तु चेता नेतेत्यादौ गुणप्रवृत्तिशङ्का निरालम्बनैव स्यात् । तस्मादीषद्विवृतभेदेन स्वराणामूष्मणामिव विवृततरविवृततमभेदेन सावर्ण्याभावोऽत्र सुवच इति दिक् ॥ इत्यजन्तपुँल्लिङ्गप्रकरणम् ॥

**रमेति** । रमत इति रमा, 'रमु क्रीडायाम्' इत्यस्मात्पचाद्यचि टाप् । लिङ्गविशिष्टपरिभाषया स्वादयः । हल्ङ्यादिलोपः । न चात्राबन्तत्वादेव स्वाद्युत्पत्तिरस्तु, प्रत्ययान्तस्याप्रातिपदिकत्वेऽपि ङ्यापोः पृथग्ग्रहणादिति वाच्यम्, ङ्याब्ग्रहणस्यान्यार्थतायाः प्रागेवोक्तत्वात्प्रत्याख्यातत्वाच्च तद्ग्रहणस्य । **शी स्यादिति** । 'जसः शी' इत्यतः शी इत्यनुवर्तत इति भावः । **संबुद्धौ च** । 'बहुवचने झल्येत्' 'आङि चापः' इत्यत एत् आप इति चानुवर्तते, तदाह—**आप एकारः स्यादिति** । **एङ्ह्रस्वादिति** । न चात्र हल्ङ्यादिनैव सुलोपोऽस्तु प्रत्ययलक्षणन्यायेन 'संबुद्धौ च' इत्येत्त्वस्यापि प्रवृत्तिसंभवादिति शङ्क्यम् । परत्वात्प्रतिपदोक्तत्वाच्च एत्वे कृते हल्-

---

१ 'हल्ङ्यादिलोपस्याप्राप्तौ' क।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

बुद्धिलोपः, हे रमे। हे रमे, हे रमाः। रमाम्, रमे, रमाः। स्त्रीत्वान्नत्वाभावः।
**२८९ आङि चापः।** ( ७-३-१०५ ) आङि ओसि च परे आबन्तस्याङ्गस्यै-कारः स्यात्। रमया, रमाभ्याम्, रमाभिः। **२९० याडापः।** (७-३-११३) आपः परस्य ङिद्वचनस्य याडागमः स्यात्। 'वृद्धिरेचि' (सू ७२) रमायै। सवर्णदीर्घः, रमायाः। रमायाः, रमयोः, रमाणाम्। रमायाम्, रमयोः, रमासु। एवं दुर्गादयः।

---

त्वाचेति भावः। **रमामिति**। 'अमि पूर्वः' इति पूर्वरूपम्। औङः शीभावे आद् गुणं मत्वाह—**रमे इति**। **स्त्रीत्वादिति**। शसि रमा अस् इति स्थिते, पूर्वसवर्णदीर्घे सति कृतपूर्वसवर्णदीर्घात् परत्वेऽपि 'तस्माच्छसः–' इति नत्वं स्त्रीलिङ्गत्वान्न भवतीत्यर्थः। रमा आ इति स्थिते—**आङि चापः**। 'ओसि च' इत्यनुवर्तते, आप इति षष्ठी। अङ्गस्येत्यधिकृतम्। तदन्तविधिः। 'बहुवचने झल्येत्' इत्यत एदित्यनुवर्तते। तदाह—**आङि ओसि चेत्यादिना**। आङिति टासंज्ञा प्राचामित्युक्तम्। अलोऽन्त्यस्य एत्वे अयादेश इत्याह—**रमयेति**। **रमाभिरिति**। 'अतो भिसः–' इति तपरकरणादैस् न। रमा ए इति स्थिते-**याडापः**। आप इति पञ्चमी। 'घेर्ङिति' इत्यत ङितीत्यनु-वृत्तं षष्ठ्या विपरिणम्यते। तदाह—**आपः परस्येत्यादिना**। टित्वादाद्यवयवः। **वृद्धिरेचीति**। या ए इति स्थिते आकारस्य एकारस्य च स्थाने ऐकार एकादेश इति भावः। **सवर्णेति**। ङसिङसो रमा अस् इति स्थिते, याडागमे 'अकः सवर्णे दीर्घः' इति सवर्णदीर्घ इति भावः। यडित्येव सुवचम्। 'अतो गुणे' इति पररूपं तु न, अकारोच्चारणसामर्थ्यात्। **रमयोरिति**। 'आङि चापः' इत्येत्त्वे अयादेश इति भावः **रमाणामिति**। 'ह्रस्वनद्यापः–' इत्यत्राब्ग्रहणान्नुटि पर्जन्यवल्लक्षणप्रवृत्त्या 'नामि' इति दीर्घे 'अट्कुप्वाङ्–' इति णत्वमिति भावः। **रमायामिति**। रमा इ इति स्थिते

---

ङ्यादिलोपस्याप्रवृत्तेः स्थानिवद्भावादाप्त्वेऽप्याकाररूपत्वाभावात्। आआबित्याकारं प्रश्लिष्य दीर्घग्रहणस्य प्रत्याख्यानात्। 'एङ्ह्रस्वात्–' इति लोपस्यैव परत्वेन न्याय्यत्वा-च्चेति भावः। **आङि**। चकारेण 'ओसि च' इति प्रकृतं परामृश्यत इत्याह—**ओसि च पर इति**। **रमाभिरिति**। नन्विह एकादेशस्य पूर्वान्तत्वेन ग्रहणाद् 'अतो भिस ऐस्' इत्यैस् प्राप्नोति। न च तपरत्वसामर्थ्यान्नैवमिति वाच्यम्, अकृतैकादेशे विश्वपाभिरित्यादौ कृतार्थत्वादिति चेन्मैवम्। अल्विधौ 'अन्तादिवच्च' इत्यस्याप्रवृत्तेः। **याडापः**। 'घेर्ङिति' इत्यतोऽनुवृत्तं ङितीति सप्तम्यन्तमाप इति पञ्चम्यनुरोधेन षष्ठ्या विपरिणम्यत इत्याह—**ङिद्वचनस्येति**। अत्र 'सुपि च' इत्यतः सुपीत्यनु-वर्तनात् सुप एव याट्। तेन अपित्सार्वधातुकस्य ङित्त्वेऽपि मालेवाचरतो मालात इत्यादौ तस्यादेर्न भवति। एतच्च 'अचः परस्मिन्–' इत्यत्र पूर्वस्य विधिः पूर्वविधि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

**२९१ सर्वनाम्नः स्याड्ढ्रस्वश्च ।** ( ७-३-११४ ) आबन्तात्सर्वनाम्नः परस्य ङितः स्याट् स्यादापश्च ह्रस्वः । याटोऽपवादः । सर्वस्यै । सर्वस्याः । सर्वस्याः । एकादेशस्य पूर्वान्तत्वेन ग्रहणाद् 'आमि सर्वनाम्नः–' ( सू २१७ ) इति सुट्, सर्वासाम् । सर्वस्याम्, सर्वयोः, सर्वासु । एवं विश्वादयोऽप्याबन्ताः । २९२

---

'ङेराम्नद्याम्नीभ्यः' इत्यामादेशे याडागमे सवर्णदीर्घ इति भावः । 'न विभक्तौ–' इति मस्य नेत्त्वम् । सर्वशब्दाट्टापि सर्वाशब्दः, सोऽपि प्रायेण रमावत्, ङित्सु 'याडापः' इति प्राप्ते—**सर्वनाम्नः स्याड्ढ्रस्वश्च** । 'याडापः' इत्यत आप इति पञ्चम्यन्तमनुवृत्तम्, तेन सर्वनाम्न इत्येतद्विशेष्यते, तदन्तविधिः । 'घेर्ङिति' इत्यतो ङितीत्यनुवृत्तं षष्ठ्या विपरिणम्यते । ततश्च आबन्तात्सर्वनाम्नः परस्य ङितः स्याट् स्यादित्यर्थः । टित्वादाद्यवयवः । ह्रस्वश्चेति वाक्यान्तरम् । आप इत्यनुवृत्तमावर्तते, षष्ठ्यन्ततया च विपरिणम्यते, तच्च ह्रस्व इत्यत्रान्वेति । आपः स्थाने ह्रस्वो भवतीति तदर्थः । तदाह—**आबन्तादिति । याटोऽपवाद इति ।** येन नाप्राप्तिन्यायादिति भावः । **सर्वस्यै इति ।** सर्वा ए इति स्थिते स्याट्, वकारादाकारस्य ह्रस्वः, वृद्धिरिति भावः । **सर्वस्या इति ।** ङसिङसोः सर्वा अस् इति स्थिते स्याट्, आपो ह्रस्वः, सवर्णदीर्घ इति भावः । ननु आबन्तस्य सर्वाशब्दस्य सर्वादिगणे पाठाभावात् कथं सर्वनामत्वमित्यत आह—**एकादेशस्येति** । वकारादकारस्य आपश्च योऽयमेकादेशः सवर्णदीर्घः, तस्येत्यर्थः । ननु एकादेशनिष्पन्नस्य आकारस्य पूर्वान्तत्वे आप्त्वव्याघाताद् आबन्तत्वं व्याहतम् । न च परादित्वेन आबन्तत्वमपीति वाच्यम् 'उभयत आश्रयणे नान्तादिवत्' इति निषेधादिति चेत्, सत्यम्—लिङ्गविशिष्टपरिभाषया आबन्तस्य सर्वनामत्वम् । आबन्तत्वं तु परादिवद्भावेनेत्याहुः । **सर्वस्यामिति ।** ङौ सर्वा इ इति स्थिते 'ङेराम्–' इत्याम्, सुटं बाधित्वा परत्वात् स्याट्, ह्रस्वश्च । सकृद्गतिन्यायान्न पुनः सुट् । **एवमिति ।** सर्वादिगणपठितविश्वादय आबन्तत्वं प्राप्ताः सर्वाशब्दवदित्यर्थः ।

---

रिति षष्ठीसमासपक्षाभ्युपगमेनोक्तम्, पञ्चमीसमासपक्षाभ्युपगमे तु शपः स्थानिवत्त्वेन व्यवधानाद् मालात इत्यादावाटः प्रसङ्ग एव नास्तीत्याहुः । 'यट्' इत्येव वक्तव्ये दीर्घोच्चारणं स्पष्टप्रतिपत्त्यर्थम् । न च 'अतो गुणे' इति पररूपापत्तिः, अकारोच्चारणसामर्थ्यादेव तद्बाधात् । **वृद्धिरेचीति ।** प्राचा तु 'आटश्च' इत्युपन्यस्तम्, तदुपेक्षितम्, याट्स्याटोष्टकारस्य समुदायानुबन्धत्वेनेह आटोऽभावात् । **सर्वनाम्नः स्याट् ।** दीर्घो-

---

१ 'ततश्च' इत्यारभ्य 'याटोऽपवादः' इत्यतः प्राग् अन्यथैव ग्रन्थो दृश्यते क-पुस्तके–' 'ह्रस्वनद्यापः–' इत्यत आप इत्यनुवृत्तं षष्ठ्यन्तं ह्रस्व इत्यत्रान्वेति । टित्वादाद्यवयवः" इ–

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

**विभाषा दिक्समासे बहुव्रीहौ।** (१-१-२८) अत्र सर्वनामता वा स्यात्। उत्तरपूर्वस्यै, उत्तरपूर्वायै। 'दिङ्नामान्यन्तराले' (सू ८४९) इति प्रतिपदोक्तस्य दिक्समासस्य ग्रहणान्नेह—योत्तरा सा पूर्वा यस्या उन्मुग्धायास्तस्यै उत्तरपूर्वायै। बहुव्रीहिग्रहणं स्पष्टार्थम्। अन्तरस्यै शालायै। बाह्यायै इत्यर्थः। 'अपुरि' इत्यु-

---

उत्तरस्याश्च पूर्वस्याश्च दिशोर्यदन्तरालम् उत्तरपूर्वा। 'दिङ्नामान्यन्तराले' इति बहुव्रीहिविशेषोऽयम्। तत्र विशेषं दर्शयितुमाह—**विभाषा दिक्समासे।** 'सर्वादीनि—' इत्यतः सर्वनामग्रहणमनुवर्तते। तदाह—**अत्रेति।** दिक्समास इत्यर्थः। 'न बहुव्रीहौ' इत्यलौकिकविग्रहवाक्ये नित्यनिषेधे प्राप्ते विकल्पार्थमिति केचित्। गौणत्वादप्राप्ते विभाषेयमित्यन्ये। सर्वनामत्वपक्षे उदाहरति—**उत्तरपूर्वस्यै इति।** स्याड्ढ्रस्वौ। **उत्तरपूर्वायै इति।** सर्वनामत्वाभावपक्षे याट्। उत्तरपूर्वस्याः, उत्तरपूर्वायाः। उत्तरपूर्वासाम्, उत्तरपूर्वाणाम्। उत्तरपूर्वस्याम्, उत्तरपूर्वायाम्। 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' इति मात्रग्रहणात् संप्रति असर्वनामत्वेऽपि पूर्वपदस्य पुंवत्त्वम्। ननु उत्तरा दिगिति मतौ मोहवशात् पूर्वा दिग् यस्याः सा उत्तरपूर्वा, 'अनेकमन्यपदार्थे' इति बहुव्रीहिः। अत्रापि दिक्शब्दघटितसमासत्वात् सर्वनामताविकल्पे उत्तरपूर्वस्यै, उत्तरपूर्वायै इति रूपद्वयं स्यात्। स्याडागमस्तु नेष्यते। तत्राह—**दिङ्नामानीति।** 'दिङ्नामान्यन्तराले' इति बहुव्रीहिः प्रतिपदोक्तो दिक्समासः, दिक्शब्दमुच्चार्य विहितत्वात्, न तु 'अनेकमन्यपदार्थे' इति बहुव्रीहिरपि, ततश्च लक्षणप्रतिपदोक्तपरिभाषया न तस्य ग्रहणमित्यर्थः। **योत्तरेति।** उत्तराशब्दस्य पूर्वाशब्दस्य च सामानाधिकरण्यं द्योतयितुं यत्तच्छब्दौ, सामानाधिकरण्याभावे 'अनेकमन्यपदार्थे' इति बहुव्रीहेरसंभवात्, 'बहुव्रीहिः समानाधिकरणानां वक्तव्यः' इति वचनात्। **उन्मुग्धाया इति।** तेन पूर्वोत्तरयोर्विरोधात् कथं सामानाधिकरण्यमिति शङ्का निरस्ता। ननु 'विभाषा दिक्समासे' इत्येवास्तु, बहुव्रीहिग्रहणं न कर्तव्यम्, प्रतिपदोक्तत्वेन 'दिङ्नामानि—' इति बहुव्रीहेरेव ग्रहणसिद्धेरित्यत आह—**बहुव्रीहिग्रहणं स्पष्टार्थमिति। बाह्यायै इत्यर्थ इति।** 'अन्तरमवकाशावधिपरिधानान्तर्धिभेदतादर्थ्ये। छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि च॥' इति कोशात्। अर्थान्तरपरत्वे तु सर्वनामत्वाभावाद् न स्यादिति भावः।

---

च्चारणं प्राग्वत् स्पष्टप्रतिपत्त्यर्थम्। आबन्तस्य सर्वादिगणे पाठाभावात् सर्वनामत्वं नेत्याशङ्क्याह—**एकादेशस्य पूर्वान्तत्वेनेति। विभाषादिक्समासे।** गौणत्वादप्राप्ते विभाषेयम्, न तु 'न बहुव्रीहौ' इति निषेधे प्राप्ते इति भ्रमितव्यम्। तस्या-

---

१ 'गत्वा' इति क, ख, पाठः। असंबद्धतया स त्यक्तः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्नैह-अन्तरायै नगर्यै। २६३ विभाषा द्वितीयातृतीयाभ्याम्। (७-३-११५) आभ्यां ङितः स्याट् स्यादापश्च ह्रस्वः। इदं सूत्रं त्यक्तुं शक्यम्, तीयस्य ङित्सूपसंख्यानात्। द्वितीयस्यै, द्वितीयायै। द्वितीयस्याः, द्वितीयायाः। द्वितीयस्याः, द्वितीयायाः। द्वितीयस्याम्, द्वितीयायाम्। शेषं रमावत्। एवं तृतीया। 'अम्बार्थनद्योर्ह्रस्वः' (सू २६७) हे अम्ब। हे अक्क। हे अल्ल। 'असंयुक्ता ये डलकास्तद्वतां ह्रस्वो न' (वा ४५१२) हे अम्बाडे, हे अम्बाले, हे अम्बिके। जरा।

---

अपुरीत्युक्तेरिति। 'अन्तरं बहिर्योग-' इति गणसूत्र इति शेषः। विभाषा। 'घेर्ङिति' इत्यतो ङितीत्यनुवृत्तं षष्ठ्या विपरिणम्यते। 'याडापः' इत्यत आप इति, 'सर्वनाम्नः स्याट्-' इत्यतः स्याडिति ह्रस्व इति चानुवर्तते। तदाह-आभ्यामित्यादिना। इदमिति। 'विभाषा द्वितीयातृतीयाभ्याम्' इति सूत्रं न कर्तव्यमित्यर्थः। कुत इत्यत आह-तीयस्येति। विभाषाप्रकरणे तीयप्रत्ययान्तस्य ङित्सु सर्वनामत्वोपसंख्यानादित्यर्थः। न च तीयस्य ङित्सूपसंख्यानमेव त्यज्यतामिति वाच्यम्, पुंनपुंसकार्थं तस्यावश्यकत्वात्। अम्बार्थेति। व्याख्यातमिदं पुंसीदन्ताधिकारे। तत्र नदीविषये उदाहृतम्। अम्बार्थानुदाहरति-हे अम्बेत्यादि। शेषं रमावत्। अत्र भाष्ये-'डलकवतीनां प्रतिषेधो वक्तव्यः' हे अम्बाडे, हे अम्बाले, हे अम्बिके। तदिदं वार्तिकं न कर्तव्यम्-इत्युक्त्वा 'द्व्यच्कस्यैवाम्बार्थस्य ह्रस्वः' इति स्थितम्। यथाश्रुतवार्तिके तु हे अल्ल इत्यत्राव्याप्तिः स्यादिति तदाशयः। तदत्र फलितमाह-असंयुक्ता इति। द्व्यच्कानामम्बार्थानां ह्रस्व इत्यस्याङ्गत्वात्तदन्तविधिः। अतो जगदम्ब इत्यत्र द्व्यच्काम्बान्तत्वाद् भवति ह्रस्वः।

जरेति। 'जॄष् वयोहानौ'। 'षिद्भिदादिभ्यः-' इत्यङ्। 'ऋदृशोऽङि-' इति

---

लौकिकप्रक्रियावाक्यान्तर्गतसर्वादिविषयत्वात्, अस्य च समासविषयत्वात्। स्पष्टार्थमिति। प्रतिपदोक्तदिक्समासविधायके 'दिङ्नामानि-' इति सूत्रे 'शेषो बहुव्रीहिः' इत्यतो बहुव्रीहिरित्यधिकारादिति भावः। त्यक्तुं शक्यमिति। न चाबन्तस्य द्वितीयादिशब्दस्य तीयप्रत्ययान्तत्वाभावाद् 'विभाषा द्वितीया-' इति सूत्रमावश्यकमिति शङ्क्यम्। एकादेशस्य पूर्वान्तत्वेन ग्रहणादाबन्तस्यापि तीयप्रत्ययान्तत्वात्। 'तीयस्य-' इति पुंनपुंसकार्थमवश्यं वक्तव्येनानेनैव सिद्धौ 'विभाषा द्वितीया-' इति सूत्रं न कर्तव्यमिति भावः। अम्बार्थनद्योर्ह्रस्वः। अत्र 'अम्बार्थं द्व्यच्‌रं यदि' इति वचनाद् द्व्यच्कस्यैवाम्बार्थस्य ह्रस्वो भवति, नान्येषामित्याशयेन फलितमाह-असंयुक्ता ये डलका इत्यादि। जरेति। 'जॄष् वयोहानौ' इत्यस्मात् 'षिद्भिदादिभ्यः-' इत्यङि 'ऋदृशो-

---

१ 'प्राप्तस्य' इति युक्तं प्रतिभाति।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जरसौ, शीभावात्परत्वाज्जरस्। आमि नुटः परत्वाज्जरस्, जरसामित्यादि। पक्षे हलादौ च रमावत्। इह पूर्वविप्रतिषेधेन शीभावं कृत्वा संनिपातपरिभाषाया

---

गुणः, रपरत्वम्। अदन्तत्वात् टाप्, सुः, हल्ङ्यादिना सुलोप इति भावः। **जरसाविति।** 'जराया जरसन्यतरस्याम्' इति अजादौ जरसादेश इति भावः। ननु शीभावे कृते सति आबन्तसन्निपातमुपजीव्य प्रवृत्तस्य तस्य सन्निपातपरिभाषया आबन्तत्वविघातक-जरसादेशनिमित्तत्वासम्भवेन जरसादेशाभावे आद् गुणे जरे इत्येव स्यादित्यत आह—**शीभावादिति।** जरसि कृते तु आबभावान्न शीभाव इति भावः। जरसः। जरसम्, जरसौ, जरसः। टा—जरसा। न चात्र जरा आ इति स्थिते, जरसादेशं बाधित्वा परत्वाद् 'आङि चापः' इत्येत्त्वे अयादेशे जरयेत्येव युक्तमिति वाच्यम्, एकदेशविकृतन्यायेन कृतेऽप्येत्त्वे प्रवृत्तस्य जरसादेशस्य नित्यतया तस्यैव प्रवृत्तेः, परान्नित्यस्य बलवत्त्वात्। कृते तु जरसि आबभावादेत्त्वं न। ङे जरसे। न चात्र जरा ए इति स्थिते, जरसादेसं बाधित्वा परत्वाद् याटि, वृद्धौ जरायै इत्येव युक्तमिति वाच्यम्, अन्तरङ्गत्वेन जरसादेशस्यैव प्रवृत्तेः, परादन्तरङ्गस्य बलवत्त्वात्। आपः परस्य ङितः सुपो विहितस्य याटो बह्वाश्रयत्वेन बहिरङ्गत्वात्। ङसिङसोः जरसः, अत्रापि पूर्ववद्याट् न। जरसोः, एत्त्वं बाधित्वा नित्यत्वाद् जरस्। आमि—जरसाम्। नन्वामि नुटि कृते अजादिविभक्त्यभावात् कथं जरसादेश इत्यत आह—**आमि नुट इति।** ङौ जरसि, परमपि ङेरामं याटं च नित्यत्वादन्तरङ्गत्वाच्च क्रमेण बाधित्वा जरस्। **पक्षे हलादौ च रमावदिति।** जरसादेशाभावपक्षे हलादावपि, रमावदित्यर्थः।

मतान्तरं दूषयितुमनुवदति—**इह पूर्वेत्यादिना।** इह जराशब्दे जरा औ इति स्थिते शीभावमाश्रित्य जरसी इति केचिदाहुरित्यन्वयः। आश्रित्येत्यनन्तरं 'जरसादेशे कृते' इति शेषः। ननु शीभावं बाधित्वा परत्वाद् जरसादेश एव युक्त इत्यत आह—**पूर्वविप्रतिषेधेनेति।** 'विप्रतिषेधे परम्—' इत्यत्र परशब्दस्य इष्टवाचिता-

---

ऽङि—' इति गुणे कृते टाप्। **शीभावात्परत्वाज्जरसित्यादि।** ननु 'औङ आपः' 'ह्रस्वनद्यापो नुट्' इत्यपेक्षया 'जरायाः—' इति सूत्रस्य परत्वादस्त्वेवम्, परन्तु 'आङि चापः' 'याडापः' 'ङेराम्—' इति विधयो जरसादेशं बाधित्वा परत्वात् स्युरिति चेत्, अत्राहुः—'आङि चापः' इत्येकारादेशे कृतेऽप्येकदेशविकृतन्यायेन 'जरायाः—' इति जरसादेशप्रसक्त्या नित्यत्वादेकारादेशं बाधित्वा जरसादेश एव भवति। न चैकारादेशोऽपि नित्य एव, जरसादेशे कृतेऽपि स्थानिवत्त्वेनाबन्तत्वाद् 'आङि चापः' इति प्रवृत्तेरिति वाच्यम्, आकाररूपस्यैवापः सर्वत्र ग्रहणाद् इत्यनुपदमेव वक्ष्यमाणत्वात्तदप्रवृत्तेः। 'याडापः' इति याडागमं तु जरसादेशोऽन्तरङ्गत्वाद्बाधते। आकाररूपापः

---

१ 'प्राप्तस्य' इति युक्तं प्रतिभाति।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अनित्यतां चाश्रित्य 'जरसी' इति केचिदाहुः, तन्निर्मूलम्। यद्यपि जरसादेशस्य स्थानिवद्भावेनावन्ततामाश्रित्य 'औङ आपः' (सू २८७) 'आङि चापः' (सू २८९) 'याडापः' (सू २९०) 'ह्रस्वनद्यापः–' (सू २०८) 'ङेराम्–' (सू २७०) इति च पञ्चापि विधयः प्राप्ताः, एवं नस्निश्पृत्सु, तथाप्यनल्विधाविस्युक्तेर्न भवन्ति,

---

माश्रित्य क्वचित् पूर्वस्य प्रवृत्त्याश्रयणेनेत्यर्थः। ननु आवन्तसंनिपातमुपजीव्य प्रवृत्तस्य शीभावस्य संनिपातपरिभाषया आवन्तसंनिपातविघातकजरसादेशनिमित्तत्वं न संभवतीत्यत आह—**संनिपातपरिभाषाया अनित्यतां चेति। तन्निर्मूलमिति।** पूर्वविप्रतिषेधाश्रयणस्य भाष्यापरिगणितेष्वप्रवृत्तेः, संनिपातपरिभाषायाः सर्वत्रानित्यत्वाश्रयणे प्रमाणाभावाच्चेति भावः।

स्यादेतत्। जरसौ, जरसामित्यत्र 'औङ आपः' 'ह्रस्वनद्यापो नुट्' इत्यपेक्षया परत्वादस्तु जरसादेशः, अस्तु च ङेङसिङस्सु-जरसे, जरस इत्यत्र याटमन्तरङ्गत्वाद् बाधित्वा जरसादेशः, अस्तु च ङौ जरसि इत्यत्र नित्यत्वादाममन्तरङ्गत्वाद्याटं च बाधित्वा जरसादेशः। तथापि तस्य जरसादेशस्य स्थानिवत्त्वेन आवन्तत्वात् तदाश्रित्य एत्त्व-शीभाव-याड्-नुडागमाः कुतो न स्युः। किं च अनेनैव न्यायेन नासिकाशब्दस्य निशाशब्दस्य पृतनाशब्दस्य च एत्त्व-शीभाव-याड्-नुडागमान् बाधित्वा 'पद्दन्नो–' इत्यादिना नस्-निश्-पृत्-इत्यादेशेषु क्रमेण कृतेषु तेषां स्थानिवद्भावेन आवन्तत्वमाश्रित्य एत्त्व-शीभाव-याड्-नुडागमाः प्रसज्येरन्–इति शङ्कते—**यद्यपीत्यादिना**। परिहरति—**तथापीति**। स्थानीभूतावन्ताश्रयविधय एते एत्त्वादिविधयः। अतस्तेषु कर्तव्येषु जरसाद्यादेशानां स्थानिवत्त्वं न संभवति, अनल्विधाविति तन्निषेधात्। ततश्च जरसाद्यादेशानामावन्तत्वालाभाद् एत्त्वादिविधयो न भवन्तीत्यर्थः। ननु अल्त्वव्याप्याकारत्वादिधर्मपुरस्कारेण स्थान्यलमाश्रित्य प्रवर्तमानो विधिरल्विधिः, न तु यथाकथञ्चिद् अलाश्रयविधिरपि, रामायेत्यत्र 'सुपि च' इति दीर्घाभावप्रसङ्गात्। तत्र हि दीर्घो यञादिसुपि परतो विधीयते। यादेशस्य च सुप्त्वं स्थानिवत्त्वलभ्यम्। यादेशस्य च एकारः अल् स्थानी। ततश्च दीर्घस्य स्वनिमित्तभूतसुप्त्वांशे तदाश्रयत्वादनल्विधाविति निषेधाद्

---

परस्य ङितः सुपो विहितस्य याटो बह्वाश्रयत्वेन बहिरङ्गत्वात्। ङेराममपि जरसादेशो नित्यत्वाद्बाधते। न चाकाररूपावन्तात्परस्य ङेरामि कृते संनिपातपरिभाषया जरसादेशस्याप्रवृत्तौ न तस्य नित्यतेति वाच्यम्, रूपमालायां जरसीत्युक्तत्वादिष्टानुरोधेनोक्तपरिभाषाया अनित्यत्वाभ्युपगमे बाधकाभावादिति। **स्वाश्रयमिति**। यञादिसुबाश्रयं तन्निमित्तकमित्यर्थः। यञादिसुप एव याडागमापादनात्स्वशब्देन तत्परामृश्यते। **स्थानिवद्भावेनेति**। न चैवं लाक्षणिकत्वात्कथमिह याट् स्यादिति वाच्यम्। अतिदेशविषये

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

'आ आप्' इति प्रश्लिष्याकाररूपस्यैवापः सर्वत्र ग्रहणात्। एवं 'हल्ङ्याप्–' (सू २५२) इति सूत्रेऽपि 'आ आप्' 'ङी ई' इति प्रश्लेषाद् 'अतिखट्वः' 'निष्कौशाम्बिः' इत्यादिसिद्धेर्दीर्घग्रहणं प्रत्याख्येयम्। न चैवमपि 'अतिखट्वाय' इत्यत्र स्वाश्रयमाकारत्वं स्थानिवद्भावेनाप्त्वं चाश्रित्य याट् स्यादिति वाच्यम्,

---

दीर्घे कर्तव्ये यादेशस्य स्थानिवत्त्वाभावेन सुप्त्वाभावात् तस्मिन् परतो दीर्घो न स्यात्। अल्त्वव्याप्याकारत्वादिधर्मपुरस्कारेण स्थान्यलमाश्रित्य प्रवर्तमानो विधिरल्विधिरित्याश्रयणे तु न दोषः। दीर्घो हि यादेशस्थानिभूतमेकारमेकारत्वेन नाश्रयति, किं तु सुप्त्वेनैव। सुप्त्वं चाल्त्वव्याप्यं न भवति, भ्यामादावपि सत्त्वात्। ततश्च दीर्घस्यानल्विधित्वात् तस्मिन् कर्तव्ये यादेशस्य स्थानिवत्त्वेन सुप्त्वसंभवाद् दीर्घो निर्बाधः। प्रकृते च एत्त्वादिविधयो जरसादेशस्थानीभूतावन्तत्वपुरस्कारेण संभवत्प्रवृत्तिकाः। आप्त्वं च समुदायस्य[1] धर्मः, नत्वाकारमात्रस्य। ततश्च एत्त्वादिविधीनामनल्विधित्वात्तेषु कर्तव्येषु जरसादेशस्य स्थानिवत्त्वेनाबन्तत्वं दुर्वारमित्याशङ्क्याह—**आ आबित्यादिना।** 'आङि चापः' इत्यादिषु सवर्णदीर्घेण 'आप्' इति प्रश्लिष्य आकाररूपाबन्ताश्रयणेन एत्त्वादयो विधीयन्ते। ततश्च ते आकारत्वेरूपेणाप्यापमाश्रयन्तीति[2] तेषामल्विधित्वात् तेषु कर्तव्येषु जरसादेशस्य स्थानिवत्त्वादाबन्तत्वं न संभवति। ततश्च एत्त्वादिविधयोऽत्र न भवन्तीत्यर्थः। प्रसङ्गादाह—**एवमिति**। यथा—'आङि चापः' इत्यादिषु 'आ आप्' इति प्रश्लेषः। एवं 'हल्ङ्याब्भ्यः–' इत्यत्र 'ङी ई' 'आ आप्' इति सवर्णदीर्घेण प्रश्लेषाद् दीर्घग्रहणं प्रत्याख्येयमित्यन्वयः ननु तत्र दीर्घग्रहणाभावे अतिखट्वः, निष्कौशाम्बिरित्यत्रापि सुलोपः स्यात्, तथा हि–खट्वाशब्दष्टाबन्तः, खट्वामतिक्रान्तः अतिखट्वः, 'अत्यादयः क्रान्ताद्यर्थे–' इति समासः। कुशाम्बेन निर्वृत्ता नगरी कौशाम्बी, 'तेन निर्वृत्तम्' इत्यण्, 'टिड्ढाणञ्' इति ङीप्, निष्क्रान्तः कौशाम्ब्या निष्कौशाम्बिः, 'निरादयः क्रान्ताद्यर्थे पञ्चम्या' इति समासः। उभयत्रापि 'गोस्त्रियोः–' इति आपो ङीपश्च ह्रस्वः, ततः सुबुत्पत्तिरिति स्थितिः। अत्र स्थानिवत्त्वेनाकाररूपाबन्तत्वस्य ईकाररूपङ्यन्तत्वस्य चानपायात् सोर्हल्ङ्यादिलोपे प्राप्ते तन्निवृत्त्यर्थं दीर्घग्रहणमावश्यकमेवेत्यत आह—**अतिखट्वः निष्कौशाम्बिरित्यादिसिद्धेरिति**। अयमाशयः–ङी ई, आ आप्–इति प्रश्लेषे सति आत्वरूपेण ईत्वरूपेण च ङ्यापावाश्रित्य सुलोपप्रवृत्तिर्वक्तव्या, ईत्वात्वयोश्च अल्त्वव्याप्यधर्मत्वात् तत्पुरस्कारेण प्रवर्तमानलोपविधेरल्विधित्वान्न स्थानिवत्त्वेन ङ्याबन्तत्वमस्तीति न सुलोप इति[3]। एवं च दीर्घग्रहणप्रयोजनस्य प्रश्लेषेणैव सिद्धत्वाद् हल्ङ्यादिसूत्रे दीर्घग्रहणं न कर्तव्यमित्यन्यत्र विस्तरः।

---

१ 'समुदायधर्मः' क। २ 'आकाररूपेणा–' क। ३ फलितम्–इत्यधिकं क पुस्तके।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# अथ अजन्तनपुंसकलिङ्गप्रकरणम् । १० ।

**३०१ अतोऽम्।** ( ७-१-२४ ) अतोऽङ्गात्क्लीबात्स्वमोरम्स्यात् । 'अमि पूर्वः' ( सू ११४ ) ज्ञानम् । 'एङ्ह्रस्वात्–' ( सू १६३ ) इति हल्मात्रलोपः,

---

**अथाजन्तनपुंसकलिङ्गा निरूप्यन्ते** । ज्ञानशब्दात् सुः 'स्वमोर्नपुंसकात्' इति तस्य लुकि प्राप्ते–**अतोऽम्**। अत इति पञ्चमी । अङ्गस्येत्यधिकृतं पञ्चम्या विपरिणम्यते, अत इत्यनेन विशेष्यते, तदन्तविधिः । 'स्वमोर्नपुंसकात्' इत्यनुवर्तते । तदाह—**अतोऽङ्गादिति** । अदन्तादङ्गादित्यर्थः । **ज्ञानमिति** । सोरमि कृते अमि पूर्वरूपम् इति भावः । अमोऽम्विधानं तु 'स्वमोर्नपुंसकात्' इति लुङ्निवृत्त्यर्थम् । ननु 'अतः' 'म्' इत्येव छेदोऽस्तु, सोर्मकारादेशे ज्ञानमिति सिद्धेः । अमि च 'आदेः परस्य' इति अकारस्य मकारे अन्त्यस्य मकारस्य संयोगान्तलोपेनैव ज्ञानमिति सिद्धेरिति चेत्, मैवम्—एवं सति ज्ञानमित्यत्र 'सुपि च' इति दीर्घापत्तेः । न च अदन्तसंनिपातमाश्रित्य प्रवृत्तस्य मादेशस्य तद्विघातकदीर्घनिमित्तत्वं न संभवति, संनिपातपरिभाषाविरोधादिति वाच्यम्, 'सुपि च' इति दीर्घे कर्तव्ये संनिपातपरिभाषाया अप्रवृत्तेरित्युक्तत्वादित्यलम् । **हे ज्ञानेति** । हे ज्ञान स् इति स्थिते, सोरमि कृते, पूर्वरूपे 'एङ्ह्रस्वात्–' इति मकारलोपे हे ज्ञानेति रूपम् । ननु 'एङ्ह्रस्वात्–' इत्यत्र संबुद्धयाक्षिप्तस्य संबुद्ध्यैवान्वय उचितः, ततश्च एङन्ताद्ध्रस्वान्ताच्चाङ्गात् परा या संबुद्धिः तदवयवस्य हलो लोप इति लभ्यते । ततश्च प्रकृते पूर्वरूपे कृते तस्य पूर्वान्तत्वाश्रयेण ज्ञान इत्यदन्तमङ्गम्, ततः परा संबुद्धिर्नास्ति, मकारमात्रस्यासंबुद्धित्वात्, सुस्थानिकस्याम एव संबुद्धित्वात्, अर्धविकारेण एकदेशविकृतन्यायानवताराच्च । न च पूर्वरूपात् प्राक् 'एङ्ह्रस्वात्–' इत्यस्य प्रवृत्तिः किं न स्यादिति वाच्यम्, परत्वात् पूर्वरूपस्यैव पूर्वं प्रवृत्तेः । न च पूर्वान्तत्वात् पूर्वरूपस्याङ्गान्तर्भावाद् ज्ञान इत्यदन्तमङ्गम्, परादित्वाच्च अम् इत्यस्य संबुद्धित्वं चेत्याश्रित्य तदवयवहलो मकारमात्रस्य 'एङ्ह्रस्वात्–' इति लोपो निर्बाध इति वाच्यम् 'उभयत आश्रयणे नान्तादिवत्' इति निषेधादित्यत आह—**एङ्ह्रस्वादिति** । **हल्मात्रलोप इति** । पूर्वरूपे कृते संबुद्धेर्मकारमात्रं यत् परि-

---

बाहुलकाद् द्युतेरपि, डित्वाट्टिलोपः । 'ओतो णित्' इति णिद्वद्भावाद् वृद्धिः । **राः पुंवदिति** । यद्यपि पुँल्लिङ्ग एवायम् 'अर्थरैविभवा अपि' इत्यमरोक्तेर्भिन्नलिङ्गानां न द्वन्द्व इति तेन परिभाषितत्वात्, तथापि 'रात्येनं राः स्त्रीत्येके' इति क्षीरस्वामिना स्त्रीलिङ्गताया अप्यभ्युपगमादेवमुक्तम् । **नौग्लौवदिति** । 'ग्लानुदिभ्यां डौः' । डित्वाट्टिलोपः । 'स्त्रियां नौस्तरणिस्तरिः' इत्यमरः ॥ इत्यजन्तस्त्रीलिङ्गप्रकरणम् ॥

**अतोऽम्** । अत इत्येतदधिकृतस्याङ्गस्य विशेषणम् 'स्वमोर्नपुंसकात्' इति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

हे ज्ञान। ३१० नपुंसकाच्च। (७-१-१९) क्लीबात्परस्यौङः शी स्यात्। भसंज्ञायाम्। ३११ यस्येति च। (६-४-१४८) भस्येवर्णावर्णयोर्लोपः स्यादीकारे तद्धिते च परे। इत्यकारलोपे प्राप्ते। 'औङः श्यां प्रतिषेधो वाच्यः'

---

शिष्टं तस्य 'एङ्ह्रस्वात्–' इति लोप इत्यर्थः। लक्ष्यानुरोधात् संबुद्ध्याक्षिप्तमङ्गं संबुद्धौ नान्वेति, किं तु संबुद्ध्ययवहल्येवान्वेति। ततश्च एङन्ताद् ह्रस्वान्ताच्चाङ्गात् परो यः संबुद्ध्यवयवहल् तस्य लोप इति लभ्यते। प्रकृते च पूर्वरूपे कृतेऽपि ह्रस्वान्तादङ्गात् परत्वं संबुद्ध्यवयवस्य मकारमात्रस्य अस्त्येवेति तस्य 'एङ्ह्रस्वात्–' इति लोपो निर्बाध इत्यन्यत्र विस्तरः।

**नपुंसकाच्च**। 'जसः शी' इत्यतः शीति 'औङ आपः' इत्यतः औङ इति चानुवर्तते। तदाह—**क्लीबादिति**। औङित्यौकारविभक्तेः संज्ञेत्युक्तम्। ज्ञान ई इति स्थिते **यस्येति च**। यस्य ईतीति छेदः। इश्च अश्च तयोः समाहारः यम्, तस्य, इवर्णस्य अवर्णस्य चेत्यर्थः। भस्येत्यधिकृतम्। 'नस्तद्धिते' इत्यतः तद्धिते इत्यनुवर्तते। तदाह—**भस्येत्यादिना**। **इत्यकारलोपे प्राप्त इति**। 'सुडनपुंसकस्य' इति पर्युदासेन शीभावस्यासर्वनामस्थानतया तस्मिन् परतो भत्वादिति भावः। **औङः श्यामि-**

---

चानुवर्तत इत्याशयेनाह—**अतोऽङ्गादित्यादि**। अदन्तादङ्गादित्यर्थः। **स्वमोरिति**। अमोऽम्विधानं 'स्वमोर्नपुंसकात्' इति प्राप्तस्य लुको बाधनार्थम्। **अम् स्यादिति**। यद्यपि म् इत्येव छित्त्वा सोर्मे कृते संनिपातपरिभाषया 'सुपि च' इति दीर्घत्वाप्रसक्त्या ज्ञानमिति रूपं सिध्यति, द्वितीयैकवचने तु 'आदेः परस्य' इत्यकारस्य मकारे कृतेऽन्त्यस्य मस्य संयोगान्तलोपे सिद्धमिष्टम्, तथापि 'संयोगान्तलोपो झलः' इत्यभिप्रायेणेदं व्याख्यातम्। यत्त्वाहुः—अमिति पदच्छेदाकरणे अतिजरमिति न सिध्येदिति। तद्भ्रमसात्, सोरमि कृते संनिपातपरिभाषया जरसादेशस्याप्रवृत्त्या अतिजरमिति रूपस्यैवेष्यमाणत्वात्। द्वितीयैकवचने तु 'अतोऽम्' इति बाधित्वा परत्वाज्जरसि कृते संनिपातपरिभाषया लुकोऽप्रवृत्तावतिजरसमिति रूपसिद्धेश्चेति दिक्। **ज्ञानमिति**। ज्ञप्तिर्ज्ञानम्। ल्युडन्तः, 'युवोरनाकौ'। 'कृत्तद्धित–' इति प्रातिपदिकत्वात्स्वाद्युत्पत्तिः। **हल्मात्रेति**। हे ज्ञान सु इति स्थिते संबुद्धिलोपात्परत्वादमादेशे कृते अमि पूर्वत्वे च तस्यान्तवद्भावाद् ह्रस्वान्तमङ्गं न भवतीति ततः परस्य संबुद्धिसंबन्धिनो मकारस्य लोप इत्यर्थः। **नपुंसकाच्च**। 'जसः शी' 'औङ आपः' इत्यतः शी औङ इति चानुवर्तत इत्यभिप्रेत्याह—**क्लीबात्परस्येत्यादिना**। **भसंज्ञायामिति**। 'सुडनपुंसकस्य' इति पर्युदासेनासर्वनामस्थानत्वादौङि 'यचि भम्' इति प्रवर्तत इति भावः। **यस्येति च**। इश्च अश्च यं तस्य यस्य, तदाह—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

( वा ४१८१ ) ज्ञाने । ३१२ जश्शसोः शिः । ( ७-१-२० ) क्लीबादनयोः, शिः स्यात् । ३१३ शि सर्वनामस्थानम् । ( १-१-४२ ) 'शि' इत्येतदुक्तसंज्ञं स्यात् । ३१४ नपुंसकस्य झलचः । ( ७-१-७२ ) झलन्तस्याजन्तस्य च क्लीबस्य नुमागमः स्यात्सर्वनामस्थाने परे । उपधादीर्घः, ज्ञानानि । पुनस्तद्वत् । शेषं रामवत् । एवं धनवनफलादयः । ३१५ अद्ड्डतरादिभ्यः पञ्चभ्यः । (७-

---

ति । औङः यः शी आदेशः, तस्मिन् परतः 'यस्येति च' इति लोपस्य प्रतिषेधो वक्तव्य इत्यर्थः । श्यामिति निर्देशादेव नित्यस्त्रीत्वं बोध्यम् । औङ इति तु व्यर्थमेव, सर्वे इत्यादौ 'जसः शी' इत्यस्य भाधिकारेणैव व्यावृत्तिसिद्धेः । ज्ञाने इति । ज्ञान ई इति स्थिते 'आद् गुणः' इति भावः । जश्शसोः शिः । 'स्वमोर्नपुंसकात्' इत्यतो 'नपुंसकात्' इत्यनुवर्तते । तदाह—क्लीबादिति । ज्ञान शि इति स्थिते स्थानिवत्त्वेन प्रत्ययत्वात् 'लशक्वतद्धिते' इति शकार इत् । शि सर्वनामस्थानम् । उक्तसंज्ञमिति । सर्वनामस्थानसंज्ञकमित्यर्थः । अनपुंसकस्येति पर्युदासात् शि इत्यस्य सर्वनामस्थानत्वे अप्राप्ते वचनम् । नपुंसकस्य झलचः । झल् च अचेति समाहारद्वन्द्वः, तेन च 'अङ्गस्य' इत्यधिकृतं विशिष्यते, तदन्तविधिः । 'इदितो नुम्धातोः' इत्यतो 'नुम्' इत्यनुवर्तते । 'उगिदचाम्–' इत्यतः सर्वनामस्थाने इत्यनुवर्तते । तदाह—झलन्तस्येत्यादिना । मित्त्वादन्त्यादचः परः । उपधादीर्घ इति । ज्ञान न् इ—इति स्थिते 'सर्वनामस्थाने च–' इति दीर्घ इत्यर्थः । पुनस्तद्वदिति । अमौट्शस्सु ज्ञानम्, ज्ञाने । ज्ञानानि—इति क्रमेण रूपाणीत्यर्थः । शेषं रामवदिति । शिष्यत इति शेषम्, कर्मणि घञ् । 'घञबन्ताः पुंसि' इति तु प्रायिकमिति भावः ।

अद्ड्डतरादिभ्यः । अद्ड् डतरादिभ्य इतिच्छेदः । दस्य ष्टुत्वेन डकारः,

---

इवर्णोवर्णयोरिति । ईति चेति चकारेण 'नस्तद्धिते' इत्यतस्तद्धितोऽनुकृष्यते तदाह—ईकारे तद्धिते चेति । औङः श्यामिति । विभक्त्यपेक्षया स्त्रीलिङ्गनिर्देशः । नेदं वचनं कर्तव्यम्, 'विभाषा ङिश्योः' इत्यतः श्यामिति प्रकृतम्, 'न संयोगात्' इत्यतो नेति च, तत्रापि संबन्धमात्रं कर्तव्यं यस्य ईकारे तद्धिते च लोपो भवति श्यां नेत्याकरः । जश्शसोः । जसा साहचर्यादिह सुबेव शस् गृह्यते । तेनेह न, कुण्डशो ददाति । शि सर्वनामस्थानम् । महासंज्ञाकरणं पूर्वाचार्यानुरोधेन । नपुंसकस्य । 'इदितो नुम् धातोः' इत्यतो नुमनुवर्तते । 'उगिदचाम्–' इत्यतः सर्वनामस्थाने इति च । 'अङ्गस्य' इति चाधिकृतम् । तथा च झलज्भ्यां नपुंसकमङ्गं विशिष्यते, विशेषणेन च तदन्तविधिर्भवतीत्याह—झलन्तस्येत्यादि । अद्ड्डतरादिभ्यः । पञ्चभ्य इति किम्, नेमं तिष्ठति । नेमं पश्य । डतरादयो डतर-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

१-२५ ) एभ्यः क्लीबेभ्यः स्वमोरद्डादेशः स्यात्। ३१६ टेः।( ६-४-१४३ ) डिति परे भस्य टेर्लोपः स्यात्। 'वाऽवसाने' ( सू २०६ ) कतरत्–कतरद्, कतरे, कतराणि। 'भस्य' इति किम्–पञ्चमः। टेर्लुप्तत्वात् 'प्रथमयोः–' (सू १६४) इति पूर्वसवर्णदीर्घः 'एङ्ह्रस्वात्–' ( सू १९३ ) इति संबुद्धिलोपश्च न भवति, हे कतरत्। पुनस्तद्वत्। शेषं पुंवत्। कतमत्। इतरत्। अन्यत्। अन्यतरत्। अन्यतमशब्दस्य तु अन्यतममित्येव। 'एकतरात्प्रतिषेधो वक्तव्यः।' (वा ४२८७)

---

डस्य संयोगान्तलोपश्च आदेशस्वरूपावगतये न कृत इति कैयटः। डतर, डतम, अन्य, अन्यतर, इतर इति डतरादयः सर्वादिगणपठिताः। अत्र डतरडतमौ प्रत्ययौ। अतस्तदन्तग्रहणम्। 'स्वमोर्नपुंसकात्' इति सूत्रमनुवर्तते तदाह—**एभ्य इत्यादिना**। डकार इत्। कतर अद् इति स्थिते—**टेः**। 'अल्लोपोऽनः' इत्यस्माल्लोप इति 'ति विंशतेर्डिति' इत्यतो डितीति चानुवर्तते। भस्येत्यधिकृतम्। तदाह—**डितीत्यादिना**। कतर अद् इत्यत्र रेफादकारस्य लोपः। चर्त्वविकल्पं स्मारयति—**वावसान इति**। ननु पररूपेण कतरदिति सिद्धेः अद्डो डित्करणस्य किं प्रयोजनमित्यत आह—**टेर्लुप्तत्वादिति**। टेर्लुप्तत्वात् पूर्वसवर्णदीर्घो न भवतीत्यन्वयः। डित्त्वाभावे 'टेः' इति लोपस्याप्राप्तया पररूपं बाधित्वा पूर्वसवर्णदीर्घः प्रसज्येत इति भावः। ननु पूर्वसवर्णदीर्घाभावाय दकार एवादेशः क्रियतामित्यत आह—**एङ्ह्रस्वादित्यादि**। सोर्दकारादेशे सति तस्य स्थानिवत्त्वेन संबुद्धित्वाद् ह्रस्वान्तादङ्गात् परत्वाच्च लोपः प्रसज्येत। अद्डादेशे तु टिलोपे सति कतर् इत्यङ्गम्, न तद् ह्रस्वान्तम्। यत्तु ह्रस्वान्तं कतर इति, न तदङ्गम्, रेफादकारस्य प्रत्ययावयवत्वेन तदन्तस्य प्रत्ययपरकत्वाभावेन अङ्गत्वाभावात्। अतष्टिलोपप्रवृत्तये अद्डादेशविधिरिति भावः। **पुनस्तद्वदिति**। प्रथमावद् द्वितीयेत्यर्थः। **शेषं पुंवदिति**। सर्ववदित्यर्थः। **अन्यतमशब्दस्य त्विति**।

---

डतमेतरान्यान्यतरेति सर्वादिषु पठिताः। **अद्डादेशः स्यादिति**। जिघृक्षितादेशस्वरूपप्रतिपादनाय ष्टुत्वं न कृतम्। **टेः**। 'तिर्विंशतेः–' इत्यतो डितीत्यनुवर्तते 'भस्य' इति चाधिकृतं तदाह—**डिति परे भस्येति**। भस्य किम्, पञ्चमः। अत्र डटो मडागमे भत्वाभावाट्टिलोपो न भवति। किंतु पदत्वाद् नलोप एव। अद्डो डित्करणस्य प्रयोजनमाह—**टेर्लुप्तत्वादित्यादि**। ननु पूर्वसवर्णदीर्घाभावाय दादेश एव क्रियतां किमद्डादेशेनेत्याशङ्क्याह—**एङ्ह्रस्वादित्यादि**। डादेशे तु हे कतरेति स्यादिति भावः। **अन्यतमशब्दस्य त्विति**। एवं च 'सामान्यादिष्वतमत्तमः' इत्यादिप्रयोगाः प्रामादिका एवेति भावः। **अजरमिति**। अविद्यमाना जरा यस्य तत्। 'गोस्त्रियोः–' इत्युपसर्जनह्रस्वे 'अतोऽम्'। **परत्वादिति**। अजर शि इति स्थिते

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एकतरम्। सोरमादेशे कृते संनिपातपरिभाषया न जरस्, अजरम्। अजरसी-अजरे। परत्वाज्जरसि कृते झलन्तत्वान्नुम्, ३१७ सान्त महतः संयोगस्य।

---

तस्याव्युत्पन्नप्रातिपदिकत्वेन डतमप्रत्ययान्तत्वाभावेन तत्राद्ड्डादेशो नेत्यर्थः। 'एकाच्च प्राचाम्' इति डतरजन्तादेकतरशब्दात् स्वमोरद्ड्डादेशे प्राप्ते आह—**एकतरादिति**। एकतरशब्दात् परयोः स्वमोरद्ड्डादेशप्रतिषेधो वक्तव्य इत्यर्थः।

अविद्यमाना जरा यस्य कुलस्येति विग्रहे 'नञोऽस्त्यर्थानाम्–' इति बहुव्रीहौ विद्यमानपदलोपे 'गोस्त्रियोः–' इति ह्रस्वत्वे अजरशब्दः। तस्य प्रक्रियां दर्शयति—**सोरिति**। सोरमादेशे कृते अजरमित्यन्वयः। जरसादेशमाशङ्क्याह—**संनिपातेति**। अदन्तसंनिपाताश्रयस्य अमः अदन्तत्वविघातकजरसादेशं प्रति निमित्तत्वायोगादिति भावः। **अजरसी इति**। 'नपुंसकाच्च' इति शीभावे जरसादेशे रूपम्। **अजरे इति**। जरसादेशाभावे रूपम्। जसि रूपं दर्शयितुमाह—**परत्वादिति**। अजर अस् इति स्थिते 'जश्शसोः शिः' इति शिभावात् परत्वाज्जरसि कृते, ततः शिभावे झलन्तत्वान्नुमित्यर्थ इति केचित्। तदेतद् 'जराया जरस्–' इति सूत्रे अजरांसीत्यत्र 'नुम्जरसोः प्राप्तयोः विप्रतिषेधेन जरस्' इति भाष्यविरुद्धत्वादुपेक्ष्यम्। शिभावात् पूर्वमेव परत्वाद् जरसः प्रवृत्तौ हि तदा जसः सर्वनामस्थानत्वाभावेन नुम एवाप्रसक्तेः तद-संगतिः स्पष्टैव। पूर्वविप्रतिषेधमाश्रित्य जरसः पूर्वमेव शिभावे तु तद्भाष्यं संगच्छते। एवं च जरसः पूर्वमेव शिभावे कृते तस्य सर्वनामस्थानत्वात् तस्मिन् परे नुम्जरसोः प्राप्तयोः नुमपेक्षया परत्वाद् जरस्, ततो झलन्तलक्षणो नुमित्येव व्याख्येयम्। यदि हि जरसादेशात् प्रागेव अजन्तलक्षणो नुम् स्यात्, तदा अजरन् इ इति स्थिते 'निर्दि-श्यमानस्यादेशा भवन्ति' इति न्यायेन जरसि कृते 'अजरस् न' इति स्थिते सान्तसंयो-गाभावात् 'सान्तमहतः–' इति वक्ष्यमाणदीर्घो न स्यादित्यादि शब्देन्दुशेखरे निर्जर-शब्दनिरूपणे अत्र च प्रपञ्चितम्। उभयथापि अजरन् स् इ इति स्थिते नान्तत्वा-भावात् 'सर्वनामस्थाने च–' इति दीर्घे अप्राप्ते—**सान्त महतः**। 'सर्वनामस्थाने चा-संबुद्धौ' इति 'नोपधायाः' इति चानुवर्तते। नेति लुप्तषष्ठीकं पदम्। 'ढ्लोपे पूर्वस्य–'

---

यद्यपि जरसादेशात्प्रागेव 'नपुंसकस्य झलचः' इत्यजन्तलक्षणो नुमागमः स्यात्स चाङ्गभक्तोऽङ्गमेव न व्यवदध्याद् अवयवस्य तु जराशब्दस्य व्यवधायक एवेति निर्दि-श्यमानस्यादेशो विधीयमानो न प्राप्नोति, तथापि यस्मादन्त्यादचः परस्तस्यैवान्तावयवो मित्स्यादिति स्वमते त्ववयवावयवः समुदायस्याप्यवयव इत्यभ्युपगमेन कथंचिज्जरसा-देशे जातेऽपि सान्तत्वाभावात् 'सान्त महतः–' इति दीर्घो न स्यादिति भावः। **सान्त महतः**। अत्र 'नोपधायाः' 'सर्वनामस्थाने चासंबुद्धौ' इत्यनुवर्तते। सान्तेति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

( ६-४-१० ) सान्तसंयोगस्य महतश्च यो नकारस्तस्योपधाया दीर्घः स्यादसंबुद्धौ सर्वनामस्थाने परे । अजरांसि, अजराणि । अमि लुकोऽपवादमम्भावं बाधित्वा परत्वाज्जरस् , ततः संनिपातपरिभाषया न लुक्—अजरसम् , अजरम् । अजरसी, अजरे । अजरांसि, अजराणि । शेषं पुंवत् । 'पद्दन्–' (सू २२८) इति हृदयोदकास्यानां हृद् उदन् आसन् । हृन्दि । हृदा, हृद्भ्यामित्यादि । उदानि । उद्ना, उदभ्यामित्यादि । आसानि । आस्ना । आसभ्यामित्यादि । मांसि । मांसा,

---

इत्यतो दीर्घ इत्यनुवर्तते । नकारस्य उपधाया दीर्घ इति लभ्यते । संयोगस्येत्यवयवषष्ठ्यन्तं नकारे अन्वेति । सान्तेति षष्ठ्यन्तं पृथक्पदम् । आर्षः षष्ठ्या लुक् । सान्तस्येति लभ्यते । तच्च संयोगे अभेदेनान्वेति—सान्तो यः संयोग इति । अत एवासामर्थ्यान्महच्छब्देन तस्य न समासः । महत इत्यप्यवयवषष्ठ्यन्तम् , तच्च नकारे अन्वेति । तदाह—**सान्तसंयोगस्येत्यादिना । अजरांसीति** । दीर्घे सति 'नश्चापदान्तस्य–' इत्यनुस्वारः । अत्र उपधाया इति पूर्वत्वमात्रोपलक्षणम् , पारिभाषिकोपधात्वस्यासंभवात् । अथ द्वितीयैकवचने रूपं दर्शयितुमाह—**अमि लुक इति** । अजर अम् इति स्थिते 'स्वमोर्नपुंसकात्' इति लुक् प्राप्तः, तं बाधित्वा तदपवादः 'अतोऽम्' इत्यम्भावः प्राप्तः, तं बाधित्वा 'विप्रतिषेधे परम्–' इति परत्वाज्जरस् । **अजरसमिति** । वस्तुस्थितिकथनमेतत् । ननु लुगपवादस्याम्भावस्य जरसादेशेन बाधितत्वाद् 'अपवादे निषिद्धे पुनरुत्सर्गस्य स्थितिः' इति न्यायेन अमो लुक् कुतो न स्यादित्यत आह—**तत इति** । ततो न लुगित्यन्वयः, जरसादेशानन्तरं अमो लुङ् न भवतीत्यर्थः । कुत इत्यत आह—**संनिपातेति** । अम्संनिपातमाश्रित्य प्रवृत्तस्य जरसः तल्लुकि निमित्तत्वाभावादिति भावः । **शेषं पुंवत्** । अजरसा, अजरेण । अजरसे, अजराय । अजरसः, अजरात् । अजरसः, अजरस्य । अजरसोः, अजरयोः । अजरसि, अजरे ।

हृदयोदकास्यशब्दाः सुटि ज्ञानवत् । शसादौ विशेषमाह—**पद्दन्निति** । **हृन्दीति** । हृदयशब्दात् शसः शिभावे हृदादेशे 'नपुंसकस्य झलचः' इति ऋकारात् परतो नुमि 'नश्चापदान्तस्य–' इत्यनुस्वारे तस्य परसवर्णे नकारे रूपम् । **इत्यादीति** । हृदे । हृदः । हृदः, हृदोः, हृदाम् । हृदि, हृदोः, हृत्सु । हृदभावपक्षे ज्ञानवत् । उदकशब्दः सुटि ज्ञानवत् । शसादौ विशेषमाह—**उदानीति** । शसः शिभावे उदन्नादेशे 'सर्वनामस्थाने च–' इति दीर्घः । 'अल्लोपोऽनः' इति तु न, शेः सर्वनामस्थानत्वात् । **उद्नेति** । उदक आ इति स्थिते उदन्नादेशे अल्लोपः । **उदभ्यामिति** । उदन्नादेशे

---

लुप्तषष्ठीकं संयोगान्तस्येत्यनेन समानाधिकरणमिति व्याचष्टे—**सान्तसंयोगस्येत्यादि । तस्योपधाया इति** । तत्पूर्वस्येत्यर्थः । **अमि लुकोऽपवादमित्यादि** ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मान्भ्यामित्यादि। वस्तुतस्तु प्रभृतिग्रहणं प्रकारार्थमित्युक्तम्। अत एव भाष्ये 'मांस्पचन्या उखायाः' इत्युदाहृतम्। अयस्मयादित्वेन भत्वात्संयोगान्तलोपो न।

---

'न लोपः प्रातिपदिकान्तस्य' इति नलोपः, 'स्वादिष्वसर्वनामस्थाने' इति पदत्वात्। **इत्यादीति**। उद्ने। उद्नः। उद्नः। उद्नोः। उदनि, उद्नि। उद्नोः। उदन्नभावपक्षे ज्ञानवत्। आस्यशब्दः सुटि ज्ञानवत्। शसादौ विशेषमाह—**आसानीत्यादि**। उदन्नादेशवद्रूपाणि। **इत्यादीति**। आस्ने। आस्नः। आस्नः। आस्नोः। आस्नि, आसनि। आस्नोः। आससु। आसन्नभावपक्षे ज्ञानवत्। मांसशब्दोऽपि सुटि ज्ञानवत्। 'मांसपृतनासानूनाम्–' इति शसादौ मांस्–आदेशः। अत्र नकारस्य 'नश्चापदान्तस्य–' इति कृतानुस्वारस्य निर्देशः। अत एवाह—**मान्भ्यामिति**। मांस्–आदेशे सकारस्य संयोगान्तलोपे सति निमित्तापायाद् अनुस्वारनिवृत्तौ रूपम्। संयोगान्तलोपस्यासिद्धत्वान्न-लोपो न। अथ सुप्यपि हृदाद्यादेशं साधयितुमाह—**वस्तुतस्त्विति**। **इत्युक्तमिति**। 'ककुद्दोषणी' इति भाष्यप्रयोगात् प्रभृतिग्रहणस्य प्रकारार्थत्वम् अजन्तपुँल्लिङ्गाधिकारे स्वयमुक्तमित्यर्थः। ननु प्रभृतिग्रहणस्य प्रकारार्थत्वेऽपि प्रत्ययत्वेन सादृश्यविवक्षायां प्रथमैकवचने 'हृत्' इति प्रयोगोऽनुपपन्नः, सोर्लुका लुप्तत्वेन प्रत्ययलक्षणस्याप्यभावात्, तदनित्यत्वाश्रयणे च मानाभावादित्यत आह—**अत एवेति**। **मांस्पचन्या इति**। पच्यते अस्यामुखायामिति पचनी, अधिकरणे ल्युट्, अनादेशः, टित्त्वाद् ङीप्, मांसस्य पचनीति षष्ठीसमासः। अत्र ङसो लुका लुप्तत्वात् प्रत्ययलक्षणाभावे प्रत्ययपरत्वाभावाद् मांस्–आदेशो न स्यात्। अतो हृदाद्यादेशविधौ 'न लुमता–' इति निषेधस्यानित्यत्व-माश्रीयत इत्यर्थः। ननु मांस्पचन्या इत्यत्र अन्तर्वर्तिनं ङसं लुप्तमाश्रित्य मांस् इत्यस्या-स्ति पदत्वम्, 'सुप्तिङन्तम्–' इति पदसंज्ञायाः प्रकृतिप्रत्ययधर्मत्वेन केवलाङ्गधर्मत्वा-भावेन अत्र 'न लुमता–' इति निषेधस्याप्रवृत्तेः। अन्यथा राजपुरुष इत्यत्र कथं नलोपः। ततश्चात्र सकारस्य संयोगान्तलोपो दुर्वार इत्यत आह—**भत्वात् संयोगान्तलोपो नेति**। ननु यजादिस्वादिप्रत्यये परे विधीयमानाया भसंज्ञायाः केवलाङ्गधर्मत्वात् तत्र लुका लुप्ते प्रत्ययलक्षणनिषेधात् कथमिह भसंज्ञेत्यत आह—**अयस्मयादित्वेनेति**।

---

एतेन स्वमोरमादेशे कृते वा जरसिति प्राचो ग्रन्थः प्रत्युक्तः। **मांस्पचन्या इति**। पच्यतेऽस्यामिति पचनी। 'करणाधिकरणयोश्च' इति ल्युट्। टित्वान्ङीप्। मांसस्य पचनी मांस्पचनी। अत्र ङसो लुका लुप्तत्वात् प्रत्ययलक्षणं नेति प्रभृतिग्रहणस्य प्रका-रार्थत्वं विना मांसशब्दस्य मांसित्यादेशो न सिध्येदिति भावः। ननु पृषोदरादिसूत्रे 'मांसस्य पचि युड्घञोः' इति वक्ष्यमाणत्वादन्तलोपेनाप्येतद्रूपं सिद्धमिति चेत्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

'पद्दन्-' ( सू २२८ ) इत्यत्र हि 'छन्दसि' इत्यनुवर्तितं वृत्तौ, तथापि 'अपो भि' (सू ४४२) इत्यत्र 'मासश्छन्दसि' ( वा ४६३४ ) इति वार्तिके छन्दोग्रहणसामर्थ्याल्लोकेऽपि क्वचित्–इति कैयटोक्तरीत्या प्रयोगमनुसृत्य पदादयः प्रयोक्तव्या इति बोध्यम् ॥ इत्यदन्ताः ॥ **३१८ ह्रस्वो नपुंसके प्रातिपदिकस्य ।** ( १-२-४७ ) क्लीबे प्रातिपदिकस्याजन्तस्य ह्रस्वः स्यात् । श्रीपं ज्ञानवत् । श्रीपाय । अत्र

---

मांस्–आदेशस्य अयस्मयादिगणपठितत्वाद् 'अयस्मयादीनि च्छन्दसि' इति भत्वमित्यर्थः। शङ्कते—**पद्दन्नित्यत्रेति** । 'पद्दन्नो-' इति सूत्रे 'शीर्षन् छन्दसि' इत्यतः छन्दसीत्यनुवृत्तिः वृत्तिग्रन्थे प्रदर्शितेत्यर्थः । ततश्च वैदिकप्रक्रियायामेव तदुपन्यासो युज्यत इत्याक्षेपः । परिहरति—**तथापीति** । 'पद्दन्नो-' इति सूत्रे छन्दोग्रहणानुवृत्तावपि लोकेऽपि क्वचिदित्यन्वयः । कुतो लोकेऽपि प्रयोग इत्यत आह—**अपो भीत्यादीति** । 'अपो भि' इति सूत्रम् । अपस्तकारः स्याद् भादौ प्रत्यये परे इत्यर्थः । तत्रास्ति वार्तिकम्—'मासश्छन्दसि' इति । मास् इत्यस्य तकारः स्याद् भादिप्रत्यये परे छन्दसि–इति तदर्थः। ऋग्वेदे 'माद्भिः शरद्भिः' इत्यादिमन्त्र उदाहरणम् । यदि 'पद्दन्-' इति छन्दोमात्रविषयं स्यात्, तदा मास् इत्यादेशस्य छन्दोमात्रविषयत्वादलौकिकत्वाद् 'मासश्छन्दसि' इति सस्य तकारविधौ छन्दोग्रहणं व्यर्थं स्यात् । अतो लोकेऽपि क्वचिदिति कैयटोक्तरीत्या 'पद्दन्-' इत्यस्य लोकेऽपि प्रवृत्तिमनुमत्य पदाद्यादेशाः प्रयोक्तुं योग्या इत्यर्थः ॥इत्यदन्ताः॥

**अथ आदन्ता निरूप्यन्ते** । श्रियं पातीति श्रीपाशब्दो विश्वपाशब्दवद् विजन्तः क्विबन्तो वा । तस्य नपुंसकत्वे ह्रस्वविधानमाह—**ह्रस्वो नपुंसके** । ह्रस्वश्रुत्या उपस्थितेन 'अचः' इत्यनेन प्रातिपदिकस्य विशेषणात् तदन्तविधिरित्याह—**क्लीब इत्यादिना** । न च कुले इति द्विवचने एकादेशस्य पूर्वान्तत्वेन ग्रहणाद् अजन्तप्रातिपदिकत्वाद् ह्रस्वः स्यादिति वाच्यम्, 'अर्थवदधातुः–' इत्यतः प्रातिपदिकग्रहणानुवृत्तौ पुनः प्रातिपदिकग्रहणेन अन्तवद्भावतः प्रातिपदिकत्वे ह्रस्वाभावबोधनात् । **ज्ञानवदिति** । ह्रस्वविधानाद् दीर्घान्तत्वप्रयुक्तो न कश्चिद्विशेष इति भावः । 'जश्शसोः शिः' श्रीपाणीति रूपम्, भिन्नपदस्थत्वेऽपि 'एकाजुत्तरपदे णः' इति णत्वप्रवृत्तेः । श्रीपेण, इनादेशे गुणे तस्य पूर्वान्तत्वादुत्तरपदस्य एकाच्त्वात् स्यादेव णत्वम् । **श्रीपायेति** । श्रीपाशब्दस्य 'ह्रस्वो नपुंसके-' इति ह्रस्वत्वे ङेर्यादेशे 'सुपि च' इति दीर्घे

---

अत्राहुः—'पृषोदरादीनि यथोपदिष्टम्' इत्यस्योत्तरपदाधिकारस्थत्वाल्ल्युडन्तं यदुत्तरपदं मांस्पचनमित्यादि तत्रैवान्तलोपः स्यात् । अत्र हि ङीबन्तमुत्तरपदं न तु ल्युडन्तमिति नास्त्येवान्तलोप इति । **मासश्छन्दसीति** । मास्शब्दस्य तकारः स्याद्भादौ

---

१ 'मनुसत्य' क ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

**संनिपातपरिभाषया 'आतो धातोः' (सू २४०) इत्याकारलोपो न ॥ इत्यादन्ताः ॥**

**३१९ स्वमोर्नपुंसकात्। ( ७-१-२३ ) क्लीवादङ्गात्परयोः स्वमोर्लुक् स्यात्।**

---

रूपम्। संनिपातपरिभाषा तु कष्टायेति निर्देशाद् न प्रवर्तत इति प्रागुक्तम्। नन्वत्र ह्रस्वत्वे कृतेऽपि प इत्यस्य एकदेशविकृतन्यायेन धातुत्वानपायाद् दीर्घे कृते आकारान्तत्वाच्च 'आतो धातोः' इत्याल्लोपः स्यात्, यादेशस्य स्वतो यकारादितया स्थानिवत्त्वेन स्वादिप्रत्ययतया च तस्मिन् परे भत्वस्यापि सत्त्वादित्यत आह—**अत्र संनिपातेति।** ननु उपजीव्यविघातकं प्रति उपजीवकं निमित्तं न भवतीति संनिपातपरिभाषया लभ्यते, प्रकृते च अदन्तमुपजीव्य प्रवृत्तस्य यादेशस्य आल्लोपं प्रति कथं न निमित्तत्वम्। यादेशस्य आकारमुपजीव्य प्रवृत्तत्वाभावेन आकारलोपं प्रति निमित्तत्वे बाधकाभावादिति चेत्, मैवम्—यादेशस्तावद् ह्रस्वमवर्णमुपजीव्य प्रवर्तते, तद्विधावत इत्यनुवृत्तेः। ततश्च ह्रस्वत्वमवर्णत्वं च समुदितं यादेशस्य उपजीव्यम्। तत्र कष्टायेति निर्देशात् संनिपातपरिभाषां बाधित्वा कृतेऽपि दीर्घे ह्रस्वत्वांश एव निवृत्तः, अवर्णत्वांशस्त्वनुवृत्त एव। तस्याप्याल्लोपेन निवृत्तौ उपजीव्यविघातः स्यादेवेति भवेदेव संनिपातपरिभाषाविरोधः। अतो न भवत्याल्लोप इति कौस्तुभे समाहितम् 'इको गुणवृद्धी' इत्यत्र। वस्तुतस्तु 'आतो धातोः' इत्यत्र लक्षणप्रतिपदोक्तपरिभाषया प्रतिपदोक्त एवाकारान्तधातुर्गृह्यते। इह तु पाधातोर्ह्रस्वत्वे पुनर्दीर्घे सति अवगम्यमानं पास्वरूपं लाक्षणिकमेवेति न तस्यात्र ग्रहणमित्यास्तां तावत्॥ इत्यादन्ताः॥

**अथ इदन्ता निरूप्यन्ते।** अथ वारिशब्दप्रक्रियां दर्शयितुमाह। **स्वमोर्नपुंसकात्।** 'षड्भ्यो लुक्' इत्यतो लुगित्यनुवर्तत इत्याह—**क्लीवादित्यादिना।**

---

प्रत्यये छन्दसीति वार्तिकार्थः। 'माद्भिः शरद्भिः दुरोदरं तव' इत्युदाहरणम्। **ह्रस्वो नपुंसके।** इह ह्रस्वश्रुत्योपस्थितेनाच इत्यनेन प्रातिपदिकविशेषणात्तदन्तविधिरित्याह—**अजन्तस्येति।** प्रातिपदिकस्याच इति वैयधिकरण्येन व्याख्यायां तु सुवाक् ब्राह्मणकुलमित्यत्रातिप्रसङ्गः स्यात्। एतच्च 'अचश्च' इति सूत्र एवास्माभिः स्पष्टीकृतम्। प्रातिपदिकस्येति किम्, काण्डे। कुड्ये। **ज्ञानवदिति।** श्रीपाणीत्यादौ 'एकाजुत्तरपदे–' इति णत्वं तु विशेषः। श्रीपेणेत्यत्रापीनादेशेन सहाद्गुणे कृते एकादेशस्य पूर्वान्तत्वेन ग्रहणाद् 'अचः परस्मिन्–' इति सूत्रे पूर्वस्माद्विधिः पूर्वविधिरिति पञ्चमीसमासपक्षाश्रयेण स्थानिवत्त्वाद्वा एकाजुत्तरपदत्वमस्तीति स्यादेव णत्वम्। **संनिपातेति।** अवर्णमाश्रित्य कृतो यादेशः कथमवर्णलोपे निमित्तं स्यात्। न च 'सुपि च' इति दीर्घार्थं संनिपातपरिभाषाया अनित्यत्वाभ्युपगम आवश्यक एवेति वाच्यम्। 'कष्टाय–' इति निर्देशेन दीर्घविधौ अनित्यत्वाभ्युपगमेऽप्यवर्णलोपे कार्ये तदनभ्युपगमात्। कृते-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वारि। ३२० इकोऽचि विभक्तौ। (७-१-७३) इगन्तस्य क्लीबस्य नुमागमः स्यादचि विभक्तौ। वारिणी। वारीणि। 'न लुमता-' (सू २६३) इति निषेधस्यानित्यत्वात्पक्षे सम्बुद्धिनिमित्तो गुणः, हे वारे, हे वारि। 'आङो ना-' (सू २४४) वारिणा। 'घेर्ङिति' (सू २४५) इति गुणे प्राप्ते—'वृद्ध्यौत्त्वतृज्वद्भाव-

---

वारीति। सोरमश्च लुकि रूपम्। न च 'आदेः परस्य' इति अमः अकारस्यैव लुक् स्यात्, न तु मकारस्यापीति शङ्क्यम्। प्रत्ययस्य लोप एव हि लुगित्युच्यते। अम् इति समुदाय एवेह प्रत्ययः, न तु तदेकदेशभूतमकारमात्रम्। अतो लुग् अमः सर्वादेश एव भवति। इकोऽचि। 'इदितो नुम् धातोः' इत्यतो नुमित्यनुवर्तते। 'नपुंसकस्य झलचः' इत्यतो नपुंसकस्येत्यनुवर्तते। अङ्गस्येत्यधिकृतम् इका विशेष्यते, तदन्तविधिः। तदाह—इगन्तस्येत्यादिना। अचि विभक्ताविति। अजादौ विभक्तावित्यर्थः। 'इकोचि सुपि' इत्येव सुवचम्। विभक्तौ किम्, मधु मद्यम्, तस्येदं माधवम्। अणि परे नुमि टिलोपे माधमिति स्यात्। वारिणी इति। वारि औ इति स्थिते शीभावे, नुमि, 'अट्कुप्वाङ्-' इति णत्वे रूपम्। वारीणि इति। जश्शसोः शिभावे, नुमि, 'सर्वनामस्थाने च-' इति दीर्घे, णत्वे रूपम्। हे वारि सु इत्यत्र सोर्लुकि प्रक्रियां दर्शयति—पक्ष इति। 'ह्रस्वस्य गुणः' इति सम्बुद्धिनिमित्तको गुणः कदाचिद्भवतीत्यर्थः। नन्विह सम्बुद्धेर्लुका लुप्तत्वाद् 'न लुमता-' इति प्रत्ययलक्षणनिषेधात् कथं गुण इत्यत आह—न लुमतेति निषेधस्यानित्यत्वादिति। अत्र च 'इकोऽचि विभक्तौ' इत्यत्राज्ग्रहणं ज्ञापकम्। हलादिषु भ्यामादिषु सत्यपि नुमि 'न लोपः प्रातिपदिकान्तस्य' इति तस्य लोपसम्भवादचीति व्यर्थम्। न च सम्बुद्धिव्यावृत्त्यर्थम् अज्ग्रहणम्, तत्र नुमि सति 'न ङिसम्बुद्ध्योः' इति निषेधे सति नकारश्रवणप्रसङ्गादिति वाच्यम्, सम्बुद्धेर्लुका लुप्ततया प्रत्ययलक्षणाभावेन तत्र नुमः प्राप्तेरेवाभावात्। 'न लुमता-' इति निषेधस्यानित्यत्वे तु सम्बुद्धौ प्रत्ययलक्षणेन प्राप्तं नुमं वारयितुमज्ग्रहणम् अर्थवदिति भवत्यज्ग्रहणं 'न लुमता-' इत्यस्यानित्यत्वे लिङ्गमित्याहुः। अत एव 'इकोचि-' इति सूत्रे हे त्रपो इति 'एङ्ह्रस्वात्-' इति सूत्रे हे त्रपु इति च भाष्यं संगच्छते। आङो नेति। रूपे विशेषाभावेऽपि नुमपेक्षया परत्वेन नाभावस्यैव न्याय्यत्वादिति भावः। ङसिङसोर्विशेषमाह—घेरिति। नुमं बाधित्वा परत्वाद् गुणे प्राप्त इत्यर्थः। वृद्ध्यौत्त्वेति।

---

ऽपि दीर्घे ह्रस्वव्यक्त्यपायेऽप्यत्वजातेरनपायादिति दिक्। एतेन श्रीपशब्दान्ङयि श्रीप्येति केषांचिद्व्याख्यानं परास्तम्। स्वमोर्नपुंसकात्। अयं लुक् पूर्वविप्रतिषेधेन त्यदाद्यत्वस्य किमः कादेशस्य च बाधकः। परत्वाद्धि त्यदाद्यत्वे 'तदोः-' इति सत्वे सोरम्भावे च सं कुलमिति स्यात्। इष्यते तु तत् कुलमिति। इकोऽचि। विभक्तौ किम्, मधु

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गुणेभ्यो नुम् पूर्वविप्रतिषेधेन' ( वा ४३७३ )। वारिणे। वारिणः। वारिणोः। 'नुमचिर-' ( वा ४३७४ ) इति नुट्। 'नामि' ( सू २०६ ) इति दीर्घः। वारीणाम्। वारिणि। वारिणोः। हलादौ हरिवत्। **३२१ तृतीयादिषु भाषितपुंस्कं पुंवद्गालवस्य।** ( ७-१-७४ ) प्रवृत्तिनिमित्तैक्ये भाषितपुंस्कमिगन्तं

---

वार्तिकम्। वृद्ध्यादीनां क्रमेण गावौ, हरौ, क्रोष्ट्रा, हरये—इत्यवकाशः। नुमोऽवकाशः वारीणि इति। अतिसखीनि इत्यत्र जश्शसोः 'सख्युरसम्बुद्धौ' इति णित्वाद् वृद्धिः परत्वाद् नुमं बाधित्वा प्राप्ता, वारिणि इत्यत्र ङौ तु 'अच्च घेः' इत्यौत्त्वं प्राप्तम्, प्रियक्रोष्टूनि इत्यत्र जश्शसोः तृज्वत्त्वं प्राप्तम्, वारिशब्दाद् ङयादौ गुणः प्राप्तः, अत्र पूर्वविप्रतिषेधान्नुमेवेत्यर्थः। **वारिणे इति**। ङयि गुणं बाधित्वा नुमि णत्वे रूपम्। **वारिण इति**। ङसिङसोर्गुणं बाधित्वा नुमि णत्वे रूपम्। **वारिणोरिति**। ओसि यणं बाधित्वा नुमि णत्वे रूपम्। वारि आमित्यत्र परत्वान्नुटं बाधित्वा नुमि प्राप्त आह—**नुमचिरेति नुडिति**। नुम्नुटोः को विशेष इत्यत आह—**नामीति दीर्घ इति**। नुमि तु सति तस्याङ्गभक्तत्वाद् 'नामि' इति दीर्घो न स्यादिति भावः। **वारिणीति**। ङौ 'अच्च घेः' इत्यौत्त्वं परमपि बाधित्वा 'वृद्ध्यौत्त्व-' इति पूर्वविप्रतिषेधान्नुम्। न विद्यते आदिः उत्पत्तिः यस्य सः अनादिः ईश्वरः। अनादिः अविद्या। अनादि ब्रह्म। त्रिलिङ्गोऽयं विशेष्यनिघ्नः। तस्य नपुंसकत्वे प्रथमाद्वितीययोर्वारिवद्रूपाणि। टादिषु अचि विशेषमाह—**तृतीयादिषु**। भाषितः पुमान् येन प्रवृत्तिनिमित्तेन तद् भाषितपुंस्कम्, तदस्यास्तीति अर्शआद्यच्। शब्दस्वरूपम् विशेष्यम्। पुंस्त्वे नपुंसकत्वे च एकप्रवृत्तिनिमित्तकमिति यावत्। 'इकोऽचि विभक्तौ' इत्यत इकोऽचीति 'नपुंसकस्य झलचः' इत्यतो नपुंसकस्येति चानुवर्तते। षष्ठी च प्रथमया विपरिणम्यते। तदाह—**प्रवृत्तिनिमित्तैक्य इत्यादिना**। **पुंवद्वेति**। गालव-

---

मयं तस्येदं माधवम्। अत्र नुमि सति टिलोपः स्यात्। **वृद्ध्यौत्वेति**। अतिसखीनीत्यत्र 'सख्युरसंबुद्धौ' इति णिद्वद्भावाद् वृद्धिः प्राप्ता, वारिणीत्यत्र तु 'अच्च घेः' इत्यौत्वम्, प्रियक्रोष्टूनीत्यादौ तृज्वद्भावः प्राप्तः। ननु नुम्नुटोः को विशेषस्तत्राह—**नामीति दीर्घ इति**। नुमस्त्वङ्गभक्तत्वात्तस्मिन्सति दीर्घो न स्यादिति भावः। **तृतीयादिषु**। यद्यत्र भाषितः पुमान् येन शब्देन स भाषितपुंस्कः शब्द इति विज्ञायेत, तदा पीलुने इत्यादावतिप्रसङ्गः स्यात्, अतो व्याचष्टे—**प्रवृत्तिनिमित्तैक्य इति**। अयं भावः—भाषितः पुमान् यस्मिन् अर्थे तद् भाषितपुंस्कं प्रवृत्तिनिमित्तम्, तदस्यास्तीति अर्शआदित्वादच्। तेनैकस्मिन् प्रवृत्तिनिमित्ते भाषितपुंस्कं यच्छब्द-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

क्लीबं पुंवद्वा स्याट्टादावचि। अनादये, अनादिने-इत्यादि। शेषं वारिवत्। पीलुर्वृक्षः, तत्फलं पीलु, तस्मै पीलुने। अत्र न पुंवत्, प्रवृत्तिनिमित्तभेदात्। ३२२ अस्थिदधिसक्थ्यक्ष्णामनङुदात्तः। ( ७-१-७५ ) एषामनङ् स्याट्टादावचि,

---

ग्रहणादिति भावः। **अचीति**। अजादावित्यर्थः। पुंवत्त्वे ह्रस्वनुमोरभावः फलति। घटपटादिशब्दास्तावद् घटत्वपटत्वादिरूपेणैव तत्तद्व्यक्तिं प्रत्याययन्ति, न तु द्रव्यत्वपृथिवीत्वादिरूपेणेति निर्विवादम्। ततश्च यद्विशेषणं पुरस्कृत्य घटादिशब्दाः तत्तद्व्यक्तिषु प्रयुज्यन्ते, तद्विशेषणं प्रवृत्तिनिमित्तमित्युच्यते, वाच्यतावच्छेदकमिति यावत्। एवं च नपुंसकत्वे लिङ्गान्तरे च यस्य एकमेव वाच्यतावच्छेदकम्, तत् शब्दस्वरूपं भाषितपुंस्कशब्देन विवक्षितम्। अनादिशब्दश्च उत्पत्त्यभावात्मकमनादित्वं पुरस्कृत्य स्त्रीपुंनपुंसकतत्तद्व्यक्तिप्रत्यायक इति भवति तस्य प्रवृत्तिनिमित्तैक्ये भाषितपुंस्कता। अतस्तस्य टादावचि पुंवत्त्वविकल्प इत्यभिप्रेत्योदाहरति—**अनादये, अनादिने इति**। पुंवत्त्वे नुमः अप्रवृत्तेः 'घेर्ङिति' इति गुणः। पुंवत्त्वाभावे तु नुमिति भावः। **इत्यादीति**। अनादेः, अनादिनः। अनाद्योः, अनादिनोः। आमि तु अनादीनाम् इत्येव। **शेषं वारिवदिति**। प्रथमाद्वितीययोः भ्यामादौ हलि च वारिवदित्यर्थः। प्रवृत्तिनिमित्तैक्ये इत्यस्य प्रयोजनं दर्शयितुमाह—**पीलुर्वृक्ष इत्यादि**। यदा वृक्षविशेषः पीलुशब्दवाच्यः, तदा पुँल्लिङ्गः पीलुशब्दः। यदा पीलुजन्यफलं पीलुशब्दवाच्यम्, तदा नपुंसकलिङ्गः। 'फले लुक्' इत्यणो लुक्। अत्र फले वाच्ये पुंवत्त्वं नेत्यर्थः। कुत इत्यत आह—**प्रवृत्तिनिमित्तभेदादिति**। वृक्षत्वव्याप्यजातिविशेषात्मकं पीलुत्वं वृक्षविशेषे वाच्ये प्रवृत्तिनिमित्तम्। फलविशेषे तु वाच्ये फलत्वव्याप्यजातिविशेषात्मकं पीलुत्वं प्रवृत्तिनिमित्तमिति प्रवृत्तिनिमित्तभेदादित्यर्थः।

तदुक्तम्—'पीलुर्वृक्षः फलं पीलु पीलुने न तु पीलवे।
वृक्षे निमित्तं पीलुत्वं तज्जत्वं तत्फले पुनः॥' इति।

अस्थि, दधि, सक्थि, अक्षि एतेषां प्रथमाद्वितीययोर्वारिवद्रूपाणि। टादावचि विशेषमाह—**अस्थिदधि**। तृतीयादिष्विति अचीति चानुवर्तते, तदाह—**एषामित्यादिना**। नुमोऽपवादः। अनङि ङकार इत्, अकार उच्चारणार्थः। ङित्वा-

---

स्वरूपं तल्लभ्यत इति। 'इकोऽचि विभक्तौ' इत्यतोऽचीत्यनुवर्तनादाह—**टादावचीति**। इगन्तं किम्, सोमपेन कुलेन, अचि किम्, ग्रामणिभ्यां कुलाभ्याम्। टादौ किम्, अनादिनी। अनादीनि। **तत्फलमिति**। पीलोः फलं पीलु। 'फले लुक्' इति ओरञो लुक्। **प्रवृत्तिनिमित्तभेदादिति**। पीलुशब्दस्य हि वृक्षत्वव्याप्यजातिर्वृक्षे प्रवृत्तिनिमित्तम्, फले तु फलत्वव्याप्यजातिर्वृक्षविशेषप्रभवत्वं वा। उभयथापि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स चोदात्तः। 'अल्लोपोऽनः' (सू २३४)। दध्ना। दध्ने। दध्नः। दध्नः, दध्नोः, दध्नाम्। दध्नि, दधनि। दध्नोः। शेषं वारिवत्। एवमस्थिसक्थ्यक्षीणि। तदन्तस्याप्यनङ्। अतिदध्ना॥ इति इदन्ताः॥ सुधि, सुधिनी, सुधीनि। हे सुधे, हे सुधि। सुधिया, सुधिना। सुधियाम्, सुधीनाम्। प्रध्या, प्रधिना॥ इति ईदन्ताः॥

---

दन्तादेशः। दध्नि, दधनि इति। 'विभाषा ङिश्योः' इत्यल्लोपविकल्प इति भावः। तदन्तस्यापीति। आङ्गत्वदिति भावः। अतिदध्नेति। दधि अतिक्रान्तं कुलमतिदधि। अत्रापि नपुंसकस्येति संबध्यते। ततश्च धाञः 'आदृगमहन–' इति किप्रत्यये दधिशब्दस्य पुंस्त्वे दधिनेत्येव। नपुंसकस्येति श्रूयमाणमस्थ्यादिभिरेवान्वेति। तेनातिदध्ना ब्राह्मणेनेत्यादि सिद्धम्॥ इति इदन्ताः॥

अथ ईदन्ता निरूप्यन्ते। सु ध्यायतीति, सु शोभना धीर्यस्येति वा विग्रहे सुधीशब्दस्य 'ह्रस्वो नपुंसके–' इति ह्रस्वत्वे वारिवद्रूपाणीत्याह। सुधि, सुधिनी इत्यादि। परत्वान्नुमा इयङ् बाध्यत इति भावः। सुधिया, सुधिनेति। सुध्यातृत्वस्य शोभनज्ञानवत्त्वस्य वा प्रवृत्तिनिमित्तस्य पुंसि नपुंसके च एकत्वात् पुंवत्त्वविकल्पः। एवं प्रधीशब्दः। तत्र 'न भूसुधियोः' इति निषेधाभावाद् 'एरनेकाचः–' इति यण्॥ इति ईदन्ताः॥

---

पुंनपुंसकयोर्नैकं प्रवृत्तिनिमित्तमिति भावः। अस्थिदधि। 'इकोऽचि–' इति नुमि प्राप्ते विधिरयम्, नकारादकार उच्चारणार्थः। ङकारस्त्वन्तादेशार्थः। 'नब्विषयस्यानिसन्तस्य' इति फिट्सूत्रेणास्थ्यादय एते आद्युदात्ताः। तत्रान्तस्यानुदात्तेकारस्य विधीयमानोऽङ् 'स्थानेऽन्तरतमः' इत्यनुदात्तः स्यादित्युदात्त उच्यते, तच्चोदात्तत्वमस्थनि दधनि इत्यादावल्लोपाभावपक्षे स्फुटम्, दध्ना, दध्ने इत्यादावनङोऽकारलोपे 'अनुदात्तस्य च यत्रोदात्तलोपः' इत्युदात्तनिवृत्तिस्वरेण विभक्त्युदात्तत्वं प्रयोजनमिति बोध्यम्। तृतीयादिष्वित्यनुवर्तते अचीति च, तदाह—टादावचीति। टादौ किम्, दधिनी। दधीनि। अचि किम्, दधिभ्याम्। तदन्तस्यापीति। आङ्गत्वादिति भावः। अतिदध्नेति। दधि अतिक्रान्तेनेत्यर्थः। स्त्रियामतिदध्नेत्येव। संनिपातपरिभाषया बहिरङ्गपरिभाषया च ङीपोऽप्रवृत्तेः। प्राचा तु प्रियदध्ना ब्राह्मणेनेत्युक्तम्। स्त्रियां तु प्रियदध्न्या, प्रियदध्न्यै इत्याद्यपि कैश्चिदुक्तम्। तदसत्। उरःप्रभृतिषु दधिशब्दस्य पाठाद्बहुव्रीहौ नित्यं कप्यनङः प्रसक्त्यभावात्। उक्तपरिभाषाभ्यां ङीपः प्रवृत्तेर्दूरापास्तत्वाच्चेति दिक्। सुधिनी इति। परत्वान्नुमा इयङ् बाध्यते। सुधियेति। शोभनज्ञानवत्त्वं प्रवृत्तिनिमित्तं पुंनपुंसकयोरेकमेवेति भाषितपुंस्कत्वात् 'तृतीयादिषु–' इति पुंवत्पक्षे नुमभावात् 'न भूसुधियोः' इति यणिनिषेधाच्चेयङ्। प्रध्येति। अत्रापि प्रकृष्टज्ञानवत्त्वं पुंनपुंसकयोरे-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मधु, मधुनी, मधूनि। हे मधो, हे मधु। एवमम्ब्वादयः। सानुशब्दस्य स्नुर्वा स्नूनि, सानूनि। प्रियक्रोष्टु, प्रियक्रोष्टुनी। तृज्वद्भावात्पूर्वविप्रतिषेधेन नुम्। प्रियक्रोष्टूनि। टादौ पुंवत्पक्षे–प्रियक्रोष्ट्रा, प्रियक्रोष्टुना। प्रियक्रोष्ट्रे, प्रियक्रोष्टवे। अन्यत्र तृज्वद्भावात्पूर्वविप्रतिषेधेन नुमेव। प्रियक्रोष्टुना। प्रियक्रोष्टुने। 'नुम्-

---

अथ उदन्ता निरूप्यन्ते। मध्विति। 'मधु मद्ये पुष्परसे' 'मधुर्वसन्ते चैत्रे च' इति कोशान्मधुशब्दस्य पुंनपुंसकयोः मद्यत्ववसन्तत्वादिरूपप्रवृत्तिनिमित्तभेदाद् न पुंवत्त्वविकल्पः। मृद्वीकाविकारवाचिनो मधुशब्दस्य तु नित्यनपुंसकत्वान्न पुंवत्त्वमिति विवेकः। सानुशब्दस्य स्नुर्वेति। 'पद्दन्–' इति सूत्रे 'मांसपृतनासानूनां मांसपृत्स्नवो वाच्याः' इति वार्तिकादिति शेषः। स्नूनि, सानूनीति। शसि रूपम्। शसादावेव स्नुविधेः। प्रभृतिग्रहणस्य प्रकारार्थत्वे सुप्यपि स्नुर्भवति। अस्य च 'स्नुः प्रस्थः सानुरस्त्रियाम्' इति पुंनपुंसकत्वाद् भाषितपुंस्कत्वादस्त्येव पुंवत्त्वविकल्पः। प्रियक्रोष्टु, प्रियक्रोष्टुनी इति। प्रियः क्रोष्टा यस्येति विग्रहः। असर्वनामस्थानत्वान्न तृज्वत्त्वम्। अथ जश्शसोः शिभावे सति सर्वनामस्थानत्वाद् नुमं बाधित्वा परत्वात् तृज्वत्त्वे प्राप्ते आह—तृज्वद्भावादिति। 'वृद्ध्यौत्त्व–' इति वार्तिकादिति भावः। प्रियक्रोष्टूनीति। जश्शसोः शिभावे नुमि 'सर्वनामस्थाने च–' इति दीर्घे रूपम्। न च नित्यत्वादेव नुम्सिद्धेः किं पूर्वविप्रतिषेधेनेति वाच्यम्, नित्यत्वान्नुमि कृतेऽपि 'तदागमाः–' इति न्यायेन 'तृज्वत्क्रोष्टुः' इत्यत्र नुम्विशिष्टस्य ग्रहणापत्तौ पुनस्तृज्वत्त्वापत्तेः। पूर्वविप्रतिषेधमाश्रित्य तृज्वत्त्वं बाधित्वा नुमि कृते तु न पुनस्तृज्वत्त्वम्, 'विप्रतिषेधे यद्बाधितं तद्बाधितमेव' इति न्यायादित्यलम्। पुंवत्पक्ष इति। तत्रापि तृज्वत्त्वपक्ष इत्यर्थः। प्रियक्रोष्ट्रेति। पुंवत्त्वे तृज्वत्त्वे च सति रूपम्। अनपुंसकत्वान्न नुम्। प्रियक्रोष्टुनेति। पुंवत्त्वे तदभावे च तृज्वत्त्वाभावे रूपम्। पुंवत्वाभावपक्षेऽपि नुमं बाधित्वा परत्वान्नात्वमेव। प्रियक्रोष्ट्रे इति। पुंवत्त्वे तृज्वत्त्वे यण्। अनपुंसकत्वान्न नुम्। प्रियक्रोष्टवे इति। पुंवत्त्वे तृज्वत्त्वाभावे रूपम्। अन्यत्रेति। पुंवत्त्वाभावपक्ष इत्यर्थः। प्रियक्रोष्टुनेति। पुंवत्त्वतृज्वत्त्वयोरभावे रूपम्। तथा ङयि त्रीणि रूपाणि।

---

क्रमेणेति भाषितपुंस्कत्वात्तृतीयादिष्विति पुंवत्पक्षे यण्। नपुंसकपक्षे तु नुमिति बोध्यम्। बह्व्यः श्रेयस्यो यस्य तद्बहुश्रेयसी कुलमित्यत्र नपुंसकह्रस्वत्वं न। ईयसो बहुव्रीहेर्नेति ह्रस्वमात्रस्य प्रतिषेधादित्येके। अन्ये तूपसर्जनह्रस्व एव निषिध्यते। नपुंसकह्रस्वत्वं तु स्यादेव। बहुश्रेयसि बहुश्रेयसिनी इत्याहुः। मध्विति। 'मधु मद्ये पुष्परसे' 'मधुर्वसन्ते चैत्रे च'। इह पुंनपुंसकयोरेकं प्रवृत्तिनिमित्तं नास्ति, किं तु मधुत्ववसन्तत्वादिरूपं

---

१ 'यदागमाः' इति युक्तं वक्तुम्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अचिर-' (वा ४३७४) इति नुट्। प्रियक्रोष्टूनाम्॥इत्युदन्ताः॥ सुलु, सुलुनी, सुलूनि। पुनस्तद्वत्। सुल्वा, सुलुना॥ इत्यूदन्ताः॥ धातृ, धातृणी, धातॄणि। हे धातः, हे धातृ। धात्रा, धातृणा। एवं ज्ञातृकर्त्रादयः॥ इत्यृदन्ताः॥ ३२३ एच इग्घ्रस्वादेशे। (१-

---

एवं ङसिङसोः। प्रियक्रोष्टुः, प्रियक्रोष्टोः, प्रियक्रोष्टुनः। प्रियक्रोष्ट्रोः, प्रियक्रोष्ट्वोः, प्रियक्रोष्टुनोः। आमि विशेषमाह--**नुमचिरेति नुडिति**। तृज्वत्त्वं नुमं च बाधित्वेति शेषः। पुंवत्त्वे तृज्वत्त्वं बाधित्वा नुट्। पुंवत्त्वाभावे तु तृज्वत्त्वं बाधित्वा नुम्, तदपि बाधित्वा नुडिति विवेकः। प्रियक्रोष्टरि, प्रियक्रोष्टौ, प्रियक्रोष्टुनि। भ्यामादौ हलि मधुवत्॥ इत्युदन्ताः॥

**अथ ऊदन्ता निरूप्यन्ते। सुल्विति**। सुष्ठु लुनातीति क्विप्। 'ह्रस्वो नपुंसके-' इति ह्रस्वः। **सुलुनी इति**। 'ओः सुपि' इति यणं बाधित्वा परत्वान्नुम्। **सुल्वेति**। शोभनलवनकर्तृत्वं प्रवृत्तिनिमित्तमेकमिति पुंवत्त्वविकल्पः। पुंवत्त्वे ह्रस्वाभावे अघित्वाद् नाभावो न, नुमभावश्च, 'ओः सुपि' इति यण्। पुंवत्त्वाभावपक्षे तु यणं बाधित्वा नुम्। ङेप्रभृतिषु तु पुंवत्त्वाभावे 'वृद्ध्यौत्व-' इति पूर्वविप्रतिषेधेन नुमि सुलुने, पुंवत्त्वे तु सुल्वे इत्यादि रूपद्वयम्॥ इत्यूदन्ताः॥

**अथ ऋदन्ता निरूप्यन्ते। धातृ इति**। दधातीति धातृ। 'न लुमता-' इति निषेधादनङ् न। **धातृणी इति**। 'इकोऽचि-' इति नुमि 'ऋवर्णान्नस्य-' इति णत्वम्। **धातॄणि इति**। जश्शसोः शिभावे नुमि 'सर्वनामस्थाने च-' इति दीर्घे णत्वम्। 'न लुमता इति निषेधस्यानित्यत्वात् संबुद्धिनिमित्तको ह्रस्वस्य पक्षे गुण इत्याह—**हे धातः, हे धातृ इति**। धारणकर्तृत्वरूपप्रवृत्तिनिमित्तैक्यात् टादावचि पुंवत्त्वविकल्प इत्याह—**धात्रा, धातृणा इति**। धात्रे, धातृणे। धातुः, धातृणः। धात्रोः, धातृणोः। 'नुमचिर-' इति नुट्। धातॄणाम्। धातरि, धातृणि॥ इत्यृदन्ताः॥

**अथ ओदन्ता निरूप्यन्ते**। प्रकृष्टा द्यौः यस्येति बहुव्रीहौ प्रद्योशब्दस्य 'ह्रस्वो नपुंसके-' इति ह्रस्वः प्राप्नुवन् एचां ह्रस्वाभावात् तेषां द्विस्थानत्वेन अ, इ, उ, ऋ, लृ, इत्येतेषां ह्रस्वानामन्तरतमत्वाभावाद् अन्यतरस्थानसाम्याश्रयणे अवर्णादिषु यस्य कस्यचिदनियमेन पर्यायेण वा प्राप्ताविदमारभ्यते। **एच इक्**। आदिश्यत इत्या-

---

भिन्नभिन्नमेव। तथा च भाषितपुंस्कत्वाभावान्मधुने, मधुनः, मधुनोरित्येव भवति, न तु मधवे, मधोरित्यादीति दिक्। **स्नुवेति**। 'मांसपृतनासानूनाम्-' इति वार्तिककारोक्त्येति भावः। 'स्नुः प्रस्थः सानुरस्त्रियाम्' इत्युभयलिङ्गः सानुशब्दः, तस्य नपुंसकत्वे रूपमाह—**स्नूनि। सानूनीति**। पुंसि तु स्नून्, सानून् इत्यादि। **सुल्वेति**। शोभ-

---

१ 'प्रवृत्तिनिमित्तैक्यम्' इति क।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

१-४८) आदिश्यमानेषु ह्रस्वेषु एच इगेव स्यात्। प्रद्यु, प्रद्युनी, प्रद्यूनि। प्रद्युनेत्यादि। इह न पुंवत्, यदिगन्तं प्रद्यु इति तस्य भाषितपुंस्कत्वाभावात्। एव-

---

देशः, कर्मणि घञ्। तस्य ह्रस्वपदेन सह कर्मधारयः। विशेष्यस्यार्षः पूर्वनिपातः। आदेश इति निर्धारणसप्तमी। सौत्रमेकवचनम्। तदाह—**आदिश्यमानेष्वित्यादिना**। मध्ये इत्यपपाठः, तद्योगे षष्ठ्या एवौचित्यात्। **इगेवेति**। तेन अकारव्यावृत्तिः फलतीति भावः। यद्यपीकश्चत्वारः, एचोऽप्येवम्, तथापि स्थान्यादेशानां यथासंख्यं न भवति। न ह्ययमपूर्वविधिः, किन्तु नियमविधिः। यथाप्राप्तमेव नियम्यते। एचां हि पूर्वभागः अवर्णसदृशः, उत्तरभागस्तु इवर्णोवर्णसदृशः। तत्र पूर्वभागसादृश्यमवर्णस्यास्ति। तस्य च इग्ग्रहणेन निवृत्तौ इवर्णसादृश्यमात्रमादाय एकारस्य ऐकारस्य च इवर्णः, उवर्णसादृश्याद् ओकारस्य औकारस्य च उवर्णः—इति व्यवस्था न्यायप्राप्ता। यथाप्राप्तमेव च नियम्यत इति न यथासंख्यम्। ततश्च प्रद्योशब्दे ओकारस्य उकारो ह्रस्व इत्यभिप्रेत्योदाहरति, **प्रद्यु इत्यादि**। ननु पुंनपुंसकयोः प्रकृष्टस्वर्गवत्त्वमेकमेव प्रवृत्तिनिमित्तमिति टादौ पुंवत्त्वविकल्पः कुतो नेत्यत आह—**इह न पुंवदिति**। कुत इत्यत आह—**यदिगन्तमिति**। प्रद्योशब्द ओदन्तः पुंसि। प्रद्युशब्दस्तु उदन्तो नपुंसके। तथा च पुंसि प्रद्योशब्दस्य भाषितपुंस्कत्वेऽपि नपुंसके प्रद्युशब्दस्य तदपेक्षया भिन्नत्वेन भाषितपुंस्कत्वाभावान्न पुंवत्त्वमित्यर्थः। केचित्तु पुंसि यः प्रद्योशब्द ओदन्तः, स एवेदानीं नपुंसकः, तस्य

---

नलवनकर्तृत्वं पुंनपुंसकयोरेकमेवेति भाषितपुंस्कत्वात्पुंवत्पक्षे नुमभावाद् 'ओः सुपि' इति यण्। **सुलुनेति**। यणं बाधित्वा परत्वान्नुम्। **धात्रेति**। धारणपोषणकर्तृत्वं पुंनपुंसकयोरेकमेवेति पुंवत्पक्षे यण्। **एचः**। आदिश्यत इत्यादेशः, ह्रस्वश्चासावादेशश्च ह्रस्वादेशः, निर्धारणे सप्तमी जातावेकवचनमतो व्याचष्टे—**आदिश्यमानेषु ह्रस्वेष्विति**। एचां पूर्वभागोऽकारसदृशः, उत्तरस्तु इवर्णोवर्णसदृशः तत्रोभयान्तरतमस्य ह्रस्वस्याभावात्पर्यायेण अकारः स्यादिकारोकारौ च स्याताम्, तथा च मा कदाप्युकारो भूदिति नियमार्थेयं परिभाषेत्यभिप्रेत्याह—**इगेव स्यादिति**। आन्तरतम्यादेकारैकारयोरिकारः, ओकारौकारयोस्तूकारः। एकारान्तस्योदाहरणं तु इः स्मृतो येन स स्मृतेः। शोभनः स्मृतेः यस्य तत् सुस्मृतीत्यादि। एतच्च परिभाषासूत्रमपार्थकम्। तथा च वार्तिककृतोक्तं 'सिद्धमेङः सस्थानत्वात्' 'ऐचोश्चोत्तरभूयस्त्वात्' इति। अस्यार्थः—शब्दपरविप्रतिषेधेन एङ उत्तरभागान्तरतमौ इउवर्णाविवेति सिद्धम्। एचोश्चेति चकारो भिन्नक्रम उत्तरभूयस्त्वाच्चेति हेतोरनन्तरं बोध्यः। अर्धमात्रा अवर्णस्य, अध्यर्धमात्रा इवर्णोवर्णयोरित्युत्तरभागाधिक्यान्मल्लग्रामादिवद् भूयसा व्यपदेशेनापि इकारोकारौ भविष्यत इति। **प्रद्युनेति**। ननु प्रकृष्टस्वर्गवत्त्वादिकं यत्प्रवृत्तिनिमित्तं तत्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मन्नेऽपि ॥ इत्योदन्ताः ॥ प्ररि , प्ररिणी , प्ररीणि । प्ररिणा । एकदेशविकृतस्यानन्यत्वाद् 'रायो हलि' (सू २८६) इत्यात्वम् , प्रराभ्याम् । प्रराभिः । 'नुमचिर–' (वा ४३७४) इति नुड्यात्वे प्रराणाम् इति माधवः । वस्तुतस्तु संनिपातपरिभाषया नुड्यात्वं न । 'नामि' (सू २०६) इति दीर्घस्त्वारम्भसामर्थ्यात्संनिपातपरिभाषां बाधत इत्युक्तम् । प्ररीणाम् ॥ इत्यैदन्ताः ॥ सुनु , सुनुनी , सुनूनि । सुनुना । सुनुने–इत्यादि ॥ इत्यौदन्ताः ॥

॥ इत्यजन्तनपुंसकलिङ्गप्रकरणम् ॥

---

ह्रस्वान्तत्वेऽपि एकदेशविकृतस्यानन्यत्वात् । अतः पुंवत्त्वविकल्पोऽस्त्येवेत्याहुः । **एवमन्नेऽपीति**। प्ररि, सुनु इत्यादावपीत्यर्थः ॥ इत्योदन्ताः ॥

**अथ ऐदन्ता निरूप्यन्ते**। एकारान्तस्योदाहरणं तु स्मृतः इः येन स स्मृतेः । सु–शोभनः स्मृतेर्यस्य तत् सुस्मृति इत्यादि बोध्यम् । **प्ररीति**। प्रकृष्टो राः-धनं यस्य इति बहुव्रीहौ प्रैशब्दः । तस्य नपुंसकह्रस्वत्वेन इकारः । सुटि वारिवत् । सोर्लुप्तत्वाद् 'रायो हलि' इत्यात्वं न । टादावचि पुंवत्त्वविकल्पः प्रद्युशब्दवत् । भ्यामादौ हलि विशेषमाह—**रायो हलीत्यात्वमिति**। ननु रैशब्दस्य ऐदन्तस्य विहितमात्वं कथमिदन्तस्येत्यत आह—**एकदेशविकृतस्यानन्यत्वादिति** । आमि विशेषमाह—**नुमचिरेति**। नुटि 'रायो हलि' इत्यात्वे प्रराणामित्यन्वयः । ननु प्ररि आमिति स्थिते, नुटं बाधित्वा परत्वान्नुमि तस्याङ्गभक्तत्वाद् हलादिविभक्त्यभावात् कथमात्वमित्यत आह—**नुमचिरेति**। पूर्वविप्रतिषेधान्नुमं बाधित्वा नुड्यात्वं निर्बाधमिति भावः । **संनिपातेति**। ह्रस्वान्तत्वमुपजीव्य प्रवृत्तस्य नुटस्तद्विघातकमात्वं प्रति निमित्तत्वासंभवाद् इति भावः । ननु तर्हि ह्रस्वान्तत्वमुपजीव्य प्रवृत्तस्य नुटः तद्विघातकं 'नामि' इति दीर्घं प्रति कथं निमित्तत्वमित्यत आह—**नामीति दीर्घस्त्विति**। **इत्युक्तमिति**। रामशब्दाधिकार इति शेषः ॥ इत्यैदन्ताः ॥

**अथ औदन्ता निरूप्यन्ते**। सु–शोभना नौर्यस्येति विग्रहे बहुव्रीहौ 'ह्रस्वो नपुंसके–' इति ह्रस्व उकार इति मत्वाह—**सुनु इति**॥ इत्यौदन्ताः ॥

इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां बालमनोरमायाम् अजन्तनपुंसकलिङ्गनिरूपणं समाप्तम् ।

---

पुंनपुंसकयोः समानमिति भाषितपुंस्कत्वात् पक्षे पुंवद्भावोऽत्र स्यादेवेत्याशङ्कायामाह—**यद्दिगन्तमिति**। एतच्च 'रा दाने' इति धातौ अतिरि ब्राह्मणकुलमिति प्रक्रम्य माधवेन स्पष्टीकृतम् । कथं तर्हि प्राचा प्रद्युवा प्रराया सुनावेत्युदाहृतमिति चेदत्राहुः—प्रकृष्टस्वर्गवत्त्वादिप्रवृत्तिनिमित्तैक्याद्द्युशब्दो भाषितपुंस्कः स एवेदानीमिगन्तस्तथा च प्रद्यु-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# अथ हलन्तपुँल्लिङ्गप्रकरणम् । ११ ।

**३२४ हो ढः ।(८-२-३१)** हस्य ढः स्याज्झलि पदान्ते च। हल्ङ्याप्–' (सू २५२) इति सुलोपः, पदान्तत्वाद्धस्य ढः, जश्त्वचर्त्वे, लिट्, लिड्। लिहौ, लिहः। लिहम्, लिहौ, लिहः। लिहा, लिड्भ्याम् इत्यादि। लिट्त्सु, लिट्सु।

---

**अथ हकारान्ता निरूप्यन्ते**[1]। तत्र वर्णसमाम्नायक्रममनुसृत्य हकारान्तमादौ निरूपयितुमाह—**हो ढः**। ह इति षष्ठ्यन्तम्। 'झलो झलि' इत्यतो झलीत्यनुवर्तते। पदस्येत्यधिकृतम्। 'स्कोः संयोगाद्योरन्ते च' इत्यतोऽन्ते इत्यनुवर्तते। तदाह—**हस्येति**। **झलीति**। झलि परतः पूर्वस्य हकारस्य, पदान्ते विद्यमानस्य हकारस्य चेत्यर्थः। न च डकार एव कुतो न विहित इति वाच्यम्, 'वा द्रुह–' इत्यत्र वक्ष्यमाणत्वात्। **पदान्तत्वादिति**। सुलोपे सति प्रत्ययलक्षणमाश्रित्य झल्परत्वाच्चेत्यपि बोध्यम्। **लिडिति**। 'लिह् आस्वादने' क्विप्। हल्ङ्यादिना सुलोपः। हस्य ढत्वे 'वावसाने' इति चर्त्वविकल्प इति भावः। **लिड्भ्यामिति**। 'स्वादिष्वसर्वनामस्थाने' इति पदत्वाद् 'झलां जशोऽन्ते' इति जश्त्वमिति भावः। **इत्यादीति**। लिड्भिः। लिहे। लिड्भ्यः। लिहः। लिहः। लिहोः। लिहाम्। **लिट्त्सु इति**। लिह् सु इति स्थिते हस्य ढः, तस्य जश्त्वेन डः, 'खरि च' इति चर्त्वस्यासिद्धत्वात्ततः प्रागेव 'डः सि–' इति धुट्, ततो डस्य चर्त्वेन टः। धुटश्चर्त्वसंपन्नस्य तकारस्यासिद्धत्वात् 'चयो द्वितीयाः–' इति न भवति। 'न पदान्तात्–' इति तकारस्य ष्टुत्वं न। **लिट्सु इति**। धुडभावे रूपम्। हस्य ढः। तस्य जश्त्वेन डः। तस्य चर्त्वेन टः। तस्यासिद्धत्वात् 'चयो द्वितीयाः–' इति न। 'न पदान्तात्' इति सस्य न ष्टुत्वमिति भावः।

---

शब्दोऽपि भाषितपुंस्क एव, एकदेशविकृतस्यानन्यत्वात्, अतः पुंवद्भावो भवतीति। इत्थं च पुंवद्भाव एजन्तेषु क्लीबेषु माधवमते नास्ति, मतान्तरे त्वस्तीति बोध्यम्। **प्ररीति**। प्रकृष्टो रा यस्य तत् प्ररि। शोभना नौर्यस्य तत् सुनु॥

इति तत्त्वबोधिन्यामजन्तनपुंसकलिङ्गप्रकरणम्।

**हो ढः**। 'झलो झलि' 'पदस्य' 'स्कोः संयोगाद्योरन्ते च' इत्यतो झलीति पदस्यान्त इति चानुवर्तते। तदाह—**झलीत्यादि**। झलि परतः पदान्ते वा विद्यमानस्य हस्येत्यर्थः। **लिडिति**। 'लिह् आस्वादने' क्विप्। **लिट्त्स्विति**। ढस्य जश्त्वेन डः, तस्य 'खरि च' इति चर्त्वेन टः। तस्यासिद्धत्वात् 'चयो द्वितीयाः–' इति पक्षे टस्य ठो न। सस्य ष्टुत्वं तु न भवति। 'न पदान्ताट्टोः–' इति निषेधात्। **लिट्-**

---

१ 'अथ हलन्ता निरूप्यन्ते' इत्यत्रोचितः पाठः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

**३२५ दादेर्धातोर्घः।** (८-२-३२) उपदेशे दादेर्धातोर्हस्य घः स्याज्झलि पदान्ते च। उपदेशे किम्-अधोग् इत्यत्र यथा स्यात्, दामलिहमात्मन इच्छति दाम-

---

दुह्धातोः क्विबन्तात्सुलोपे दुह् इत्यत्र ढत्वे प्राप्ते ढत्वं क्वचिदपवदति—**दादेर्धातोः**। 'हो ढः' इत्यतो ह इति षष्ठ्यन्तमनुवर्तते। झलि इति पदस्येति अन्ते इति च पूर्ववदनुवर्तते। धातोरित्यावर्तते। एकं धातुग्रहणमवयवषष्ठ्यन्तं हकारेऽन्वेति-धातोरवयवस्य हस्येति। दादेरित्येतत्तु धातोरित्यत्र सामानाधिकरण्येनान्वेति। दः आदिर्यस्येति बहुव्रीहिः। धातोरिति द्वितीयं धातुग्रहणं तु धातोरुपदेशकालं लक्षयति। ततश्च फलितमाह—**उपदेशे इत्यादिना**। धातूपदेशकाले यो दकारादिर्धातुः, तदवयवस्य हस्येत्यर्थः। आवृत्तधातुग्रहणलब्धोपदेशग्रहणस्य फलं पृच्छति—**उपदेशे किमिति। अधोगिति**। 'दुह् प्रपूरणे' लङ्, अडागमः, तिप्, शप्, तस्य लुक्, लघूपधगुणः, हल्ङ्यादिना तिपो लोपः, 'दादेः—' इति हस्य घः, 'एकाचो बशः—' इति भष्भावेन दकारस्य धकारः। 'वाऽवसाने' इति चर्त्वजश्त्वे इति भावः। **यथा स्यादिति**। यथेति प्राप्तियोग्यतायाम्। घत्वमत्र प्राप्तियोग्यम्, तच्च उपदेशग्रहणे सत्येव स्यादित्यर्थः। घत्वप्रवृत्तिवेलायां दुह्धातोर्दकारादित्वं नास्ति, कृते अडागमे 'तदागमास्तद्ग्रहणेन गृह्यन्ते' इत्यकारादित्वात्। अतोऽत्र घत्वं न स्यादित्यव्याप्तिः स्यात्। उपदेशग्रहणे तु नायं दोषः, घत्वप्रवृत्तिवेलायां दुहेरत्र दकारादित्वाभावेऽपि धातूपदेशकाले दादित्वादिति भावः। तदेवमव्याप्तिपरिहारफलमुक्त्वा अतिव्याप्तिपरिहारफलमाह—**दामेति**। ग्रीवासु गवादिपशुबन्धनार्थरज्जुपर्यायो दामशब्दः। 'लिह् आस्वादने' दाम लेढीति दामलिट्। तमात्मन इच्छतीत्यर्थे 'सुप आत्मनः क्यच्' इति क्यचि 'सनाद्यन्ताः—' इति धातुत्वात् तिपि शपि दामलिह्यतीति रूपम्। **ततः क्विपीति**। क्यजन्तात् कर्तरि क्विपि अल्लोपे यलोपे च दामलिह्शब्दात् सोर्लोपे 'हो ढः' इति ढत्वे 'वावसाने' इति चर्त्वविकल्पे दामलिट्, दामलिड् इति रूपमित्यर्थः। **अत्र मा भूदिति**। माङि लुङ्। सर्वलकारापवादः। अत्र घत्वं न भवेदित्येतदर्थमप्युपदेशग्रहणम्। कृते तु तस्मिन् घत्वमत्र न भवति, धातूपदेशे दामलिह् इति सुब्धातोः पाठाभावादिति भावः।

---

**स्विति**। ढस्य जश्त्वेन डकारे कृते चर्त्वस्यासिद्धत्वात्ततः प्रागेव 'डः सि—' इति पक्षे धुट्। तस्य चर्त्वेन तकारः, ततो डस्य चर्त्वेन टः। धुटश्चर्त्वस्यासिद्धत्वात्पक्षे 'चयो द्वितीयाः—' इति तस्य थो न। ष्टुत्वं तु तकारस्य न शङ्क्यमेव। 'न पदान्तात्—' इति निषेधस्याधुनैवोक्तत्वादिति। **दादेर्धातोर्घः**। धातोरित्यावर्तते। तत्रैकमतिरिच्यमानमुपदेशकालं लक्षयतीत्याशयेनाह—**उपदेश इति**। उपदेशग्रहणस्याव्याप्त्यतिव्याप्ति-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लिह्यति, ततः क्विपि दामलिट्, अत्र मा भूत्। **३२६ एकाचो वशो भष् झषन्तस्य स्ध्वोः।** (८-२-३७) धातोरवयवो य एकाज् झषन्तस्तदवयवस्य वशः स्थाने भष् स्यात्सकारे ध्वशब्दे पदान्ते च। एकाचो धातोः—इति सामानाधिकरण्येनान्वये त्विह न स्याद्—गर्दभमाचष्टे गर्दभयति, ततः क्विप्, णिलोपः, गर्धप्। झलीति निवृत्तम्, स्ध्वोर्ग्रहणसामर्थ्यात्। तेनेह न—दुग्धम्, दोग्धा।

---

तथा च प्रकृतोदाहरणे सौ दुघ् इति स्थिते—**एकाचो वशो।** स् च ध्व् च स्ध्वौ, तयोरिति विग्रहः। वश इति स्थानषष्ठी। एकाच इत्यवयवषष्ठी। एकः अच् यस्येति विग्रहः। झषन्तस्येत्यस्य शब्दस्येति विशेष्यम्। एकाच्कस्य झषन्तशब्दस्यावयवो यो वश् तस्य भष् स्यादित्यन्वयः। 'दादेर्धातोः—' इत्यतो धातोरित्यवयवषष्ठ्यन्तमनुवर्तते। तच्च झषन्तशब्देनान्वेति। पदस्येत्यधिकृतम्। 'स्कोः संयोगाद्योः—' इत्यतः अन्ते चेत्यनुवर्तते। तदाह—**धातोरवयव इत्यादिना।** ननु संभवति सामानाधिकरण्ये वैयधिकरण्याश्रयणस्यान्याय्यत्वाद् एकाच् झषन्तो यो धातुः तदवयवस्य वस इत्येवान्वय उचित इत्यत आह—**एकाचो धातोरित्यादि। गर्दभयतीति।** 'तत्करोति तदाचष्टे' इति णिजन्तस्य 'सनाद्यन्ताः—' इति धातुत्वात्तिबादि। **ततः क्विबिति।** गर्दभि इति ण्यन्तात् कर्तरि क्विबित्यर्थः। कपावितौ, वेर्लोपः। **णिलोप इति।** 'णेरनिटि' इत्यनेनेति शेषः। **गर्धप् इति।** गर्दभ् इत्यस्मात् सुः, हल्ङ्यादिलोपः। 'एकाचो बशः—' इति दस्य धः। 'वावसाने' इति चर्त्वम्। एकाचो धातोः झषन्तस्येत्यन्वये गर्दभ् इत्यस्य सुब्धातोरनेकाच्त्वाद् दकारस्य भष्भावो न स्यात्। धात्ववयवस्य झषन्तस्येत्यन्वये तु दभ् इति एकाचो झषन्तस्य धात्ववयवत्वात् तदवयवस्य दस्य भष्भावो निर्बाध इति भावः। अत्र प्राचीनैः झलीत्यनुवर्तितम्। तदयुक्तमित्याह—**झलीति निवृत्तमिति। सामर्थ्यादिति।** झलीत्यनुवृत्तौ तद्वैयर्थ्यादिति भावः। ननु झलीत्यस्यानुवृत्तिरेवास्तु, स्ध्वोरित्येव न क्रियतामित्यत आह—**तेनेति।** झलीत्यननुवर्तनेनेत्यर्थः। **दुग्धमिति।** दुहेः क्तः, कित्त्वाद् न लघूपधगुणः। 'दादेः—' इति हस्य घः। 'झषस्तथोर्धोऽधः' इति तकारस्य धः। 'झलां जश् झशि' इति घस्य गः। दुग्धमिति रूपम्। **दोग्धेति।** दुहेस्तृच्, लघूपधगुणः, 'दादेः—' इति हस्य घः।

---

परिहारः फलमित्याह—**अधोगित्यादिनाऽत्र मा भूदित्यन्तेन। एकाचो वशो। झलीति निवृत्तमिति।** धुग्भ्यां धुद्क्ष्वित्यादौ पदान्ते इत्येव भष्भावसिद्धेरिति भावः। प्राचा तु प्रातिपदिकस्य तु झलि पदान्ते चेति व्याख्यातम्। तत् प्रामादिकमेव। अधोक्, अधोग् इत्याद्यसिद्ध्यापत्तेः। प्रातिपदिकग्रहणस्याप्रकृतत्वाच्च। ननु धातोरवयव इति वैयधिकरण्येनान्वये क्विबन्तस्य दुहेः 'दादेः—' इति घत्वेन झषन्त-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

व्यपदेशिवद्भावेन धात्ववयवत्वाद्भष्भावः, जश्त्वचर्त्वे धुक्, धुग्। दुहौ, दुहः। षत्वचर्त्वे धुक्षु। **३२७ वा द्रुहमुहष्णुहष्णिहाम्।** (८-२-३३) एषां हस्य वा घः स्याज्झलि पदान्ते च। पक्षे ढः। ध्रुक्, ध्रुग्; ध्रुट्, ध्रुड्। द्रुहौ, द्रुहः

---

'झषस्तथोः-' इति तकारस्य धः 'ऋदुशनस्-' इत्यनङ्। 'सर्वनामस्थाने च-' इति दीर्घः। हल्ङ्यादिलोपः। 'न लोपः-' इति नकारलोपः, दोग्धा इति रूपम्। झलीत्यनुवृत्तौ इहोभयत्रापि घत्वे कृते भष्भावः स्यादिति भावः।

ननु दुहेः क्विबन्तात् सोर्लोपे 'दादेः-' इति घत्वे कृते दुघ् इति झषन्तमेकाच्कम्। तस्य धातुत्वाद् धात्ववयवत्वाभावात् कथमिह दकारस्य भष्भावेन धकारः स्यादित्यत आह—**व्यपदेशिद्भावेनेति**। विशिष्टः अपदेशः व्यपदेशः—मुख्यव्यवहारः, सोऽस्यास्तीति व्यपदेशी, तेन तुल्यं व्यपदेशिवत्। धाताविव धात्ववयवत्वव्यवहारो गौणः, राहोश्शिर इत्यादिवदिति भावः। इदं च 'आद्यन्तवदेकस्मिन्' इति सूत्रे भाष्ये स्पष्टम्। **धुक्, धुगिति**। क्विपः प्राक् प्रवृत्ताया धातुसंज्ञाया अनपायाद् 'दादेः-' इति घत्वे कृते झषन्तत्वाद् भष्भावे चर्त्वविकल्प इति भावः। दुहौ। दुहः। दुहम्। दुहौ। दुहः। दुहा। भ्यामादौ 'दादेः-' इति घत्वे कृते स्वादिष्विति पदत्वात् पदान्तत्वप्रयुक्तो भष्भावः। 'झलां जशोन्ते' इति जश्त्वम्। धुग्भिः। दुहे। धुग्भ्याम्। धुग्भ्यः। दुहः। दुहः। दुहोः। दुहाम्। दुह् सु इति स्थिते प्रक्रियां दर्शयति—**षत्वेति**। घत्वे कृते भष्भावे 'झलां जशोन्ते' इति जश्त्वेन गकारः। तस्य 'खरि च' इति चर्त्वस्यासिद्धत्वाद् 'आदेशप्रत्यययोः' इति षत्वे कृते चर्त्वे धुक्षु इति रूपमिति भावः। द्रुह् जिघांसायाम्, मुह् वैचित्त्ये, ष्णुह् उद्गिरणे, ष्णिह् प्रीतौ--एभ्यः क्विबन्तेभ्यः सोर्लोपे द्रुहेर्दादित्वाद् ढत्वं बाधित्वा नित्यं घत्वे प्राप्ते इतरेषामदादित्वादप्राप्ते घत्वे इदमारभ्यते। **वा द्रुह**। 'दादेः-' इत्यतो घ इत्यनुवर्तते। झलीति पदस्येति अन्ते इति पूर्ववदनुवर्तते। तदाह—**एषामिति**। द्रुहादीनां चतुर्णामित्यर्थः। **ध्रुक्, ध्रुगिति**। घत्वपक्षे भष्भावे चर्त्वविकल्प इति भावः। **ध्रुट्, ध्रुडिति**। घत्वाभाव-

---

त्वेऽपि भष्भावो न स्यात्। दुघिति समुदायस्य यः पूर्वावयवो दु इत्येकाच् तस्य झषन्तत्वाभावात्, उघ् इत्युत्तरावयवे तु बशो भावादित्यत आह—**व्यपदेशिवद्भावेनेति**। न च धात्ववयवो धातुरित्येव व्यपदिश्यतां तथा च गर्धबिति सिध्येदिति वाच्यम्। अर्थवतां हि व्यपदेशिवद्भावः, न चावयवोऽर्थवानिति, तस्य धातुत्वव्यपदेशासंभवात्। **भष्भाव इति**। क्विपः प्राक्प्रवृत्ताया धातुसंज्ञाया निरपवादत्वेनावस्थितत्वात् 'दादेर्धातोः-' इति घत्वे कृते झषन्तत्वादिति भावः। **धुगिति**। 'दुह् प्रपूरणे' क्विप्। **वा द्रुह**। 'द्रुह् जिघांसायाम्', 'मुह् वैचित्ये', 'ष्णुह् उद्गिरणे', 'ष्णिह् प्राप्तौ'। द्रुहेर्दा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

राजभ्याम्, राजभिः । राज्ञे, राजभ्यः । राज्ञः, राज्ञोः, राज्ञाम् । राज्ञि, राजनि । प्रतिदीव्यतीति प्रतिदिवा, प्रतिदिवानौ, प्रतिदिवानः । अस्य भविषयेऽल्लोपे कृते-
३५४ हलि च । (८-२-७७) रेफवान्तस्य धातोरुपधाया इको दीर्घः स्याद्धलि । न चाल्लोपस्य स्थानिवत्त्वम् । दीर्घविधौ तन्निषेधात् । बहिरङ्गपरिभाषा तूक्तन्यायेन

---

'छे च' इति तुक् । भाष्ये तु वृत्रहभ्यामित्यादौ नलोपस्य सत्त्वेऽपि संनिपातपरिभाषया 'ह्रस्वस्य पिति-' इति तुग् न भविष्यतीति तुग्विधिग्रहणं प्रत्याख्यातम् । 'स्वादिषु-' इति पदत्वद्वारा भ्यांसंनिपातनिमित्तको नलोपस्तद्विघातकं न प्रवर्तयतीत्याशयः । ननु वृत्रहधनमित्यत्र तुग्व्यावृत्त्यर्थं तुग्विधिग्रहणमावश्यकम्, तत्रान्तवर्तिनीं विभक्तिमाश्रित्य प्रवृत्तं पदत्वमादाय प्रवृत्तस्य नलोपस्य संनिपातनिमित्तकत्वाभावादिति चेत्, न, तुग्विधिग्रहणप्रत्याख्यानपरभाष्यप्रामाण्येन तादृशसंनिपातानिमित्तकनलोपविषयाणां वृत्रहधनमित्यादीनाम् अनभिधानकल्पनादित्यास्तां तावत् । **राज्ञि, राजनीति** । 'विभाषा ङिश्योः' इत्यल्लोपविकल्प इति भावः ।

**प्रतिदिवेति** । दिवु क्रीडादौ, तस्मात् 'कनिन्युवृषितक्षि-' इत्युणादिसूत्रेण कनिन्प्रत्ययः, कनावितौ, इकार उच्चारणार्थः, प्रतिदिवन्शब्दात् सुबुत्पत्तिः, 'सर्वनामस्थाने च-' इति दीर्घः, हल्ङ्यादिना सुलोपे प्रतिदिवा इति रूपम् । सुटि राजवत् । **अस्येति** । प्रतिदिवन्शब्दस्य शसादावचि 'अल्लोपोऽनः' इत्यल्लोपे सतीत्यर्थः । **हलि च** । 'र्वोरुपधाया दीर्घ इकः' इत्यनुवर्तते, 'सिपि धातोः-' इत्यतो धातोरिति च, तच्च र्वोः इत्यनेन विशेष्यते, तदन्तविधिः । तदाह—**रेफवान्तस्येत्यादिना** । रेफान्तस्य जीर्यतीत्युदाहरणम् । अपदान्तत्वात् 'र्वोरुपधायाः-' इत्यप्राप्ते विधिः । प्रकृते च प्रतिदिव् न् अस् इति स्थिते नकारे हलि परे वान्तस्य दिव्धातोरुपधाया इकारस्य दीर्घ इति भावः । ननु 'अचः परस्मिन्-' इत्यल्लोपस्य स्थानिवत्त्वादकारेण व्यवधानाद् हल्परत्वाभावात् कथमिह दीर्घ इत्याशङ्क्य परिहरति—**न चाल्लोपस्य स्थानिवत्त्वमिति** । कुत इत्यत आह—**दीर्घविधौ तन्निषेधादिति** । 'न पदान्त-' इति सूत्रेण दीर्घविधौ स्थानिवत्त्वनिषेधादित्यर्थः । नन्वेवमपि भसंज्ञापेक्षस्याल्लोपस्य बहिर्भूतप्रत्ययापेक्षत्वेन बहिरङ्गतया अन्तरङ्गे दीर्घे कर्तव्ये असिद्धत्वादकारेण व्यवधानाद् हल्परत्वाभावात् कथमिह दीर्घ इत्यत आह—**बहिरङ्गेति** । यथोद्देशपक्षे

---

प्रवर्तते । या सेत्यत्र टाप् तु संनिपातपरिभाषामपि बाधित्वा 'न यासयोः' इति निर्देशादेव सिध्यतीति ज्ञेयम् । **प्रतिदिवेति** । 'कनिन् युवृषितक्षिराजिधन्विद्युप्रतिदिवः' इति कनिन् । **हलि च** । 'र्वोरुपधाया दीर्घ इकः' इत्यनुवर्तते 'सिपि धातोः-' इत्यतो धातोरिति च, तच्च धातुग्रहणं र्वोरित्यनेन विशेष्यते, विशेषणेन तदन्तविधिस्तदाह—**रेफवा-**

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न प्रवर्तते । प्रतिदीव्नः, प्रतिदीव्ना इत्यादि । यज्वा, यज्वानौ, यज्वानः । ३५५ **न संयोगाद्वमन्तात्।** (६-४-१३७) वकारमकारान्तसंयोगात्परस्यानोऽकारस्य लोपो न स्यात् । यज्वनः । यज्वना, यज्वभ्याम् इत्यादि । ब्रह्मणः । ब्रह्मणा, ब्रह्मभ्याम् इत्यादि । ३५६ **इन्हन्पूषार्यम्णां शौ ।** (६-४-१२) एषां शावे-

---

षाष्ठीं परिभाषां प्रति श्चुत्वस्यासिद्धतया अन्तरङ्गाभावे परिभाषाया अप्रवृत्तेः—इति राजन्शब्दोक्तन्यायेन दीर्घस्यासिद्धतया तद्विषये 'असिद्धं वहिरङ्गम्–' इति परिभाषा न प्रवर्तत इति भावः। **प्रतिदीव्न इति।** 'न भकुर्छुराम्' इति निषेधस्तु वान्तस्याभत्वान्नेति भावः। **इत्यादीति।** प्रतिदीव्ने। प्रतिदीव्नः। प्रतिदीव्नोः। भ्यामादौ हलि राजवदित्यर्थः। यज्वन्शब्दः सुटि राजवदित्याह—**यज्वेति।** शसि अल्लोपे प्राप्ते—**न संयोगाद्वमन्तात्।** वश्च म् च वमौ अन्तौ यस्येति विग्रहः। 'अल्लोपोऽनः' इत्यनुवर्तते। तदाह—**वकारेत्यादिना।** अन्तग्रहणं स्पष्टार्थम्, वमयोः संयोगविशेषणत्वादेव तदन्तलाभात्। **इत्यादीति।** यज्वने। यज्वनः। यज्वनोः। भ्यामादौ हलि राजवदित्यर्थः। मान्तसंयोगस्योदाहरणमाह—**ब्रह्मण इति।** शसादावचि नाल्लोपः। शेषं राजवदिति भावः। 'वेदस्तत्त्वं तपो ब्रह्म ब्रह्मा विप्रः प्रजापतिः।' इत्यमरः।

वृत्रो नाम असुरः, तं हतवानित्यर्थे 'ब्रह्मभ्रूणवृत्रेषु क्विप्' इति क्विप्, कपावितौ, अपृक्तलोपः, उपपदसमासः, 'सुपो धातु–' इत्यमो लुक्, वृत्रहन्शब्दः, तस्मात् सुबुत्पत्तिः। सौ विशेषमाह—**इन्हन्।** 'ढ्रलोपे–' इत्यतो दीर्घ इत्यनुवर्तते, 'नोपधायाः' इत्यत उपधाया इति। तदाह—**एषामिति।** इन् हन् पूषन् अर्यमन् इत्यन्ताना-

---

**न्तस्य धातोरित्यादि।** रेफान्तस्य तु गीर्यति,पूर्यति,गीर्णम पूर्णम् इत्याद्युदाहरणम्। धातोः किम्, रेफान्तस्य पदस्य मा भूत्। अग्निः करोति, वायुः करोति। नन्वस्तु धातोरनुवर्तनं परं तु र्वोरित्यनेन धातुर्न विशेष्यते रेफवान्तस्य धातोरिति, किं तु इग्विशेष्यते रेफवान्तस्य इको दीर्घः स्यात्तौ च रेफवकारौ धातोश्चेत्। अन्तशब्दोऽत्र समीपवाची। तथा च 'उपधायां च' इति सूत्रं त्यक्तुं शक्यम्, अनेनैव मूर्छति हूर्छतीत्यादिरूपसिद्धेरिति चेत्, मैवम्। कुर्कुरीयतीत्यादावतिप्रसङ्गः स्यात्। तस्मात् र्वोरित्यनेन धातुरेव विशेष्यः। एतच्चाकरे स्पष्टम्। यत्तु 'उपधायां च' इति कैश्चिदुपन्यस्तम्। तन्न, दिवेर्वकारस्यानुपधात्वात्। **उक्तन्यायेनेति।** यथोद्देशपक्षे षाष्ठीं परिभाषां प्रति दीर्घस्यासिद्धतयेत्यर्थः। **प्रतिदीव्न इति।** 'न भकुर्छुराम्' इत्यत्र र्वोरित्यनुवर्तनाद्रेफवान्तस्यैव भस्य निषेध इति न दीर्घनिषेधोऽत्र शङ्क्यः, नान्तस्येह भत्वात्। **यज्वेति।** इष्टवान्यज्वा। 'सुयजोर्ङ्वनिप्'। **ब्रह्मण इति।** 'सर्वधातुभ्यो मनिन्' इति प्रक्रम्य 'वृंहेर्नोऽच्च' इति नस्यात्वविधानाद्ब्रह्मन्शब्दोऽयं निष्पन्नः। **इन्हन्।**

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वोपधाया दीर्घः, नान्यत्र। इति निषेधे प्राप्ते— ३५७ सौ च। (६-४-१३) इन्नादीनामुपधाया दीर्घः स्यादसंबुद्धौ सौ परे। वृत्रहा। हे वृत्रहन्। 'एकाजुत्तरपदे–' (सू ३०७) इति णत्वम्, वृत्रहणौ, वृत्रहणः। वृत्रहणम्, वृत्रहणौ। ३५८ हो हन्तेर्ञ्णिन्नेषु। (७-३-५४) ञिति णिति च प्रत्यये नकारे च परे हन्तेर्हकारस्य कुत्वं स्यात्। ३५९ हन्तेः-(८-४-२२) उपसर्गस्थान्निमित्तात्परस्य हन्तेर्नस्य

---

मित्यर्थः। अङ्गविशेषणत्वेन तदन्तविधिः। 'सर्वनामस्थाने च–' इति सिद्धे नियमार्थमित्याह—शावेवेति। नान्यत्रेति। शेरन्यत्रेत्यर्थः। इति निषेधे प्राप्त इति। वृत्रहन्शब्दे हन् इत्यस्यापि शावेव दीर्घ इति नियमात् सौ परत 'सर्वनामस्थाने–' इति दीर्घे अप्राप्ते सतीत्यर्थः। सौ च। पूर्वसूत्रमनुवर्तते, तत्र यदनुवृत्तं तच्च। तदाह—इन्नादीनामिति। असम्बुद्धाविति। 'सर्वनामस्थाने च–' इत्यतः तदनुवृत्तेरिति भावः। 'इन्हन्पूष–' इत्यस्यायमपवादः। हे वृत्रहन्निति। असम्बुद्धावित्यनुवृत्तेर्न दीर्घः। भिन्नपदत्वादाह—एकाजिति। वृत्रहणावित्यादि। शावेवेति नियमान्न दीर्घः। शसादावचि अल्लोपे कृते—हो हन्तेः। हः इति स्थानषष्ठी, हन्तेरित्यवयवषष्ठी। ञ् च ण् च ञ्णौ इतौ ययोस्तौ ञ्णितौ। इच्छब्दः प्रत्येकं सम्बध्यते। ञ्णितौ च नश्च ञ्णिन्नाः, तेष्विति विग्रहः। अङ्गाधिकारात् प्रत्ययत्वं ञ्णितोर्लभ्यते। 'चजोः कु घिण्ण्यतोः' इत्यतः कुग्रहणमनुवर्तते। तदाह—ञितीत्यादिना। हन्तेरिति श्तिपा निर्देशः, हन्धातोरित्यर्थः। प्रकृते हकारस्य नकारपरत्वात् कुत्वम्। तत्र घोषवतो नादवतो महाप्राणस्य संवृतकण्ठस्य हस्य तादृशो वर्गचतुर्थो घकारः, वृत्रघ्नः। वृत्रघ्ना इत्यादि सिद्धम्। नन्विह कथं न णत्वम्, भिन्नपदस्थत्वेऽपि 'एकाजुत्तरपदे णः' इति णत्वस्य दुर्वारत्वात्, कृतेऽप्यल्लोपे तस्य पूर्वस्माद्विधौ स्थानिवत्त्वादुत्तरपदस्य एकाच्त्वात्, स्थानिवत्त्वाभावेऽपि 'प्रातिपदिकान्तनुम्विभक्तिषु च' इत्यस्य 'कुमति च' इत्यस्य वा दुर्वारत्वादिति प्राप्ते तद्वारणार्थं 'हन्तेरत्पूर्वस्य' इति सूत्रं विभज्य व्याचष्टे—हन्तेः। 'रषाभ्यां नो णः–' इत्यनुवर्तते 'उपसर्गादसमासेऽपि–' इत्यत उपसर्गादित्यनुवर्तते, तात्स्थ्यात्ताच्छब्द्यम्, उपसर्गस्थादिति लभ्यते, तच्च रषयोः प्रत्येकमन्वेति। तदाह—उपसर्गस्थान्निमित्तादित्यादिना। निमित्तशब्देन रेफः षकारश्च विव-

---

'सर्वनामस्थाने चासंबुद्धौ' इत्यनेनैव सिद्धे नियमार्थमिदं तदाह—शावेवोपधाया इति। उपधादीर्घमात्रस्यायं नियमः। तेन वृत्रहायत इत्यत्र 'अकृत्सार्वधातुकयोः–' इति दीर्घो भवत्येव। वृत्रहणी इत्यत्र 'अनुनासिकस्य क्विझलोः–' इति यो दीर्घः सोऽपि नियमेन व्यावर्त्यते, उपधादीर्घमात्रापेक्षया नियमविज्ञानादिति तु मनोरमायां स्थितम्। शावेवेति नियमाद्दीर्घस्याप्राप्तावाह—सौ चेति। 'शिस्वोः' इति वक्तव्ये-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

णत्वं स्यात्। प्रहण्यात्।३५६–अत्पूर्वस्य।(८-४-२२) हन्तेरत्पूर्वस्यैव नस्य णत्वम्, नान्यस्य। प्रघ्नन्ति। योगविभागसामर्थ्याद् 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' (प ६२) इति न्यायं बाधित्वा 'एकाजुत्तरपदे–' (सू ३०७)। इति

---

ङितः। **प्रहण्यादिति**। अत्र भिन्नपदस्थत्वादप्राप्ते णत्वे वचनम्। प्रकृतोपयुक्तमाह–**अत्पूर्वस्य**। हन्तेरित्यनुवर्तते, 'रषाभ्यां नो णः' इति च। उपसर्गादिति तु निवृत्तम्। हन्तेरत्पूर्वस्य नस्य णो लभ्यते। सिद्धे सत्यारम्भो नियमार्थः, तदाह—**हन्तेरत्पूर्वस्यैवेत्यादिना। प्रघ्नन्तीति**। हन्तेर्लट्, झिः, झोऽन्तः, शप्, लुक् 'गमहन–' इत्युपधालोपः, 'हो हन्तेः–' इति कुत्वम्, प्रघ्नन्तीति रूपम्। अत्र उपसर्गस्थरेफात् परत्वाद् 'हन्तेः' इत्यनेन प्राप्तं णत्वम् 'अत्पूर्वस्य' इति नियमान्न भवति, वृत्रघ्न इत्यत्र 'प्रातिपदिकान्त–' इत्यादिणत्वं निवर्तते।

ननु 'प्रातिपदिकान्तनुम्विभक्तिषु च', 'एकाजुत्तरपदे णः' 'कुमति च' 'हन्तेरत्पूर्वस्य' इति सूत्रपाठक्रमः। ततश्च 'अनन्तरस्य विधिः–' इति न्यायेन 'अत्पूर्वस्य' इति नियमेन प्रघ्नन्तीत्यत्र हन्तेरित्यव्यवहितणत्वमेव निवर्तेत, नत्वन्यदित्यत आह—**योगेति**। यदि 'अत्पूर्वस्य' इत्यनेन 'हन्तेः' इति णत्वमेव व्यावर्त्येत, तर्हि 'हन्तेरत्पूर्वस्य' इत्येकमेव सूत्रं स्यात्, उपसर्गस्थान्निमित्तात् परस्य हन्तेरत्पूर्वस्य नस्य णत्वम्–इत्येतावतैव प्रघ्नन्तीत्यत्र णत्वनिवृत्तिसम्भवात्। अतो योगविभागसामर्थ्याद् णत्वमात्रस्यायं नियम इति विज्ञायत इत्यर्थः। **एकाजुत्तरेति**। 'कुमति च' इत्यस्य 'प्रातिपदिकान्त–' इत्यस्य चोपलक्षणम्। अल्लोपस्य पूर्वस्मादपि विधौ स्थानिवत्त्वादेकाच्त्वमुत्तरपदस्य बोध्यम्। न च 'पूर्वत्रासिद्धे न स्थानिवत्' इति वाच्यम्, 'तस्य दोषः संयोगादिलोपलत्वणत्वेषु' इत्युक्तेः। ननु वृत्रघ्न इत्यत्र 'हो हन्तेः–' इति कथं कुत्वम्,

---

योगविभाग उत्तरार्थः। **वृत्रहेति**। वृत्रं हतवान्, 'ब्रह्मभ्रूण–' इति क्विप्। **हन्तेर्हकारस्येति**। ञिति णितीत्येतद्धन्तेर्विशेषणम्, नकारे इति तु हस्येति यथासंभवं बोध्यम्। यद्वा ञिण्णन्नाः सर्वेऽपि हस्यैव विशेषणम्,ञिति णितीत्यंशे येन नाव्यवधानन्यायेन द्वाभ्यां व्यवधानं स्वीक्रियते, तेन घातः, घातक इत्यत्र कुत्वं भवति। इह तु न भवति हननमात्मन इच्छति हननीयति हननीयतेर्ण्वुल् हननीयक इति। एतच्च भाष्यकैयटादौ स्पष्टम्। 'हन्तेरत्पूर्वस्य' इति सूत्रं योगविभागेन व्याचष्टे—**हन्तेरिति**। प्रसङ्गादस्योदाहरणमाह—**प्रहण्यादिति**। प्रकृतोपयुक्तमंशमाह—**अत्पूर्वस्येति**। **एकाजुत्तरेति**। न चाल्लोपे कृते एकाच्त्वं नास्तीति वाच्यम्, पूर्वस्मादपि विधौ स्थानिवद्भावात्। न च 'पूर्वत्रासिद्धे न स्थानिवत्' इति वाच्यम्, 'तस्य दोषः संयो-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

णत्वमपि निवर्तते। नकारे परे कुत्वविधिसामर्थ्यादल्लोपो न स्थानिवत्, वृत्रघ्नः। वृत्रघ्ना इत्यादि। यत्तु वृत्रघ्न इत्यादौ वैकल्पिकं णत्वं माधवेनोक्तम्, तद्भाष्यवार्तिकविरुद्धम्। एवं शार्ङ्गिन्, यशस्विन्, अर्यमन्, पूषन्। यशस्विन्निति

---

पूर्वस्य विधावल्लोपस्य स्थानिवत्त्वादित्यत आह—**नकारे पर इति**। माधवमतं दूषयितुमनुवदति—**यत्त्विति**। तुः पूर्ववैषम्ये। **वैकल्पिकमिति**। 'प्रातिपदिकान्त–' इति विहितमित्यर्थः। **तद्भाष्येति**। 'कुव्यवाये हादेशेषु प्रतिषेधो वक्तव्यः। किं प्रयोजनम्? वृत्रघ्नः, स्रुघ्नः, प्राघानि। 'हन्तेरत्पूर्वस्य' इति सूत्रे अत्पूर्वग्रहणं न कर्तव्यम्' इति 'अट्कुप्वाङ्–' इति सूत्रे भाष्यम्। अत्र णत्वप्रकरणे हादेशकुव्यवाये प्रतिषेधविज्ञानात् 'प्रातिपदिकान्त–' इति णत्वमपि हादेशकुव्यवाये न भवतीति विज्ञायते। तद्विरोधाद् माधवमतमुपेक्ष्यमित्यर्थः। **एवमिति**। वृत्रहन्शब्दवदित्यर्थः। 'इन्हन्पूषा-

---

र्यम्णां शौ' इति ... 

गादिलोपलत्वणत्वेषु' इत्युक्तेः। **निवर्त्यते इति**। 'कुमति च' इति णत्वमपि निवर्त्यत एवेति बोध्यम्। भाष्ये तु—'कुव्यवाये हादेशेषु प्रतिषेधो वक्तव्यः'। किं प्रयोजनम्? वृत्रघ्नः, स्रुघ्नः, प्राघानि। 'हन्तेरत्पूर्वस्य' इत्यत्पूर्वग्रहणं न कर्तव्यं भवति' इत्युक्तम्। 'एतच्च वार्तिकाशयवर्णनमात्रम्, न तु वस्तुस्थितिः। वार्तिकेन सूत्रावयवप्रत्याख्यानापेक्षया योगविभागमाश्रित्य वार्तिकार्थोपसंग्रहस्यैव न्याय्यत्वात्' इति तु मनोरमायां स्थितम्। ननु 'अत्पूर्वस्य' इत्यत्र तपरो विवक्षितो न वा, यदि विवक्षितस्तर्हि बहुवृत्रहाणीति न सिध्येत्। यद्यविवक्षितस्तदा प्राघानीति चिण्णन्तेऽपि णत्वं स्यात्, ततश्च 'कुव्यवाये हादेशेषु प्रतिषेधः' इति वचनं स्वीकर्तव्यमेवेति किमनेन योगविभागेन। अत्राहुः—तपरोऽत्र विवक्षित एव। न च बहुवृत्रहाणीत्यत्र णत्वासिद्धिः। णत्वस्यान्तरङ्गत्वेन तत्कार्यं प्रति दीर्घस्यासिद्धत्वात्। न च त्रैपादिकेऽन्तरङ्गे षाष्ठी परिभाषा न प्रवर्तत इति वाच्यम्, कार्यकालपक्षाभ्युपगमात्। न चैवमन्तरङ्गं णत्वं प्राघानीत्यत्रापि स्यादिति वाच्यम्, 'पूर्वं धातुः साधनेन युज्यते' इति पक्षे णत्वस्य बहिरङ्गत्वात्, इष्टानुरोधेन 'पूर्वं धातुरुपसर्गेण–' इति पक्षस्यानभ्युपगमादिति। अन्ये तु 'हन्तेरत्पूर्वस्य' इत्यत्र उपसर्गादित्यस्यानुवृत्तिस्वीकाराद् योगविभागसामर्थ्येन भ्रूणघ्न इत्यत्र 'एकाजुत्तर–' इत्यादिना णत्वाभावेऽपि वृत्रघ्नः, स्रुघ्न इत्यत्र णत्वं दुर्वारमिति 'कुव्यवाये–' इति वार्तिकं स्वीकर्तव्यमेव। योगविभागस्यानन्तरस्येति न्यायबाधेनापि चरितार्थत्वादुपसर्गसंबन्धस्यापि बाधे सामर्थ्याभावात्। न च ब्रह्मादिषु कर्मसूपपदेषु विधीयमानः क्विप् प्रत्ययः केवलधातोरेव स्यान्न तु सोपसर्गादिति ब्रह्मप्रहा भ्रूणप्रहेत्यादि रूपमेव दुर्लभमिति वाच्यम्। 'आतोऽनुपसर्गे कः' इत्यत्रानुपसर्गे इति सामान्यापेक्षज्ञापकात्सोपसर्गाद्धन्तेरपि 'ब्रह्मभ्रूण–' इति क्विप्संभवात्। अनुपसर्गग्रहणस्य सामान्यापेक्षज्ञाप-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विन्प्रत्यये इनोऽनर्थकत्वेऽपि 'इन्हन्–' (सू ३५६) इत्यत्र ग्रहणं भवत्येव, अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति' (प १७) इति वचनात्। अर्यम्णि, अर्यमणि। पूष्णि, पूषणि। ३६० मघवा बहुलम्। (६-४-

---

र्यम्णां शौ' 'सौ च' इति दीर्घनियममात्रे दृष्टान्तः, न तु कुत्वादौ, असंभवात्। शार्ङ्गमस्यास्तीत्यर्थे 'अत इनिठनौ' इति मत्वर्थीय इनिः। यशोऽस्यास्तीत्यर्थे 'अस्मायामेधास्रजः–' इति विनिः। 'तसौ मत्वर्थे' इति भत्वान्न रुत्वम्। नन्वर्थवत्परिभाषया 'इन्हन्–' इत्यत्रार्थवत एव इनो ग्रहणम्, ततश्च विन्प्रत्यये इनोऽनर्थकत्वात् तस्य कथं ग्रहणमित्याशङ्क्य परिहरति—**यशस्विन्नित्यादिना**। **अनिनस्मन्निति**। एतच्च 'येन विधिः–' इति सूत्रे भाष्ये स्थितम्। राज्ञ इत्यत्र अन् अर्थवान्, दाम्न इत्यत्र तु अनर्थकः। शार्ङ्गी इत्यत्र इन् अर्थवान्, यशस्वी इत्यत्र तु अनर्थकः। सुपया इत्यत्रास् अर्थवान्, सुस्रोता इत्यत्र तु अनर्थकः। असन्तत्वाद्दीर्घः। सुशर्मेत्यत्र मन् अर्थवान्, सुप्रथिमा इत्यत्र तु अनर्थकः। 'मनः' इति न ङीप्। अर्यमन्शब्दे पूषन्शब्दे च अल्लोपे विशेष इत्याह—**अर्यम्णि इत्यादि**। 'विभाषा ङिश्योः' इत्यल्लोपविकल्पः। शसादावचि तु नित्यमल्लोप उक्तप्राय इति भावः।

मह्यते पूज्यत इत्यर्थे कनिप्रत्ययः, इकार उच्चारणार्थः, ककार इत्, अन् इति प्रत्ययः शिष्यते। धातोरवुगागमः, तत्र ककार इत्, उकार उच्चारणार्थः, कित्त्वादन्तावयवः, महधातोर्हस्य घश्च इति त्रयं निपात्यते। श्वन्नुक्षन्पूषन्प्लीहन्क्लेदन्स्नेहन्मूर्धन्मज्जन्नर्यमन्विश्वप्सन्परिज्मन्मातरिश्वन्मघवन्नित्युणादिसूत्रेण निष्पन्ने तस्मिन् मघवन्शब्दे विशेषमाह—**मघवा बहुलम्**। 'अर्वणस्त्रसौ–' इत्यतः तृ इत्यनुवर्तते। तच्च

---

कत्वे तूक्तवार्तिकमेव प्रमाणम्। तस्माद् 'हन्तेः' इति योगविभागोऽत्र निरर्थक एवेत्याहुः। **माधवेनोक्तमिति**। इत्थं हि तदीयो ग्रन्थः—'भसंज्ञायामल्लोपे उत्तरपदमनच्कं स्थानिवद्भावश्चाल्विधित्वान्नेत्येकाजुत्तरपदत्वाभावात् 'प्रातिपदिकान्तनुम्विभक्तिषु च' इति विकल्पो भवति–वृत्रघ्नो वृत्रघ्णः इति। **तद्भाष्येति**। किं च अल्विधित्वान्नेत्यसंगतम्, अल्विध्यर्थमेव 'अचः परस्मिन्–' इत्यस्यारम्भात्। तस्याप्रवृत्तौ युक्त्यन्तरस्यैव वाच्यत्वात्। 'एकाजुत्तर–' इत्यस्याप्रवृत्तावपि 'कुमति च' इति सूत्रस्य दुर्वारत्वाद् वैकल्पिकत्वं णत्वस्यासंगतमेव। न च त्रिपाद्यामपि पूर्वं प्रत्युत्तरशास्त्रस्यासिद्धत्वाद् 'एकाजुत्तरपदे णः' 'कुमति च' इत्यस्याप्रवृत्त्या 'प्रातिपदिकान्त–' इति वैकल्पिकमेव णत्वं भवतीति वाच्यम्, न हि योगे योगोऽसिद्धः, किं तु प्रकरणे प्रकरणमिति भाष्यादौ स्पष्टत्वादिति दिक्। **अनिनस्मन्ग्रहणानीति**। अन्–राज्ञेत्यर्थवता, साम्ना इत्यनर्थकेन। इन्–दण्डीत्यर्थवता, वाग्मीत्यनर्थकेन। अस्–सुपया इत्यर्थवता, सुस्रोता इत्यनर्थ-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

१२८) मघवन्शब्दस्य वा तृ इत्यन्तादेशः स्यात्। ऋ इत्। ३६१ उगिदचां सर्वनामस्थानेऽधातोः। ( ७-१-७० ) अधातोरुगितो नलोपिनोऽञ्चतेश्च

---

लुप्तप्रथमाकम्। मघवेति तु षष्ठ्यर्थे प्रथमा। तदाह—**मघवन्शब्दस्येत्यादिना**। **ऋ इदिति**। 'उपदेशेऽजनुनासिक इत्' इति ऋकार इत्संज्ञक इत्यर्थः। ऋ इत्यविभक्तिको निर्देशः प्रक्रियासमये न दुष्यति। 'अलोऽन्त्यस्य' इति नकारस्य तकारः। सर्वादेशस्तु न, 'नानुबन्धकृतमनेकाल्त्वम्' इति वचनात्। मघवत् स् इति स्थिते—**उगिदचाम्**। अधातोरिति छेदः। उक् इत् येषां ते उगितः। अच् इति लुप्तनकारस्य 'अञ्चु गतिपूजनयोः' इति धातोर्ग्रहणम्। अधातोरित्युगिद्विशेषणम्, न त्वञ्चतेः, असंभवात्। 'इदितो नुम् धातोः' इत्यतो नुमित्यनुवर्तते। तदाह—**अधातोरुगित इत्यादिना**। नुमि मकार इत्, उकार उच्चारणार्थः, मित्त्वादन्त्यादचः परः। अजिति

---

केन। इह 'स्नुरीभ्यां तुट् च' इत्यसुनस्तुट्। मन्—सुशर्मेत्यर्थवता, सुप्रथिमा इत्यनर्थकेन। एतच्च 'इणः षीध्वम्—' इति सूत्रे अङ्गग्रहणेनार्थवद्ग्रहणपरिभाषाया अनित्यत्वज्ञापनात्सिद्धम्। वेविषीध्वमित्यत्र षीध्वंशब्दस्य ग्रहणं मा भूदिति हि तत्राङ्गग्रहणं कृतम्। तच्चापार्थकम्, अनर्थकत्वादेव तद्ग्रहणासिद्धेः। अतो ज्ञायते अर्थवद्ग्रहणपरिभाषा अनित्येति। **मघवा बहुलम्**। 'अवर्णस्त्रसौ—' इत्यतस्तृ इत्यनुवर्तते, तदपेक्षा च 'मघवा' इति षष्ठ्यर्थे प्रथमा, तदाह—**मघवन्शब्दस्येति**। **अधातोरिति**। अधातुभूतपूर्वस्यापीत्यर्थः। अञ्चतिग्रहणं हि नियमार्थम्, उगितो धातोश्चेद्भवति तर्ह्यञ्चतेरेवेति। एवं च गोमानिवाचरति गोमान् इत्यादौ संप्रति धातुत्वेऽपि विध्यर्थमधातुग्रहणम्। एतच्च मूल एव स्फुटीभविष्यति। नन्वञ्चतिग्रहणमौपदेशिकधातोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेवेति व्याख्याय अधातुग्रहणं त्यज्यतामिति चेत्। अत्र नव्याः—नुम्मात्रविषयको नायं नियमः, 'धातोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेव' इति नियम्यते। तेनेह न, उखास्रत्' इति 'उगितश्च' इति सूत्रे वक्ष्यमाणत्वात्। ततश्च यद्यौपदेशिकधातोश्चेदुगित्कार्यमिति व्याख्यायेत तर्हि पूर्वोक्ते गोमानित्यादौ स्त्रियाम् 'उगितश्च' इति ङीप् प्रसज्येत। आचारक्विबन्तस्यौपदेशिकधातुत्वाभावात्। न चेष्टापत्तिः। अधातोर्ग्रहणादेव सूत्रकृता तत्र ङीब् नेष्यत इत्यनुमानादिति दिक्। ननु नलोपिनोऽञ्चतेरेव नुमागमः स्यात्, न तु पूजार्थस्य नकारवतोऽञ्चतेरित्येवमर्थम् 'अचाम्' इति ग्रहणस्य सार्थकत्वात्कथमेतस्य सामान्यनियमार्थतेति चेत्। उच्यते—अचामित्यत्र नलोपोऽविवक्षितः। तथा च पूर्वोक्तनियमार्थता भाष्यकैयटाद्युक्ता संगच्छत एव। पूजार्थस्याञ्चतेर्नुमि सत्यपि 'नश्चापदान्तस्य—' इति सूत्रे जातिपक्षमाश्रित्य नत्वजातेरनुस्वारविधानेन समीहितरूपसिद्धेः। व्यक्तिपक्षे त्वनुस्वारस्य शर्षु पठितत्वाद् अनुस्वारे परे नुमोऽनुस्वारे

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नुमागमः स्यात्सर्वनामस्थाने परे । उपधादीर्घः, मघवान् । इह दीर्घे कर्तव्ये संयोगान्तलोपस्यासिद्धत्वं न भवति, बहुलग्रहणात् । तथा च 'श्वन्नुक्षन्–' (उ १५७) इति निपातनान्मघशब्दान्मतुपा च भाषायामपि शब्दद्वयसिद्धिमा-

---

अच्प्रत्याहारो न गृह्यते, व्याख्यानात्, 'नपुंसकस्य झलचः' इत्यज्ग्रहणाच्च । अन्यथा 'उगिदचाम्–' इत्येव सिद्धे तद्वैयर्थ्यात्, 'वृद्धिः' 'गुणः' इत्यादिनिर्देशाच्च । अधातोरित्ये-तत्तु अग्रे गोमच्छब्दनिरूपणावसरे मूल एव व्याख्यास्यते, तत्प्रयोजनं च तत्रैव वक्ष्यते । **उपधादीर्घ इति** । मघवन् त् स् इति स्थिते हल्ङ्यादिना सुलोपे संयोगान्त-लोपे च सति 'सर्वनामस्थाने च–' इति दीर्घ इत्यर्थः । नन्विह दीर्घे कर्तव्ये संयोगान्त-लोपस्यासिद्धत्वाद् नान्तत्वाभावात् पचन्नित्यादाविव दीर्घो न संभवतीत्यत आह–**दीर्घे कर्तव्य इति । बहुलग्रहणादिति ।**

'क्वचित्प्रवृत्तिः क्वचिदप्रवृत्तिः क्वचिद्विभाषा क्वचिदन्यदेव ।
शिष्टप्रयोगाननुसृत्य लोके विज्ञेयमेतद्बहुलग्रहे तु ॥' इति स्थितिः ।

अत्र दीर्घे कर्तव्ये संयोगान्तलोपस्य नासिद्धत्वम्, पचन्नित्यादौ तु असिद्धत्व-मेवेति बहुलग्रहणाल्लभ्यत इत्यर्थः । ननु त्रादेशपक्षे मघवन्नित्येवास्तु, बहुलग्रहणेन संयोगान्तलोपस्यासिद्धत्वाभावकल्पनायां प्रमाणाभावात् । वेदे तु यज्ञेन मघवानित्यादौ दीर्घः छान्दसो भविष्यतीत्यत आह—**तथा चेति** । त्रादेशपक्षे संयोगान्तलोपस्यासिद्ध-त्वाभावमभ्युपगम्यैवेत्यर्थः । **निपातनादिति** । कनिप्रत्ययस्य, अवुगागमस्य, घत्वस्य इति त्रयाणां निपातनादित्यर्थः । तथा च नान्तो मघवन्शब्दः सिध्यतीति भावः । **मघशब्दादिति** । धनपर्यायादित्यर्थः । मघः धनमस्यास्तीत्यर्थे मतुपि 'मादुपधायाश्च–' इति वत्वे तान्तो मघवच्छब्दः सिद्ध इति भाव । **भाषायामपीति** । लोके छन्दसि च इत्यर्थः । **शब्दद्वयेति** । मघवन्शब्दो मघवच्छब्दश्चेति शब्दद्वयम् 'मघवा

---

सति अनुस्वारद्वयवद्रूपमिष्यते । 'अनचि च' इति द्वित्वेन तद्रूपस्य तवापि मते दुर्वा-रत्वात् । न च भवन्मते द्वित्वेनानुस्वारत्रयं स्यादिति शङ्क्यम्, 'झरो झरि–' इति लोपेन निवारयितुं शक्यत्वात् । लोपाभावपक्षे त्रयाणां श्रवणं स्यादिति चेत्, भाष्य-कैयटाद्युक्तनियमानुरोधेन तत्स्वीकारे बाधकाभावाद् इष्टानुरोधेन जातिपक्ष एवात्राश्रय-णीयः । **नुमागमः स्यादिति** । 'इदितो नुम् धातोः' इत्यतो नुमनुवर्तत इति भावः । ननु कुर्वन्नित्यादाविव संयोगान्तलोपस्यासिद्धत्वेन नान्तत्वाभावाद्दीर्घत्वं न स्यादित्या-शङ्क्याह—**इह दीर्घे कर्तव्य इति** । **बहुलग्रहणादिति** । क्वचिदन्यदेवेत्यर्थकादि-त्यर्थः । बहूनर्थान् लातीति बहुलम् । 'आतोऽनुपसर्गे–' इति कर्मण्युपपदे कः । **श्वन्नुक्षन्निति** । 'श्वन्नुक्षन्पूषन् प्लीहन् क्लेदन् स्नेहन् मूर्धन् मज्जन् अर्यमन् विश्वप्सन्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्रित्यैतत्सूत्रं प्रत्याख्यातमाकरे। 'हविर्जक्षिति निःशङ्को मखेषु मघवानसौ' इति भट्टिः। मघवन्तौ, मघवन्तः। हे मघवन्। मघवन्तम्, मघवन्तौ, मघवतः। मघवता, मघवद्भ्याम् इत्यादि। तृत्वाभावे मघवा। 'छन्दसीवनिपौ च' इति

---

बहुलम्' इत्यस्य फलम्। तस्य सिद्धिमाश्रित्येत्यर्थः। **आकर इति**। 'केशाद्वः-' इति सूत्रे कैयटग्रन्थ इत्यर्थः। तत्र ह्येवमुक्तम्—'मघवा बहुलम्' इत्येतन्न कर्तव्यम्, 'श्वन्नुक्षन्-' इति निपातनाद् मघशब्दान्मतुपा च भाषायामपि शब्दद्वयस्य सिद्धत्वात्' इति। त्रादेशपक्षे संयोगान्तलोपस्यासिद्धत्वाद् दीर्घाभावाश्रयणे मघवन्निति रूपम्, मतुपि तु 'अत्वसन्तस्य-' इति दीर्घे मघवानिति रूपमिति रूपभेदापत्त्या तदसंगतिः स्पष्टैवेति भावः। वस्तुतस्तु कन्यन्तस्य प्रत्ययस्वरेणान्तोदात्तत्वम्, मतुपि तु 'ह्रस्वनुड्भ्यां मतुप्' इति मतुबुदात्तत्वस्य 'न गोश्वन्-' इतिं प्रतिषेधे सति पित्त्वादनुदात्तत्वे घकारादकारस्य फिट्स्वरेण उदात्तत्वमिति फलभेदात् कैयटग्रन्थश्चिन्त्य एव। मघवानिति दीर्घः शिष्टसंमतश्चेत्याह—**हविरिति**। मखेषु यज्ञेषु निश्शङ्कः असौ मघवान् हविर्जक्षिति—भक्षयतीत्यर्थः। **मघवन्तावित्यादि**। सुटि त्रादेशो नुम्चेति भावः। शसादौ त्रादेशः, न तु नुम्, असर्वनामस्थानत्वादित्यभिप्रेत्याह—**मघवत इति**। **मघवद्भ्यामित्यादि**। त्रादेशे 'स्वादिषु-' इति पदत्वाज्जश्त्वम्। सुपि त्रादेशे जश्त्वे चर्त्वे मघवत्सु। **तृत्वाभावे मघवेति**। नान्तात् सौ राजवद्रूपमिति भावः। ननु 'मघवा बहुलम्' इति सूत्रे 'अर्वणस्तृ मघोनश्च न शिष्यं छान्दसं हि तत्' इति वार्तिकभाष्यकैयटेषु मघवन्शब्दस्य छन्दोमात्रविषयत्वावगमात् कथं तस्य लोके प्रयोग इत्यत आह—**छन्दसीवनिपावित्यादि**। 'तदस्यास्त्यस्मिन्निति मतुप्' इत्यधिकारे 'केशाद्वोऽन्यतरस्याम्' इति सूत्रे 'छन्दसीवनिपौ च' इति वार्तिकम्। छन्दसि ईवनिपौ च वक्तव्यौ' वश्च मतुप्च। 'रथीरभूत्मुद्गलानी गविष्टौ, सुमङ्गलीरियं वधूः, ऋतावानं मघवानमीमहे' इति तत्र भाष्यम्। तत्र वनिप्प्रत्ययान्ते मघवन्शब्दे प्रत्ययस्वरेण वकारादकार उदात्तः, मघशब्दः फिट्स्वरेणान्तोदात्तः, 'अनुदात्तं पदमेकवर्जम्' इति शिष्टस्वरेण मकारा-

---

परिज्मन् मातरिश्वन् मघवन्' इत्युणादिसूत्रेणेत्यर्थः। **निपातनादिति**। महेर्हकारस्य घकारः, अवुगागमः कनिप्रत्ययश्चेत्यस्य त्रितयस्य निपातनादित्यर्थः। **प्रत्याख्यातमाकर इति**। एवं च फलभेदे त्रादेशस्य प्रत्याख्यानासंभवाद् आदेशपक्षेऽपि दीर्घो भाष्यादिसंमत एवेति बहुलग्रहणात्संयोगान्तलोपस्य नासिद्धत्वमित्युक्तम्। यत्त्वाहुः—मतुप्पक्षेऽपि छान्दसत्वान्न दीर्घ इत्येव भाष्याशय इति। तन्न। मतुबन्तस्य छान्दसत्वे मानाभावाद् उदाहृतभट्टिप्रयोगविरोधाच्चेति दिक्। **छन्दसीवनिपाविति**। मत्वर्थे ईवनिपौ स्तः छन्दसीति वार्तिकार्थः। 'सुमङ्गलीरियं वधूः' 'मघवानमीमहे'

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वनिबन्तं मध्योदात्तं छन्दस्येव। अन्तोदात्तं तु लोकेऽपीति विशेषः। मघवानौ, मघवानः। सुटि राजवत्। **३६२ श्वयुवमघोनामतद्धिते।** ( ६-४-१३३ ) अन्नन्तानां भसंज्ञकानामेषामतद्धिते परे संप्रसारणं स्यात्। 'संप्रसारणाच्च' (सू ३३०) 'आद् गुणः' (सू ६९) मघोनः। अन्नन्तानाम् किम्—मघवतः। मघवता।

---

दकारो वकारादकारश्चानुदात्तः, 'उदात्तादनुदात्तस्य स्वरितः' इति वकारादकारः स्वरितः, तथा च मघवन्निति रूपं मध्योदात्तं संपद्यते। एतादृशमघवन्शब्दविषयकं छान्दसत्वाभिधानम्। कन्यन्ते तु मघवन्शब्दे वकारादकारः प्रत्ययस्वरेणोदात्तः, शिष्टस्वरेण मकारादकारो घकारादकारश्च अनुदात्तौ, तथा च मघवन्निति रूपमन्तोदात्तमिति स्थितिः। एतादृशमघवन्शब्दस्तु लोकवेदसाधारणः, तस्य छन्दोमात्रविषयत्वे प्रमाणाभावात्। किं च 'वनो र च' इति सूत्रे भाष्यम्—'मघवन्शब्दः अव्युत्पन्नं प्रातिपदिकम्' इति। अयमपि मघवन्शब्दः फिट्स्वरेणान्तोदात्तः लोकवेदसाधारण एव, छन्दोमात्रविषयत्वे प्रमाणाभावादिति भावः। शब्दरत्ने तु 'न शिष्यं छान्दसं हि तत्' इत्युदाहृतभाष्यवार्तिकयोः सामान्यप्रवृत्तयोः मध्योदात्तमात्रविषयसंकोचे प्रमाणं न किञ्चिदस्ति, कविप्रयोगाणां तु 'तं तस्थिवांसं नगरोपकण्ठे' इत्यादिविषये बहुशः प्रमाददर्शनात् तेषामपि नार्षवचनसंकोचकता, अतो मघवन्शब्दस्य सर्वस्यापि लोके असाधुत्वमेवेति प्रपञ्चितम्। **सुटि राजवदिति**। वृत्त्वाभावपक्षे नान्तत्वाद्दीर्घ इति भावः।

शसादावचि मघवन् अस् इत्यादिस्थिते 'अल्लोपोऽनः' इति प्राप्ते—**श्वयुवमघोनामतद्धिते**। श्वा च, युवा च, मघवा च इति द्वन्द्वः। 'वसोः संप्रसारणम्' इत्यतः संप्रसारणमित्यनुवर्तते। 'भस्य' इत्यधिकृतम्। 'अल्लोपोऽनः' इत्यतः अन इत्यपकृष्यते। तच्च श्वयुवमघोनां प्रत्येकं विशेषणम्, तदन्तविधिः। फलितमाह—**अन्नन्तानामित्यादि**। 'इग्यणः संप्रसारणम्' इति वकारस्य संप्रसारणमुकारः। मघ उ अन् इति स्थिते पूर्वरूपमुक्तं स्मारयति—**संप्रसारणाच्चेति**। मघ उ न् इति स्थिते गुणं स्मारयति—**आद् गुण इति**। **अन्नन्तानां किमिति**। श्वयुवमघोनामन्नन्तत्वाव्यभिचारात् किमर्थमन्नन्तत्वविशेषणम्, मघवन्शब्दे नकारस्य त्रादेशपक्षेऽपि एकदेशविकृतस्यानन्यतया अन्नन्तत्वसत्त्वादिति प्रश्नः। **मघवत इति**। त्रादेशपक्षे मघवन्शब्दे संप्र-

---

इत्युदाहरिष्यति वैदिकप्रक्रियायाम्। **अन्तोदात्तं त्विति**। यद्यपि 'श्वन्नुक्षन्' इत्यत्र कनिन्नन्ता एते इत्युज्ज्वलदत्तादिग्रन्थपर्यालोचनया आद्युदात्तत्वं लभ्यते, तथापि 'उक्षा समुद्रो अरुणः सुपर्णः' 'पूषा त्वेतो नयतु' 'अग्निर्मूर्धा दिवः' इत्यादौ तत्सूत्रोपात्तानामुक्षादीनामन्तोदात्तत्वस्य निर्विवादतया कनिप्रत्यय एवोचित इति भावः। **श्वयुव**। 'अल्लोपोऽनः' इत्यतोऽन इत्यपकृष्य व्याचष्टे—**अन्नन्तानामिति**। अन्नन्तानां

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्त्रियां मघवती। अतद्धिते किम्—माघवनम्। मघोना, मघवभ्याम् इत्यादि। शुनः। शुना, श्वभ्यामित्यादि। युवन्शब्दे वस्योत्त्वे कृते। ३६३ न संप्रसारणे

---

सारणनिवृत्त्यर्थम् अनन्तत्वविशेषणम्। यद्यप्येकदेशविकृतस्यानन्यतया अनन्तत्वम-स्त्येव, तथापि विशेषणसामर्थ्यात् श्रूयमाणनकारान्तस्यैव संप्रसारणमित्याहुः। **स्त्रियां मघवतीति**। मघवतः स्त्री मघवती, पुंयोगेन स्त्रियां वृत्तौ 'उगितश्च' इति ङीप्। अत्राप्यनन्तत्वविशेषणाद् न संप्रसारणमिति भावः। अत्र 'उगिदचाम्—' इति नुम् तु न, ङीपा व्यवधानेन तान्तस्य उगितः सर्वनामस्थानपरकत्वाभावात्। लिङ्गविशिष्टपरि-भाषा तु नेह प्रवर्तते, विभक्तौ लिङ्गविशिष्टाग्रहणमित्युक्तेरिति भावः। **माघवनमिति**। 'साऽस्य देवता' इति मघवन्शब्दाद् अणि आदिवृद्धिः। अत्राणस्तद्धितत्वात् तस्मिन् परे न संप्रसारणमिति भावः। **मघवभ्यामिति**। भ्यामादौ हलि नलोप इति भावः। **इत्यादीति**। मघोने। मघोनः। मघोनोः। मघोनाम्। मघोनि। श्वन्शब्दः प्रायेण राजवत्। शसादावचि 'श्वयुव—' इति संप्रसारणे वकारस्य उकारः। शु अन् इति स्थिते 'संप्रसारणाच्च' इति पूर्वरूपमिति मत्वाह—**शुनः**। **शुनेति**। **इत्यादीति**। शुने। शुनः। शुनोः। शुनाम्। शुनि। युवन्शब्दोऽपि प्रायेण राजवत्। शसादावचि विशे-षमाह—**युवन्शब्द इति**। युवन् अस् इत्यादिस्थिते 'श्वयुव—' इति वकारस्य संप्र-सारणे उकारे, यु उ अन् इति स्थिते 'संप्रसारणाच्च' इति पूर्वरूपे, यु उ न् इति स्थिते सवर्णदीर्घे यून इत्यादिरूपेषु सिद्धेषु, यकारस्यापि संप्रसारणे प्राप्त इत्यर्थः। 'लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तिः' इत्यस्य तु नायं विषयः, कार्याश्रयवर्णभेदेन लक्ष्यभेदात्। अन्यथा संस्कर्तेत्यादौ 'अनचि च' इत्यादेरसकृत्प्रवृत्त्यनुपपत्तेरिति भावः।

---

**किम्। मघवत इति**। यद्यपि नस्य तादेशेऽप्येकदेशविकृतस्यानन्यत्वादनन्तताऽत्रा-स्त्येव, तथापि विशेषणसामर्थ्यात् श्रूयमाणनकारान्तस्यैव संप्रसारणं न त्वत्रेत्याहुः। वार्तिककृता तु 'श्वादीनां संप्रसारणे नकारान्तग्रहणमनकारान्तप्रतिषेधार्थम्' इत्युक्तम्। नन्वेवमपि 'अल्लोपोऽनः' इत्यल्लोपो दुर्वार इति चेन्मैवम्। भाष्यकृता पूर्वोक्तवार्तिकम-त्रानुवर्त्य 'अल्लोपोऽनः, नकारान्तस्यैव' इति व्याख्यातत्वात्। एतच्च 'ऋलृक्' इति सूत्रे भाष्ये स्पष्टम्। एतेन बहुधीवरी राजकीयमित्यत्राप्यल्लोपाभावः सिद्धः। 'वनो र च' 'राज्ञः क च' इत्यादेशे कृते नकारान्तत्वाभावात्। **स्त्रियां मघवतीति**। मघ-

---

१ वस्तुतस्तु 'एकदेशविकृतन्यायस्य लोकव्यवहारमूलकतया, लोके यथा छिन्न-पुच्छे शुनि श्वव्यवहारसत्त्वेऽपि पुच्छवत्त्वव्यवहारो न जायते, तथा तान्तमघवच्छब्दे मघवन्शब्दत्वव्यवहारसंभवेऽपि नान्तत्वव्यवहारासंभव एव बोध्यः।

२ 'पुंयोगादाख्यायाम्' इति क। ३ 'ङीष्' क। ४ 'ङीषा' क।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

संप्रसारणम् । (६-१-३७) संप्रसारणे परतः पूर्वस्य यणः संप्रसारणं न स्यात्। इति यकारस्य नेत्वम् , अत एव ज्ञापकादन्त्यस्य यणः पूर्वं संप्रसारणम् , यूनः। यूना, युवभ्यामित्यादि। अर्वा। हे अर्वन्। ३६४ अर्वणस्त्रसावनञः। (६-

---

न संप्रसारणे। इति यकारस्येति । सवर्णदीर्घनिष्पन्नस्य ऊकारस्य 'अचः परस्मिन्–' इति स्थानिवत्त्वेन संप्रसारणतया यकारस्य संप्रसारणपरकत्वाद् न संप्रसारणमिकार इत्यर्थः। ननु उकारद्वयस्थानिकस्य ऊकारस्य स्थानिवत्त्वे सति तस्य उकारद्वयात्मकतया प्रथमेन उकारेण व्यवधानात् संप्रसारणपरत्वाभावात् कथमिह निषेधः, 'येन नाव्यवधानम्–' इति न्यायस्य तु नायं विषयः, विव्यथे इत्यादौ 'व्यथो लिटि' इति वकारस्याव्यवहितसंप्रसारणपरत्वे निषेधस्य चरितार्थत्वाद् इति चेन्मैवम्। एवं हि सति 'न संप्रसारणे संप्रसाणम्' इति निषेधस्य 'व्यथो लिटि' इति संप्रसारणमात्रविषयकत्वमापद्येत, एवं च सति 'व्यथो यो लिटि' इति यकारग्रहणेनैव सिद्धे 'न संप्रसारणे संप्रसारणम् ' इति सूत्रमनर्थकमेव स्यात्। अतः 'श्वयुव–' इति संप्रसारणनिषेधकत्वमस्यावश्यकमिति व्यवहितेऽपि संप्रसारणे परे यून इत्यादौ निषेधो निर्बाधः, 'यूनस्ति' इत्यादिनिर्देशाच्चेत्यलम्। ननु सकृत्प्रवृत्त्यैव युवन्शब्दे यवयोः संप्रसारणे जाते निषेधो व्यर्थः, निमित्तत्वानुपपत्तिश्च। यद्वा प्रथमं यकारस्य संप्रसारणमस्तु, तदानीं संप्रसारणपरत्वाभावेन निषेधाप्रवृत्तेः, अनन्तरं तु वकारस्यापि संप्रसारणमस्तु । तत्राह— अत एव ज्ञापकादिति। अन्यथा एतन्निषेधारम्भवैयर्थ्यापातादिति भावः। इत्यादीति। यूने। यूनः। यूनोः। यूनि।

'आतो मनिन्क्वनिब्वनिपश्च' 'अन्येभ्योऽपि दृश्यते' इति ऋधातोः वनिपि गुणे रपरत्वे अर्वन्शब्दः अश्वे योगरूढः। तस्य सौ राजवद्रूपं मत्वाह—अर्वा। हे अर्वन्निति। अर्वणस्त्रसावनञः। तृ असौ इति छेदः। न विद्यते नञ् य-

---

वती, मघवत्यौ, मघवत्य इत्यत्र लिङ्गविशिष्टपरिभाषया 'उगिदचाम्–' इति नुम् न शङ्क्यः, विभक्तौ लिङ्गविशिष्टाग्रहणादित्याहुः। न संप्रसारणे। 'ह्वः संप्रसारणम्' इत्यतः संप्रसारणमित्यनुवर्तमानेऽपि पुनः संप्रसारणग्रहणात् प्रदेशान्तरस्थं 'श्वयुवमघोनाम्–' इत्यपि संप्रसारणं निषिध्यते, तदाह—इति यकारस्य नेत्वमिति। यून इति। ननूकारेण व्यवधानात्कथमत्र निषेधः। विव्याध विव्यथे इत्यादावव्यवधानेऽपि निषेधस्य चरितार्थत्वात्। न च सवर्णदीर्घे कृते नास्ति व्यवधानमिति वाच्यम्। 'अचः परस्मिन्–' इति स्थानिवत्त्वात्। अत्राहुः—विदेशस्थनिषेधार्थात्पुनः संप्रसारणग्रहणादेव व्यवधानेऽप्यत्र निषेधो भविष्यतीत्यदोषः। न च 'व्यथो लिटि' इति विदेशस्थेन यकारस्य संप्रसारणे कृते वकारस्य तदभावाय 'न संप्रसारणे–' इति सूत्रं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

४-१२७) नञा रहितस्यार्वन्नित्यस्याङ्गस्य तृ इत्यन्तादेशः स्यात्, न तु सौ।

स्येति बहुव्रीहिः, अङ्गस्येत्यधिकृतम् अर्वणा विशेष्यते। तदाह। **नञा रहितस्ये-**

प्रवर्त्य पुनः संप्रसारणग्रहणं चरितार्थमिति व्यवधाने निषेधो न भविष्यतीति शङ्क्यम्। 'व्यथो लिटि' इत्येतद्धलादिः शेषापवाद इत्याकरे स्पष्टत्वात्। उत्सर्गसदेशश्चापवाद इति परस्यैव संप्रसारणं भवति, न पूर्वस्येति कैयटेन व्याख्यातत्वाच्चेति। **अर्वणस्तृ।** अङ्गस्येति वर्तते, तच्चार्वणा विशेष्यते, अनञ इत्यनेनापि, तदाह—**नञा रहितस्ये-त्यादि।** असाविति पर्युदासे विभक्तौ परत एव स्यात्, ततश्चार्वतीत्यादौ न स्यादित्या-शयेनाह—**न तु साविति।** न चैवमर्वप्रिय इत्यादावतिप्रसङ्गः, अङ्गेन स्वनिमित्तस्य प्रत्ययस्याक्षेपाल्लुका लुप्तत्वेनात्र प्रत्ययलक्षणाभावात्। एतेन 'वाहैरलुप्यत सहस्रदृगर्व-गर्वः' इति श्रीहर्षप्रयोगो व्याख्यातः। नन्वेवं 'स्थानिवदादेशः—' इति सूत्रे धात्वङ्ग-कृत्तद्धिताव्ययसुप्तिङ्पदादेशाः स्थानिवत्स्युरिति प्राचो ग्रन्थमनूद्य—तत् किं परिगणनम्, उदाहरणमात्रं वेति विकल्प्य, नान्त्यः, अव्ययस्याङ्गपदाभ्यां पृथग्ग्रहणवैयर्थ्यादिति मनो-रमायां यदुक्तं तत् कथं संगच्छेत, अव्ययस्योक्तरीत्यानङ्गत्वात्। न च 'न लुमता—' इत्यनेनाङ्गकार्यनिषेधेऽप्यङ्गसंज्ञाया अनिषेधान्नोक्तदोष इति वाच्यम्, प्रत्यये परतः पूर्वस्य यत् कार्यमाङ्गमनाङ्गं वा तत्सर्वं 'न लुमता—' इत्यनेन निषिध्यते, इति 'यञोऽचि च' इति सूत्रस्थमनोरमाग्रन्थपर्यालोचनया लुमताशब्देन लुप्ते अङ्गसंज्ञाया अप्यस्तीकार्य-त्वात्, तस्या अपि प्रत्यये परतः पूर्वस्य कार्यत्वात्। यदि तु लुका लुप्तेऽप्यङ्गत्वं स्वी-क्रियते, तदायं ग्रन्थो 'यचि भम्' 'वृषण्वस्वश्वयोः' इत्यत्र 'वृष वर्षुकं वसु धनं यस्य वृषण्वसु, वृषा अश्वो यस्य वृषणश्व इत्युदाहृत्य भत्वादिह नलोपो न भवति। अल्लोपस्तु अनङ्गत्वान्न।' इति मूले वैदिकप्रक्रियायां वक्ष्यमाणग्रन्थेन सह विरुध्येत। न च 'अल्लोपो-ऽनः' इत्यत्राङ्गावयवोऽसर्वनामस्थानयजादिस्वादिपरो योऽनिति व्याख्यानाद् अल्लोपस्य तत्र प्राप्त्यभावादनङ्गत्वादिति समाधानं व्यर्थमिति भ्रमितव्यम्, भसंज्ञयैव यजादिस्वा-दिपरो योऽनिति व्याख्यानवद् वस्वश्वयोः परतो योऽनिति व्याख्यानस्यापि लाभात्। तस्मात्पदात्पृथगित्येव वक्तव्ये अङ्गपदाभ्यामित्यङ्गग्रहणं रभसकृतमेवेति चेत्। अत्राहुः— 'न लुमता—' इति सूत्रे लुमता लुप्ते तन्निमित्ताङ्गस्याङ्गसंज्ञकस्य कार्यं न स्यादिति यदा व्याख्यायते, तदा 'अर्वणस्तृ—' इत्याद्यङ्गकार्याप्रवृत्तावप्यङ्गसंज्ञाया निर्बाधत्वादङ्गग्रहणं तत्रत्यं सम्यगेव। यदा त्वाङ्गमनाङ्गं वेत्यादिमनोरमाग्रन्थस्यानङ्गत्वादिति मूलग्रन्थस्य च स्वारस्यपर्यालोचनया लाघवादव्ययस्याङ्गत्वे फलाभावाच्च प्रत्यये परतः पूर्वस्य कार्यं निषिध्यते, तदा त्वविशेषेण अङ्गसंज्ञाय अपि निषेधादङ्गग्रहणं तत्र रभसकृतमेव। न च 'न लुमता—' इत्यनेनाङ्गसंज्ञानिषेधे 'युवोरनाकौ' इति सूत्रस्थभाष्यकैयटाभ्यां

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उगित्त्वान्नुम्। अर्वन्तौ, अर्वन्तः। अर्वन्तम्, अर्वन्तौ, अर्वतः। अर्वता, अर्वद्भ्याम् इत्यादि। अनञः किम्-अनर्वा यज्ववत्। ३६५ पथिमथ्यृभुक्षामात्।

---

त्यादिना। ऋकार इत्। 'अलोन्त्यस्य' इति नस्य तः। उगित्त्वान्नुमिति। 'उगिदचाम्–' इत्यनेनेति भावः। अर्वन्ताविति। नुमो नस्य 'नश्चापदान्तस्य–' इति अनुस्वारः, परसवर्णो इति भावः। शसादावचि असर्वनामस्थानत्वान्नुम् नेति मत्वाह–अर्वत इति। अर्वद्भ्यामिति। 'स्वादिषु–' इति पदत्वाज्जश्त्वमिति भावः। इत्यादीति। अर्वद्भिः। अर्वते। अर्वद्भ्यः। अर्वतः, अर्वतोः, अर्वताम्। अर्वति, अर्वत्सु। अनञः किमिति। अनञ इत्यस्य किं प्रयोजनमित्यर्थः। अनर्वा यज्ववदिति। अनर्वन्शब्दो यज्ववदित्यर्थः। शसादावचि 'न संयोगाद्वमन्तात्' इत्यल्लोपो नेति भावः।

पथिन्, मथिन्, ऋभुक्षिन्, एते नकारान्ताः। तेषु विशेषमाह—पथिमथ्यृभुक्षामात्। पन्थाश्च मन्थाश्च ऋभुक्षाश्च पथिमथ्यृभुक्षाणः, तेषामिति विग्रहः।

---

विरोधः स्यादिति वाच्यम्। तयोस्तत्र प्रौढिवादेन प्रवृत्तत्वात्। तथा च 'न लुमता तस्मिन्' इति सिद्धान्तः, प्रत्यये परतः पूर्वस्य कार्यं निषिध्यत इति मनोरमाग्रन्थश्च स्वरसतः संगच्छत इति। ननु ऋधातोर्विचि गुणे च अरिति रूपम्, तस्मान्मतुपि अर्वन्तावित्यादि सेत्स्यति, 'छन्दसीवनिपौ–' इति वनिपि वेदे अर्वेति सेत्स्यति, ऋधातोरेव 'स्नामदिपद्यर्ति–' इत्यादिना वनिपि तु लोकेऽप्यर्वेति सेत्स्यति रूढिशब्दश्चायम्, 'वाजिवाहार्वगन्धर्वहयसैन्धवसप्तयः' इत्यमरकोशात्। ततश्चार्थोऽपि न भिद्यत इति किमनेन सूत्रेणेति चेत्। अत्राहुः—नान्ततान्तयोः सर्वत्र प्रयोगे प्राप्ते सौ परे नञुपपदे च नान्तस्य प्रयोगो भवति, अन्यत्र तु नान्तस्य प्रयोगो न भवतीति व्यवस्थार्थमिदं 'तृज्वत् क्रोष्टुः' इति त्रिसूत्रीवदिति। यत्तु कैश्चिदुक्तम्—अर्वन्मघवन्शब्दयोरपि भाषायामसाधुत्वमेव। 'अर्वणस्तृ मघोनश्च न शिष्यं छान्दसं हि तत्। मतुब्वन्योर्विधानाच्च छन्दस्युभयदर्शनात्॥' इति वार्तिकादिति। तदापाततः, वार्तिकस्य वनिबन्तमध्योदात्तपरत्वात्, छन्दस्येव वनिब्विधानात्। तथा च श्रीहर्षः—'वाहैरलुप्यत सहस्रहगर्वगर्वः' इति प्रायुङ्क्त। अर्वन्तौ, अर्वन्त इति। व्यपदेशिवद्भावेनार्वन्नन्तत्वात् त्रादेशः। न च व्यपदेशिवद्भावोऽप्रातिपदिकेनेति वाच्यम्, तस्य प्रत्ययविधिविषयत्वात्। पथिमथि। 'गमेरिनिः' इत्यत इनिरिति 'परमे कित्' इत्यतः किदित्यनुवर्तमाने 'मन्थः' इत्यनेन निष्पन्नो मथिन्शब्दः। 'पतस्थ च' चादिनिः। पथिन्। 'ऋभुक्षः स्वर्गवज्रयोः'। ततो मत्वर्थीयेनिना ऋभुक्षिन्निति बोध्यम्। ननु 'अस्थिदधि–' इति सूत्रे उदात्ततया पठितेऽप्यनभीष्टसिद्धौ 'अनङुदात्तः' इत्युदात्तग्रहणं 'गुणा अभेदकाः' इति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

(७-१-८५) एषामाकारोऽन्तादेशः स्यात्सौ परे। आ आत् इति प्रश्लेषेण शुद्धाया एव व्यक्तेर्विधानान्नानुनासिकः। ३६६ इतोऽत्सर्वनामस्थाने। (७-१-८६) पथ्यादेरिकारस्याकारः स्यात्सर्वनामस्थाने परे। ३६७ थो न्थः। (७-१-८७)

---

'सावनडुहः' इत्यतः सावित्यनुवर्तते, आदिति तपरकरणम्, आकार एव विधेयः। तदाह—**एषामित्यादिना**। 'अलोऽन्त्यस्य' इति नकारस्य आकारः। ननु नकारस्य आन्तरतम्याद् अनुनासिक एव आकारः प्राप्नोति। न च निरनुनासिकस्यैवाकारस्योच्चारणात् शुद्ध एव आकार इति वाच्यम्, गुणानामभेदकत्वात्, भेदकत्वेऽपि तपरकरणेन अनुनासिकस्याप्याकारस्य ग्रहणात्, व्यक्तिपक्षे तपरसूत्रस्य अनेणसु दीर्घप्लुतेषु विध्यर्थत्वात्। न च ग्रहणकसूत्रे वार्णसमाम्नायिकत्वेन निश्चितस्याण्ग्रहणस्य अप्रत्यय इत्यस्य च तपरसूत्रे अनुवृत्तेराकारस्येहानण्त्वाद् विधीयमानत्वाच्च न तत्काल इति वाच्यम्, तपरसूत्रे अण्ग्रहणस्य अप्रत्ययग्रहणस्य चानुवृत्तौ मानाभावादित्यत आह—**आ आदिति**। सवर्णदीर्घेणाकारान्तरं प्रश्लिष्यते, ततश्चाननुनासिकरूप आकारो भवतीति लभ्यते। न च सवर्णादेशत्वं शङ्क्यम्, न ह्यत्र वर्णद्वयं विधीयते, विशेषणविशेष्यभावेनान्वयाभ्युपगमेन अननुनासिकाकारस्यैकस्यैव विधानादिति भावः। भाष्ये तु अनुनासिकविधिः संमतत्वे प्रतिपत्तिलाघवाय अनुनासिकस्यैव 'उञः, ऊँ' इत्यत्रेव उच्चार्य विधानसंभवात्तदनुच्चारणाच्छुद्ध एव आकार इह विधेय इत्युक्तम्। तपरकरणं तु उच्चारणार्थमेव। वस्तुतस्तु 'भाव्यमानेन सवर्णानां ग्रहणं न' इति परिभाषयैव अनुनासिकाकारनिराससंभवादाकारप्रश्लेषक्लेशो व्यर्थः। 'भाव्यमानोऽण् सवर्णान्न गृह्णाति' इति पाठस्तु प्रामादिकः, 'ज्यादादीयसः' इति सूत्रे आदिति तपरनिर्देशेनेयं परिभाषा ज्ञाप्यते—'भाव्यमानेन सवर्णानां ग्रहणं न' इत्येव भाष्ये पाठात्, अणुदित्सूत्रभाष्येऽप्यण्ग्रहणरहिताया एवास्याः परिभाषायाः पाठदर्शनाच्चेत्यास्तां तावत्। नकारस्य आत्त्वे पथि आ स् इति स्थिते—**इतोऽत्**। 'पथिमथ्यृभुक्षाम्' इत्यनुवर्तते। इत इति तपरकरणं स्पष्टार्थम्, पथ्यादिषु त्रिषु दीर्घप्लुतयोरसंभवात्। भाव्यमानत्वादेव सवर्णाग्राहकत्वे सिद्धे अदिति तपरकरणमपि स्पष्टार्थमेव। तदाह—**पथ्यादेरित्यादिना**। पथ आ स् इति स्थिते—**थो न्थः**। थः न्थ इति च्छेदः। थ इति

---

पक्षं ज्ञापयतीति निर्विवादम्। तथा च तस्मिन् पक्षे सूत्रेऽननुनासिकोच्चारणेऽप्यान्तरतम्यादनुनासिकाकारः स्यादत आह—**आ आदिति**। **इतोऽत्सर्वनाम**। आदिति वर्तमाने पुनरद्वचनं किमर्थम्, कृतेऽप्यद्वचने पन्था इत्यत्र सवर्णदीर्घेण भाव्यमन्यत्र तूपधाया दीर्घेणेति चेत्। मैवम्। ऋभुक्षणमित्यत्र 'वा षपूर्वस्य निगमे' इति दीर्घ-

---

१ 'अणसु' इति क।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पथिमथोस्थस्य न्थादेशः स्यात्सर्वनामस्थाने परे। पन्थाः, पन्थानौ, पन्थानः। पन्थानम्, पन्थानौ। ३६८ भस्य टेर्लोपः। (७-१-८८) भसंज्ञकस्य पथ्यादेष्टेर्लोपः स्यात्। पथः। पथा, पथिभ्यामित्यादि। एवं मन्थाः, ऋभुक्षाः। स्त्रियां

---

षष्ठी। आदेशे अकार उच्चारणार्थः। पथिमथिग्रहणमनुवर्तते। ऋभुक्षिग्रहणं निवृत्तम्, तत्र थकाराभावात्। 'इतोऽत्सर्वनामस्थाने' इत्यतः सर्वनामस्थानग्रहणमनुवर्तते। तदाह—**पथिमथोरित्यादिना। पन्था इति।** नकारस्य आत्त्वे इकारस्य अत्त्वे थकारस्य न्थादेशे पन्थ आ स् इति स्थिते सवर्णदीर्घे रुत्वविसर्गाविति भावः। **पन्थानाविति।** पथिन् औ इति स्थिते सावित्युक्तेर्नात्त्वम्, 'इतोऽत्' इति इकारस्यात्त्वे थकारस्य न्थादेशे 'सर्वनामस्थाने च—' इति दीर्घे रूपमिति भावः। एवं पन्थानः। पन्थानम्, पन्थानौ। शसादावचि विशेषमाह—**भस्य टेर्लोपः। पथ्यादेरिति।** 'पथिमथ्यृभुक्षाम्' इत्यनुवर्तत इति भावः। **पथः। पथेति।** पथिन् अस् पथिन् आ इति स्थिते इनो लोपे रूपद्वयमिति भावः। **पथिभ्यामिति।** नलोपे रूपम्। **इत्यादीति।** पथिभिः। पथे। पथिभ्यः। पथः, पथोः, पथाम्। पथि, पथोः, पथिषु।

**एवं मन्थाः, ऋभुक्षा इति।** मन्थदण्डवाची मथिन्शब्दः। तस्य आत्त्वम्, अत्त्वम्, न्थादेशः, टिलोपश्च। मन्थाः, मन्थानौ, मन्थानः। मन्थानम्, मन्थानौ, मथः। मथा, मथिभ्याम्। मथे। मथः, मथोः, मथाम्। मथि। मथिषु। ऋभुक्षिन्शब्दस्तु इन्द्रवाची। तत्र 'थो न्थः' इतिवर्जमात्त्वादि भवति, षात्परत्वाण्णत्वं च। ऋभुक्षाः, ऋभुक्षाणौ—इत्यादि। यत्तु अत्र पन्थानमात्मन इच्छति पथीयति, 'सुप आत्मनः क्यच्', 'नः क्ये' इति पदत्वाद् नलोपः, 'अकृत्सार्वधातुकयोः' इति दीर्घः, 'सनाद्यन्ता—' इति धातुत्वम्, ततः क्विप्, अल्लोपयलोपौ, एकदेशविकृतस्यानन्यत्वात् 'पथिमथि—' इत्यात्त्वम्, 'थो न्थः', 'इतोऽत्—' इत्यत्त्वं तु तपरकरणान्न भवति, पन्थाः। 'एरनेकाचः—' इति यणं बाधित्वा परत्वान्नित्यत्वाच्च 'थो न्थः', ततः संयोगपूर्वत्वान्न यण्, किन्त्वियङेव—पन्थियौ। 'भस्य टेर्लोपः' पथः—इत्यादि प्रौढमनोरमातत्त्वबोधिन्यादावुक्तम्, तदेतदनुनासिकविधौ सति प्रतिपत्तिलाघवायानुनासिकस्यैव उच्चारणे कार्ये तदनुच्चारणाच्छुद्धस्यैव विधानमिति भाष्यविरोधादुपेक्ष्यम्। पथीयतेः क्विपि हि ईकारस्य शुद्धाकारार्थम् अनुनासिकानुच्चारणस्यावश्यकत्वे तदसंगतिः स्पष्टैव। तस्मात् पथीयतेः क्विपः अनभिधानमेवोचितमिति शब्देन्दुशेखरे स्पष्टम्। प्रसङ्गादाह—**स्त्रियामिति।**

---

विकल्पे सति पक्षे ह्रस्वश्रवणार्थमद्वचनस्यावश्यकत्वात्। **थो न्थः।** स्थान्यादेशौ द्वावप्यनच्कौ। 'थेर्न्थः' इत्येव सिद्धे 'इतोऽत्सर्वनामस्थाने' इत्येतदृभुक्षिन्नर्थम्। त्रयाणामनुवृत्तावपि ऋभुक्षस्थो न संभवतीत्याशयेनाह—**पथिमथोरिति।** प्रसङ्गादाह—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नान्तलक्षणो ङीपि भत्वाट्टिलोपः। सुपथी सुमथी नगरी। अनृभुक्षी सेना। आत्त्वं नपुंसके न भवति 'न लुमता-' (सू २६३) इति प्रत्ययलक्षणनिषेधात्। सुपथि वनम्। 'संबुद्धौ नपुंसकानां नलोपो वा वाच्यः' (वा ४७८६)। हे सुप-

सु-शोभनः पन्था अस्या इति बहुव्रीहिः, 'ऋन्नेभ्यः-' इति ङीप्, 'भस्य टेर्लोपः' इति इनो लोपः, सुपथीति रूपम्। 'ऋक्पूः-' इत्यप्तु न, 'न पूजनात्' इति निषेधात्। न चैवमपि 'न पूजनात्' इति निषेधस्य षचः प्रागेव प्रवृत्तेर्वक्ष्यमाणत्वाद् 'इनः स्त्रियाम्' इति कप् दुर्वार एवेति वाच्यम्, 'युवोरनाकौ' इत्यत्र सुपथीति भाष्यप्रयोगेण तस्यानित्यत्वज्ञापनात्। न च लिङ्गविशिष्टपरिभाषया 'पथिमथि-' इत्यात्त्वं थो न्थश्च कुतो नेति वाच्यम्, विभक्तौ लिङ्गविशिष्टाग्रहणात्। **सुमथी इति**। सु-शोभनः मन्था यस्या इति विग्रहः। ङीवादि पूर्ववत्। **अनृभुक्षी सेनेति**। अविद्यमानः ऋभुक्षा यस्या इति विग्रहः। 'नञोऽस्त्यर्थानाम्-' इति समासः। ऋभुक्षाः स्वामी।

अथ सु-शोभनः पन्था अस्य वनस्येति बहुव्रीहौ सुपथिन्शब्दान्नपुंसकात् 'स्वमोर्नपुंसकात्' इति सोर्लुकि प्रत्ययलक्षणमाश्रित्य सुप्परत्वसत्त्वात् 'पथिमथि-' इत्यात्त्वमाशङ्क्याह—**आत्त्वं नपुंसक इति**। **सम्बुद्धाविति**। यद्यपि भाष्ये नपुंसकानामित्येव पठितम्, तथापि हे चर्मन् हे चर्मेति भाष्ये सम्बुद्धावेव उदाहृतत्वात् तन्मात्र-

**स्त्रियामिति**। **नान्तलक्षण इति**। 'न पूजनात्' इति निषेधाद् 'ऋक्पूरब्धूः-' इत्यप्रत्ययो नेति भावः। **सुपथीति**। 'इनः स्त्रियाम्' इति कप्तु न कृतः, समासान्तविधेरनित्यत्वात्। 'युवोरनाकौ' इति सूत्रे 'सुपथी' इति भाष्याच्च। 'न पूजनात्' इति निषेधस्य तु नायं विषयः, 'षचः प्राचीनेष्वेव सः' इति वक्ष्यमाणत्वात्। पथिमथीत्यात्वं थो न्थश्च लिङ्गविशिष्टपरिभाषया प्राप्तं विभक्तौ लिङ्गविशिष्टाऽग्रहणान्न भवति। अत्रेदं बोध्यम्—पन्थानमात्मन इच्छति पथीयति, ततः क्विप्, अल्लोपयलोपौ, एकदेशविकृतस्यानन्यत्वात् 'पथिमथि-' इत्यात्वम्, 'थो न्थः', पन्थाः। 'इतोऽत्सर्वनामस्थाने' इत्यत्त्वं न भवति, इत इति तपरकरणाद्। 'एरनेकाचः-' इति यणं बाधित्वा परत्वान्नित्यत्वाच्च 'थो न्थः', संयोगपूर्वकत्वान्न यण्, पन्थियौ, पन्थियः। पन्थियम्,

१ सुमथीति पाठोऽन्यत्र कौमुदीपुस्तकेषु न लभ्यते, न च नगरीविशेषणमिदं स्वारस्येनोपपद्यते। २ 'सुपथी' इति 'क' 'ख' पाठः पुनरुक्तिभिया 'ग' संपादकेनोपेक्षितः। स्वयमेव च 'सुमथी' इति मूलपाठं प्रकल्प्य तदर्थस्वारस्यमपि दृष्टिपथादपसारितम्। वस्तुतस्तु पङ्क्तिरियमत्र प्रमादपतितैव प्रतिभातीति न तदनुरोधेनास्वारसिको मूलपाठः कल्पनामर्हति। ३ 'ऋभुक्षाः स्वामी' इति पाठः क्वचिन्नास्ति।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

थिन् , हे सुपथि । 'नलोपः सुप्स्वर–' (सू ३५३) इति नलोपस्यासिद्धत्वाद्ध्रस्वस्य गुणो न । द्विवचने भत्वाट्टिलोपः । सुपथी । शौ सर्वनामस्थानत्वात्सुपन्थानि । पुनरपि सुपथि, सुपथी, सुपन्थानि । सुपथा । सुपथे, सुपथिभ्यामित्यादि । ३६६ ष्णान्ता षट् (१-१-२४) षान्ता नान्ता च संख्या षट्संज्ञा स्यात् । 'षड्भ्यो लुक्' (सू २६१) पञ्च । पञ्च । संख्या किम्–विप्रुषः, पामानः । शतानि, सहस्राणि

---

विषयत्वमस्येति भावः । सम्बुद्धेर्लुका लुप्तत्वात् सम्बुद्धिपरत्वाभावाद् 'न ङिसम्बुद्ध्योः' इति निषेधाप्रवृत्तेः नित्यं नलोपप्राप्तौ विकल्पार्थोऽयमारम्भः । ननु नलोपपक्षे 'ह्रस्वस्य गुणः' इति सम्बुद्धौ परतो गुणे कर्तव्ये 'न लुमता–' इति निषेधस्यानित्यत्वाद् हे वारे हे वारि इतिवद् गुणविकल्पः स्यादित्यत आह—**नलोपः सुबिति । द्विवचन इति** । सुपथिन्शब्दाद् औङः शीभावे सति असर्वनामस्थानत्वेन भत्वाद् 'भस्य टेर्लोपः' इति इनो लोपे सुपथी इति रूपमित्यर्थः । **शाविति** । सुपथिन्शब्दाद् जश्शसोः शिभावे सति तस्य सर्वनामस्थानत्वाद् 'इतोऽत्–' इत्यत्वे, 'थो न्थः' इति थस्य न्थादेशे नान्तत्वाद् दीर्घे सुपन्थानि इति रूपमित्यर्थः ।

पञ्चन्शब्दो नित्यं बहुवचनान्तः । तस्य षट्संज्ञाकार्यं लुकं विधास्यन् षट्संज्ञामाह—**ष्णान्ता षट्** । ष्च नश्च ष्णौ, ष्टुत्वेन णः, ष्णौ अन्तौ यस्याः सा ष्णान्ता । 'बहुगणवतुडति संख्या' इत्यतः संख्येत्यनुवर्तते । तच्च पूर्वसूत्रे बहुगणवतुडतिपरमपि शब्दाधिकारादिह पञ्च षडित्यादिप्रसिद्धसंख्याबोधकशब्दपरमाश्रीयते, बहुगणवतुडतिषु ष्णान्तत्वासम्भवात् , तदाह—**षान्तेत्यादिना । षड्भ्यो लुक् इति** । अनेन जश्शसोर्लुगिति शेषः । **पञ्च पञ्चेति** । जश्शसोर्लुकि नलोप इति भावः । **संख्या किमिति** । संख्याग्रहणानुवृत्तेः किं फलमिति प्रश्नः । **विप्रुषः, पामान इति** । विप्रुष्शब्दस्य पामन्शब्दस्य च ष्णान्तत्वेऽपि संख्यावाचकत्वाभावेन षट्संज्ञाविरहात् ततः परस्य जसो न लुगिति भावः । ननु शतशब्दाद् जश्शसोः शिभावे 'नपुंसकस्य झलचः' इति नुमि 'सर्वनामस्थाने च–' इति दीर्घे शतानीति रूपम् , एवं सहस्राणीत्यपि रूपम्, तत्र 'अट्कुप्वाङ्–' इति णत्वं विशेषः । इह 'तदागमाः–' इति न्यायेन नुमः अङ्गभक्तत्वात् शतन्शब्दसहस्रन्शब्दयोः नान्तसंख्याशब्दत्वात् षट्संज्ञायां सत्यां 'षड्-

---

पन्थियौ । भस्य टेर्लोपः । पथः । पथा, पथीभ्याम् , पथीभिरित्यादि । एवं मथीयतेः क्विपि तु मन्थाः, मन्थियौ, मन्थियः । ऋभुक्षाः, ऋभुक्षियौ, ऋभुक्षियः इत्यादि । एतेन 'इतोऽत्सर्वनामस्थाने' इत्यत्र स्थानिन्यादेशे च तपरकरणं मुखसुखार्थमिति हरदत्तग्रन्थः प्रत्युक्तः । आदेशे तपरकरणस्यानावश्यकत्वेऽपि स्थानिनि तु पन्थियौ इत्यादिसिद्धये तस्यावश्यकत्वात् । ननु नलोपस्यासिद्धत्वात् 'पथिमथ्यृभुक्षाम्–'

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इत्यत्र संनिपातपरिभाषया न लुक्, सर्वनामस्थानसंनिपातेन कृतस्य नुमस्तद्विघातकत्वात्। पञ्चभिः। पञ्चभ्यः। पञ्चभ्यः। 'षट्चतुर्भ्यश्च' (सू ३३८) इति नुट्। ३७० नोपधायाः। (६-४-७) नान्तस्योपधाया दीर्घः स्यान्नामि परे। नलोपः, पञ्चानाम्। पञ्चसु। परमपञ्च। परमपञ्चानाम्। गौणत्वे तु न लुङ्नुटौ, प्रियपञ्चा, प्रियपञ्चानौ, प्रियपञ्चानः। प्रियपञ्चाम्। एवं सप्तन् नवन् दशन्।

---

भ्यो लुक्' इति जश्शसोर्लुक् स्यादत आह—**शतानीत्यादि**। **सर्वनामेति**। सर्वनामस्थानं परत्वेन उपजीव्य प्रवृत्तस्य नुमः सन्निपातपरिभाषया सर्वनामस्थानभूतजश्शसोर्लुकं प्रति निमित्तत्वाभावादित्यर्थः। **पञ्चभिः। पञ्चभ्य इति**। नलोपे रूपम्। पञ्चन् आम् इति स्थिते 'षट्चतुर्भ्यश्च' इति नुटि नलोपे तस्यासिद्धत्वाद् 'नामि' इति दीर्घे अप्राप्ते आह—**नोपधायाः**। नेति लुप्तषष्ठीकम् अङ्गस्येत्यधिकृतस्य विशेषणम्, तदन्तविधिः, 'ढ्रलोपे-' इत्यतो दीर्घ इत्यनुवर्तते, 'नामि' इति सूत्रं च, तदाह—**नान्तस्येत्यादिना**। **नलोप इति**। नलोपस्यासिद्धत्वात् प्रथमं दीर्घे ततो न लोप इत्यर्थः। **परमेति**। परमाश्च ते पञ्च चेति विग्रहः। 'षड्भ्यो लुक्' इत्यस्य 'षट्चतुर्भ्यश्च' इत्यस्य चाङ्गत्वात् तदन्तेऽपि प्रवृत्तिरिति भावः। प्रियाः पञ्च यस्येति बहुव्रीहौ प्रियपञ्चन्शब्दो विशेष्यनिघ्नः त्रिलिङ्गः। तस्य पुंस्त्वे विशेषमाह—**गौणत्वे त्विति**। 'षड्भ्यो लुक्' 'षट्चतुर्भ्यश्च' इति च बहुवचननिर्देशेन षट्चतुरर्थप्राधान्यावगमादिति भावः। **प्रियपञ्चेति**। सुटि हलादौ च राजवत्। शसादावचि तु

---

इति नस्यात्वे पन्थ्याः, मन्थ्याः, ऋभुक्ष्या इत्येव भवितव्यम्, न तु पन्था इत्यादि इति चेत्। अत्राहुः—नलोपस्यान्तर्वर्ती सुन्निमित्तम्, आत्वस्य तु बहिर्वर्ती सुप्। प्रत्यासत्त्या हि यत्र एक एव सुब् निमित्तभूतस्तत्रैव 'नलोपः सुप्स्वर-' इति नलोपस्यासिद्धत्वं नान्यत्रेति नात्र नकारस्यात्वं किं त्वीकारस्येति। **ष्णान्ता षट्**। स्त्रीलिङ्गनिर्देशः संख्यां विशेषयितुम्, तत्सामर्थ्याच्च पूर्वत्र संज्ञापरमपि संख्याग्रहणमिह संज्ञिपरं संपद्यत इत्याशयेनाह—**संख्येति**। प्राचा तूपदेशकाले षान्ता नान्ता चेत्युक्तम्, तत् 'पञ्चेत्यत्र नलोपे कृतेऽपि-' इत्यादिवक्ष्यमाणस्वग्रन्थविरुद्धम्। संप्रत्यनान्तत्वेऽप्युपदेशे नान्तत्वमासीदिति किमसिद्धत्वेनेति दिक्। **संनिपातेति**। तथा चोपदेशकाले इति व्याख्यानं निष्फलमपीति भावः। यत्त्वाहुः—परिभाषाया अनित्यत्वाल्लुक् स्यादिति, तत्साहसमात्रम्। इष्टस्थलेऽप्यप्रवृत्तौ परिभाषाया अकिंचित्करत्वापत्तेः। यदप्याहुः—उपदेशग्रहणमिह कुतः समागतमित्याशङ्क्य 'ष्णान्ता-' इत्यन्तग्रहणसामर्थ्यादौपदेशिकत्वं लभ्यत इति। तदपि न। संख्येत्यस्यापकर्षणेन संज्ञिपरत्वसंपादनेन च सामर्थ्योपक्षयात्। **नोपधायाः**। नेति लुप्तषष्ठीकं पदमङ्गस्य विशेषणम्। नलोपस्या-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

**३७१ अष्टन आ विभक्तौ ।** (७-२-८४) अष्टन आत्वं स्याद्धलादौ विभक्तौ ।
**३७२ अष्टाभ्य औश् ।** (७-१-२१) कृताकारादष्टनः परयोर्जश्शसोरौश् स्यात् । 'अष्टभ्यः' इति वक्तव्ये कृतात्वनिर्देशो जश्शसोर्विषये आत्वं ज्ञापयति । वैकल्पिकं चेदमष्टन आत्वम् । 'अष्टनो दीर्घात्, (३७१८) इति सूत्रे दीर्घग्रहणाज्ज्ञापकात् ।

---

'अल्लोपोऽनः' इत्यकारलोपे नस्य श्चुत्वेन ञकारः, चकारे तु परे अनुस्वारस्य परसवर्णे ञकारः स्थित एव, तथा च ञकारद्वयमध्ये चकारः ।

अष्टन्शब्दो नित्यं बहुवचनान्तः । तस्य विशेषमाह—**अष्टन आ विभक्तौ ।** 'रायो हलि' इत्यतो हलि इत्यपकृष्यते, तच्च विभक्तेर्विशेषणम्, तदादिविधिः, तदाह—**अष्टन आत्वमित्यादिना ।** ग्रहणकसूत्रे अण्ग्रहणेन वर्णसमाम्नायिकानामेव ग्रहणादाकारस्यानणत्वाद् भाव्यमानत्वाच्च शुद्ध एव नकारस्य आकारः । **अष्टाभ्य औश् ।** 'जश्शसोः शिः' इत्यतो जश्शसोरित्यनुवर्तते, अष्टाभ्य इति पञ्चमी, 'तस्मादित्युत्तरस्य' इत्युपतिष्ठते, अष्टा इत्याकारान्तशब्दो विवक्षितः, तदाह—**कृताकारादित्यादिना ।** नकारस्यात्वे कृते सति यः अष्टाशब्दः तस्मादित्यर्थः । शित्त्वात् सर्वादेशः । 'आदेः परस्य' इति तु नात्र प्रवर्तते, 'अनेकाल्शित्—' इति परेण तस्य बाधात् । औशादेशोऽयं 'षड्भ्यो लुक्' इत्यस्यापवादः । ननु जश्शसोः परतः अष्टन्शब्दस्यात्वं नास्त्येव, 'अष्टन आ विभक्तौ' इति आत्वविधौ हलीत्यपकर्षस्य उक्तत्वात्, ततश्च जश्शसोरौश्विधौ कृताकाराद् अष्टन इत्यनुपपन्नम्, तत्राह—**अष्टभ्य इति वक्तव्य इत्यादि ।** भ्यसि अष्टभ्यः, अष्टाभ्य इति रूपद्वये सत्यपि औश्विधौ लाघवादष्टभ्य इत्येव निर्देश उचितः, आकारनिर्देशात्तु जश्शसोरचि परतोऽप्यात्वं विज्ञायत इत्यर्थः । ननु 'अष्टन आ विभक्तौ' इति हलादिविभक्तौ अष्टनो नित्यमात्वविधानाद् अष्टाभ्य इत्येव निर्देष्टव्यम्, प्रामाणिकगौरवस्यादोषत्वात् । ततश्च औश्विधौ अष्टाभ्य इति निर्देशः जश्शसोरष्टनः कथमात्वं ज्ञापयेदित्यत आह—**वैकल्पिकं चेदमिति ।** **ज्ञापकादिति ।** 'अष्टनो दीर्घात्' इति सूत्रम् । दीर्घान्तादष्टन्शब्दात् परा असर्वनामस्थानविभक्तिरुदात्ता स्यादिति तदर्थः । अष्टाभिर्विकर्षतीत्यत्र भकारादिकार उदात्तः । 'अनुदात्तं पदमेकवर्जम्' इति शिष्टमनुदात्तम् । दीर्घादिति विशेषणाद् अष्टभिरित्यत्र आत्वाभावस्थले भिस उदात्तत्वं न भवति, किं तु मध्योदात्तत्वमेव, 'झल्युपोत्तमम्' इत्यस्य प्रवृत्तेः । षट्चतुर्भ्यो या

---

सिद्धत्वाद् 'नामि' इति दीर्घो न प्रवर्तत इत्ययमारम्भः । **गौणत्वे त्विति ।** बहुवचननिर्देशस्यार्थप्राधान्यार्थत्वादिति भावः । **प्रियपञ्चञ्मिति ।** ञद्वयमध्ये चकारः । **अष्टन आ विभक्तौ ।** सौत्रत्वादिहाल्लोपो न कृतः । 'कनिन्युवृषितक्षि—' इत्यतः कनिनित्यनुवर्तमाने 'सप्यशूभ्यां तुट् च' इत्यनेन सप्तन् अष्टन्शब्दौ निष्पन्नौ 'रायो हलि'

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अस्ना। असृग्भ्याम्, असभ्यामित्यादि। ऊर्क्, ऊर्ग्, ऊर्जी, ऊन्र्जि। नरजानां संयोगः। बहूर्जि नुम्प्रतिषेधः, अन्त्यात्पूर्वो वा नुम्, बहूर्जि, बहूर्ञ्जि वा कुलानि॥ इति जान्ताः॥ त्यत्, त्यद्, त्ये, त्यानि। तत्, तद्,

नीति। शसश्शिः, नान्तत्वाद्दीर्घ इति भावः। अस्नेति। तृतीयैकवचने असन्नादेशे अल्लोपः। असृग्भ्यामिति। असन्नादेशाभावे कुत्वे जश्त्वमिति भावः। असभ्यामिति। भ्यामादौ असन्नादेशे नलोप इति भावः।

ऊर्गिति। 'ऊर्ज बलप्राणनयोः' क्विप्, स्वमोर्लुक्, कुत्वेन गः, तस्य चर्त्वविकल्प इति भावः। ऊन्र्जीति। जश्शसोः शिः, झलन्तत्वान्नुम्, स च मित्त्वादन्त्याद्च ऊकारात् परो भवति। तदाह—नरजानां संयोग इति। बहूर्क्छब्दोपि प्रायेण ऊर्ग्वदेव। जश्शसोः शिभावे कृते, झलन्तलक्षणनुमि ऊकारादुपरि प्राप्ते,'बहूर्जि प्रतिषेधो वक्तव्यः, अन्त्यात् पूर्वं नुममेक इच्छन्ति' इति च वार्तिकं प्रवृत्तम्। तदेतदर्थतः संगृह्णाति—बहूर्जीति। बहूर्ज्शब्दे अन्त्यादच ऊकाराद् उपरि नुमः प्रतिषेधो वक्तव्यः, किं तु अन्त्याद्वर्णात् पूर्वो नुम् वा स्यादित्यर्थः। बहूर्जीति। जश्शसोर्नुमभावे रूपम्। बहूर्ञ्जीति। जकारात् पूर्वं रेफादुपरि नुमि कृते, श्चुत्वस्यासिद्धत्वाद् 'नश्च—' इति तस्यानुस्वारे, तस्य परसवर्णे ञकारे रूपं बोध्यम्। अत्र 'बहूर्जि प्रतिषेधः' इति प्रथमावार्तिकं न कर्तव्यम्, 'नपुंसकस्य झलचः' इति सूत्रस्य अचः परो यो झल् तदन्तस्य क्लीबस्य नुम् स्यादिति व्याख्याने सति नुम एवात्राप्रसक्तेः। न चैवं सति वनानीत्यादावव्याप्तिः शङ्क्या, 'इकोऽचि विभक्तौ' इत्यतः अचीत्यनुवर्त्य अजन्तस्य क्लीबस्य सर्वनामस्थाने परे नुम् स्यादिति वाक्यान्तराश्रयणादिति भाष्ये स्थितम्। एवं च ऊर्क्छब्दे शौ 'नरजानां संयोगः' इति मूलं भाष्यविरुद्धत्वादुपेक्ष्यमेव, तत्र अचः परस्य झलः अभावेन नुमः अप्रसक्तेः॥ इति जान्ताः॥

अथ दकारान्ता निरूप्यन्ते। त्यदिति। त्यद्, तद्, यद्, एतद्, एषां स्वमोर्लुका लुप्तत्वात् त्यदाद्यत्वम्, पररूपम्, 'तदोः सः सौ—' इति सत्वं च न भवति। इतरत्र तु सर्वत्र त्यदाद्यत्वे पररूपे च अदन्तवद्रूपाणि, सर्वनामकार्यं च इति बोध्यम्।

क्षीरस्वामिग्रन्थे स्पष्टम्। ऋज्प्रत्यये बोध्य इति। यद्यप्यस्मिन्पक्षे स्वरो भिद्यते, तथापि लोके स्वरस्यानादराद्वेदे तु बाहुलकादिष्टस्वरः सिध्यतीति भावः। बहूर्जीति। इदमन्त्यादिति च वाचनिकम्। तथा च वार्तिकम्—'बहूर्जि प्रतिषेधः', 'अन्त्यात्पूर्वं नुममेके' इति। भाष्ये तु अचः परो यो झल् तदन्तस्य नुमित्याश्रित्य प्रथमवार्तिकं प्रत्याख्यातम्। एवं च ऊर्न्जीत्यत्र नुम् दुर्लभः। किं च 'उर्द माने क्रीडायां च'। 'गर्द गर्द्दायाम्' इत्यादीनां क्विबन्तानां भाष्यमते नुमा न भाव्यमेवेति बोध्यम्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ते, तानि । यत् , यद् , ये, यानि । एतत् , एतद् , एते, एतानि । अन्वादेशे तु एनत् । बेभिद्यतेः क्विप् । बेभित् , बेभिद् , बेभिदी । शावल्लोपस्य स्थानिवत्त्वाद्झलन्तत्वाच्च नुम् । अजन्तलक्षणस्तु नुम् न, स्वविधौ स्थानिवत्त्वाभावात् ।

---

**अन्वादेशे त्वेनदिति** । अन्वादेशे नपुंसकैकवचने एनद्विधानादिति भावः । औङि जश्शसोश्च एने, एनानि । **बेभिद्यतेरिति** । श्तिपा निर्देशोऽयम् । बेभिद्य इति यङन्ताद्धातोरित्यर्थः । 'भिदिर् विदारणे' । अस्माद् यङि 'सन्यङोः' इति द्वित्वे, हलादिशेषे, 'अभ्यासे चर्च' इत्यभ्यासभकारस्य जश्त्वेन बकारे, 'गुणो यङ्लुकोः' इति गुणे, बेभिद्य इति रूपम् । तस्मात् 'सनाद्यन्ताः–' इति धातुत्वात् क्विप् , अतो लोपः, 'यस्य हलः' इति यलोपः । बेभिद्शब्दात् स्वमोर्लुक्, जश्त्वचर्त्वे बेभित्, बेभिद् इति रूपमिति भावः । **बेभिदी इति** । औङः श्यां रूपम् । जश्शसोश्शौ झलन्तलक्षणनुममाशङ्क्य आह—**शाविति** । **स्थानिवत्त्वादिति** । 'अचः परस्मिन्–' इत्यनेनेति शेषः । न चात्र अल्लोपस्थानिभूतादचः पूर्वो दकार एव, न त्विकारः, तस्य दकारेण व्यवधानात्, तथा च तस्य नुम्विधिः स्थानिभूतादचः पूर्वस्य विधिर्नेति वाच्यम्, 'अचः परस्मिन्–' इत्यत्र व्यवहितपूर्वस्यापि ग्रहणस्योक्तत्वात् । 'क्वौ लुप्तं न स्थानिवत्' इति तु न सार्वत्रिकमिति 'दीधीवेवीटाम्' इत्यत्र कैयटे स्पष्टम् । नन्वल्लोपस्य स्थानिवत्त्वाद् झलन्तलक्षणनुमोऽभावेऽपि अजन्तलक्षणो नुम् दुर्वार इत्यत आह—**अजन्तलक्षणस्तु नुम् नेति** । कुत इत्यत आह—**स्वविधौ स्थानिवत्त्वाभावादिति** । अल्लोपस्य स्थानिवत्त्वमाश्रित्य मित्त्वादन्त्यादचः परः प्रवर्तमानो हि नुम् दकारोपरितनस्य अकारोपलक्षितदेशस्योपरि प्रवृत्तिमर्हति, तथा च लोपस्थानिभूतस्य स्वस्यैवात्र नुम्विधिः । तस्मिन् कर्तव्ये अल्लोपस्य स्थानिवत्त्वं न संभवति, स्थान्यपेक्षया पूर्वस्यैव विधौ 'अचः परस्मिन्–' इत्यस्य प्रवृत्तेः । स्थानिवत्सूत्रमपि स्थानिभूतस्य स्वस्य कार्यविधौ न प्रवर्तते, अनल्विधाविति निषेधादित्यर्थः । 'अचः परस्मिन्–' इति सूत्रे पूर्वविधावित्यपनीय 'अपरविधाविति वक्तव्यं स्वविधौ स्थानिवत्त्वार्थम्' इति वार्तिकं तु भाष्ये प्रत्याख्यातमित्यदोषः ॥ इति दान्ताः ॥

---

**अल्लोपस्य स्थानिवत्त्वादिति** । 'क्वौ लुप्तं न स्थानिवत्' इति तु नेहाश्रीयते । तस्य क्वाचित्कत्वात् । 'क्वौ विधिं प्रति न स्थानिवत्' इत्यस्यैव सार्वत्रिकत्वादिति भावः । 'जायन्ते नव सौ, तथाऽमि च नव, भ्यांभिस्भ्यसां संगमे षट्संख्यानि, नवैव सुप्यथ, जसि त्रीण्येव तद्वच्छसि चत्वार्यन्यवचःसु कस्य विबुधाः शब्दस्य रूपाणि तज्जानन्तु प्रतिभास्ति चेन्निगदितुं षाण्मासिकोऽत्रावधिः ।' इति नरपतिसभायां क्वचित् केनचित् प्राचीनेन कृतस्याक्षेपस्य प्राचीनैरेव पण्डितैः कैश्चित् 'गवाक-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

बेभिदि ब्राह्मणकुलानि । चेच्छिदि ॥ इति दान्ताः ॥

गवाक्छब्दस्य रूपाणि क्लीबेऽर्चागतिभेदतः।
असन्ध्यवङ्पूर्वरूपैर्नवाधिकशतं मतम् ॥
स्वम्सुप्सु नव षड् भादौ षट्के स्युस्त्रीणि जश्शसोः।
चत्वारि शेषे दशके रूपाणीति विभावय ॥

---

**अथ चकारान्ता निरूप्यन्ते ॥**

"जायन्ते नव सौ, तथामि च नव, भ्यांभिस्भ्यसां संगमे
षट्सङ्ख्यानि, नवैव सुप्यथ, जसि त्रीण्येव, तद्वच्छसि।
चत्वार्यन्यवचस्सु कस्य विबुधाः शब्दस्य रूपाणि त-
ज्जानन्तु प्रतिभास्ति चेन्निगदितुं षाण्मासिकोऽत्रावधिः ॥"

इति प्राचीनस्य कस्यचित् प्रश्नस्य श्लोकद्वयेन उत्तरमाह—**गवाक्छब्दस्येति। अर्चागतिभेदत इति।** 'अनिदिताम्—' इत्यञ्चेर्गतौ नकारस्य लोपः। पूजायां तु 'नाञ्चेः पूजायाम्' इति निषेधान्नस्य लोपो नेत्येवं गतिपूजात्मकार्थभेदनिबन्धननलोप-तदभावाभ्यामिति यावत्। असन्धीति प्रकृतिभावो विवक्षितः। असंध्यवङ्पूर्वरूपैरित्यनन्तरं चशब्दोऽध्याहर्तव्यः। शतमित्यनन्तरमितिशब्दश्च। तथा च गत्यर्थ-पूजार्थभेदनिबन्धननलोपतदभावाभ्याम् असन्ध्यवङ्पूर्वरूपैश्च गवाक्छब्दस्य रूपाणि नवाधिकशतमिति मतं सम्मतमित्यर्थः। एतेन 'विंशत्याद्याः सदैकत्वे संख्यास्संख्येय-संख्ययोः' इति कोशात् शतशब्दस्य संख्यापरत्वे गवाक्छब्दस्य रूपाणामिति भाव्यम्, संख्येयपरत्वे तु मतमित्येकवचनानुपपत्तिरिति निरस्तम्। संख्येयपरत्वमाश्रित्य इति शब्दमध्याहृत्य नवाधिकशतं रूपाणीति मतमित्यर्थाश्रयणात्। यद्वा शतशब्दस्य संख्येयपरत्वेऽपि शतमित्येकत्वाभिप्रायं मतमित्येकवचनमित्यदोषः। नवाधिकशत-मित्येतत् प्रपञ्चयति—**स्वम्सुप्सु नवेति।** प्रत्येकमिति शेषः। रूपाणीति सर्वत्रा-न्वेति। **षड् भादौ षट्के स्युरिति।** भिसि भ्यांत्रये, भ्यस्द्वये च प्रत्येकं षडि-त्यर्थः। **त्रीणि जश्शसोरिति।** प्रत्येकमिति शेषः। **चत्वारि शेषे दशक इति।**

---

शब्दस्य' इत्यादिना 'विभावय' इत्यन्तेन श्लोकद्वयेन समाधानमुक्तम्। तदेव श्लोकद्वयं प्रकृतोपयोगादाह—**गवाक्शब्दस्य रूपाणीति।** अञ्चतेर्गतौ नलोपः, पूजायां तु नेत्याशयेनाह—**अर्चागतिभेदत इति।** आद्यादित्वात्तसिः। पूजागत्यर्थभेदेना-सन्ध्यवङादिभिर्नवाधिकशतं रूपाणि बोध्यानीत्यर्थः। उक्तसंख्यामेव व्यवस्थापयति—**स्वम्सुप्स्विति।** प्रत्येकमिति शेषः। एवमग्रेऽपि षट् त्रीणि चत्वारीत्यत्रापि बोध्यम्। **रूपाणीति।** संकलनया नवाधिकशतं रूपाणीत्यर्थः। इह 'चयो द्वितीयाः—' इति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तथा हि । गामञ्चतीति विग्रहे 'ऋत्विग्–' (सू ३७३) आदिना क्विन् । गतौ नलोपः । 'अवङ् स्फोटायनस्य' (सू ८८) इत्यवङ् । गवाक्, गवाग् । 'सर्वत्र विभाषा–' (सू ८७) इति प्रकृतिभावे, गोअक्, गोअग् । पूर्वरूपे, गोऽक्, गोऽग् । पूजायाम्, नस्य कुत्वेन ङः, गवाङ्, गोऽङ्, गोअङ् । अम्यप्येतान्येव नव । औङः शी, भत्वाद् 'अचः' (सू ४१६) इत्यल्लोपः । गोची । पूजायां तु, गवाञ्ची, गोअञ्ची, गोऽञ्ची । 'जश्शसोः शिः' (सू ३१२) शेस्सर्वनामस्थानत्वान्नुम्, गवाञ्चि, गोअञ्चि, गोऽञ्चि । गतिपूजनयोस्त्रीण्येव । गोचा, गवाञ्चा,

---

प्रत्येकमिति शेषः । स्वम्सुप्सु नवेत्येतदुपपादयति—**तथा हीति । गामञ्चतीति ।** गां गच्छति पूजयति वेत्यर्थः । क्विनि उपपदसमासे सुब्लुकि गो अञ्च् इति स्थिते प्रक्रियां दर्शयति—**गतौ नलोप इति ।** गत्यर्थकत्वे 'अनिदिताम्–' इति नस्य लोप इत्यर्थः । **गवाक्, गवागिति ।** गो अच् स्, गो अच् अम् इति स्थिते, स्वमोर्लुकि, अक्लीबस्येति पर्युदासात् सर्वनामस्थानत्वाभावेन 'उगिदचाम्–' इति नुमभावे, ओकारस्य अवङादेशे सवर्णदीर्घः, जश्त्वचर्त्वे इति भाव । **सर्वत्रेति ।** अवङादेशस्य वैकल्पिकत्वात्तदभावपक्षे 'सर्वत्र विभाषा–' इति प्रकृतिभावाद् 'एङः पदान्तादति' इति पूर्वरूपस्याप्यभावे सतीत्यर्थः । **पूर्वरूप इति ।** अवङः प्रकृतिभावस्य चाभावे 'एङः पदान्तात्–' इति पूर्वरूपे सतीत्यर्थः । तदेवं गत्यर्थकत्वे षड् रूपाणि । **पूजायामिति ।** 'नाञ्चेः पूजायाम्' इति नलोपाभावाद् गो अञ्च् इत्यस्मात् स्वमोर्लुकि, चकारस्य संयोगान्तलोपे, नकारस्य 'क्विन्प्रत्ययस्य कुः' इति कुत्वेन ङकारः । ततः अवङि, प्रकृतिभावे, पूर्वरूपे च त्रीणि रूपाणीति भावः । पूर्वोदाहृतषड्रूपसंकलनया सौ नव रूपाणि । **औङः शीति ।** गत्यर्थकत्वे नलोपे औङ्शीभावे च सति अक्लीबस्येति पर्युदासादसर्वनामस्थानतया भत्वाद् 'अचः' इत्यल्लोपे गोची इत्येकमेव रूपम्, अकारस्य लुप्तत्वेन अवङाद्यसंभवात् । **पूजायां त्विति ।** अलुप्तनकारत्वाद् 'अचः' इत्यल्लोपो नेति भावः । तथा च औङि त्रीणि रूपाणि । पूर्वोदाहृतैकरूपसंकलनया प्रत्येकं चत्वारि रूपाणि । **शेः सर्वनामेति ।** गत्यर्थकत्वे नलोपे सति, शौ 'उगिदचाम्–' इति नुमि, तस्य 'नश्च–' इत्यनुस्वारः, परसवर्ण इति भावः । पूजार्थकत्वे तु अलुप्तनकारत्वान्नुम् न । किं तु स्वाभाविकनकारस्य अनुस्वारः परसवर्ण इति भावः । गतिपूजनयोः शौ [1]अविशिष्टान्येव त्रीणि रूपाणीत्याह—**गतिपूजनयोस्त्रीण्येवेति ।** **गोचेति ।** गत्यर्थकत्वे लुप्तनकारत्वाद् 'अचः' इत्यल्लोपे एकमेव रूपमिति भावः ।

---

वार्तिकमनाश्रित्य नवाधिकशतमित्युक्तमिति बोध्यम् । तदाश्रयणे तु त्रीणि रूपाणि

---

१ 'अविकृतानि' इति पाठः क ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गोअश्चा, गोऽश्चा। गवाग्भ्याम्, गोअग्भ्याम्, गोऽग्भ्याम्, गवाङ्भ्याम्, गोअङ्भ्याम्, गोऽङ्भ्याम् इत्यादि। सुपि तु ङान्तानां पक्षे 'ङ्णोः कुक्–' (सू १३०) इति कुक्। गवाङ्क्षु, गोअङ्क्षु, गोऽङ्क्षु, गवाङ्षु, गोअङ्षु, गोङ्षु, गवाक्षु, गोअक्षु, गोऽक्षु। न चेह 'चयो द्वितीयाः–' (वा ५०२३) इति पक्षे कका-

---

पूजार्थत्वे तु अलुप्तनकारत्वाद् 'अचः' इत्यल्लोपाभावे, अवङि, प्रकृतिभावे, पूर्वरूपे च, त्रीणि रूपाणीत्याह—**गवाञ्चा, गोअञ्चा, गोऽञ्चेति**। भ्यामि गत्यर्थकत्वे न-लोपे सति चस्य जश्त्वे कुत्वे अवङ्सन्धिपूर्वरूपैः त्रीणि रूपाणि। पूजार्थत्वे तु नलोपा-भावात् चकारस्य संयोगान्तलोपे नकारस्य 'क्विन्प्रत्ययस्य–' इति कुत्वेन ङकारे अवङ्सन्धिपूर्वरूपैः त्रीणि रूपाणीत्यभिप्रेत्याह—**गवाग्भ्यामित्यादिना**। **इत्यादीति**। गवाग्भिः, गोअग्भिः, गोऽग्भिः, गवाङ्भिः, गोअङ्भिः, गोऽङ्भिः। गोचे गवाञ्चे गोअञ्चे गोऽञ्चे। भ्यामि, भ्यसि च प्राग्वत् षड्रूपाणि। ङसौ–गोचः, गवाञ्चः, गोअञ्चः, गोऽञ्चः। भ्यामि भ्यसि च प्राग्वत्। ङसि–गोचः, गवाञ्चः, गोअञ्चः, गोऽञ्चः। गोचोः, गवाञ्चोः, गोअञ्चोः, गोऽञ्चोः। गोचाम्, गवाञ्चाम्, गोअञ्चाम्, गोऽञ्चाम्। गोचि गवाञ्चि, गोअञ्चि, गोऽञ्चि। ओसि–प्राग्वत्। **सुपि त्विति**। पूजार्थत्वे नलोपनिषेधात् चकारस्य संयोगान्तलोपे नकारस्य 'क्विन्प्रत्ययस्य–' इति कुत्वेन ङकारः। ततश्च अवङ्संधिपूर्वरूपैः त्रयाणां रूपाणां ङकारान्तानां कुगागम इत्यर्थः। कुगभावे तु गवा-ङ्षु, गोअङ्षु, गोऽङ्ष्विति त्रीणि रूपाणि सुगमत्वान्नोक्तानि। गतौ तु नलोपे सति चस्य कुत्वेन ककारे अवङ्संधिपूर्वरूपैः त्रीणि रूपाणि दर्शयति—**गवाक्षु, गोअक्षु, गोऽक्ष्विति**। तथा च सुपि नव रूपाणि। नन्वेषां मध्ये ककारवत्सु षड्रूपेषु 'चयो द्वितीयाः–' इति ककारस्य खकारपक्षे षड् रूपाणि सखकाराण्यधिकानि स्युरित्याशङ्क्य

---

वर्धन्त इत्यनुपदमेव वक्ष्यमाणत्वात्। **इत्यादीति**। आदिशब्देनान्यान्यपि ज्ञेयानि। तद्यथा–गवाग्भिः। गोअग्भिः। गोग्भिः। गवाङ्भिः। गोअङ्भिः। गोऽङ्भिः। ङयि–गोचे। गवाञ्चे। गोअञ्चे। गोऽञ्चे। भ्यामि प्राग्वत्। भ्यसि–गवाग्भ्यः। गोअग्भ्यः। गोग्भ्यः। गवाङ्भ्यः। गोअङ्भ्यः। गोऽङ्भ्यः। ङसौ–गोचः। गवाञ्चः। गोअञ्चः। गोऽञ्चः। भ्यामि भ्यसि च प्राग्वत्। ङसि–पञ्चम्येकवचन-वत्। ओसि—गोचोः। गवाञ्चोः। गोअञ्चोः। गोऽञ्चोः। आमि–गोचाम्। गवा-ञ्चाम्। गोअञ्चाम्। गोऽञ्चाम्। ङौ तु–गोचि। गवाञ्चि। गोअञ्चि। गोऽञ्चि। ओसि–

---

१ एतेनेदं प्रतीयते-यदनेन टीकाकृता मूलपुस्तके सुपि नव रूपाणि न दृष्टानि। परमिदानीं मुद्रितपुस्तकेषु मूले नवानां रूपाणां पाठः सर्वत्र दृश्यते–इत्यस्माभिरपि मूले तथैव पाठः स्वीकृतः, क–पुस्तके चापि तथैव।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

रस्य खकारेण षण्णामाधिक्यं शङ्क्यम्, चर्त्वस्यासिद्धत्वात्। कुक्पक्षे तु तस्यासिद्धत्वाज्जश्त्वाभावे पक्षे चयो द्वितीयादेशात्त्रीणि रूपाणि वर्धन्त एव।

ऊह्यमेषां द्विर्वचनानुनासिकविकल्पनात्।

रूपाण्यश्वाक्षिभूतानि (५२७) भवन्तीति मनीषिभिः॥

---

निराकरोति—**न चेहेति**। **चर्त्वस्येति**। गतौ नलोपे सति, चकारस्य कुत्वे, तस्य जश्त्वेन गकारे, तस्य 'खरि च' इति चर्त्वेन ककारे, गवाक्षु, गोअक्षु, गोऽक्ष्विति त्रीणि रूपाणीति स्थितिः। तत्र 'चयो द्वितीयाः–' इति शास्त्रदृष्ट्या चर्त्वशास्त्रस्यासिद्धत्वात् ककारो नास्त्येव, किन्तु गकार एवास्ति, तस्य चय्त्वाभावात् 'चयो द्वितीयाः–' इति न भवतीत्यर्थः। तथा च गतौ त्रयाणामाधिक्यं निरस्तम्। पूजायां तु कुक्पक्षे गवाङ्क्षु, गोअङ्क्षु, गोऽङ्क्षु इति त्रिषु ककारस्य द्वितीये सति खकारवतां त्रयाणामाधिक्यमिष्टमेवेत्याह—**कुक्पक्षे त्विति**। न चैवं सति नवाधिकशतमिति विरोधः शङ्क्यः, नवाधिकशतमिति सूत्रकारस्य मतमित्यर्थात्।

**ऊह्यमेषामिति**। प्रदर्शितानां द्वादशाधिकशतरूपाणामित्यर्थः। **अश्वाक्षिभूतानीति**। सप्तविंशत्यधिकपञ्चशतानीत्यर्थः। अश्वशब्दो हि सप्तत्वसङ्ख्यावच्छिन्न-

---

प्राग्वत्। सुपि तु—गवाङ्क्षु। गवाङ्षु। गोअङ्क्षु। गोअङ्षु। गोऽङ्क्षु। गोऽङ्षु। गवाक्षु। गोअक्षु। गोक्षु। ननु भ्यामुत्रये भ्यस्द्वये ङसिङसोरोस्द्वये च समानरूपत्वात् कथमिह नवाधिकशतमित्युक्तमिति चेत्। अत्राहुः—अर्थभेदेन रूपभेदमाश्रित्य तथोक्तमिति। **षण्णामाधिक्यं शङ्क्यमिति**। नवसु मध्ये ककारस्थाने पाक्षिकखकारप्रवृत्त्या रूपषट्काधिक्यं न शङ्क्यमित्यर्थः। **चर्त्वस्यासिद्धत्वादिति**। तथा च शास्त्रदृष्ट्या ककारो नास्त्येव, किं तु गकार एवास्तीति भावः। **तस्यासिद्धत्वादिति**। कुकोऽसिद्धत्यादित्यर्थः। **वर्धन्त एवेति**। एवं च त्रयाणामाधिक्यसंभवात्सुपि द्वादश रूपाणि भवन्तीति संकलनया द्वादशाधिकशतं मतं न तु नवाधिकशतमिति भावः। **अश्वाक्षिभूतानीति**। सप्तविंशत्यधिका पञ्चशतीत्यर्थः। सौ नवानामन्त्यस्य द्वित्वे अष्टादश। औङि चतुर्णां मध्ये पूजार्थानां त्रयाणां मद्वित्वे सप्त। 'अणोऽप्रगृह्य–' इत्यनुनासिकस्तु नास्ति, प्रगृह्यत्वात्। जसि नद्वित्वस्यानुनासिकस्य च विकल्पाद् द्वादश। संकलनया सप्तत्रिंशत्। एवं द्वितीयायामपि विभक्तौ सप्तत्रिंशत्। तथा च संकलनया चतुःसप्ततिः। टायां चतुर्णां मध्ये पूजार्थानां त्रयाणां नद्वित्वे सप्त। तेषां च सप्तानामनुनासिकविकल्पे चतुर्दश। संकलनया अष्टाशीतिः। भ्यामि षट्सु रूपेषु भातपूर्वस्य द्वित्वे द्वादश, तेषां द्वादशानामपि 'यणो मयः–' इति यद्वित्वे चतुर्विंशतिः, तेषामपि मकारस्य द्वित्वेऽष्टचत्वारिंशत्। संकलनया षट्त्रिंशदधिकं शतम्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लक्षकः, 'सप्ताश्वा हरितः सूर्यस्य' इति दर्शनात्। अक्षिशब्दस्तु द्वित्वसंख्यावच्छिन्न-लक्षकः, मनुष्यादिषु प्रायेणाक्ष्णोः द्वित्वात्। भूतशब्दस्तु पञ्चत्वसङ्ख्यावच्छिन्नलक्षकः, पृथिव्यप्तेजोवाय्वाकाशानां भूतशब्दवाच्यानां पञ्चत्वात्। तत्राश्वशब्देन प्रथमनिर्दिष्टेन सप्तत्वसंख्यैव विवक्षिता, अक्षिशब्देन तु द्वितीयनिर्दिष्टेन सूचितया द्वित्वसंख्यया दश-कद्वयात्मिका विंशतिसङ्ख्या विवक्षिता। भूतशब्देन तु तृतीयनिर्दिष्टेन सूचितया पञ्च-त्वसंख्यया पञ्चशतं लक्ष्यते। उक्तं च ज्यौतिषेण—

'एकदशशतसहस्रायुतलक्षप्रयुतकोटयः क्रमशः।
अर्बुदमब्जं खर्वनिखर्वमहापद्मशङ्कवस्तस्मात्॥
जलधिश्चान्त्यं मध्यं परार्धमिति दशगुणोत्तराः संज्ञाः।' इति॥

अत्र अश्वशब्दसूचितां सप्तत्वसंख्यामादौ लिखित्वा तदुत्तरतः अक्षिशब्द-सूचिता द्वित्वसङ्ख्या लेख्या, तदुत्तरतस्तु भूतशब्दसूचिता पञ्चत्वसङ्ख्या लेख्या, 'अङ्कानां वामतो गतिः' इति वचनात्—इत्यादि गणकसंप्रदायप्रवर्तकलीलावत्यादिग्रन्थतो ज्ञेयम्। तथा च सप्त च विंशतिश्च पञ्च शतानि च रूपाणि भवन्तीति मनीषिभिरूह्य-मित्यर्थः। तथा हि—सौ नवानां रूपाणामन्त्यवर्णस्य 'अनचि च' इति द्वित्वे तदभावे च अष्टादश रूपाणि। प्रथमाद्विवचने चतुर्णां मध्ये पूजार्थानां त्रयाणां ञकारस्य 'अनचि च' इति द्वित्वे तदभावे च षड् रूपाणि, 'अणोऽप्रगृह्यस्य—' इति तु न, प्रगृह्यत्वात्। गतौ त्वेकमेव, संकलनया सप्त। जसि तु त्रयाणां ञकारस्य द्वित्वे तदभावे च षड् रूपाणि, 'षण्णामेषामन्त्यस्य इकारस्य 'अणोऽप्रगृह्यस्य' इत्यनुनासिकपक्षे षट्, अनुनासिकत्वा-भावपक्षे तु षट् स्थितान्येव, संकलनया जसि द्वादश। तथा च प्रथमायां विभक्तौ सप्त-त्रिंशत्। एवं द्वितीयायां विभक्तावपि सप्तत्रिंशत्। तृतीयैकवचने तु चतुर्णां मध्ये पूजा-र्थानां त्रयाणां ञकारद्वित्वे तदभावे च षड् रूपाणि, गतौ त्वेकमेव, सङ्कलनया सप्त, एषां सप्तानामन्त्यस्य आकारस्य अनुनासिकत्वपक्षे सप्त, तदभावे तु सप्त स्थितान्येव, संकलनया चतुर्दश। भ्यामि तु षण्णां मध्ये गतौ गकारस्य पूजायां ङकारस्य च द्वित्वे षट्, तदभावे षट् स्थितान्येव, संकलनया द्वादश, एषु यकारस्य 'यणो मयः—' इति

---

भिसि चतुर्विंशतिः। भात् पूर्वस्य विसर्गस्य च द्वित्वात् संकलनया षष्ट्युत्तरशतम्। ङयि चतुर्णां मध्ये पूजार्थानां त्रयाणां अद्वित्वे सप्त। अनुनासिकस्तु नास्ति, एका-रस्यानण्त्वात्। संकलनया सप्तोत्तरषष्ट्यधिकं शतम्। भ्यामि प्राग्वदेवाष्टचत्वारिंशत्। तथैव भ्यसि भात् पूर्वस्य यविसर्गयोश्च द्वित्वात्। संकलनया त्रिषष्ट्यधिकं शतद्वयम्। ङसौ चतुर्णां मध्ये अद्वित्वे सप्त। तेषां तु सप्तानां विसर्गद्वित्वे चतुर्दश। संकलनया सप्तोत्तरसप्तत्यधिकं शतद्वयम्। भ्यांभ्यसोः प्राग्वदेव प्रत्येकमष्टचत्वारिंशत्। संकलनया

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

द्वित्वे द्वादश, मय इति पञ्चमी यण इति षष्ठीत्याश्रयणात्। यकारद्वित्वाभावे तु द्वादश स्थितान्येव, सङ्कलनया चतुर्विंशतिः। एषु मकारस्य द्वित्वे चतुर्विंशतिः, तदभावे चतुर्विंशतिः स्थितान्येव, संकलनया भ्यामि अष्टाचत्वारिंशत्। भिसि तु षण्णां मध्ये गतौ गकारस्य, पूजायां ङकारस्य च द्वित्वे षट्, तदभावे षट् स्थितान्येव, संकलनया द्वादश। एषु विसर्गस्य द्वित्वे द्वादश, अयोगवाहानाम् अट्सु शर्षु चोपसंख्यातत्वेन विसर्गस्य यर्त्वात्, तस्य तु द्वित्वाभावे द्वादश स्थितान्येव, संकलनया भिसि चतुर्विंशतिः। तथा च तृतीयाविभक्तौ षडशीतिः। चतुर्थ्येकवचने चतुर्णां मध्ये पूजार्थानां त्रयाणां ञकारद्वित्वे तदभावे च षट्, गतौ त्वेकमेव, सङ्कलनया ङयि सप्त, एकारस्य अनण्त्वान्नानुनासिकः। भ्यामि तु प्राग्वदेव अष्टाचत्वारिंशत्। भ्यसि तु षण्णां मध्ये गतिपूजनयोः प्रत्येकं त्रयाणां गङयोर्द्वित्वे षट्, तदभावे तु षट् स्थितान्येव, सङ्कलनया द्वादश। एषु यकारस्य 'यणो मयः—' इति द्वित्वे द्वादश, तदभावे तु द्वादश स्थितान्येव, सङ्कलनया चतुर्विंशतिः। एषु विसर्गस्य द्वित्वे चतुर्विंशतिः, तदभावे तु चतुर्विंशतिः स्थितान्येव, सङ्कलनया भ्यसि अष्टाचत्वारिंशत्। तथा च चतुर्थ्यां विभक्तौ त्र्यधिकं शतम्। ङसौ तु पूजायां त्रयाणां रूपाणां ञकारद्वित्वे तदभावे च षट्, गतौ त्वेकं स्थितमेव, सङ्कलनया सप्त। एषु विसर्गद्वित्वे सप्त, तदभावे तु सप्त स्थितान्येव, सङ्कलनया ङसौ चतुर्दश। भ्यामि भ्यसि च प्राग्वत् प्रत्येकम् अष्टाचत्वारिंशत्। तथा च पञ्चम्यां विभक्तौ दशाधिकं शतम्। ङसि तु ङसिवच्चतुर्दश। ओसि तु चतुर्णां मध्ये पूजायां त्रयाणां ञकारस्य द्वित्वे तदभावे च षट्, गतौ त्वेकम्, संकलनया सप्त। एषु विसर्गस्य द्वित्वे तदभावे च चतुर्दश। आमि तु चतुर्णां मध्ये पूजायां त्रयाणां त्रिषु ञकारस्य द्वित्वे षट्, गतौ त्वेकम्, संकलनया सप्त, एषु मकारस्य द्वित्वे तदभावे च चतुर्दश। तथा च षष्ठ्यां द्विचत्वारिंशत्। ङौ पूजायां त्रयाणां ञकारस्य द्वित्वे तदभावे च षट्, गतावेकम्, सङ्कलनया सप्त, एषु अन्त्यस्य इकारस्य अनुनासिकत्वे तदभावे च चतुर्दश। ओसि प्राग्वच्चतुर्दश। सुपि तु द्वादशानां मध्ये पूजायां कुगभावपक्षे ङकारस्य द्वित्वे त्रीणि, तदभावे तु त्रीणि स्थितान्येव, सङ्कलनया षट्। कुक्पक्षे तु 'चयो द्वितीयाः—' इति द्वितीयादेशे खकारवन्ति त्रीणि, तदभावे तु ककारवन्ति त्रीणि, सङ्कलनया षट्, षण्णा-

---

त्रिसप्तत्यधिकं शतत्रयम्। ङसाविव ङस्, ओस्, आम्, ङि, ओस् इत्यत्रापि प्रत्येकं चतुर्दश। चतुर्षु रूपेषु मध्ये ञद्वित्वे सप्तानामप्यन्त्यस्य द्वित्वात्। ङौ तु सप्तानामप्यन्त्यस्य 'अणोऽप्रगृह्यस्य—' इति वैकल्पिकानुनासिकप्रवृत्तेः। संकलनया त्रिचत्वारिंशदधिकं शतचतुष्टयम्। सुपि गत्यर्थे त्रयाणां कद्वित्वे षट्। तेषां तु 'खयः शरः' इति षद्वित्वे द्वादश। उकारस्यानुनासिके चतुर्विंशतिः। संकलनया सप्तोत्तरषष्ट्यधिकं शतचतुष्ट-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तिर्यक्, तिरश्ची, तिर्यञ्चि। पूजायां तु, तिर्यङ्, तिर्यञ्ची, तिर्यञ्चि॥ इति

मेषां ङकारद्वित्वे षट्, तदभावे तु षट् स्थितान्येव, सङ्कलनया द्वादश। एषां द्वादशानां 'खयः शरः' इति षकारद्वित्वे द्वादश, तदभावे तु द्वादश स्थितान्येव, सङ्कलनया चतुर्विंशतिः। 'शरोऽचि–' इति निषेधस्तु न, तस्य सौत्रद्वित्वमात्रविषयत्वात्। तथा च कुक्पक्षे चतुर्विंशतिः, कुगभावे तु षट् स्थितान्येव, सङ्कलनया पूजायां त्रिंशत्। गतौ तु त्रयाणां ककारस्य द्वित्वे त्रीणि, तदभावे तु त्रीणि स्थितान्येव, षण्णामेषां 'खयः शरः' इति षकारद्वित्वे षट्, तदभावे तु षट् स्थितान्येव, सङ्कलनया द्वादश। तथा च सङ्कलनया गतौ पूजायां च द्विचत्वारिंशत्। एषामन्त्यस्यानुनासिकत्वे तदभावे च सुपि चतुरशीतिः। एवं च सु–अष्टादश (१८), औ–सप्त (७), जस्–द्वादश (१२) आहत्य प्रथमायां सप्तत्रिंशत् (३७), अम्–अष्टादश (१८), औट्–सप्त (७) शस्–द्वादश (१२) आहत्य द्वितीयायां सप्तत्रिंशत् (३७), टा–चतुर्दश (१४), भ्याम्–अष्टाचत्वारिंशत् (४८), भिस्–चतुर्विंशतिः (२४), आहत्य तृतीयायां षडशीतिः (८६)। ङे–सप्त (७) भ्याम्–अष्टाचत्वारिंशत् (४८), भ्यस्–अष्टाचत्वारिंशत् (४८), आहत्य चतुर्थ्यां त्र्यधिकं शतम् (१०३)। ङसि चतुर्दश (१४), भ्याम्[1]–भ्यसोः अष्टाचत्वारिंशत् २ (४८) आहत्य पञ्चम्यां दशाधिकं शतम् (११०)। ङस्–चतुर्दश (१४), ओस्–चतुर्दश (१४) आम्–चतुर्दश (१४) आहत्य षष्ठ्यां द्वाचत्वारिंशत् (४२)। ङि–चतुर्दश (१४), ओस्–चतुर्दश (१४), सुप्–चतुरशीतिः (८४), आहत्य सप्तम्यां द्वादशाधिकं शतम् (११२)। ततश्च सङ्कलनया पञ्चशतानि च, विंशतिश्च, सप्त च (५२७) रूपाणि। **इति गवाक्छब्दप्रक्रिया। तिर्यगिति।** तिरः अञ्चति इति विग्रहे ऋत्विगादिना क्विन्। गतौ 'अनिदिताम्–' इति नलोपः। तिरस् अच–इत्यस्मात् सुबुत्पत्तिः, स्वमोर्लुक्, प्रत्ययलक्षणविरहाद् असर्वनामस्थानत्वाच्च न नुम्। अभत्वाद् 'अचः' इत्यल्लोपो न, तिरसस्तिर्यादेशः, यण्, 'क्विन्प्रत्ययस्य–' इति कुत्वस्यासिद्धत्वात् चकारस्य 'चोः कुः' इति कुत्वम्, जश्त्वचर्त्वे इति भावः। **तिरश्ची इति।** तिरस् अच् औ इति स्थिते औङः श्याम्, भत्वाद्, 'अचः–' इत्यल्लोपः। 'अलोपे' इत्युक्तेर्न तिर्यादेशः। सस्य, श्चुत्वेन श इति भावः। **तिर्यञ्चीति।** तिरस् अच् इत्यस्माज्जसि 'जश्शसोः शिः' सर्वनामस्थानत्वान्नुम्, अनुस्वारपरसवर्णौ, तिरसस्तिरिः, यण्। अभत्वाद्, 'अचः' इत्यल्लोपो नेति भावः। **पूजायां तु तिर्यङिति।** स्वमोर्लुकि अभत्वाद् अलुप्तनकारत्वाद् 'अचः' इत्यल्लोपाभावात्तिर्यादेशः, चकारस्य संयोगान्तलोपः, नस्य कुत्वेन ङकार इति भावः। **तिर्यञ्ची इति।** औङः श्यां रूपम्।

[1] भ्याम्–अष्टाचत्वारिंशत् (४८) भ्यस्–अष्टाचत्वारिंशत् (४८)।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चान्ताः ॥ यकृत्, यकृती, यकृन्ति । 'पद्दन्-' (सू २२८) इति वा यकन् । यकानि । यक्ना, यकृता । शकृत्, शकृती, शकृन्ति, शकानि । शक्ना, शकृता । ददत्, ददती । **४४४ वा नपुंसकस्य । ( ७-१-७९ )** अभ्यस्तात्परो यः शता तदन्तस्य क्लीबस्य नुम् वा स्यात्सर्वनामस्थाने । ददन्ति, ददति । तुदत् । **४४५ आच्छीनद्योर्नुम् । (७-१-८०)** अवर्णान्तादङ्गात्परो यः शतुरवयवस्त-

---

अलुप्तनकारत्वादच इत्यल्लोपाभावात् तिरिः । **तिर्यञ्चि इति** । 'जश्शसोः शिः' । शेषं पुंवत् ॥ इति चान्ताः ॥

**अथ तकारान्ता निरूप्यन्ते । यकृदिति** । मांसपिण्डविशेषो यकृन्नाम याज्ञिकप्रसिद्धः । स्वमोर्लुक्, जश्त्वचर्त्वे इति भावः । **यकृती इति** । औङश्शी । **यकृन्तीति** । 'जश्शसोः शिः', झलन्तत्वान्नुम्, अनुस्वारपरसवर्णाविति भावः । शसादौ विशेषमाह—**पद्दन्निति वा यकन्निति । यकानीति** । शसश्शिः, यकन्नादेशः, सर्वनामस्थानत्वाद् नान्तलक्षण उपधादीर्घ इति भावः । **यक्नेति** । टायां यकन्नादेशे अल्लोपः । यक्ने । यक्नः । यक्नोः । यक्नि, यकनि । यकसु । यकन्नभावे यकृद्भ्यामित्यादि । **शकृदिति** । शकृच्छब्दः विष्ठावाची, यकृद्वत् । **ददत्, ददती इति** । शतृप्रत्ययान्तोऽयं ददच्छब्दः पुँल्लिङ्गनिरूपणे व्युत्पादितः । तस्य स्वमोर्लुक्, औङश्शी । नुम् तु न, असर्वनामस्थानत्वाद् 'नाभ्यस्ताच्छतुः' इति निषेधाच्च । शौ 'नाभ्यस्ताच्छतुः' इति नित्यं नुम्निषेधे प्राप्ते—**वा नपुंसकस्य** । 'नाभ्यस्ताच्छतुः' इति सूत्रं नञ्वर्जमनुवर्तते । नपुंसकस्येति व्यत्ययेन पञ्चम्यर्थे षष्ठी । 'इदितो नुम् धातोः' इत्यतो नुमिति 'उगिदचाम्–' इत्यतः सर्वनामस्थान इति च अनुवर्तते । तदाह—**अभ्यस्तादित्यादिना । ददन्तीति** । नुमि अनुस्वारपरसवर्णौ । **तुददिति** । 'तुद व्यथने' अस्माच्छतृप्रत्यये 'तुदादिभ्यश्शः' इति शः शपोऽपवादः, 'अतो गुणे' इति शतुरकारेण पररूपे तुदच्छब्दः, तस्मात् स्वमोर्लुक्, प्रत्ययलक्षणविरहाद् असर्वनामस्थानत्वाच्च न नुम्, जश्त्वचर्त्वे इति भावः । तुदच्छब्दादौङः श्याम्, असर्वनामस्थानत्वान्नुमि अप्राप्ते—**आच्छीनद्योर्नुम्** । 'नाभ्यस्तात्–' इत्यतः

---

यम् । पूजायां तु कुगभावे त्रयाणां ङकारद्वित्वेऽनुनासिके च द्वादश । कुक्पक्षे तु चयो द्वितीयादेशे षट् । षण्णां ङषयोर्द्वित्वेऽनुनासिके चाष्टचत्वारिंशत् । संकलनया सप्तविंशत्यधिका पञ्चशतीत्यर्थः । **तिरश्ची इति** । भत्वात् 'अचः' इत्यल्लोपः । 'अलोपे' इति वचनात्तिर्यादेशाभावः । **ददिति** । पुँल्लिङ्गेऽप्ययं व्युत्पादितः । **शतेति** । 'ऋदुशन-' इत्यनङ् । शतृप्रत्यय इत्यर्थः । **आच्छीनद्योः** । नुम्ग्रहणमिह चिन्त्य-

---

१ 'शतुरिति' इत्यन्तः पाठो नास्ति क ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दन्तस्याङ्गस्य नुम् वा स्याच्छीनद्योः परतः । तुदन्ती, तुदती । तुदन्ति । भात् । भान्ती, भाती । भान्ति । पचत् । **४४६ शप्श्यनोर्नित्यम्** । ( ७-१-८१ ) शप्श्यनोरात्परो यः शतुरवयवस्तदन्तस्य नित्यं नुम् स्याच्छीनद्योः परतः । पचन्ती ।

---

शतुरिति, 'वा नपुंसकस्य' इत्यतो वेति चानुवर्तते । आदिति पञ्चमी । अङ्गस्य इत्यधिकृतं पञ्चम्या विपरिणाम्यते, तच्च आदित्यनेन विशेष्यते, तदन्तविधिः । परस्य इत्यध्याह्रियते, शतुरित्यनन्तरमवयवस्येत्यध्याह्रियते, तेन च अङ्गस्येति षष्ठयन्तं विशेष्यते, तदन्तविधिः, अङ्गस्येत्यस्य आवृत्तिर्बोध्या । तदाह—**अवर्णान्तादित्यादिना**। 'इदितो नुम्–' इत्यतः अनुवृत्यैव सिद्धे नुम्ग्रहणं स्पष्टार्थम् । **तुदन्ती, तुदती इति**। औङः श्यां नुमि तदभावे च रूपम् । शविकरणे कृते शतुकारेण पररूपे एकादेशे सति तुद इत्यवर्णान्तमङ्गम्, तदादिग्रहणेन विकरणविशिष्टस्याप्यङ्गत्वात् । ततश्च तुदत् इत्यन्त्यस्तकारः शतुरवयवः, तुद इत्यवर्णान्तादङ्गात् परश्चेति नुमिति भावः । अवर्णान्तादङ्गात् परो यः शतृप्रत्ययः—इत्याश्रयणे तु अत्र नुम् न स्यात् । शविकरणाकारस्य शतुरकारस्य च एकादेशे कृते तस्य पूर्वान्तत्वे शतुरवर्णान्तादङ्गात् परत्वाभावात्, परादित्वे अवर्णान्ताङ्गाभावात्, उभयत आश्रयणे च अन्तादिवत्त्वनिषेधादित्यलम् । **तुदन्तीति** । जश्शसोश्शिः, सर्वनामस्थानत्वान्नुमिति भावः । **भादिति** । 'भा दीप्तौ' लुग्विकरणः । लटः शतरि कृते सवर्णदीर्घे भात् इति रूपम् । तस्मात् स्वमोर्लुक्, जश्त्वचर्त्वे इति भावः । **भान्ती, भाती इति** । 'औङः शी' 'आच्छीनद्योर्नुम्' इति भावः । **भान्तीति** । 'जश्शसोः शिः', सर्वनामस्थानत्वान्नुमिति भावः । **पचदिति** । पचधातोर्लटः शतरि शप्, 'अतो गुणे' इति पररूपम् । पचत् इत्यस्मात् स्वमोर्लुगिति भावः । औङः श्याम् 'आच्छीनद्योः–' इति विकल्पे प्राप्ते—**शप्श्यनोर्नित्यम्** । 'आच्छीनद्योर्नुम्' इत्यनुवर्तते । 'नाभ्यस्ताच्छतुः' इत्यतः शतुरित्यनुवर्तते, अवयव इति चाध्याह्रियते । तदाह—**शप्श्यनोरादित्यादिना** ।

---

प्रयोजनं 'नाभ्यस्ताच्छतुः' 'वा नपुंसकस्य' इत्यत्र 'इदितो नुम् धातोः' इत्यतोऽनुवृत्तेरावश्यकतया तदुत्तरत्रापि तत एवानुवर्तते बाधकाभावात् । **शतुरवयव इति** । तुदादेः शस्यान्तरङ्गत्वाच्छत्रादेशाकारेण सहैकादेशे कृतेऽवर्णान्तात्परस्य शतुरिति न भवति । 'उभयत आश्रयणे नान्तादिवत्' इति वक्ष्यमाणत्वादिति भावः । **भादिति** । 'भा दीप्तौ', लटः शतर्यदादित्वाच्छपो लुक् । **शप्श्यनोर्नित्यम्** । आरम्भसामर्थ्यान्नित्यत्वे सिद्धेऽपि नित्यग्रहणमिह वेत्यधिकारनिवृत्त्यर्थम् । अन्यथा ह्यारम्भसामर्थ्यादिह नित्यमुत्तरत्र विकल्प इत्याशङ्क्येत । **पचन्ती इति** । कर्तरि शपि नित्यं नुम् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पचन्ति । दीव्यत् । दीव्यन्ती । दीव्यन्ति ॥ इति तान्ताः॥ स्वप्, स्वब् । स्वपी । नित्यात्परादपि नुमः प्राक् 'अप्तृन्–' ( सू २७७ ) इति दीर्घः, प्रतिपदोक्तत्वाद् नुम्, स्वाम्पि । 'निरवकाशत्वं प्रतिपदोक्तत्वम्' इति पक्षे तु प्रकृते तद्विरहान्नुमेव। स्वम्पि । स्वपा । 'अपो भि' ( सू ४४२ ) । स्वद्भ्याम् । स्वद्भिः ॥ इति पान्ताः ॥

---

पचन्ती इति । औङः श्यां नुमि रूपम् । पचन्तीति । जश्शसोः शौ सर्वनामस्थानत्वान्नुमि रूपम् । दीव्यदिति । दिवुधातोः लटः शतरि श्यन्, 'हलि च' इति दीर्घः । दीव्यच्छब्दात् स्वमोर्लुगिति भावः । दीव्यन्ती इति । औङः श्यां नुमि रूपम्, 'शप्श्यनोः–' इति नित्यं नुमिति भावः । दीव्यन्तीति । जश्शसोः शौ सर्वनामस्थानत्वाद् नुमिति भावः ॥ इति तान्ताः ॥

अथ पकारान्ता निरूप्यन्ते । स्वविति । सु–शोभना आपो यस्मिन् सरसीति बहुव्रीहिः । 'ऋक्पूरब्धूः–' इति समासान्तस्तु न भवति, 'न पूजनात्' इति निषेधात् । 'द्व्यन्तरुपसर्गेभ्योऽप ईत्' इति न भवति, तत्र अप इति कृतसमासान्तग्रहणात् । स्वप्शब्दात् स्वमोर्लुगिति भावः । स्वपी इति । औङः श्यां रूपम् । असर्वनामस्थानत्वाद् न नुमिति भावः। जश्शसोः शौ स्वप् इ इति स्थिते, 'अप्तृन्–' इति दीर्घे, झलन्तलक्षणनुमि, अनुस्वारे, परसवर्णे, स्वाम्पि इति वक्ष्यति । तत्र 'अप्तृन्–' इति दीर्घं बाधित्वा परत्वान्नित्यत्वाच्च नुमि कृते अकारस्य उपधात्वाभावात् कथं दीर्घ इत्यत आह—नित्यादित्यादि । प्रतिपदोक्तत्वादिति। 'अप्तृन्–' इति दीर्घस्य अप्शब्दमुच्चार्य विहितत्वादित्यर्थः । ननु निरवकाशत्वं प्रतिपदोक्तत्वमिति 'छदिरुपधिबलेर्ढञ्' इति सूत्रे 'शेषाद्विभाषा' इति सूत्रे च भाष्ये स्थितम्, 'अप्तृन्–' इति दीर्घस्तु न निरवकाशः, आप इत्यत्र सावकाशत्वात्, अतोऽत्र नित्यत्वात् परत्वाच्च पूर्वं नुमागमे कथं दीर्घ इत्याशङ्क्य इष्टापत्त्या परिहरति—निरवकाशत्वमित्यादि । स्वम्पीति । दीर्घं बाधित्वा नुमि अनुस्वारपरसवर्णाविति भावः । केचित्तु 'अप्तृन्–' इति दीर्घस्य निरवकाशत्वरूपप्रतिपदोक्तत्वाभावेऽपि प्रतिपदविधित्वेन शीघ्रोपस्थितिकतया प्रथमं प्रवृत्तौ स्वाम्पि इत्येव युक्तमित्याहुः ॥ इति पान्ताः ॥

---

दीव्यन्ती इति । दिवादिभ्यः श्यनि नित्यं नुम् । पचन्तीति दीव्यन्तीति । बहुवचने तु 'नपुंसकस्य झलचः' इति नुम् बोध्यः । स्वबिति । शोभना आपो यस्मिन्सरसीति बहुव्रीहिः । 'ऋक्पूरब्–' इति समासान्ते प्राप्ते 'न पूजनात्' इति निषेधः । 'द्व्यन्तरुपसर्गेभ्यः–' इति ईन्न भवति । तत्र 'अप इति कृतसमासान्तस्यानुकरणम्' इति वक्ष्यमाणत्वात् । निरवकाशत्वं प्रतिपदोक्तत्वमिति । अयमेव पक्षः प्रबल

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

'अर्तिपृवपि–' ( उ २७४ ) इत्यादिना धनेरुस्। षत्वस्यासिद्धत्वाद्रुत्वम्। धनुः। धनुषी। 'सान्त–'। ( सू ३१७ ) इति दीर्घः। 'नुम्विसर्जनीय–' ( सू ४३४ ) इति षत्वम्। धनूंषि। धनुषा। धनुर्भ्याम्। एवं चक्षुर्हविरादयः। पिपठिषतेः क्विप्, 'र्वोः–' ( सू ४३३ ) इति दीर्घः। पिपठीः। पिपठिषी। अल्लोपस्य स्थानिवत्त्वाज्झलन्तलक्षणो नुम् न। स्वविधौ स्थानिवत्त्वाभावादजन्तलक्षणोऽपि नुम् न। पिपठिषि। पिपठीर्भ्यामित्यादि पुंवत्॥ इति षान्ताः॥ पयः। पयसी। पयांसि। पयसा। पयोभ्याम् इत्यादि। सुपुम्। सुपुंसी। सुपुमांसि। अदः। विभक्ति-

---

अथ षकारान्ता निरूप्यन्ते। धनुश्शब्दं व्युत्पादयति—**धनेरिति**। 'जनेरुसिः' इत्यत उसिरित्यनुवर्तमाने 'अर्तिपृवपियजितनिधनितपिभ्यो नित्' इत्यौणादिकसूत्रेण 'धन धान्ये' इत्यस्माद्धातोः उस्प्रत्यय इत्यर्थः। प्रत्ययावयवत्वात् सस्य षत्वे धनुष्शब्दः। तस्मात् स्वमोर्लुक्। तत्र षकारस्य कथं रुत्वमित्यत आह—**षत्वस्येति**। **धनुरिति**। 'र्वोरुपधायाः–' इति दीर्घस्तु न, रेफान्तस्य अधातुत्वात्। **धनूंषीति**। 'नश्च–' इत्यनुस्वारः। **एवं चक्षुर्हविरादय इति**। 'चक्षेश्शिच्च' इत्युसिः। शित्त्वेन सार्वधातुकत्वात् ख्शाञादेशो न। 'अर्चिशुचिहुसृपि–' इत्यादिना हुधातोरिस्, 'सार्वधातुकार्धधातुकयोः' इति गुणः, अवादेशः। आदिना सर्पिरादयो ग्राह्याः। **पिपठिषतेः क्विबिति**। 'पठ व्यक्तायां वाचि' सन्, इट्, द्वित्वम्, हलादिःशेषः, अभ्यासाकारस्य इत्त्वम्, प्रत्ययावयवत्वात् षत्वम्, 'सनाद्यन्ताः–' इति धातुत्वम्। पिपठिष इत्यस्मात् क्विप्, अतो लोपः, पिपठिष् इत्यस्मात् स्वमोर्लुक्, षत्वस्यासिद्धत्वाद्रुत्वम्। एतावत्सिद्धवत्कृत्य आह—**र्वोरिति दीर्घ इति**। **पिपठिषी इति**। औङः श्यां रूपम्। सौ विशेषमाह—**अल्लोपस्येति**। बेभिद्शब्दनिरूपणे व्याख्यातमेतदनुपदमेव प्राक्॥ इति षान्ताः॥

अथ सकारान्ता निरूप्यन्ते। **पय इति**। 'पयः क्षीरं पयोऽम्बु च' इत्यमरः। **पयांसीति**। शौ नुम्, 'सान्त–' इति दीर्घः, अनुस्वार इति भावः। **पयोभ्यामिति**। रुत्वे, 'हशि च' इत्युत्वे, गुण इति भावः। **सुपुमिति**। सु–शोभनः पुमान् यस्य गृहस्य इति बहुव्रीहौ, सुपुंस्शब्दात् स्वमोर्लुक्, संयोगान्तलोपः। **सुपुंसी इति**। औङः श्यां रूपम्। **सुपुमांसीति**। शेः सर्वनामस्थानत्वात् 'पुंसोऽसुङ्'

---

इति 'छदिरुपधिबलेर्ढञ्' इति सूत्रे मनोरमायां स्थितम्। **धनेरुसिति**। 'जनेरुसिः' इत्यत उसिरित्यनुवर्तमाने 'अर्तिपृवपियजितनिधनितपिभ्यो नित्' इत्यौणादिकेनेत्यर्थः। **धनुर्भ्यामिति**। इह 'र्वोरुपधाया–' इत्यादिना दीर्घो न शङ्क्यः, रेफान्तस्याधातुत्वात्। **एवमिति**। 'चक्षेः शिच्च' चादुसिः। चक्षुः। 'अर्चिशुचिहुसृपि–' इत्यादिना

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कार्यम्, उत्वमत्वे—अमू। अमूनि। शेषं पुंवत्॥ इति सान्ताः॥

इति हलन्तनपुंसकलिङ्गप्रकरणम्।

# अथाऽव्ययप्रकरणम्। १४।

**४४७ स्वरादिनिपातमव्ययम्। (१-१-३७)** स्वरादयो निपाता-

---

इत्यसुङ्। सुपुम्स् इ इति स्थिते, झलन्तलक्षणनुमि, 'सान्तमहतः—' इति दीर्घः, 'नश्च—' इत्यनुस्वारश्चेति भावः। **अद इति**। अदस् शब्दात् स्वमोर्लुक्, रुत्वविसर्गौ, सान्तत्वाद् न मुत्वम्, लुका लुप्तत्वात् त्यदाद्यत्वं नेति भावः। औङादावाह—**विभक्तिकार्यमिति**। त्यदाद्यत्वादिकमित्यर्थः। **उत्वमत्वे इति**। 'पूर्वत्रासिद्धम्' इति विभक्तिकार्योत्तरम् उत्वमत्वे इत्यर्थः। **अमू इति**। औङः शी, त्यदाद्यत्वम्, पररूपम्, गुणः, ऊत्वमत्वे इति भावः। **अमूनीति**। जश्शसोश्शिः, त्यदाद्यत्वम्, पररूपम्, अजन्तत्वाद् नुम्, उपधादीर्घः, ऊत्वमत्वे इति भावः॥ इति सान्ताः॥

इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां-बालमनोरमाख्यायां हलन्तनपुंसकलिङ्गप्रकरणं समाप्तम्॥

**अथ अव्ययानि निरूप्यन्ते। स्वरादिनिपातमव्ययम्**। स्वर् आदिः येषां ते स्वरादयः, ते च निपाताश्चेति समाहारद्वन्द्वः। फलितमाह—**स्वरादय इति**।

---

जुहोतेरिसिः। आदिशब्देन सर्पिरर्चिरादयो ग्राह्याः। **सुपुमांसीति**। 'पुंसोऽसुङ्' इति सूत्रे सुटीति व्याचक्षाणस्य प्राचो मते जसीष्टसिद्धावपि शसि नैतत्सिध्येत्। औङि चातिप्रसङ्गः। 'इतोऽत्सर्वनामस्थाने' इत्यतोऽनुवृत्तिं पर्यालोच्य सर्वनामस्थान इति यथाश्रुतं ब्रुवतां तु सर्वेष्टसिद्धिः॥ इति हलन्तनपुंसकलिङ्गप्रकरणम्॥

**स्वरादिनिपातमव्ययम्**। स्वरादयश्च निपाताश्चेति समाहारद्वन्द्वः। ननु चादिष्वेव स्वरादीन् पठित्वा प्रकृतसूत्रं परित्यज्य 'तद्धितश्चासर्व—' इत्यादि सूत्रचतुष्टयमपि 'चादयोऽसत्त्वे' इत्यस्मादूर्ध्वं कृत्वा अव्ययप्रदेशेषु निपातशब्देनैव व्यवह्रियतामिति चेन्न। स्वस्ति वाचयति स्वः पश्यति स्वः पततीत्यादौ कर्मादिकारकयोगेन सत्त्ववाचकत्वात् तेषां निपातसंज्ञानापत्तेः। चादीनां ह्यसत्त्ववाचिनामेव निपातसंज्ञा, न तु सत्त्ववाचिनाम्। स्वरादीनां तु सत्त्ववाचिनामसत्त्ववाचिनां चाव्ययसंज्ञेष्यत इति व्यवस्थानापत्तेश्च। अथ 'प्राग्रीश्वरान्निपाताः—' 'स्वरादिनि—' चादयोऽसत्त्वे' इति सूत्र्यतां, तथा हि सति स्वरादीनां सत्त्ववचनानामपि निपातसंज्ञा सेत्स्यतीति चेन्न। एवं हि सति 'निपात एकाजनाङ्' इति प्रगृह्यसंज्ञा स्वरादीनामप्येकाचां प्रसज्येत, स्तो हि स्वरादिषु 'किमोऽत्' 'दक्षिणादाच्' इत्यादावेकाचौ तद्धितौ, केन्प्रभृतय एकाचः कृत्प्र-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

श्चाव्ययसंज्ञाः स्युः। स्वर्। अन्तर्। प्रातर्। पुनर्। सनुतर्। उच्चैस्। नीचैस्। शनैस्। ऋधक्। ऋते। युगपत्। आरात्। पृथक्। ह्यस्। श्वस्। दिवा। रात्रौ। सायम्। चिरम्। मनाक्। ईषत्। जोषम्। तूष्णीम्। बहिस्। अवस्। समया। निकषा। स्वयम्। वृथा। नक्तम्। नञ्। हेतौ। इद्धा। अद्धा

---

स्वरादीन् पठति—**स्वरित्यादिना**। स्वरादीनां चादीनां च पृथक्पाठस्तु 'निपाता आद्युदात्ताः' इति स्वरभेदार्थः, चादीनामसत्त्ववाचिनामेवाऽव्ययत्वम्, स्वरादीनां तु सत्त्ववाचिनामसत्त्ववाचिनां च तदिति व्यवस्थार्थश्च। **स्वर्** स्वर्गे—पारत्रिकसुखविशेषे, परलोके च। **अन्तर्** मध्ये। **प्रातर्** प्रत्यूषे। **पुनर्** अप्रथमे, विशेषे च। **सनुतर्** अन्तर्धाने। स्वराद्याः पञ्च रेफान्ताः। तेन स्वर्याति, प्रातरत्रेत्यादौ 'हशि च' इत्युत्वं न, तत्र 'रोः' इत्युकारानुबन्धग्रहणात्। **उच्चैस्** महति। **नीचैस्** अल्पे। **शनैस्** क्रियामान्द्ये। **ऋधक्** सत्ये, वियोगशैघ्र्यसामीप्यलाघवेष्वित्यन्ये। **ऋते** वर्जने। **युगपद्** एककाले। **आराद्** दूरसमीपयोः। **पृथग्** भिन्ने। **ह्यस्** अतीतेऽह्नि। **श्वस्** अनागतेऽह्नि। **दिवा** दिवसे। **रात्रौ** निशि। **सायम्** निशामुखे। **चिरम्** बहुकाले। **मनाग्**, **ईषद्** इदं द्वयमल्पे। **जोषम्** सुखे, मौने च। **तूष्णीम्** मौने। **बहिस्** **अवस्** इदं द्वयं बाह्ये। **समया** समीपे, मध्ये च। **निकषा** अन्तिके। **स्वयम्** आत्मनेत्यर्थे। **वृथा** व्यर्थे। **नक्तम्** रात्रौ। **नञ्** निषेधे।

'तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः॥' इत्यन्ये।

**हेतौ** निमित्ते। **इद्धा** प्राकाश्ये। **अद्धा** स्फुटावधारणयोः, तत्त्वातिशययोरित्यन्ये।

---

त्ययाश्च सन्ति। 'तसिलादिस्तद्धित एधाच्पर्यन्तः' इति सूत्रस्य कृन्मकारसन्ध्यक्षरान्तः' इति सूत्रस्य च स्वरादिगणपठितत्वात्। यद्यप्यत्र मूले स्वरादिषु गणसूत्रद्वयमिदं न पठितम्, तथापि प्राचां पाठे त्वस्तीत्यनुपदमेव स्फुटीकरिष्यते। स्वरादीनुदाहरति—**स्वरित्यादिना**। **स्वरिति** स्वर्गे परलोके च। **अन्तरिति** मध्ये। **प्रातरिति** प्रत्यूषे। **पुनरित्यप्रथमे** विशेषे च। **सनुतरित्यन्तर्धाने**। स्वराद्याः पञ्च रेफान्ताः। तेन स्वर्याति प्रातरत्रेत्यादावुत्वं न भवति। सान्तत्वे हि स्यादेव दोषः। **उच्चैस्** महति। **नीचैस्** अल्पे। **शनैस्** क्रियामान्द्ये। **ऋधक्** सत्येऽपि। वियोगशीघ्रसामीप्यलाघवेष्वित्यन्ये। **ऋते** वर्जने। **युगपदित्येककाले**। **आराद्** दूरसमीपयोः। **पृथक्** भिन्ने। **ह्यस्** अतीतेऽह्नि। **श्वोऽ**नागतेऽह्नि। **दिवा** दिवसे। **रात्राविति** निशि। **सायमिति** निशामुखे। **चिरमिति** बहुकाले। **मनाक्**, **ईषत्** इमावल्पे। **जोषं** सुखे मौने च। **तूष्णीमिति** मौने। **बहिस्**, **अवस्** इमौ बाह्ये। **समयेति** समीपे मध्ये च। **निकषेत्यन्तिके**। **स्वयमिति** आत्मनेत्यर्थे। **वृथेति** व्यर्थे। **नक्त-**

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सामि। 'वत्' ( ग ४ )—ब्राह्मणवत्। क्षत्रियवत्। सना। सनत्। सनात्। उपधा। तिरस्। अन्तरा। अन्तरेण। ज्योक्। कम्। शम्। सहसा। विना। नाना। स्वस्ति। स्वधा। अलम्। वषट्। श्रौषट्। वौषट्। अन्यत्। अस्ति। उपांशु। क्षमा। विहायसा। दोषा। मृषा। मिथ्या। मुधा। पुरा। मिथो।

---

**सामि** अर्धे, जुगुप्सिते च। **वत्** इत्यनेन 'तेन तुल्यं क्रिया चेद्वतिः' 'तत्र तस्येव' 'तदर्हम्' इति वतिप्रत्ययो गृह्यते। 'उपसर्गाच्छन्दसि धात्वर्थे' इति वतिस्तु न गृह्यते। 'परावतो निवत् उद्वतश्च' इत्यत्राव्ययत्वाभावात्। वस्तुतस्तु 'तद्धितश्चासर्वविभक्तिः' इत्येव सिद्धे वतिग्रहणमिह व्यर्थमेव। **ब्राह्मणवत्, क्षत्रियवद्** इति वतिप्रत्ययान्तस्योदाहरणम्। केवलप्रत्ययस्य अव्ययत्वे प्रयोजनाभावात्। **सना, सनत्, सनात्,** एतत्त्रयं नित्ये। **उपधा** भेदे। **तिरस्** अन्तर्धौ, तिर्यगर्थे, पराभवे च। **अन्तरा** मध्ये, विनार्थे च। **अन्तरेण** वर्जने। वस्तुतस्तु 'अन्तराऽन्तरेण युक्ते' इति सूत्रे भाष्ये अन्तरा, अन्तरेण इत्यनयोः निपातत्वोक्तेरनयोः स्वरादिषु पाठः प्रक्षिप्त इति बोध्यम्। **ज्योक्** कालभूयस्त्वे, प्रश्ने, शीघ्रार्थे, सम्प्रति, इत्यर्थे च। **कम्** वारिमूर्धनिन्दासुखेषु। **शम्** सुखे। **सहसा** आकस्मिकाविमर्शयोः। **विना** वर्जने। **नाना** अनेकविनार्थयोः। **स्वस्ति** मङ्गले। **स्वधा** पितृहविर्दाने। **अलम्** भूषणपर्याप्तिशक्तिवारणनिषेधेषु। **वषट्, वौषट्, श्रौषट्** एतत्त्रयं देवहविर्दाने। **अन्यद्** अन्यार्थे। **अस्ति** सत्तायाम्। 'उपसर्गविभक्तिस्वरप्रतिरूपकाश्च' इति चाद्यन्तर्गणसूत्रादेव अस्तिशब्दस्य विभक्तिप्रतिरूपकस्य अव्ययत्वसिद्धेरिह स्वरादिगणे तस्य पाठो व्यर्थ इति मतुप्सूत्रे भाष्यकैयटयोः स्थितम्। **उपांशु** अप्रकाशोच्चारणे, रहस्ये च। **क्षमा** क्षान्तौ। **विहायसा** आकाशे। **दोषा** रात्रौ। **मृषा, मिथ्या** इदं द्वयं वितथे। **मुधा** व्यर्थे। **पुरा**

---

मिति रात्रौ। **नञ्** इति निषेधे। **हेताविति** निमित्ते। **इद्धेति** प्राकाश्ये। **अद्धेति** स्फुटावधारणयोः। तत्त्वातिशययोरित्यन्ये। **सामी**त्यर्धजुगुप्सितयोः। **वत्**। 'तेन तुल्यम्–' इत्यादिभिर्विहितो यो वतिप्रत्ययः स इह गृह्यते। तदाह—**ब्राह्मणवत्। क्षत्रियवदिति**। प्रत्ययमात्रस्य संज्ञाप्रयोजनाभावात्प्रत्ययान्तमुदाहृतम्। यस्तु 'उपसर्गाच्छन्दसि धात्वर्थे' इति विहितः, स इह न गृह्यते। 'यदुद्वतो निवतो यासि' इत्यत्र सत्त्वधर्मस्य लिङ्गसंख्यान्वयस्य दर्शनात्। अत्र वदन्ति—'तद्धितश्चासर्वविभक्तिः' इत्यत्र 'तसिवती' इति वतिप्रत्ययोऽपि परिगण्यते, तच्च न कर्तव्यं स्वरादिपाठेनैव गतार्थत्वात् स्वरादिषु वा वदिति न पठनीयमिति। **सना, सनत्, सनात्** एते नित्ये। **उपधेति** भेदे। **तिरस्** अन्तर्धौ तिर्यगर्थे परिभवे च। **अन्तरेति** मध्ये विनार्थे च। **अन्तरेणेति** वर्जने। **ज्योगिति** कालभूयस्त्वे प्रश्ने शीघ्रार्थे संप्रत्यर्थे

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मिथस्। प्रायस्। मुहुस्। प्रवाहुकम्। (प्रवाहिका)। आर्यहलम्। अभीक्ष्णम्। साकम्। सार्धम्। नमस्। हिरुक्। धिक्। 'अथ'। अम्। आम्। प्रताम्।

---

अविरते, चिरातीते, भविष्यदासन्ने च। **मिथो, मिथस्** इदं द्वयं रहसि, सहार्थे च। **प्रायस्** बाहुल्ये। **मुहुस्** पुनरर्थे। **प्रवाहुकम्** समकाले, ऊर्ध्वार्थे च। **प्रवाहिका** इति पाठान्तरम्। **आर्यहलम्** बलात्कारे। शाकटायनस्तु आर्येति प्रतिबन्धे, हलमिति निषेधानुवादयोरित्याह। **आभीक्ष्णम्** पौनःपुन्ये। **साकम् सार्धम्** इदं द्वयं सहार्थे। **नमस्** नतौ। **हिरुग्** वर्जने। **धिग्** निन्दाभर्त्सनयोः। **अम्** शैघ्र्ये, अल्पे

---

च। **कमिति** वारिमूर्धनिन्दासुखेषु। **शमिति** सुखे। **सहसे**त्याकस्मिकाविमर्शयोः। **विने**ति वर्जने। **नाने**त्यनेकविनार्थयोः। **स्वस्ती**ति मङ्गले। **स्वधा** पितृदाने। **अलं** भूषणपर्याप्तिशक्तिवारणनिषेधेषु। **वषट्, श्रौषट्, वौषट्**, एते हविर्दाने। **अन्यद**न्यार्थे। **अस्ती**ति सत्तायाम्। **उपांश्वि**त्यप्रकाशोच्चारणरहस्ययोः। **क्षमे**ति क्षान्तौ। **विहायसे**ति वियदर्थे। **दोषे**ति रात्रौ। **मृषा मिथ्ये**त्येतौ वितथे। **मुधे**ति व्यर्थे। इत ऊर्ध्वं 'क्त्वतोऽसुन्कसुनः' 'कृन्मकारसन्ध्यक्षरान्तः' 'अव्ययीभावश्च' इति गणसूत्रत्रयमष्टाध्यायीस्थत्रिसूत्र्या समानार्थकमिह न पठितं चेदपि प्राचीनगणपाठे तदस्तीति बोध्यम्। वैयर्थ्यं तु परिहरिष्यते। **पुरे**त्यविरते चिरातीते भविष्यदासन्ने च। **मिथो, मिथस्**, एतौ रहःसहार्थयोः। **प्रायसि**ति बाहुल्ये। **मुहुसि**ति पुनरर्थे। **प्रवाहुक**मिति समानकाले ऊर्ध्वार्थे च। **प्रवाहिके**ति पाठान्तरम्। **आर्यहल**मिति बलात्कारे। शाकटायनस्तु **आर्ये**ति प्रतिबन्धे, **हल**मिति प्रतिषेधविवादयोरित्याह। **अभीक्ष्ण**मिति पौनःपुन्ये। **साकं सार्ध**मेतौ सहार्थे। **नमस्** नतौ। **हिरुक्** वर्जने। **धिङ्** निन्दाभर्त्सनयोः। इत ऊर्ध्वं 'तसिलादयस्तद्धिता एधाच्पर्यन्ताः' 'शस्तसी' 'कृत्वसुच्' 'सुच्' 'आस्थालौ' 'च्व्यर्थाश्च' इति प्राचीनगणपाठेऽस्तीति बोध्यम्। तसिलादीत्यादेरयमर्थः। 'पञ्चम्यास्तसिल्' इत्यारभ्य 'एधाच्च' इत्येतदन्तैः सूत्रैरुक्ता ये तद्धितास्तदन्ताः स्वरादिषु बोद्धव्याः। तथा 'बह्वल्पार्थाच्छस्-' 'प्रतियोगे पञ्चम्यास्तसिः' 'तेनैकदिक्' 'तसिश्च' इत्ययमपि तसिः। 'क्रियाभ्यावृत्तिगणने कृत्वसुच्'। 'द्वित्रिचतुर्भ्यः सुच्'। 'इण आसिः' इत्युणादिसूत्रेण विहित आसिः। 'प्रत्नपूर्वविश्वेमात्थाल् छन्दसि'। 'संपद्यकर्तरि च्विः'। 'विभाषा साति कार्त्स्न्ये' 'देये त्रा च' इत्येतदन्ता अपि ग्राह्या इति। **अम्** शैघ्र्येऽल्पे च। **आम्** अङ्गीकारे। 'अमु च छन्दसि' 'किमेत्तिङव्यय-' इति 'कास्प्रत्ययात्-' इत्यादिभिश्च विहितावपि अमामौ गृह्येते इत्येके। प्र तं नय प्रतरम्। ययाचतराम्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रशाम् । प्रतान् । मा । माङ् । आकृतिगणोऽयम् ॥ इति स्वरादयः ॥ च । वा । ह । अह ।

---

च । आम् अङ्गीकारे । प्रताम् ग्लानौ । प्रशाम् समानार्थे । प्रतान् विस्तारे । अत्र प्रतान् इति नान्तस्य पुनः पाठसामर्थ्यात् प्रताम् । प्रशाम् इति पूर्वयोः 'मो नो धातोः' इति नत्वं न । प्रशान् इति नान्तपाठस्तु असाम्प्रदायिकः । 'कृन्मेजन्तः' इति सूत्रभाष्यस्वरसोऽप्येवमिति शब्देन्दुशेखरे स्थितम् । मा, माङ् एतौ निषेधे । आकृतिगणोऽयमिति । ततश्च अन्येऽप्येवंजातीयकाः स्वरादिगणे ज्ञेयाः । तथा हि— कामम् स्वाच्छन्द्ये । प्रकामम् अतिशये । भूयस् पुनरर्थे । साम्प्रतम् न्याय्ये । परम् किन्त्वर्थे । साक्षात् प्रत्यक्षे । साचि तिर्यगर्थे । सत्यम् अर्धाङ्गीकारे । मङ्क्षु, आशु इदं द्वयं शैघ्र्ये । संवत् वर्षे । अवश्यम् निश्चये । सपदि शैघ्र्ये । बलवत् अतिशये । प्रादुस् आविस् इदं द्वयं प्रकाशे । अनिशम्, नित्यम्, सदा, अजस्रम्, सन्ततम् एतत्पञ्चकं सातत्ये । उषा रात्रौ । रोदसि द्यावापृथिव्यर्थे । ओम् अङ्गीकारे ब्रह्मणि च । अत्र अश्च उश्च म् चेति समाहारद्वन्द्वे, ओम्शब्दः ब्रह्मविष्णुशिवात्मकब्रह्मवाची । 'अवतेष्टिलोपश्च' इत्युणादिव्युत्पन्नस्तु ब्रह्मण्यङ्गीकारे चेति विवेकः । 'अवतेष्टिलोपश्च' इत्यस्यायमर्थः, अवधातोर्मन् स्यात् प्रत्ययस्य टिलोपश्चेति । अव् म् इति स्थिते 'ज्वरत्वर—' इति वकारस्य उपधाभूतस्याकारस्य च ऊठ्, ऊकारद्वयस्य सवर्णदीर्घः, 'सार्वधातुक—' इति तस्य गुणः, ओमिति रूपम् । उभयोरपि स्वरादित्वम् । न चौणादिकस्य 'कृन्मेजन्तः' इत्येव सिद्धमिति वाच्यम्, उणादौ हि 'च्विरव्ययम्' इति पठ्यते । च्व्यन्तानां निपातत्वादेव सिद्धे नियमार्थमिदम्—उणादिपठितानां चादिस्वरादिपठितानां चेदव्ययत्वम्, तर्हि च्विरेवाव्ययं नेतरदिति । ततश्च ओमित्यस्य औणादिकस्याप्राप्ते अव्ययत्वे स्वरादिपाठ इत्यलम् । भूः पृथिव्याम् । भुवर् अन्तरिक्षे । झटिति, द्राक्, तरसा त्रयमिदं शैघ्र्ये । सुष्ठु प्रशंसायाम् । दुष्ठु निकृष्टे । सु पूजायाम् । आः आश्चर्ये । कु कुत्सिते, ईषदर्थे च । अञ्जसा तत्त्वे शीघ्रार्थे च । मिथु द्वावित्यर्थे । अस्तम् विनाशे । स्थाने युक्तार्थे । ताजक् शैघ्र्ये । चिराय, चिररात्राय, चिरस्य, चिरम्, चिरेण, चिरात् इति षट्कं चिरार्थकम् । वरम् ईषदुत्कर्षे । आनुषक् आनुपूर्व्ये । अनुषक् अनुमाने । अमेनः शीघ्रसाम्प्रतिकयोः । सुदि शुक्लपक्षे । वदि कृष्णपक्षे इत्यादि ।

॥ इति स्वरादयः ॥

अथ चादीनाह—च वा इत्यादिना । च समुच्चयान्वाचयेतरेतरयोगसमाहारेषु ।

---

कारयामास । प्रताम् ग्लानौ । प्रशान् समानार्थे । प्रतान् विस्तारे । मा, माङ् एतौ निषेधाशङ्कयोः । आकृतिगण इति । तेनान्येऽपि ज्ञेयाः । तथा हि—कामम्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एव। एवम्। नूनम्। शश्वत्। युगपत्। भूयस्। कूपत्। सूपत्। कुवित्। नेत्। चेत्। चण्। कच्चित्। किंचित्। यत्र। नह। हन्त। माकिः। माकिम्। नकिः। (आकिम्। नकिम्)। माङ्। नञ्। यावत्। तावत्। त्वै। द्वै। (न्वै)। रै। श्रौषट्।

---

वा विकल्पादिषु। 'वा स्याद्विकल्पोपमयोरिवार्थेऽपि समुच्चये।' ह प्रसिद्धौ। अह अद्भुते, खेदे च। एव अवधारणे, अनवक्लृप्तौ च। एवम् उक्तपरामर्शे। नूनम् निश्चये, तर्के च। शश्वत् पौनःपुन्ये, नित्ये, सहार्थे च। युगपत् एककाले। भूयस् पुनरर्थे, आधिक्ये च। कूपत् प्रश्ने, प्रशंसायां च। कुवित्—भूर्यर्थे, प्रशंसायां च। नेत् शङ्कायाम्, प्रतिषेधविचारसमुच्चयेषु च। चेत् यद्यर्थे। चण् अयं चेदर्थे णित्, समुच्चयादिष्वननुबन्धकः। स्वरे भेदः फलम्। कच्चित् इष्टप्रश्ने। यत्र अनवक्लृप्त्यमर्षगर्हाश्चर्येषु। नावकल्पयामि, न मर्षये, गर्हे, आश्चर्यं वा यत्र भवान् वृषलं याजयेत्। नह प्रत्यारम्भे। हन्त हर्षे, विषादे, अनुकम्पायाम्, वाक्यारम्भे च। माकिः, माकिम्, नकिः, इदं त्रयं वर्जने। माङ्नञौ स्वरादिषूक्तौ। अन्यतरत्र पाठ इति युक्तम्। उभयत्र पाठस्तु व्यर्थ एव। न च निपातस्वरार्थ इह पाठ इति वाच्यम्, 'फिषोऽन्त उदात्तः' इत्येव तत्सिद्धेः। न च सत्त्ववचनत्वेऽप्यव्ययत्वार्थं स्वरादिपाठ इति वाच्यम्, तथा सति लक्ष्मीवाचकस्यापि माशब्दस्याव्ययत्वापत्तेः। तस्माच्चादिष्वेव माङ्नञौ पाठ्यावित्याहुः। यावत्, तावत् इदं द्वयं साकल्यावधिमानावधारणेषु। त्वै विशेषवितर्कयोः। द्वै वितर्के, न्वै इति पाठान्तरम्। रै दाने, अनादरे च। श्रौषट्

---

स्वाच्छन्द्ये। प्रकाममित्यतिशये। भूय इति पुनरर्थे। साम्प्रतमिति न्याय्ये। परमिति किन्त्वर्थे। साक्षात् प्रत्यक्षे। साचीति तिर्यगर्थे। सत्यमित्यर्धाङ्गीकारे मङ्क्षु, आशु एतौ शैघ्र्ये। संवत् वर्षे। अवश्यं निश्चये। उषेति रात्रौ। ओमित्यङ्गीकारे ब्रह्मणि च। भूरिति पृथिव्याम्। भुव इत्यन्तरिक्षे। झटिति, झगिति, तरसा एते शैघ्र्ये। सुष्ठु प्रशंसायाम्। दुष्ठु निकृष्टे। सु पूजायाम्। कु इति कुत्सितेषदर्थयोः। अञ्जसेति तत्त्वशीघ्रार्थयोः। मिथु इति द्वावित्यर्थे। अस्तमिति विनाशे। स्थाने इति युक्ते। वरमिति ईषदुत्कर्षे। सुदि शुक्लपक्षे। वदि कृष्णपक्षे इत्यादि। चादीनुदाहरति—चेत्यादिना। चेति समुच्चयान्वाचयेतरेतरयोगसमाहारेषु। 'वा स्याद्विकल्पोपमयोरिवार्थेऽपि समुच्चये'। हेति प्रसिद्धौ। अहेति पूजायाम्। एवेत्यवधारणेऽनवक्लृप्तौ च। एवमित्युक्तपरामर्शे। नूनमिति निश्चये तर्के च। शश्वदिति पौनःपुन्ये नित्ये सहार्थे च। युगपदित्येककाले। भूयस् पुनरर्थे आधिक्ये च। कूपदिति प्रश्ने प्रशंसायां च। कुविदिति भूर्यर्थे प्रशंसायां च। नेदिति शङ्कायां प्रतिषेधविचारसमुच्चयेषु च। चेदिति यद्यर्थे। चण् अयं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

**वौषट्। स्वाहा। स्वधा। वषट्। (ओम्)। तुम्। तथाहि। खलु। किल। अथो। अथ। सुष्ठु। स्म। आदह। 'उपसर्गविभक्तिस्वरप्रतिरूपकाश्च' (ग १६)। अवदत्तम्।**

---

**वौषट्, स्वाहा** इदं त्रयं देवहविर्दाने। **स्वधा** पितृदाने। श्रौषडादीनामनेकार्थानां त्रयाणां स्वरभेदार्थ उभयत्र पाठः। **तुम्** तुङ्कारे। **तथा हि** निदर्शने। **खलु** निषेधवाक्यालङ्कारनिश्चयेषु। **किल** इवार्थे, वार्तायाम्, अलीके च। **अथ** अयं मङ्गलानन्तरारम्भप्रश्नकात्स्न्याधिकारप्रतिज्ञासमुच्चयेषु। अयं स्वरादावपि। तेन मङ्गलवाचकस्य सत्त्वार्थकत्वेऽप्यव्ययत्वम्। तथा च श्रीहर्षः—'यथाकुलाचारमथावनीन्द्रजां पुरन्ध्रिवर्गः स्नपयाम्बभूव ताम्।' इति। अथ स्नपयाम्बभूव इत्यस्य मङ्गलस्नानं कारयामासेत्यर्थः। निपातश्चायशब्दः। मृदङ्गादिध्वानवद् मङ्गलम्। **सुष्ठु** स्वरभेदार्थः पुनः पाठः। **स्म** अतीते, पादपूरणे च। **आदह** उपक्रमहिंसाकुत्सनेषु। **उपसर्गविभक्तिस्वरप्रतिरूपकाश्च**। चादिगणसूत्रमेतत्। उपसर्गप्रतिरूपकाः विभक्त्यन्तप्रतिरूपकाः अच्प्रतिरूपकाश्च चादिगणे पाठ्या इत्यर्थः। तत्रोपसर्गप्रतिरूपकमुदाहरति—**अवदत्तम् इति**। अत्र अवेत्युप-

---

चेदर्थे। णानुबन्धस्तु 'निपातैर्यदिहन्तकुविन्नेच्चेचण्—' इति विशेषणार्थः। समुच्चयादौ त्वननुबन्धकः। **कच्चिदितीष्टप्रश्ने**। **यत्रेति** अनवक्लृप्त्यमर्षगर्हाश्चर्येषु। नावकल्पयामि न मर्षये। गर्हे आश्चर्यं वा यत्र भवान् वृषलं याजयेत्। **नहेति** प्रत्यारम्भे। **हन्तेति** हर्षे विषादेऽनुकम्पायां वाक्यारम्भे च। **माकिः, माकिं, नकिरिति** त्रयोऽपि वर्जने। **माङ्नञौ** स्वरादिषूक्तौ। इह पाठस्तु निपातत्वार्थः, तेनाद्युदात्तत्वं फलं सिध्यतीति केचित्। तदसत्, फिट्स्वरेणापीष्टसिद्धेः। अन्ये त्वाहुः—सत्त्ववचनानामप्यव्ययसंज्ञार्थं स्वरादिपाठ इति। तदप्यसत्, लक्ष्मीवाचकस्यापि माशब्दस्याव्ययत्वापत्तेः। तस्मादुभयत्र पाठश्चिन्त्यप्रयोजनः। **यावत्तावदेतौ** साकल्यावधिमानावधारणेषु। साकल्ये—यावत्कार्यं तावत्कृतम्। अवधौ—यावद्गन्तव्यं तावत्तिष्ठ। माने—यावद्दत्तं तावद्भुक्तम्। अवधारणे—यावदमत्रं तावद्ब्राह्मणानामन्त्रयस्व। **त्वै** विशेषवितर्कयोः। **द्वै** वितर्के। **न्वै** इति पाठान्तरम्। **रै** दाने अनादरे च। रै करोति ददातीत्यर्थः। त्वं रै किं करिष्यसि। **श्रौषट्, वौषट्** एतौ हविर्दाने। **स्वाहा** देवताभ्यो दाने। **स्वधेति** पितृभ्यः। **श्रौषडादी**नामनेकार्थानामुभयत्र पाठः स्वरभेदार्थः। **तुमिति** तुंकारे। गुरुं तुंकृत्य हुंकृत्य। **तथाहीति** निदर्शने। **खलु** इति निषेधवाक्यालंकारनिश्चयेषु। **किलेति** वार्तायामलीके च। **अथो अथेति** मङ्गलानन्तरारम्भप्रश्नकात्स्न्याधिकारप्रतिज्ञासमुच्चयेषु। अयं स्वरादावपि। तेन मङ्गलवाचकस्य सत्त्वार्थत्वेऽप्यव्ययत्वं सिध्यति। अत एव श्रीहर्षः—'उदस्य कुम्भीरथ शातकुम्भजाश्चतुष्कचारुत्विषि वेदिकोदरे। यथाकुलाचारमथावनीन्द्रजां पुरन्ध्रिवर्गः स्नप-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अहंयुः। अस्तिक्षीरा। अ। आ। इ। ई। उ। ऊ। ए। ऐ। ओ। औ। पशु। शुकम्। यथाकथाच। पाट्। प्याट्। अङ्ग। है। हे। भोः। अये। द्य। विषु। एकपदे।

---

सर्गप्रतिरूपकम्, न तूपसर्गः। ततश्च 'अच उपसर्गात्तः' इति तो न भवति। तादेशे तु अवत्तमिति स्यात्। **अहंयुरिति**। अहमिति सुबन्तप्रतिरूपकम्, अहङ्कारे। 'अहं-शुभमोर्युस्' इति मत्वर्थीयो युस्। अत्र अहमिति न अस्मच्छब्दस्य प्रथमैकवचनम्, तथा सति 'प्रत्ययोत्तरपदयोश्च' इति मपर्यन्तस्य मदादेशे मद्युरित्यापत्तेः। **अस्तिक्षीरेति**। अस्ति क्षीरं यस्याः इति बहुव्रीहिः, अत्र अस्तीति तिङन्तप्रतिरूपकमव्ययम्, न तु तिङन्तम्। तथा सति बहुव्रीह्यनुपपत्तेः, 'अनेकमन्यपदार्थे' इति बहुव्रीहिविधौ सुबित्यनुवृत्तेः। एवं च बहुव्रीहिविधौ 'अस्तिक्षीरेत्युपसंख्यानम्' इति वार्तिकं न कर्तव्य-मिति 'अनेकमन्यपदार्थे' इति सूत्रे भाष्ये स्पष्टम्। स्वरप्रतिरूपकानुदाहरति—**अ इत्यादिना**। अ सम्बोधने। आ वाक्यस्मरणयोः। इ सम्बोधनजुगुप्साविस्मयेषु। ई, उ, ऊ, ए, ऐ, ओ, औ, इति सप्तकं सम्बोधने। **पशु** सम्यगर्थे। **शुकम्** शैघ्र्ये। **यथाकथाच** सङ्घातोऽयमनादरे। **पाट्, प्याट्, अङ्ग, है, हे, भोः, अये** एते सप्त सम्बोधने। **द्य** हिंसाप्रतिलोम्यपादपूरणेषु। **विषु** नानार्थे। **एकपदे**

---

यांबभूव ताम्' इति। अत्र हि अथ स्नपयांबभूवेत्यस्य मङ्गलस्नपनं चकारेत्यर्थः। निपातस्तु स्वरूपेणैव मङ्गलं मृदङ्गध्वनिवत्। **सुष्ठु** स्वरभेदार्थं पाठः। **स्मे**त्यतीते पादपूरणे च **आदहे**त्युपक्रमहिंसाकुत्सनेषु। 'आदह स्वधामन्वि' त्यत्र तु पदकारा आदिति पृथक् पदं पठन्ति। **अवदत्त**मिति। इह अवस्यानुपसर्गत्वात् 'अच उप-सर्गात्तः' इति न भवति। **अह**मिति सुबन्तप्रतिरूपकमंहकारे। एवं 'गेये केन विनीतौ वाम्' इति। युवामित्यर्थः। सुबन्तप्रतिरूपकमव्ययम्। **अस्ती**ति तु तिङन्तप्रतिरूप-कम्। एवं 'त्वामस्मि वच्मि—' इत्यत्रास्मीत्यहमर्थे तिङन्तप्रतिरूपकम्। **आहे**त्युवाचे-त्यर्थे। **आसे**ति बभूवेत्यर्थे। इत्यादि बोध्यम्। **अहंयुरिति**। 'अहंशुभमोर्युस्'। यदि तु 'त्वाहौ सौ' इति मपर्यन्तस्याहादेशे शेषलोपे च कृते निष्पन्नो योऽहंशब्दस-स्माद्युस्प्रत्ययः क्रियेत तर्हि सुपो लुपि अस्माद्युसिति स्थिते मदीय इत्यत्रेव मपर्यन्तस्य मादेशे सति मद्युरिति स्यादिति भावः। **अस्तिक्षीरेति**। तिङन्तत्वे तु बहुव्रीहि-समासोऽयं नोपपद्यत इति भावः। अ इति संबोधनेऽधिक्षेपे निषेधे च। **आ** इति वाक्यस्मरणयोः। **इ** संबोधनजुगुप्साविस्मयेषु। **ई उ ऊ ए ऐ ओ औ** संबोधने। **पशु** सम्यगर्थे। 'पशु मन्यमानाः'। **शुकं** शैघ्र्ये। **यथाकथाचे**त्यनादरे। **पाट्**-प्रभृतयः सप्त संबोधने। **द्ये**ति हिंसाप्रातिलोम्यपादपूरणेषु। **विषु** नानार्थे। **एकपदे**

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

युत् । आतः । चादिरप्याकृतिगणः ॥ इति चादयः ॥ ४४८ तद्धितश्चासर्वविभक्तिः । (१-१-३८) यस्मात्सर्वा विभक्तिर्नोत्पद्यते स तद्धितान्तोऽव्ययं स्यात् । परिगणनं

---

अकस्मादित्यर्थे । **युत्** कुत्सायाम् । **आत** इतोऽर्थे । **चादिरप्याकृतिगण इति** । **यत् तत्** द्वयं हेतौ । **आहोस्वित्** विकल्पे । **सम्** सर्वतोभावे । **कम्** पादपूरणे । **सुकम्** अतिशये । **अनु** वितर्के । **शम्वत्** अन्तःकरणे, आभिमुख्ये च । **व** पादपूरणे इवार्थे च । **चटु, चाटु** द्वयं प्रियवाक्ये । **हुम्** भर्त्सने । **इव** सादृश्ये । **अद्यत्वे** इदानीमित्यर्थे—इत्यादि । अत्र स्वरादिचाद्योराकृतिगणत्वेऽपि येषां निपातस्वरः इष्टः ते चादिषु, अन्ये तु स्वरादिषु, स्वरद्वयभाजस्तु उभयत्र बोध्याः ॥ इति चादयः ॥

अथ स्वरादिचादिभिन्नान्यव्ययान्याह—**तद्धितश्चासर्वविभक्तिः** । असर्वविभक्तिरिति बहुव्रीहिः । तत्र सर्वाः विभक्तयः यस्मान्न भवन्तीति बहुवचनान्तविग्रहो न संभवति, अव्ययेभ्यः सप्तानां विभक्तीनामुत्पत्त्यभ्युपगमात् । तथा हि 'तद्धितश्च' इति प्रकृतसूत्रे भाष्ये तावद् 'द्व्येकयोर्द्विवचनैकवचने' 'बहुषु बहुवचनम्' इति सूत्रविन्यासं भङ्क्त्वा 'एकवचनम्, द्वयोर्द्विवचनम्, बहुषु बहुवचनम्' इति सूत्रन्यासं कृत्वा एकवचनमुत्सर्गतः करिष्यते, द्विबह्वोरर्थयोः तस्य द्विवचनबहुवचने बाधके इत्यादि स्थितम् । ततश्च एकवचनमित्यनेन ङ्याप्प्रातिपदिकाद् एकवचनं भवतीति सामान्यविधिना द्वित्वबहुत्वाभावे एकवचनमिति लभ्यते । एवं च द्विबहुत्वाभावे सति एकत्वे तदभावे च एकवचनमिति फलति । तत्र द्वित्वबहुत्वयोः द्विवचनबहुवचनोक्त्यैव ततोऽन्यत्र एकवचनस्य सिद्धत्वाद् 'एकवचनम्' इति सूत्रं कर्मत्वाद्यभावेऽपि प्रापणार्थं संपद्यते । तथा च अलिङ्गसंख्येभ्योऽव्ययेभ्य एकवचनं प्रवर्तमानं विनिगमनाविरहात् सर्वविभक्त्येकवचनं भवति। अत एव 'अव्ययादाप्सुपः' इत्यत्र प्रत्याहारग्रहणमर्थवत् । तस्मात्सर्वा विभक्तयो यस्मादिति न विग्रहः । किन्तु सर्वशब्दोऽत्र सर्वः पटो दग्ध इतिवद् अवयवकार्त्स्न्ये वर्तते, एवं च सर्वा वचनत्रयात्मिका विभक्तिः यस्मान्नोत्पद्येत, किन्त्वेकवचनान्येवोत्पद्यन्ते, स तद्धितान्तोऽव्ययसंज्ञः स्यादिति फलतीत्यभिप्रेत्याह—**यस्मादिति** । **सर्वेति** । वचनत्रयात्मिकेत्यर्थः । **नोत्पद्यत इति** । किन्त्वेक-

---

इत्यकस्मादित्यर्थे । **युत्** कुत्सायाम् । **आत** इति इतोऽपीत्यर्थे । **आकृतिगण इति** । तद्यथा । **यत्तदिति** हेतौ । **आहोस्विद्विकल्पे** । **सीम** सर्वतोभावे । **शुकमतिशये** । **अनुकं** वितर्के । **शम्बद्** अन्तःकरणे आभिमुख्ये च । **व** पादपूरणे इवार्थे च । **दिष्ट्येत्यानन्दे** । **चटु चाटु** प्रियवाक्ये । **हुमिति** भर्त्सने । **इवेति** सादृश्ये । **अद्यत्वे** इति इदानीमित्यर्थे इत्यादि । अत्र स्वरादिचाद्योराकृतिगणत्वाविशेषेऽपि येषां निपातस्वर इष्टस्ते चादिषु अन्ये तु स्वरादिषु स्वरद्वयभाजस्तूभयत्र बोध्याः । तद्धि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कर्तव्यम्—तसिलादयः प्राक्पाशपः, शस्प्रभृतयः प्राक्समासान्तेभ्यः, अम्, आम्, कृत्वोऽर्थाः, तसिवती, नानाञाविति। तेनेह न—पचतिकल्पम्। पचतिरूपम्।
४४९ कृन्मेजन्तः। (१-१-३९) कृद्यो मान्त एजन्तश्च तदन्तमव्ययं स्यात्।

---

वचनान्येवोत्पद्यन्ते इति शेषः। स्यादेतत्—तिङश्चेत्यनुवृत्तौ 'प्रशंसायां रूपप्' इति रूपप्प्रत्यये 'ईषदसमाप्तौ कल्पप्' इति कल्पप्प्रत्यये च पचतिरूपं पचतिकल्पमिति रूपम्। प्रशस्तं पचति, ईषत् पचतीत्यर्थः। अत्राप्यव्ययत्वं स्यात्, असर्वविभक्तितद्धितान्तत्वात्। किञ्च उभयशब्दे अतिव्याप्तिः, तस्याप्यसर्वविभक्तितद्धितान्तत्वादित्यत आह—**परिगणनमिति**। वार्तिकमेतत्। **तसिलादय इति**। 'पञ्चम्यास्तसिल्' इत्यारभ्य 'द्वित्र्योश्च धमुञ्' इत्यन्ता इत्यर्थः। **शस्प्रभृतय इति**। 'बह्वल्पार्थात्' इत्यारभ्य 'अव्यक्तानुकरणात्' इति डाजन्ता इत्यर्थः। **अम्, आमिति**। 'अमु च च्छन्दसि' इत्यम्, 'किमेत्तिङव्यय—' इत्याम् च गृह्यते। **कृत्वोऽर्था इति**। 'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्, द्वित्रिचतुर्भ्यः सुच्, विभाषा बहोर्धा' इति त्रय इत्यर्थः। **तसिवती इति**। 'तेनैकदिक्, तसिश्च' इति तसिः 'तेन तुल्यम्—' इत्यादिविहितो वतिश्च गृह्यते। 'प्रतियोगे पञ्चम्यास्तसिः' इत्यस्य तु शस्प्रभृतित्वादेव सिद्धम्। एवं च स्वरादिषु वदित्यस्य प्रयोजनं चिन्त्यम्। **नानाञाविति**। 'विनञ्भ्यां नानाञौ न सह' इति विहितौ नानाञौ—इति परिगणनं कर्तव्यमित्यन्वयः। गणे परिगणनेनैव सिद्धेः 'तद्धितश्च—' इति सूत्रं न कर्तव्यमिति भावः। **कृन्मेजन्तः**। कृत् मेजन्त इति छेदः।

---

तच्चासर्वविभक्तिः। **सर्वेति**। वचनत्रयात्मिकेत्यर्थः। **नोत्पद्यत इति**। किं त्वेकवचनमेवोत्पद्यत इति भावः। तद्धितः किम्, एकः। द्वौ। त्रयः। असर्वेत्यादि किम्, औपगवः। ननु पञ्चालाः गोदौ वरणा इत्यादावतिप्रसङ्गः। न च 'लुब्योगाप्रत्याख्यानात्' इति वदतां नैषां तद्धितान्तत्वमङ्गीकृतमिति नातिप्रसङ्ग इति वाच्यम्। एवमपि पचतिकल्पं पचतिरूपमित्यादावतिव्याप्तेर्दुर्वारत्वादित्याशङ्कयाह—**परिगणनं कर्तव्यम्**। **तसिलादय इति**। 'पञ्चम्यास्तसिल्' इति विहितो यस्तसिल् तदादयो 'याप्ये पाशप्' इति विहितपाशप्प्रत्ययपर्यन्ता इत्यर्थः। **शस्प्रभृतय इति**। 'बह्वल्पार्थात्—' इति विहितो यः शस्तदादयः 'समासान्ताः' इति सूत्रपर्यन्ताः। **कृत्वोर्था इति**। 'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' इति विहिताः कृत्वसुजादयस्त्रयः। **तसिवती इति**। न च तसेः परिगणनं व्यर्थम्, शस्प्रभृतित्वादेव 'प्रतियोगे पञ्चम्यास्तसिः' इत्यस्य लाभादिति वाच्यम्। 'तेनैकदिक्' 'तसिश्च' इत्येतदर्थतया तस्यावश्यकत्वात्। 'तेन तुल्यम्—' इति वतिः। **नानाञाविति**। 'विनञ्भ्यां नानाञौ नसह' इति विहितौ। **पचतिकल्पमिति**। अव्ययसंज्ञायां हि सत्यां सुपो लुक् स्यादिति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्मारं स्मारम् । जीवसे । पिबध्यै । ४५० क्त्वातोसुन्कसुनः । (१-१-४०) एतदन्तमव्ययं स्यात् । कृत्वा । उदेतोः । विसृपः । ४५१ अव्ययीभावश्च ।

---

म् च एच् मेचौ, तौ अन्ते यस्येति बहुव्रीहिः । तदाह—**कृद्यो मान्त इति** । **तदन्तमिति** । केवलस्य कृतः प्रयोगानर्हत्वात् संज्ञाविधावपि तदन्तविधिरिति भावः । **स्मारं स्मारमिति** । 'आभीक्ष्ण्ये णमुल् च' इति स्मृधातोर्णमुल्,'अचो ञ्णिति' इति वृद्धिः, रपरत्वम् , 'नित्यवीप्सयोः' इति द्वित्वम् , मान्तकृदन्तत्वादव्ययत्वम् । **जीवसे इति** । 'तुमर्थे सेसेनसे–' इत्यादिना असेप्रत्ययः । **पिबध्यै इति** । 'तुमर्थे से–' इत्यादिना शध्यैप्रत्ययः, शित्त्वात् सार्वधातुकत्वम् , 'पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदाम्–' इति पिबादेश इति भावः । शप् तु न, कर्त्रर्थे सार्वधातुके तद्विधेः, 'अव्ययकृतो भावे' इति सिद्धान्तादित्याहुः । **क्त्वातोसुन्कसुनः** । **कृत्वेति** । 'समानकर्तृकयोः' इति क्त्वा । **उदेतोरिति** । उत्पूर्वादिणः 'भावलक्षणे–' इत्यादिना तोसुन् । **विसृप इति** । 'सृपितृदोः कसुन्' । **अव्ययीभावश्च** । अव्ययसंज्ञः स्या-

---

भावः । **कृन्मेजन्तः** । अत्र मेजन्त इत्येतच्छ्रुतत्वात् कृत एव विशेषणं न तु कृदन्तस्याश्रुतस्य । अन्यथा प्रतामौ प्रतामः । लवमाचष्टे णौ क्विपि णिलोपे वस्योठि वृद्धौ च लौः । अत्रापि प्रसज्येतेति भावः । भवति ह्येतत्प्रत्ययलक्षणेन कृदन्तं मेजन्तं च श्रूयते इति, तदाह—**कृद्यो मान्त एजन्त इति** । **स्मारंस्मारमिति** । स्मरतेः 'आभीक्ष्ण्ये णमुल् च' इति णमुल् , वृद्धिः , रपरत्वम् । 'नित्यवीप्सयोः' इति द्वित्वम् । **जीवसे इति** । 'तुमर्थेसेसेन–' इत्यसेप्रत्ययः । **पिबध्यै इति** । 'तुमर्थे–' इत्यनेनैव शध्यैप्रत्ययः । 'पाघ्रा–' इति पिबादेशः । 'येन विधिस्तदन्तस्य' इत्यनेनैव सिद्धे सूत्रे अन्तग्रहणमौपदेशिकप्रतिपत्त्यर्थम्, तेनेह न, आधये, चिकीर्षवे । लक्षणप्रतिपदोक्तसंनिपातपरिभाषाभ्यां सिद्धे तयोरनित्यत्वज्ञापनायेदमिति मनोरमायां स्थितम् । एतच्च 'अव्ययादाप्सुपः' इत्यत्र 'अव्ययात्परस्य सुपो लुक्' इति यथाश्रुतव्याख्यानमभिप्रेत्योक्तम् । अव्ययाद्विहितस्येति व्याख्याने त्वाधये इत्यादौ अव्ययसंज्ञायामनिष्टान्तरमूह्यम् । **क्त्वातोऽसुन्कसुनः** । **कृत्वेति** । 'समानकर्तृकयोः–' इत्यादिना क्त्वा । **उदेतोरिति** । उत्पूर्वादिणो 'भावलक्षणे स्थेण्–' इत्यादिना तोसुन् । **विसृप इति** । 'सृपितृदोः कसुन्' । **अव्ययीभावश्च** । अव्ययसंज्ञः स्यात् । इह लुकि मुखस्वरोपचारयोर्निवृत्तौ चेति परिगणनं कर्तव्यम् । लुक्युदाहरणम्—उपाग्नि । 'अव्ययाद्–' इति सुपो लुक् । मुखस्वरनिवृत्तौ उदाहरणम्—उपाग्निमुखः, प्रत्यग्निमुखः । 'मुखं स्वाङ्गम्' इत्युत्तरपदान्तोदात्तत्वे प्राप्ते 'नाव्ययदिक्शब्द–' इत्यादिना प्रतिषेधः । तथा च 'बहुव्रीहौ प्रकृत्या–' इति पूर्वशब्दप्रकृतिस्वर एव भवति, पूर्वपदं च समास-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

( १-१-४१ ) अधिहरि । ४५२ अव्ययादाप्सुपः । ( २-४-८२ ) अव्यया-द्विहितस्यापः सुपश्च लुक् स्यात् । तत्र शालायाम् । विहितविशेषणान्नेह—अत्यु-च्चैसौ । अव्ययसंज्ञायां यद्यपि तदन्तविधिरस्ति, तथापि न गौणे । 'आग्रहणा

---

दिति शेषः । **अधिहरीति** । विभक्त्यर्थेऽव्ययीभावः, हरावित्यर्थः । **अव्ययादा-प्सुपः** । आप् च सुप् च आप्सुप्, तस्य आप्सुपः, समाहारद्वन्द्वात् षष्ठी । 'ण्यक्षत्रि-यार्ष-' इत्यतो लुगित्यनुवर्तते । तदाह—**अव्ययाद्विहितस्येति** । **तत्र शालाया-मिति** । तत्रेत्यस्याव्ययत्वाद् आपो लुक् । स्त्रीत्वबोधनाय शालायामिति । **अत्रेति** । अत्र सुपो लुक् । **विहितेति** । अव्ययात्परस्येत्यनुक्त्वा अव्ययाद्विहितस्येति व्या-ख्यानादिति भावः । **अत्युच्चैसाविति** । उच्चैरतिक्रान्त इति विग्रहे 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति समासः । अधिकरणशक्तिप्रधानान्यव्ययानि वृत्तिविषये शक्ति-मत्प्रधानानि भवन्ति, यथा दोषामन्यमहः, दिवाभूता रात्रिरिति । अतो द्वितीयासम्भ-वाद् 'अत्यादयः-' इति द्वितीयासमासस्याविरोधः । अत्र समासाद्विहितस्य सुपः अव्य-यभूतादुच्चैश्शब्दात् परत्वेऽपि ततो विहितत्वाभावाद् न लुक् । अत्युच्चैरिति समुदा-यस्य तु नाव्ययत्वम्, स्वरादिगणे उच्चैश्शब्दस्य केवलस्य पाठादिति भावः । ननु स्वरा-दिगणे केवलोच्चैश्शब्दस्य पाठेऽपि 'स्वरादिनिपातमव्ययम्' इति अव्ययसंज्ञा भवत्येव, 'प्रयोजनं सर्वनामाव्ययसंज्ञायाम्' इति वचनादित्याशङ्कते—**अव्ययसंज्ञायां यद्यपि तदन्तविधिरस्तीति** । परिहरति—**तथापि न गौण इति** । सर्वनामसंज्ञाया-

---

स्वरेणान्तोदात्तम् । विसर्गस्थानिकस्य सकारस्य उपचार इति प्राचां संज्ञा तन्निवृत्ता-वुदाहरणम् । उपपयःकारः । उपपयःकामः । इह 'अतः कृकमि-' इति प्राप्तं सत्वम् 'अनव्ययस्य' इति पर्युदस्यते । परिगणनं किम्, उपाग्न्यधीयान । इह 'सुबामन्त्रिते' इति पराङ्गवद्भावेन षाष्ठम् 'आमन्त्रितस्य च' इत्याद्युदात्तत्वं यथा स्यात् । पराङ्गवद्भावे हि अव्ययानां प्रतिषेध उपसंख्यातः, उपाग्न्यधीयानेत्यादौ मा भूदिति । तथा उपाभि-कमित्यादौ 'अव्ययसर्वनाम्नाम्-' इत्यकच्च न । उपकुम्भंमन्यः । 'खित्यनव्ययस्य' इति वर्तमाने 'अरुर्द्विषदजन्तस्य-' इति विहितो यो मुम् तस्येह प्रतिषेधो न । उपकुम्भी-भूतः । इह 'अस्य च्वौ' इतीत्वस्य प्रतिषेधो न । इत्वविधौ हि 'अव्ययस्य च्वावि-तीत्वं न' इति प्रतिषेध उच्यते दोषाभूतमहः, दिवाभूता रात्रिरित्यत्र मा भूदिति । स्यादेतत्, स्वरादित्वेनैव सिद्धत्वात् 'तद्धितश्च-' इत्यादि चतुःसूत्री व्यर्था । तत्र हि 'तसिलादिस्तद्धित एधाच्पर्यन्तः' इत्यादिना 'च्व्यर्थाश्च' इत्यन्तेनासिप्रत्ययमौणादिकं वर्जयित्वा 'तद्धितश्चासर्वविभक्तिः' इत्यस्यार्थः संगृह्यते । 'कृन्मकारसंध्यक्षरान्तः' इत्य-नेन 'कृन्मेजन्तः' इत्यस्यार्थः संगृह्यते । 'क्त्वातोसुन्कसुनः' 'अव्ययीभावश्च' इति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

व्यर्थमलिङ्गत्वात्' (वा १६३३)।

'सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥'

---

सुपसर्जनस्य नेति प्रकृतः प्रतिषेधः अव्ययसंज्ञाविधावनुवर्तत इति 'तद्धितश्चासर्वविभक्तिः' इति सूत्रे भाष्ये स्पष्टमिति भावः । **आब्ग्रहणं व्यर्थमिति** । 'अव्ययादाप्सुपः' इति सूत्रे इति शेषः । **अलिङ्गत्वादिति** । अव्ययानां लिङ्गाभावादित्यर्थः । तथा च वार्तिकम्, 'अव्ययादाब्लुग्वचनानर्थक्यं लिङ्गाभावात्' इति । तथा 'तद्धितश्चासर्वविभक्तिः' इति सूत्रे भाष्येऽप्युक्तम्—स्त्रीपुंनपुंसकत्वानि सत्त्वगुणाः, एकत्वद्वित्वबहुत्वानि च । एतानर्थान् ये न वियन्ति तदव्ययमिति । ननु अव्ययानां लिङ्गाभावे 'सदृशं त्रिषु लिङ्गेषु–' इत्याथर्वणश्रुतिविरोध इत्याशङ्क्य परिहरति—**सदृशमिति** । त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु सर्वेषु वचनेषु च यद् न व्येति–विकारं न प्राप्नोति, किन्तु सदृशम् एकप्रकारमेव भवति, तदव्ययमिति आथर्वणश्रुतियोजना । अत्र विभक्ति-

---

सूत्रद्वयं तु स्वरूपेणैव पठ्यत इति अत्राहुः—पुनर्वचनमनित्यत्वज्ञापनार्थम् । तेन प्रागुक्तं 'लुङ्मुखस्वरोपचाराः' इति परिगणनं लभ्यते । 'पुरा सूर्यस्योदेतोराधेयः' । 'पुरा क्रूरस्य विसृपो विरप्शिम्' इत्यादिसिद्धये, 'न लोकाव्यय–' इत्यत्र 'अव्ययप्रतिषेधे' तोसुन्कसुनोरप्रतिषेध इति वक्ष्यते तदप्यनेनैव लभ्यत इति । **अव्ययादाप्सुपः** । 'ण्यक्षत्रियार्ष–' इति सूत्राल्लुगत्रानुवर्तत इत्याह—**लुक् स्यादिति** । अव्ययमिति महासंज्ञाकरणमन्वर्थसंज्ञाविधानार्थम् । न व्येति विविधं विकारं न गच्छति । सत्त्वधर्मान् लिङ्गसंख्यादीन गृह्णातीति यावत् । तेनात्युच्चैसौ अत्युच्चैसः इत्यादिसिद्धिः । अतिक्रान्तप्रधानत्वेन सत्त्वधर्मपरिग्रहादव्ययसंज्ञाया अत्राभावात् । नन्वेवमप्युच्चैःशब्दस्याव्ययत्वानपायात् सुपो लुक् दुर्वार इत्यत आह—**विहितविशेषणादिति** । **अत्युच्चैसाविति** । ननु अत्यादयः क्रान्ताद्यर्थे द्वितीयान्तेन समस्यन्ते, उच्चैःशब्दस्त्वधिकरणशक्तिमत्प्रधान इति कर्मत्वायोगान्न तस्य द्वितीयान्तता । सत्यम्, शक्तिप्रधानान्यपि कानिचिदव्ययानि वृत्तिविषये शक्तिमत्प्रधानानि क्वचिद् भवन्ति । यथा दोषामन्यमहः । दिवामन्या रात्रिरिति । ततश्च प्रक्रियादशायामुच्चैःशब्दस्य द्वितीयान्तत्वं संभवतीति दिक् । ननु स्वरादिषु उच्चैःशब्दः पठ्यते तत्र कथं तदन्तस्य प्रसङ्ग इति चेन्न । अन्वर्थसंज्ञयैव तदन्तविधेरपि ज्ञापनात् । अन्यथा उपसर्जने प्रसङ्गाभावेन तन्निवृत्त्यर्थाया अन्वर्थसंज्ञाया वैयर्थ्यापत्तेः । तेन परमस्वः परमोच्चैरित्यादौ सत्त्वधर्मापरिग्रहादव्ययत्वं सिद्धम्, तदेतदाह—**अव्ययसंज्ञायां यद्यपीत्यादि** । 'अव्ययादापो लुग्वचनानर्थक्यं लिङ्गाभावात्' इति वार्तिकं मनसि निधायाह—**आब्ग्रहणं व्यर्थमिति** । सूत्रस्योक्तिसंभ-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति [ भाष्योक्ता ] श्रुतिर्लिङ्गकारकसंख्याभावपरा ॥

'वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः ।
आपं चैव हलन्तानां यथा वाचा निशा दिशा ॥'

वगाहः—अवगाहः । पिधानम्—अपिधानम् ॥

इत्यव्ययप्रकरणम् ।

---

वचनशब्दौ कारकसंख्यापरौ, न तु प्रत्ययपरौ, अन्यतरग्रहणवैयर्थ्यात् । **लिङ्गकारकेति** । लिङ्गकारकसंख्याभावः परः तात्पर्यविषयभूतो यस्या इति विग्रहः । लिङ्गेष्वित्यादिषु सप्तमी हि 'षष्ठी चानादरे' इति विहिता । तथा च लिङ्गकारकसंख्याः अनादृत्य यन्न व्येति—विकारं न प्राप्नोति, किन्तु सदृशम्—एकप्रकारमेव भवति, तदव्ययमित्युदाहृतश्रुतेरर्थः । 'तद्धितश्चासर्वविभक्तिः' इति सूत्रभाष्ये 'स्त्रीपुंनपुंसकत्वानि सत्त्वगुणाः, एकत्वद्वित्वबहुत्वानि च । एतानर्थान् ये न वियन्ति तदव्ययम्' इत्युपक्रम्य तत्र प्रमाणतया अस्याः श्रुतेरुदाहृतत्वादिति भावः । अयं च लिङ्गकारकसंख्याभावनियमो निपातानामेव, स्वरादीनां तु कतिपयानां लिङ्गकारकसंख्यान्वयोऽस्त्येव 'स्वरादिनिपातमव्ययम्' इति सूत्रे भाष्ये 'चादीनामसत्त्ववचनानामेव संज्ञा । स्वरादीनां तु सत्त्ववचनानामसत्त्ववचनानां च' इत्युक्तत्वात्, स्वस्ति वाचयति, स्वस्ति वाच्य इति, क्षीणे पुण्ये स्वः पतति, प्रातर्यजते इत्यादौ कर्मकारकयोगदर्शनाच्च । अथ प्रसङ्गादाह—**वष्टीति** । अव अपि इत्युपसर्गयोः अकारस्य लोपं हलन्तानाम् आपं च भागुरिनामक आचार्यो वष्टि, इच्छतीत्यर्थः । एवशब्दस्तु पादपूरणः । अवेत्युपसर्गे आदेरेवाकारस्य लोपो नान्त्यस्य, अपिना साहचर्यात् । भागुरिशब्दं दन्त्योष्ठ्यादिं केचित्पठन्ति । तत्त्वबोधिन्यां तु पवर्गचतुर्थादिः पठितः । शब्देन्दुशेखरेऽप्येवम् । **यथा वाचेति** । परिगणनमिति केचित् । उदाहरणमात्रमित्यन्ये । यद्यपि 'वश कान्तौ' इत्यस्य छन्दोमात्रविषयत्वं वक्ष्यते, तथापि

---

वस्तु 'स्त्रियाम्' इति सूत्रे स्त्रीसमानाधिकरणादिति पक्षं गृहीत्वेति बोध्यः । स च न स्थितः, भूतमियं ब्राह्मणीत्यादावतिव्याप्तेः । यदि तु 'आमः' इति सूत्रानन्तरं 'सुपो धातुप्रातिपदिकयोः अव्ययात्' इति सूत्र्यते तदा सुब्ग्रहणमपि व्यर्थम्, सुप इत्यनुवृत्तिसंभवादिति नव्याः । अलिङ्गत्वे आथर्वणप्रणवविद्यागतश्रुतिविरोधमाशङ्क्याह—**सदृशमिति** । एतेषु यन्न व्येति किन्तु सदृशम् एकप्रकारं तदव्ययमिति योजना । यद्वा, यस्मान्न व्येति तदव्ययम् । **लिङ्गसंख्याकारकेति** । विभक्तिवचनशब्दौ कारकसंख्यापराविति भावः । यद्यप्यव्ययीभावस्य लिङ्गसंख्याकारकयोगोऽस्ति तथापि वचनादव्ययत्वम् । अव्ययविशेषे कार्यान्तरमाह—**वष्टीति** । भागुरिराचार्यः । **आपं चैवेति** । वष्टीत्यनुषज्यते । **यथा वाचेति** । परिगणनमिदमित्येके । अन्ये तूदाह-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# अथ स्त्रीप्रत्ययप्रकरणम् ।१५।

**४५३ स्त्रियाम्।** (४-१-३) अधिकारोऽयम्। समर्थानामिति यावत्।

---

अस्मादेव लिङ्गाल्लोकेऽपीत्याहुः। वस्तुतस्तु वष्टि भागुरिरिति श्लोको भाष्ये न दृश्यते। प्रत्युत 'ङ्याप्प्रातिपदिकात्' इति सूत्रस्थभाष्यपर्यालोचनया नास्तीत्येव युक्तम्। तत्र ह्येवमुक्तम्—आब्ग्रहणं न कार्यम्, खट्वा मालेत्यादौ अन्तवत्त्वेन प्रातिपदिकत्वादेव सिद्धम् इत्युक्त्वा, क्रुध्वा उष्णिहा देवविशेति हलन्तात् टापः स्वार्थमाब्ग्रहणमस्त्विति आक्षिप्य 'क्रुञ्चानालभेत उष्णिहककुभौ देवविशं च' इति अकारान्तादेव तत्रापि टाबित्युक्त्वा 'डाबुभाभ्यामन्यतरस्याम्' इति बहुराजा, बहुराजे, बहुराजाः इत्यर्थम् आब्ग्रहणमिति समाहितम्। तस्मात् 'आपं चैव हलन्तानाम्' इत्याश्रित्य वाचा निशा दिशेत्ययुक्तम्। अत्र निश्दिशोरिगुपधलक्षणे के अदन्तत्वाट्टापि निशा इत्यादिरूपसंभवेऽपि वाचाशब्दः असाधुरेवेति शब्देन्दुशेखरे स्थितम्।

इति श्रीवासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां-
बालमनोरमाख्यायाम् अव्ययनिरूपणं समाप्तम्।

**अथ स्त्रीप्रत्यया निरूप्यन्ते।** तदेवम् 'ङ्याप्प्रातिपदिकात्' इत्यधिकृत्य 'स्वौजसमौट्–' इति सूत्रं सप्रपञ्चं निरूप्य तदुत्तरमनुक्रान्तान् स्त्रीप्रत्ययान्निरूपयितुमाह—**स्त्रियाम्। अधिकारोऽयमिति।** 'अजाद्यतष्टाप्' इत्याद्युत्तरसूत्रेष्वनुवृत्त्यर्थमिदं सूत्रम्, न तु स्वतन्त्रविधिरित्यर्थः। कियत्पर्यन्तमयमधिकार इत्यत आह—**समर्थेति।** यावदित्यवधौ। 'समर्थानां प्रथमात्–' इत्यतः प्रागित्यर्थः। अत्रेदमवधेयम्—

'स्तनकेशवती स्त्री स्याल्लोमशः पुरुषः स्मृतः।
उभयोरन्तरं यच्च तदभावे नपुंसकम्॥'

इति लक्षणलक्षितम् अवयवसंस्थानविशेषात्मकं लौकिकं स्त्रीपुंसयोर्लिङ्गम्। तदभावे तयोरुभयोरभावे सति यदुभयोरन्तरं सदृशं तन्नपुंसकमित्यर्थः। तदिदं लौकिकं लिङ्गमस्मिन् शास्त्रे नोपयुज्यते, तस्य अचेतने खट्वामालादौ बाधात् स्त्रीप्रत्ययानापत्तेः, दारानित्यादौ 'तस्माच्छसो नः पुंसि' इति नत्वानापत्तेश्च। किं तु सत्त्वरजस्तमसां प्राकृतगुणानां वृद्धिः पुंस्त्वम्, अपचयः स्त्रीत्वम्, स्थितिमात्रं नपुंसकत्वम्। अत एव उत्कर्षापकर्षसत्त्वेऽपि स्थितिमात्रमादाय 'सामान्ये नपुंसकम्' इति प्रवादः। उत्कर्षापकर्षसाम्यात्मकावस्थात्रयसाधारणस्थितिमात्रविवक्षायां नपुंसकं भवतीति तदर्थः। ईदृश-

---

रणमात्रमित्याहुः। **चगाह इति।** अपिना साहचर्यादादिरेवाकारो लुप्यते नान्त्य इति भावः॥ इति तत्त्वबोधिन्यामव्ययप्रकरणम्॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मवस्थात्रयं केवलान्वयि, अयं पदार्थः, इयं व्यक्तिः, इदं वस्तु—इति व्यवहारस्य सार्वत्रिकत्वात्। तच्चेदं लिङ्गमर्थनिष्ठमेव। तदुक्तं भाष्ये—'एकार्थे शब्दान्यत्वाद् दृष्टं लिङ्गान्यत्वमवयवान्यत्वाच्च' इति। एकस्मिन्नेवार्थे पुष्यः, तारका, नक्षत्रम् इति शब्दनानात्वदर्शनात्,कुटीकुटीरादौ रेफाद्यवयवोपजनने लिङ्गभेददर्शनाच्च स्तनकेशाद्यतिरिक्तमेव लिङ्गमित्यर्थ इति कैयटः। पुंल्लिङ्गः शब्द इत्यादिव्यवहारस्तु वाच्यवाचकयोरभेदोपचाराद्बोध्यः। न च उपचयादिधर्माणां विरुद्धत्वादेकत्र समावेशायोगादेकस्य द्वित्रिलिङ्गताऽनापत्तिरिति वाच्यम्, एकैकस्मिन् वस्तुनि क्षणभेदेन त्रयाणां धर्माणामपि समावेशोपपत्तेः। उक्तं च भाष्ये—'कश्चिदपि सत्त्वादिधर्मः क्वचिन्मुहूर्तमपि नावतिष्ठते, यावदनेन वर्धितव्यमपायेन वा युज्यते' इति। न चैवं सति युगपद् द्वित्रिलिङ्गत्वानापत्तिरिति वाच्यम्, न हि व्यवहारे स्वसमकालिकपदार्थसत्ता प्रयोजिका, तथा सति भूतभविष्यद्व्यवहारोच्छेदापातात्। तत्र कश्चिच्छब्दः एकलिङ्गविशिष्ट एवार्थे प्रयोज्यः, कश्चित्तु द्विलिङ्गे, कश्चित्तु त्रिलिङ्गे इत्येतत्तु लिङ्गानुशासनशास्त्रादवगन्तव्यम्। एषां पुंस्त्रीनपुंसकशब्दानां वृद्ध्यादिशब्दवदस्मिन् शास्त्रे संकेतश्च लिङ्गानुशासनत एव ज्ञेयः। उक्तं च भाष्ये 'अवश्यं तावत् कश्चित् स्वकृतान्त आस्थेयः' इति, वैयाकरणसिद्धान्त इत्यर्थः। 'कृतान्तौ यमसिद्धान्तौ' इत्यमरः। तत्र टिघुभादिसंज्ञावल्लघुसंज्ञामकृत्वा महासंज्ञाकरणसामर्थ्यात् सति संभवे स्तनकेशवतीत्यादिलौकिकं लिङ्गमप्यत्राश्रीयते। अन्यथा 'पशुना यजेत' इत्यत्र स्त्रीव्यक्तावपि सत्त्वाद्युपचयात्मकपुंस्त्वाद्यनपायाद् 'आङो नाऽस्त्रियाम्' इति नाभावस्याविरोधात् स्त्रीपशुरप्यालभ्येत। तदेतच्चतुर्थस्य प्रथमपादे 'तथालिङ्गम्' इत्यधिकरणे अध्वरमीमांसाकुतूहलवृत्ताववोचाम। त्रिविधमपि एतल्लिङ्गं जातिव्यक्तिवत् प्रातिपदिकार्थ एव। प्रत्ययार्थत्वे प्राधान्यापत्तौ अजा, खट्वा इत्यादौ स्त्रीत्वविशिष्टतादात्म्यावच्छिन्नाजादिबोधोऽनुभवसिद्धो विरुध्येत। किं च मातृदुहितृस्वसृगवादिशब्देषु विनापि टाबादिप्रत्ययं स्त्रीत्वविशिष्टार्थस्य बोधात् प्रातिपदिकस्य तत्र शक्त्यावश्यकत्वे टाबादीनामपि शक्तिकल्पने गौरवम्। 'ऋकारान्ता मातृदुहितृस्वसृयातृननान्दरः, प्रावृड्विप्रुड्रुक्त्विषः' इत्यादिलिङ्गानुशासनसूत्राण्यपि प्रकृतिविषयाण्येव दृश्यन्ते। अत एव च 'कृदिकारादक्तिनः' इत्यत्र अक्तिन इत्येतदर्थवत्। अन्यथा क्तिनैव स्त्रीत्वस्योक्तत्वाद् ङीपोऽप्राप्तेः तद्वैयर्थ्यं स्पष्टमेव। न चैवमपि प्रकृत्यैव स्त्रीत्वस्योक्तत्वात् कथं टाबादय इति वाच्यम्, द्वावित्यादिवत् प्रकृत्युक्तस्याव्यावर्तकत्वात्, अन्यथा टाबादिविधिवैयर्थ्यात्। तथा च स्त्रीत्वमिह प्रातिपदिकस्यैव वाच्यम्, टाबादयस्तु तद्द्योतकाः। तथा च टाबादिषु सत्सु अवश्यं स्त्रीत्वबोध इति नियमः, न तु टाबादिषु सत्स्वेवेति नियम

१ पुष्यस्तारका तारकं नक्षत्रम्—इति क।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

**४५४ अजाद्यतष्टाप् (४-१-४)** अजादीनामकारान्तस्य च वाच्यं यत्स्त्रीत्वं तत्र द्योत्ये टाप् स्यात्। अजाद्युक्तिर्ङीषो ङीपश्च बाधनाय। अजा। अतः, खट्वा।

इति। **अजाद्यतष्टाप्**। अजः आदिर्येषां ते अजादयः ते च अच्चेति समाहारद्वन्द्वात् षष्ठी। 'ङ्याप्प्रातिपदिकात्' इत्यतः प्रातिपदिकादित्यनुवृत्तं षष्ठ्या विपरिणतम् अजादिभिः अता च विशेष्यते, तदन्तविधिः। तत्राद्विषये 'समासप्रत्ययविधौ तदन्तविधेः प्रतिषेधो वक्तव्यः' इति निषेधो न, 'उगिद्वर्णग्रहणवर्जम्' इत्युक्तेः। ङ्याब्ग्रहणं तु नानुवर्तते, 'स्त्रियाम्' इत्यधिकारे तयोर्विधेयत्वात्। न च अजादिभिः प्रातिपदिकस्य विशेषणेऽपि तदन्तविधिर्नास्ति, 'समासप्रत्ययविधौ–' इति निषेधात्, 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति' इति च निषेधादिति वाच्यम्, 'शूद्रा चामहत्पूर्वा जातिः' इत्यत्र अमहत्पूर्वेति वचनेनात्र तदन्तविधिज्ञापनात्। किं च स्त्रियां व्यक्तौ गम्यमानायामिति नार्थः, तर्हि अजा खट्वेत्यादौ अजत्वाद्याकारेण वस्तुतः स्त्रीव्यक्तौ गम्यमानायां टाबादिप्रत्ययाः स्युः। ततश्च टाबादिप्रत्ययेषु प्रयुज्यमानेषु स्त्रीत्वस्य भानं न नियतं स्यात्। अतः स्त्रियामिति भावप्रधानो निर्देशः—स्त्रीत्वे इति यावत्। तदाह—**अजादीनामित्यादिना**। अजाद्यन्तानामित्यर्थः। **द्योत्ये इति**। उक्तरीत्या स्त्रीत्वस्य प्रातिपदिकार्थत्वादिति भावः। उक्तं च भाष्ये—'स्त्रियां यत् प्रातिपदिकं वर्तते तस्माट्टाबादयो भवन्ति स्वार्थे' इति। **टाप् स्यादिति**। प्रत्ययः, परश्च इत्यधिकृतम्। कस्मात् परो भवतीत्याकाङ्क्षायां सन्निधानाद् अजादिभ्यः अदन्ताच्चेति बोध्यम्। ननु अजादिगणे अज, अश्व इत्याद्यदन्तपाठो व्यर्थः, अदन्तत्वादेव सिद्धेरित्यत आह—**अजाद्युक्तिरिति**। 'वयसि प्रथमे' 'जातेरस्त्रीविषयात्–' इत्यादिवक्ष्यमाणस्य ङीपो ङीषश्च अदन्तटाबपवादस्य बाधनार्थमजादिग्रहणमित्यर्थः। एवं च अदन्तटाबपवादौ ङीप्ङीषौ, तयोरप्यजादिटाबपवाद इति फलति। अजशब्दः छागजातौ वर्तते। 'अजा छागी तुभच्छागबस्तच्छगलका अजे' इत्यमरः। अज शब्दात् टाप्, टपावितौ, सवर्णदीर्घः। व्यपदेशिवत्त्वाद् अजान्तत्वम्। **अत इति**। उदाहरणं वक्ष्यत इति शेषः। **खट्वेति**। 'खट कांक्षायाम्' 'अशूप्रुषिलटिकणिखटिविशिभ्यः क्वन्' खट्वशब्दः

**अजाद्यतः**। अजशब्दः आदिर्यस्येति बहुव्रीहिः। अच् आदिर्यस्येति तु नार्थः। 'अचि' इति निर्देशात्, गणपाठसामर्थ्याच्च। अदिति न स्वरूपग्रहणम्, 'संख्याया–' इति लिङ्गात्, अजादिभ्यः पृथक्पाठसामर्थ्याच्च। इह 'ङ्याप्प्रातिपदिकात्, इत्यधिकारेऽपि ङ्यापौ न संबध्येते इहैव तयोर्विधेयत्वात्, अपि तु प्रातिपदिकमेव। तच्चाकारेण विशिष्यते विशेषणेन च तदन्तत्वलाभः, तदाह—**अजादीनामकारान्तस्य चेति**। सूत्रे 'अतः' इति षष्ठी। तदर्थश्च वाच्यवाचकभावः। स्त्रिया-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अदन्तः, तस्मात् टापि सवर्णदीर्घः। 'शयनं मञ्चपर्यङ्कपल्यङ्काः खट्वया समाः' इत्यमरः। ननु 'प्रत्ययः, परश्च' इत्यनुवृत्तौ दिग्योगपञ्चम्या युक्तत्वाद् अजादिभ्यः अतश्च टाप् स्यात् स्त्रीत्वे द्योत्ये इत्यर्थ एव युक्तः। तथा च 'अजाद्यतः' इति षष्ठ्याश्रयणमयुक्तमित्यत

मिति तु धर्मप्रधानो निर्देश इत्याशयेनाह—**वाच्यं यत् स्त्रीत्वमिति**। एतच्च लिङ्गं प्रातिपदिकार्थ इति पक्षाभिप्रायेणोक्तम्। कस्माद्भवतीत्याकाङ्क्षायां सन्निधानादजादिभ्योऽकारान्ताच्चेति बोध्यम्। 'इको यणचि' इत्यत्र कस्मादचि पर इत्याकाङ्क्षायामिक इति यथा। टापः पकारः स्वरार्थः, 'औङ आपः', 'आङि चापः', 'याडापः', इत्यादौ सामान्यग्रहणार्थश्च। तद्विधानार्थष्टकारः। आबित्युक्ते हि तदनुबन्धपरिभाषया 'औङ आपः' इत्यादावयमेव गृह्येत, डाप्चापोस्तु ग्रहणं न स्यात्। नन्वत इत्येव सिद्धे अजादिग्रहणं व्यर्थम्। न च क्रुञ्चा उष्णिहा देवविशा इत्यादिषु हलन्तत्वादप्राप्ते विध्यर्थं तदिति वाच्यम्। तथा हि सति क्रुञ्चेत्यादिरेव गृह्येत, न त्वजादिरतो व्याचष्टे—**अजाद्युक्तिर्ङीषो ङीपश्चेति। खट्वेति**। 'खट् काङ्क्षायाम्' 'अशूप्रुषिलटिखटिकणिविशिभ्यः क्वन्'। नन्वचेतनानां खट्वादिशब्दानां कथं लिङ्गव्यवस्थेति चेत्। उच्यते—लोकप्रसिद्धं स्तनाद्यवयवसंस्थानविशेषात्मकं लिङ्गं न व्याकरणे आश्रीयते, दारानित्यादौ नत्वाभावप्रसङ्गात्, तटस्तटी तटमित्यादौ यथायथं लिङ्गत्रितयनिबन्धनकार्याणामसिद्धिप्रसङ्गाच्च, किन्तु पारिभाषिकमेव लिङ्गत्रयम्। तच्च केवलान्वयि। अयमर्थ इयं व्यक्तिरिदं वस्त्विति शब्दानां सर्वत्राप्रतिबद्धप्रसरत्वात्। तत्र कश्चिच्छब्द एकस्मिँल्लिङ्गे शक्तः कश्चिद् द्वयोः कश्चित् त्रिषु इति लिङ्गानुशासनादिभ्यो निर्णेयम्। कुमारब्राह्मणादिशब्दास्तु लौकिकपुंस्त्वविशिष्टे शास्त्रीये पुंस्त्वे शक्ताः। लौकिकस्त्रीत्वविशिष्टे च शास्त्रीयस्त्रीत्वे। कथमन्यथा कुमारी कुमार इत्यादयः प्रयोगा व्यवतिष्ठेरन्। 'करेणुरिभ्यां स्त्री नेभे' इत्यमरस्याप्ययमेवार्थः। नन्वेवं पशुनेति पुंस्त्वं विवक्षितमिति मीमांसकोद्घोषः कथं योज्यः। पारिभाषिकस्याव्यावर्तकतया तद्विवक्षाया अकिञ्चित्करत्वात्। लौकिकस्य तु लिङ्गस्य पशुशब्दादप्रतीतेरिति चेत्। अत्राहुः—'छागो वा मन्त्रवर्णात्' इति षष्ठान्त्याधिकरणन्यायेन पुंस्त्वस्य नियमो बोध्यश्छागशब्दस्य लौकिकपुंस्त्वविशिष्टपारिभाषिके शक्तत्वादिति। तच्च जातित्रयमित्येके। उक्तं च हरिणा—'तिस्रो जातय एवैताः केषाञ्चित्समवस्थिताः। अविरुद्धा विरुद्धाभिर्गोमनुष्यादिजातिभिः'। भाष्ये तु प्रकारान्तरमुक्तम्—'संस्त्यानप्रसवौ लिङ्गमास्थेयौ स्वकृतान्ततः। संस्त्याने स्त्यायतेर्ड्ट् स्त्री सूतेः सप् प्रसवे पुमान्। उभयोरन्तरं यच्च तदभावे नपुंसकम्' इति। अस्यायमर्थः—संस्त्यानं स्त्रीसत्त्वरजस्तमोलक्षणानां गुणानामपचयः। प्रसवो गुणानामुपचयः। सप् पुमान्। सूतेर्धातोः सप् सकारस्य पकारादेश इत्यर्थः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अजादिभिः स्त्रीत्वस्य विशेषणान्नेह—पञ्चाजी। 'द्विगोः' (सू ४७६) इति ङीप्। अत्र हि समासार्थसमाहारनिष्ठं स्त्रीत्वम्। अजा। एडका। अश्वा। चटका। मूषिका।

---

आह—**अजादिभिरिति**। अजाद्यत इति षष्ठीमाश्रित्य अजादीनाम् अदन्तस्य च वाच्ये स्त्रीत्वे टाबित्येवम् अजादिभिः स्त्रीत्वस्य विशेषणादित्यर्थः। **पञ्चाजीति**। पञ्चानामजानां समाहारः इति विग्रहे 'तद्धितार्थ-' इत्यादिना द्विगुः, 'अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः' इति स्त्रीत्वम्, 'द्विगोः' इति ङीप्, 'यस्येति च' इत्यकारलोपः। नन्वत्र समासे अजशब्दसत्त्वात्तद्वाच्यमेव स्त्रीत्वमित्यत आह—**अत्रेति**। हि यतः अत्र पञ्चाजशब्दे समासार्थभूतो यः समाहारः तन्निष्ठं स्त्रीत्वं पञ्चाजेति समुदायस्य वाच्यं नत्वजशब्दस्य, अतोऽत्र न टाबित्यर्थः। न चोक्तरीत्या तदन्तविधिसत्त्वादजशब्दान्तस्य पञ्चाजेति समासस्य ग्रहणात् तद्वाच्यत्वं स्त्रीत्वस्येति वाच्यम्, सत्यपि तदन्तविधौ अजादीनां श्रुतत्वेन स्त्रीत्वस्य तद्विशेषणताया एव न्याय्यत्वात्। अजादिभ्यष्टाप् स्त्रीत्वे द्योत्ये इति व्याख्याने तु स्त्रीत्वस्य अजादिशब्दवाच्यत्वालाभात् समाहारनिष्ठमपि स्त्रीत्वमादाय टाप् स्यादिति भावः।

अथाजादीनुदाहरति—**अजेत्यादिना**। **एडकेति**। 'मेढ्रोरभ्रोरणोर्णायुमेषवृष्णय एडके' इत्यमरः। अस्य स्त्रीत्वे कोशान्तरं मृग्यम्। **अश्वेति**। 'वाम्यश्वा वडवा' इत्यमरः। **चटकेति**। चटकः पक्षिजातिविशेषः। अस्य जातिशब्दस्य स्त्रीत्वं मृग्यम्। अमरस्तु 'चटकः कलविङ्कः स्यात्तस्य स्त्री चटका' इत्याह। **मूषिकेति**।

---

औणादिकोमुसुन्प्रत्ययो ह्रस्वश्च बाहुलकादिति कैयटः। 'पूञो डुमुसुन्' इति माधवः। तयोरुपचयापचययोरभावे सति यदुभयोरन्तरं सदृशं तन्नपुंसकं 'नभ्राण्नपाद-' इति निपातनादिति भावः। तथावस्थितिसाम्यं नपुंसकम्। तत एवाविर्भावतिरोभावयोरपि स्थितिसामान्यविवक्षासंभवान्नपुंसकलिङ्गं सर्वनामेति सिद्धान्तः। स्त्रीपुमान्नपुंसकमिति शब्दाश्च शुक्लादिशब्दवद्धर्मे धर्मिणि च वर्तन्ते। स्वकृतान्तत इति-वैयाकरणसिद्धान्तत इत्यर्थः। 'कृतान्तौ यमसिद्धान्तौ' इत्यमरः। **पञ्चाजीति**। पञ्चानामजानां समाहार इति 'तद्धितार्थ-' इत्यादिना द्विगुः। 'अकारान्तोत्तरपदः-' इति स्त्रीत्वे 'द्विगोः' इति ङीप्। न चात्र प्रत्ययविधौ तदन्तविधिविरहादेव टापोऽप्रवृत्तौ ङीबेव स्यादिति वाच्यम्। अमहत्पूर्वग्रहणेनानुपसर्जनाधिकारेण च स्त्रीप्रत्ययेषु तदन्तविधिज्ञापनाट्टाप्प्राप्तेः सत्त्वात्। **समासार्थसमाहारनिष्ठमिति**। नन्वजहत्स्वार्थायां वृत्तौ समाहारोऽप्यजाद्यर्थ एवेति चेत्। मैवम्, तथापि तस्य पदान्तरसमभिव्याहारापेक्षया बहिरङ्गत्वात्, टाब्विधेस्त्वन्तरङ्गे चरितार्थत्वात्। कथं तर्हि परमाजेति चेत्। प्रागुत्पन्नस्यैव टापस्तत्र श्रवणात्। अत्यजा निरजेत्यत्र त्वदन्तत्वप्रयुक्तष्टाबित्यवेहि।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एषु जातिलक्षणो ङीष् प्राप्तः। बाला। वत्सा। होढा। मन्दा। विलाता। एषु 'वयसि प्रथमे' (सू ४७८) इति ङीप् प्राप्तः। 'सम्भस्त्राजिनशणपिण्डेभ्यः फलात्' (वा २४११)। सम्फला। भस्त्रफला 'ङ्यापोः–' (सू १००१) इति ह्रस्वः। 'सदच्काण्डप्रान्तशतैकेभ्यः पुष्पात्' (वा १४१६)। सत्पुष्पा। प्राक्पुष्पा। प्रत्यक्पुष्पा।

---

'चुचुन्दरी गन्धमूषी दीर्घदेही तु मूषिका' इत्यमरः। **एषु जातीति**। अजादिपञ्चसु 'जातेरस्त्री–' इति ङीष् प्राप्तः। सः अजादिटापा बाध्यत इत्यर्थः। बालादयः प्रथमवयोवचनाः, तत्र होढादित्रयस्य प्रथमवयोवाचित्वे कोशो मृग्यः। **एष्विति**। बालादिपञ्चसु 'वयसि प्रथमे' इति ङीप् प्राप्तः। सः अजादिटापा बाध्यत इत्यर्थः। **सम्भस्त्रेति**। 'पाककर्ण–' इति सूत्रभाष्ये पठितमिदं वार्तिकमर्थतः संगृहीतम्। सम्, भस्त्र, अजिन, शण, पिण्ड, एतेभ्यः परो यः फलशब्दः तस्मादपि 'पाककर्ण–' इति ङीष् न भवति, किं तु टाबेवेत्यर्थः। **सम्फलेति**। समृद्धानि फलानि यस्या इति विग्रहः। **भस्त्रफलेति**। भस्त्रेव फलानि यस्या[1] इति विग्रहः। 'भस्त्रा चर्मप्रसेविका' इत्यमरः। ननु भस्त्राशब्दस्य नित्यस्त्रीत्वाद् भाषितपुंस्कत्वाभावात् 'स्त्रियाः पुंवत्–' इति पुंवत्त्वस्याप्रसक्तेः कथं ह्रस्व इत्यत आह—**ङ्यापोरिति**। 'ङ्यापोः संज्ञाच्छन्दसोर्बहुलम्' इति ह्रस्व इत्यर्थः। अजिनफला, शणफला, पिण्डफला, ओषधिविशेषसंज्ञाः। **सदच्काण्ड**। अयमपि 'पाककर्ण–' इति सूत्रपठितवार्तिकार्थसंग्रहः। सत्, अच्, काण्ड, प्रान्त, शत, एक, एतेभ्यः परो यः पुष्पशब्दः तस्मादपि 'पाककर्णपर्णपुष्पफलमूलवालोत्तरपदाच्च' इति ङीष् न भवति, किन्तु टाबेवेत्यर्थः। **सत्पुष्पेति**। सन्ति पुष्पाणि यस्या इति विग्रहः। अच् इति लुप्तनकारः, अञ्चुधातुः गृह्यत इत्यभिप्रेत्य उदाहरति—**प्राक्पुष्पेति** प्राञ्चि पुष्पाणि यस्या इति विग्रहः। **प्रत्यक्पुष्पेति**। प्रत्यञ्चि पुष्पाणि यस्या इति

---

न च पञ्चाजीत्यत्रापि तथास्त्विति वाच्यम्। 'द्विगोः' इति ङीपा बाधितत्वात्। **चटकेति**। न चात्र 'प्रत्ययस्थात्–' इतीकारः शङ्क्यः। 'चटकाया ऐरक्' इति लिङ्गादिहैव निपातनाद्वा तदप्रवृत्तेः। एवं च क्षिपकादिषु चटकेति पठनं नातीवावश्यकमिति नव्याः। **मूषकेति**। 'वृश्चिकृषोः किकन्' इत्यधिकारे 'मुषेर्दीर्घश्च' इति किकनि इकारमध्यो मूषिकाशब्दः। यस्तु 'मूष स्तेये' इति दीर्घोपधात्संज्ञायां क्वुनि मूषकशब्दो माधवेनोक्तस्ततोऽप्ययं टाप्। प्रत्ययस्थादितीत्वं तु विशेषः। केचित्तु क्वुनन्तोऽसावजादिगणे पाठं न प्रयुङ्क्ते, गणे तत्पाठस्य जातिलक्षणङीप्बाधनार्थत्वात्संज्ञायाश्चाजातित्वात्। तथा चादन्तत्वादेव क्वुनन्ताट्टाप् सिध्यतीत्याहुः। तच्चिन्त्यम्, व्याघ्रीत्यादिवत्संज्ञात्वेऽपि जातित्वानपायात्। **भस्त्रफलेति**। भस्त्रेव फलानि यस्या इति विग्रहः।

---

[1] 'भस्त्रा' इति क।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

'शूद्रा चामहत्पूर्वा जातिः' (वा २४००-२४०१) पुंयोगे तु शूद्री । 'अमहत्पूर्वा' किम्-महाशूद्री । क्रुञ्चा । उष्णिहा । देवविशा । ज्येष्ठा, कनिष्ठा, मध्यमेति पुंयोगे-

विग्रहः । काण्डपुष्पा । प्रान्तपुष्पा । शतपुष्पा । एकपुष्पा ।

**शूद्रा चामहत्पूर्वा जातिः** । 'अजाद्यतः-' इति प्रकृतसूत्रे पठितं वार्तिकमेतत् । शूद्रजातिः वाच्या चेद् अमहत्पूर्वः शूद्रशब्दः स्त्रियां टापं लभते । जातिलक्षणङीषोऽपवादः । शूद्रात् स्वभार्यायां विधिना ऊढायामुत्पन्ना स्त्री शूद्रा । जातिरित्यस्य प्रयोजनमाह—**पुंयोगे त्विति** । शूद्रस्य स्त्री इत्येवं पुंयोगात् स्त्रियां वृत्तौ जातिवाचित्वाभावान्न टाप्, किन्तु 'पुंयोगादाख्यायाम्' इति ङीषेवेत्यर्थः । **महाशूद्रीति** । महती च सा शूद्रा चेति विग्रहः । कर्मधारयः । 'पुंवत् कर्मधारय-' इति पुंवत्त्वम् । अत्र महत्पूर्वत्वान्न टाप्, किन्तु जातिलक्षणङीषेव । 'आभीरी तु महाशूद्री जातिपुंयोगयोः समा'[1] इत्यमरः । नृपाच्छूद्रायामुत्पन्ना उग्रा, तस्यां ब्राह्मणादुत्पन्नः आभीरः, स्त्री चेदाभीरी । अत्र जातिग्रहणस्य अमहत्पूर्वग्रहणस्य च प्रयोजनविचारः शब्देन्दुशेखरे भाष्यप्रदीपोद्द्योते च स्फुटः । **क्रुञ्चेति** । क्रुञ्चशब्दः चकारान्तः 'ऋत्विक्-' इत्यादिना क्विन्नन्तः पक्षिजातिविशेषे वर्तते । 'यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम्' इति रामायणे । उष्णिह्शब्दो हकारान्तः, छन्दोविशेषे 'ऋत्विक्-' इत्यादिना क्विन्नन्त एव । देवविशशब्दः शकारान्तः, गणविशेषात्मकमरुत्सु वर्तते; 'मरुतो वै देवानां विशः' इति श्रुतेः । एतेषामदन्तत्वाभावादप्राप्ते टापि तद्विधानार्थमजादिषु पाठः । 'ङ्याप्प्रातिपदिकात्' इति सूत्रभाष्ये त्वेषां त्रयाणामदन्तत्वम् आस्थितमिति 'वष्टि भागुरिरल्लोपम्' इति श्लोकव्याख्यावसरे प्रपञ्चितमनुपदमेव । **ज्येष्ठेति** । यदा ज्येष्ठादि-

ङ्यापोरिति । एतच्च 'फल निष्पत्तौ' इति धातौ माधवग्रन्थे स्थितम् । 'पाककर्ण-' इत्यत्र भाष्ये तु दीर्घ एव दृश्यते । **सदच्काण्डेति** । सत्प्राक्काण्डेति पाठो नादर्तव्य इति ध्वनयन्नुदाहरति—**प्रत्यक्पुष्पेति** । अत्र नव्याः—'संभस्त्रा-' इत्यादि वचनद्वयं 'मूलान्नञः' इति वक्ष्यमाणं च 'पाककर्ण-' इत्यनेन प्राप्तस्य ङीषो निषेधार्थं तत्रैव सूत्रे भाष्ये पठितमपि फले विशेषाभावादिहैव ग्रन्थकारैः पठितम् । न चैतावताऽजाद्यन्तर्गणसूत्राणीति भ्रमः कार्यः । तथात्वे मानाभावात् । किं तु वार्तिकान्येवेमानीत्याहुः । **शूद्रा चेति** । शूद्रशब्दष्टापमुत्पादयति जातिश्चेत् । महत्पूर्वस्तु न जातिश्चेदितीहापि संबध्यते । तेन महती शूद्रा महाशूद्रेति भवत्येव । **पुंयोगे त्विति** । पुंयोगश्च दाम्पत्यरूप एवेति न नियमः, किं तु जन्यजनकभावोऽपि गृह्यते । तथा च स्मृतिः—'वैश्याशूद्र्योस्तु राजन्यान्महिष्योग्रौ सुतौ स्मृतौ' इति । **महाशूद्रीति** । 'आभीरी

१ व्यक्रौ-क । २ 'समे' क, ख ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ऽपि । कोकिला जातावपि । 'मूलान्नञः' (वा २५००) । अमूला । 'ऋन्नेभ्यो ङीप्' (सू ३०६) कर्त्री । दण्डिनी । ४५५ उगितश्च । ( ४-१-६ ) उगिदन्तात्प्राति-

शब्दाः प्रथमोत्पन्नादौ वर्तन्ते, तदा अदन्तत्वादेव टाप् सिद्धः । यदा तु ज्येष्ठस्य स्त्रीत्वादिविवक्षा, तदापि पुंयोगलक्षणं ङीषं बाधित्वा टाबर्थमिह पाठ इत्यर्थः । कोकिलेति । कोकिलशब्दस्य जातावपि जातिलक्षणङीषं बाधित्वा टाबर्थमिह पाठ इत्यर्थः । मूलान्नञ इति । 'पाककर्ण–' इति सूत्रे पठितं वार्तिकमेतत् । नञः परो यः मूलशब्दः तस्मात् 'पाककर्ण–' इति ङीष् न भवति, किन्तु टाबेवेत्यर्थः । अमूलेति । अविद्यमानं मूलं यस्या इति विग्रहे 'नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः' इति बहुव्रीहिः । अत्र 'सम्भस्त्रेति, सदच्काण्डेति, मूलान्नञः' इति च वार्तिकत्रयं 'पाककर्ण–' इति सूत्रभाष्यपठितमपि फले विशेषाभावादजादिगणे मूले प्रपञ्चितम् । न चैतान्यजाद्यन्तर्गणसूत्राणीति भ्रमितव्यम् । अजादिराकृतिगणः, तेन 'न मु ने' इति सूत्रभाष्ये टायामादेश इति भाष्यप्रयोगः सिद्धः । अत एव च पूर्वमीमांसायां द्वितीयस्य प्रथमपादे 'स्तुतशस्त्रयोस्तु संस्कारो याज्यावद्देवताभिधानत्वात्' इति स्तुतशस्त्राधिकरणे 'वशावद्वा गुणार्थं स्यात्' इति गुणसूत्रव्याख्यावसरे शावरभाष्यभट्टवार्तिकयोः 'छागस्य वपाया मेदसः' इति प्राकृतमन्त्रस्य 'वायव्यामजां वशामालभेत' इत्यत्र छागाया वपाया इत्यूहानुक्रमणं संगच्छते । अत एव च ब्रह्ममीमांसायां प्रथमस्य चतुर्थपादे 'चमसवदविशेषात्' इत्यधिकरणे शाङ्करभाष्यवाचस्पत्ययोः अजायां छागेति टाबन्तः प्रयोग उपपन्नः । अन्यथा जातिलक्षणङीष्प्रसङ्गादित्यास्तां तावत् । ऋन्नेभ्यः' इति सूत्रमजन्तस्त्रीलिङ्गाधिकारे प्रसङ्गाद् व्याख्यातम् । इह तु सूत्रक्रमात् पुनस्तदुपन्यासः ।

उगितश्च । उक् प्रत्याहारः, उक्–इत् यस्य स उगित्, उगित इति पञ्चम्यन्तम्, तेन प्रातिपदिकादित्येतद् विशेष्यते, तदन्तविधिः । 'उगिद्वर्णग्रहणवर्जम्' इत्युक्तेः 'समासप्रत्ययविधौ–' इति प्रतिषेधो न । पूर्वसूत्राद् ङीबित्यनुवर्तते । तदाह—उगिदन्ता-

तु महाशूद्री जातिपुंयोगयोः समा' इत्यमरः । इह 'अमहत्पूर्वा' इति व्यर्थम्, महाशूद्रशब्दो हि समुदित एवाभीरत्वजातौ वर्तते । तत्रावयवस्यानर्थकतया शूद्रशब्दार्थसमवेतस्त्रीत्वाभावेन टापः प्रसक्त्यभावात् । न च तदन्तविधिज्ञापनाय तदिति वाच्यम् । अनुपसर्जनाधिकारेणैव तदन्तविधिज्ञापनादिति दिक् । अत्र नव्याः—'शूद्रा च–' इत्यादिवचनम् 'अजाद्यतः–' इति सूत्रस्थं वार्तिकमेव, न त्विदं गणसूत्रमित्याहुः । क्रुञ्चेत्यादि । त्रयोऽमी हलन्ता इत्येके । भाष्ये तु 'क्रुञ्चानालभेत' 'उष्णिहककुभौ' इत्यादिप्रयोगमुदाहृत्याऽदन्ता अपि स्वीकृताः, पचाद्यचा इगुपधलक्षणेन कप्रत्ययेन च यथासंभवमदन्तत्वात् । पुंयोगेऽपीति । यदा ज्येष्ठादयः प्रथमजातादौ वर्तन्ते तदा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पदिकास्त्रियां ङीप्स्यात् । भवती । पचन्ती । 'शप्श्यनोः–' ( सू ४४६ ) इति नुम् । 'उगिदचाम्–' (सू ३६१) इति सूत्रेऽञ्चुग्रहणेन 'धातोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेव' इति नियम्यते । तेनेह न । उखास्रत् । क्विप् । अनिदिताम्–' (सू ४१५)

---

दिति । उगिद् द्विविधं प्रातिपदिकं प्रत्ययश्च, तत्र प्रातिपदिकमुदाहरति—**भवतीति**। सर्वादिगणे भवतु इति अव्युत्पन्नं प्रातिपदिकं पठितम्, तस्य व्यपदेशिवत्त्वेन उगिदन्तत्वाद् ङीप्, ङपावितौ, 'आच्छीनद्योर्नुम्' 'शप्श्यनोर्नित्यम्' इति नुम् न, शत्रन्तत्वाभावात् । 'उगिदचाम्–' इत्यपि न, सर्वनामस्थानत्वाभावात् । अथ द्वितीयमुगितमुदाहरति—**पचन्तीति** । पचेर्लटः शतरि शपि पररूपे पचच्छब्दः । तत्र शतृप्रत्ययः उगित्, तदन्तं पचत्–इति प्रातिपदिकमिति तस्माद् ङीपि 'शप्श्यनोर्नित्यम्' इति नुमिति भावः । यदि तु सर्वादिगणे पठितं भवतु इत्येतद् 'भातेर्डवतुः' इति व्युत्पाद्यते, तदा उगित्प्रत्ययान्तस्यैवोदाहरणं बोध्यम् । भूधातोः शतरि शपि ऊकारस्य गुणे अवादेशे भवच्छब्दात् ङीपि तु, 'शप्श्यनोर्नित्यम्' इति नुमि भवन्तीति रूपम् । न च भवच्छब्दस्य अव्युत्पन्नत्वे तस्य कथं व्यपदेशिवत्त्वेन उगिदन्तत्वम्, 'व्यपदेशिवद्भावोऽप्रातिपदिकेन–' इति वचनादिति वाच्यम्, प्रातिपदिकस्य तत्तत्स्वरूपेण ग्रहण एव तत्प्रवृत्तेः । 'उगिदचाम् इति सूत्रे' इत्यादिग्रन्थः हलन्ताधिकारे गोमच्छब्दनिरूपणे व्याख्यातः । **तेनेति** । अञ्चुव्यतिरिक्तधातोरुगित्कार्यभावलाभेनेत्यर्थः । **उखेति** ।

---

ऽदन्तत्वादेव टाप् सिद्धः । यदा तु ज्येष्ठस्य स्त्रीत्वादिविवक्षा तदा पुंयोगलक्षणे ङीष् प्राप्तः सोऽप्यनेन बाध्यते इति सूचयितुमपिशब्दः । **मूलान्नञः** । नञः किम्, शतमूली । **अमूलेति** । ओषधिजातिरियम् । **उगितश्च** । उगिच्छब्देन प्रातिपदिकं विशेष्यते, विशेषणेन तदन्तविधिः । न च प्रत्ययविधौ प्रतिषेधः शङ्क्यः । अनुपसर्जनादित्यनेन स्त्रीप्रत्ययेषु तदन्तविधिरस्तीति ज्ञापनात्, 'उगिद्वर्णग्रहणवर्जम्' इति 'येन विधिः–' इति सूत्र एवोक्तत्वाच्चेत्याशयेनाह—**उगिदन्तादिति** । तत्रोगित् प्रातिपदिकं प्रत्ययश्चेति द्विविधं संभवति । आद्ये उगिदन्ते—भवन्तं महान्तं चातिक्रान्ता अतिभवती अतिमहतीत्युदाहरणम् । सर्वादिगणे 'भवतु' इति पाठाद्भवच्छब्दस्योगित्त्वव्यपदेशः महच्छब्दस्य तु शतृवद्भावात् । न चैवं 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' इति निषेधात् केवलाभ्यां भवन्महच्छब्दाभ्यां ङीप् न स्यादिति वाच्यम्, प्रातिपदिकाप्रातिपदिकसाधारणेन शब्दमात्रमुगित्पदाभिधेयमित्युक्तनिषेधाप्रवृत्तेरित्याशयेनोदाहरति—**भवतीति** । द्वितीयमुगिदन्तमुदाहरति—**पचन्तीति** । पचेर्लटः शतरि 'कर्तरि शप्' । यदि तु सर्वादिगणे भवतु इति य उगित् पठितः स 'भातेर्डवतुः' इति व्युत्पाद्यते, तदा भवतीति द्वितीयोगिदन्तस्याप्युदाहरणं भवत्येव । शत्रन्तात्तु

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति नलोपः। पर्णध्वत्। अञ्चतेस्तु स्यादेव—प्राची, प्रतीची। ४५६ वनो र च। (४-१-७) वन्नन्तात्तदन्ताच्च प्रातिपदिकास्त्रियां ङीप्स्यात्, रश्चान्तादेशः। वनिति ङ्वनिप्क्वनिप्वनिपां सामान्यग्रहणम्। 'प्रत्ययग्रहणे यस्मात्स विहितस्तदा-

---

उखा कुण्डी, उखायाः स्रंसते, पर्णाद् ध्वंसते इति विग्रहः। 'पिठरं स्थाल्युखा कुण्डम्' इत्यमरः। 'स्रंसु ध्वंसु अवस्रंसने' सुपीत्यनुवृत्तौ 'क्विप् च' इति क्विप्, उपपदसमासः, सुब्लुक्, 'अनिदिताम्—' इति नलोपः, हल्ङ्यादिना सोर्लोपः, 'वसुस्रंसु—' इति दत्वमिति भावः। **स्यादेवेति**। ङीबिति शेषः। **प्राचीति**। प्रपूर्वाद् अञ्चतेः 'ऋत्विग्—' इत्यादिना क्विन्, 'अनिदिताम्—' इति नलोपः, उगित्त्वाद् ङीप्, 'अचः' इत्यकारलोपः, 'चौ' इति दीर्घः। एवं प्रतीची।

**वनो र च**। वनः र च इति छेदः। र इति लुप्तप्रथमाकम्, अकार उच्चारणार्थः, चकाराद् ङीप् समुच्चीयते। वन इति पञ्चम्यन्तम्। तेन वन्प्रत्ययान्तं तदन्तं च विवक्षितम् प्रातिपदिकादित्यधिकृतम्। तदाह—**वन्नन्तादित्यादिना**। **रश्चान्तादेश इति**। प्रकृतेरिति शेषः। नान्तत्वादेव ङीप् प्राप्तः, तत्सन्नियोगेन रेफमात्रमिह विधेयम्। **सामान्येति**। अनुबन्धविनिर्मुक्तवन्ग्रहणस्य त्रिष्वपि साधारणत्वादिति भावः। ननु वन्ग्रहणेन वन्प्रत्ययान्तं तदन्तं च कथं लभ्यत इत्यत आह—**प्रत्ययग्रहण इति**। यस्मात् प्रकृतिभूतात् शब्दाद् यः प्रत्ययो विहितः, तदादेः—स प्रकृतिभूतः शब्दः आदिर्यस्य तस्य, तदन्तस्य स प्रत्ययः अन्तो यस्य समुदायस्य, तस्य च ग्रहणम्। प्रकृतिप्रत्ययसमुदायस्य तन्मध्यवर्तिनश्च ग्रहणमित्यर्थः। 'तिङ्ङतिङः' इत्यत्र तिङ्ग्रहणेन शबादिविकरणस्यापि ग्रहणार्थं तदादिग्रहणम्। 'यस्मात्

---

भवतेर्ङीपि 'शप्श्यनोः—' इति नित्यो नुम्। भवन्ती। **उखास्रदित्यादि**। उखायाः स्रंसते, पर्णेभ्यो ध्वंसते। 'स्रंसु ध्वंसु अवस्रंसने' 'वसुस्रंसु—' इति दत्वम्। **वनो र च**। वनिति प्रत्ययेन तदन्तं प्रातिपदिकं गृह्यते। वन्नन्तेन त्वधिकृतप्रातिपदिकविशेषणात्तदन्तविधिरित्याह—**वन्नन्तात्तदन्ताच्चेति**। 'येन विधिस्तदन्तस्य' इत्यत्र 'स्वं रूपम्—' इति सूत्रात्स्वमित्यनुवर्त्य स्वस्य चेति व्याख्यानादुभयं लभ्यत इति भावः। यदि तु वन्नन्तमेव व्यपदेशिवद्भावेन वन्नन्तान्तमित्युच्यते, तर्हि 'येन विधिः—' इत्यत्र स्वमित्यनुवर्त्य स्वस्य चेति न व्याख्येयम्। न चात्र 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' इति निषेधः शङ्क्यः, तस्य प्रातिपदिकमात्रविधिविषयत्वात्, वन्नन्तस्य वस्तुतः प्रातिपदिकत्वेऽपि सूत्रे गृहीतस्य वन इत्यस्य प्रातिपदिकत्वाभावाच्चेत्याहुः। **सामान्यग्रहणमिति**। सूत्रे वन इत्यनुबन्धरहितस्य ग्रहणात्तदनुबन्धपरिभाषा नोपतिष्ठत इति भावः। वन्ग्रहणे वन्नन्तं वन्नन्तान्तं च कथं लभ्यत इत्याशङ्कायामाह—प्रत्यय-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

देस्तदन्तस्य ग्रहणम्' (प २४)। तेन प्रातिपदिकविशेषणात्तदन्तान्तमपि लभ्यते। सुत्वानमतिक्रान्ता, अतिसुत्वरी। अतिधीवरी। शर्वरी। 'वनो न हश इति

---

प्रत्ययविधिस्तदादि प्रत्ययेऽङ्गम्' इति सूत्रे इयं परिभाषा भाष्ये स्थिता। तेनेति। वन्नन्तेन प्रातिपदिकादित्यधिकृतस्य विशेषणात् पुनस्तदन्तविधिलाभादिति भावः। न चैवं सति वन्नन्तस्य कथं लाभ इति वाच्यम्, 'येन विधिस्तदन्तस्य' इत्यत्र 'स्वं रूपं शब्दस्याशब्दसंज्ञा' इत्यतः स्वमित्यनुवर्त्य विभक्तिपरिणामेन स्वस्य चेति व्याख्यानादिति भावः। तदेतदपिशब्देन सूचितम्। वन्नन्तमेव व्यपदेशिवत्त्वेन वन्नन्तान्तमिति केचित्। 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति' इति तु 'स्त्रियाम्' इत्यस्मिन् अधिकारे न प्रवर्तते, 'शूद्रा चामहत्पूर्वा जातिः' इत्यत्र अमहत्पूर्वेति लिङ्गात्। अथ वन्नन्तान्तमुदाहरति—सुत्वानमिति। 'षुञ् अभिषवे' 'सुयजोर्ङ्वनिप्' 'ह्रस्वस्य पिति कृति—'इति तुक्, सुत्वन् शब्दः। सुत्वानमतिक्रान्ता इति विग्रहे 'अत्यादयः—'इति समासः। सुब्लुकि ङीप्, नकारस्य रत्वम्, अतिसुत्वरीति रूपम्। अतिधीवरीति। 'डुधाञ् धारणपोषणयोः', 'आतो मनिन्क्वनिब्वनिपश्च', 'अन्येभ्योऽपि दृश्यते' इति भाषायामपि क्वनिप्, 'घुमास्था-' इति ईत्त्वम्। धीवानमतिक्रान्ता इति विग्रहे 'अत्यादयः—' इति समासः। ङीप्, रश्च, अतिधीवरीति रूपम्। भाष्ये तु ध्यायतेः क्वनिपि संप्रसारणे 'हलः' इति दीर्घ इति स्थितम्। शर्वरीति। 'शॄ हिंसायाम्', 'आतो मनिन्क्वनिब्वनिपश्च', 'अन्येभ्योऽपि दृश्यते' इति भाषायामपि वनिप्, 'सार्वधातुकार्धधातुकयोः' इति गुणः, 'वनो र च' इति ङीप्, रश्च। वन्नन्तस्योदाहरणमेतत्। अतिशर्वरीति पाठे तु इदमपि वन्नन्तान्तस्योदाहरणम्। सुत्वरी, धीवरी, शर्वरी, इति वन्नन्तस्योदाहरणानि। वनो नेति। पूर्ववद् वन्नन्तं वन्नन्तान्तं च गृह्यते, हश इति पञ्चमी, तेन

---

ग्रहणे इत्यादि। तेनेति। वन्नन्तेनेत्यर्थः। तदन्तान्तमपि लभ्यत इति। 'स्त्रियाम्' इत्यधिकारे 'ग्रहणवता प्रातिपदिकेन—' इति निषेधो न प्रवर्तते 'अमहत्पूर्वा—' इत्यादिज्ञापकादिति भावः। अन्ये त्वाहुः—वन्नन्तस्य वस्तुतः प्रातिपदिकत्वेऽपि सूत्रे गृहीतस्य वन इत्यस्य प्रातिपदिकत्वं नास्तीत्युक्तत्वात् 'ग्रहणवता—' इति निषेधशङ्कैव नास्तीति। सुत्वानमिति। 'सुयजोर्ङ्वनिप्'। 'अत्यादयः क्रान्ताद्यर्थे—' इति समासः। अतिधीवरीति। दधातेः 'अन्येभ्योऽपि दृश्यते' इति क्वनिप्। 'घुमास्था—' इतीत्त्वम्। भाष्ये तु ध्यायतेः क्वनिपि संप्रसारणमिति स्थितम्—नस्य रेफादेशे कृतेऽप्येकदेशविकृतस्यानन्यत्वात् 'अल्लोपोऽनः' इति प्राप्नोति, अनो नकारान्तत्वविशेषणात्तु न भवतीति 'श्वयुवमघोनाम्—' इत्यत्रैव व्युत्पादितम्। शर्वरीति। शॄधातोः 'अन्येभ्योऽपि—' इत्यनेनैव वनिप् गुणे कृते रपरत्वे च हशन्तात् परत्वेऽपि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वक्तव्यम्' (वा २४०६)। हशन्ताद्धातोर्विहितो यो वन् तदन्तात्तदन्तान्ताच्च प्रातिपदिकान्ङीप् रश्च नेत्यर्थः। 'ओणृ अपनयने' वनिप्, 'विड्वनोः–' (सू २९८२) इत्यात्त्वम्। अवावा ब्राह्मणी। राजयुध्वा। 'बहुव्रीहौ' (वा २४०७)। बहुधीवरी। बहुधीवा। पक्षे डाब्वक्ष्यते। ४५७ पादोऽन्यतरस्याम् (४-१-८)

च धातोरित्यधिकृत्य विहितेन वना आक्षिप्तं धातोरित्येतद् विशेष्यते, तदन्तविधिः। ङीबिति रश्चेति चानुवर्तते। तदाह—**हशन्तादित्यादिना**। विहितविशेषणस्य प्रयोजनं दर्शयन् वन्नन्तोदाहरणं दर्शयितुमाह—**ओणृ इत्यादिना**। **वनिबिति**। 'अन्येभ्योऽपि दृश्यते' इत्यनेनेति शेषः। **अवावेति**। ओण–इत्यस्मात् वनिपि 'विड्वनोरनुनासिकस्यात्' इति णकारस्य आत्त्वे ओकारस्यावादेशे अवावन्शब्दः। स्त्रीत्वस्फोरणाय ब्राह्मणीति विशेष्यम्। अत्र ओण इति धातोः हशन्ताद् वन् विहितः, तदन्तत्वाद् न ङीब्रत्वे, किं तु राजवद्रूपम्। हशन्ताद् धातोः परो यो वन् इति व्याख्याने तु आत्वे सति वनो हशः परत्वाभावाद् निषेधो न स्यादिति भावः। वन्नन्तान्तमुदाहरति—**राजयुध्वेति**। राजानं योधितवतीत्यर्थः। भूते कर्मणि क्विबित्यनुवर्तमाने 'राजनि युधिकृञः' इति क्वनिप्, कर्मीभूते राजनि उपपदे युधेः कृञश्च क्वनिबिति तदर्थः। उपपदसमासे सुब्लुक्, राजयुध्वन्शब्दः। अत्र हशो विहितो वन्, तदन्तो युध्वन्शब्दः, तदन्तो राजयुध्वन्शब्दः, अतो न ङीब्रादेशावित्यर्थः। **बहुव्रीहौ**। इदं वार्तिकम्। 'वनो र च' इति विधिः बहुव्रीहौ वा स्यादित्यर्थः। 'अनो बहुव्रीहेः' इति निषेधस्यापवादः। **बहुधीवरीति**। बहवो धीवानो यस्या इति विग्रहः। **बहुधीवेति**। ङीब्रत्वयोरभावे राजवद्रूपम्। न च बहूनि पर्वाणि यस्याः सा बहुपर्वेत्यत्रापि ङीब्रत्वविकल्पः स्यादिति वाच्यम्, 'अल्लोपोऽनः' इति उपधालोपयोग्यस्थल एव एतद्वार्तिकस्य प्रवृत्तेः भाष्ये उक्तत्वात्, बहुपर्वन्शब्दे च 'न संयोगाद्वमन्तात्' इत्यल्लोपनिषेधात्। **पक्षे इति**। ङीब्रत्वाभावपक्षे 'डाबुभाभ्याम्–' इति डाप् वक्ष्यत इत्यर्थः। डपावितौ। बहुधीवन् आ इति स्थिते, 'टेः' इति टिलोपे बहुधीवाशब्दात् सोर्हल्ङ्यादिलोपे बहुधीवा इति रमावद्रूपम्। ङीब्रत्वयोः डापश्चाभावे सौ बहुधीवेत्येव रूपम्। ङीब्रत्वयोः बहुधीवरीति। औजसादिषु तु बहुधीवर्यौ-बहुधीवे-बहुधीवानौ–इत्यादि रूपत्रयमिति भावः।

**पादो। कृतसमासान्त इति**। अन्तलोपात्मके समासान्ते कृते परिशिष्टः

हशन्ताद्विहितत्वाभावात् ङीब्रयोरत्र निषेधो न। **वनो न हश इति**। अबहुव्रीह्यर्थोऽयमारम्भः। बहुयज्वेत्यादौ तु 'अनो बहुव्रीहेः' इति ङीपो निषेधे रेफस्याप्यप्रवृत्तेः। **राजयुध्वेति**। राजानं योधितवती। 'राजनि युधि कृञः' इति ङ्वनिप्। बहु-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पाच्छब्दः कृतसमासान्तस्तदन्तात्प्रातिपदिकाद् ङीब्वा स्यात् । द्विपदी, द्विपाद् ।
४५८ टाबृचि । (४-१-९) ऋचि वाच्यायां पादन्ताट्टाप् स्यात् । द्विपदा ऋक् ।
एकपदा । 'न षट्स्वस्रादिभ्यः' (सू ३०८) । पञ्च । चतस्रः । 'पञ्च' इत्यत्र नलोपे
कृतेऽपि 'ष्णान्ता षट्' (सू ३६६) इति षट्संज्ञां प्रति 'नलोपः सुप्स्वर-' (सू

---

पाद्शब्द इह गृह्यत इत्यर्थः । **तदन्तादिति** । पाच्छब्दान्तादित्यर्थः । पाद इति पञ्चम्यन्तेन 'प्रातिपदिकात्' इत्यधिकृतस्य विशेषणादितिं भावः । **ङीब्वा स्यादिति** । 'ऋन्नेभ्यः-' इत्यतः तदनुवृत्तेरिति भावः । **द्विपदीति** । द्वौ पादौ यस्या इति बहुव्रीहिः । 'सङ्ख्यासुपूर्वस्य' इति पादशब्दान्तस्याकारस्य लोपः । ङीपि भत्वात् 'पादः पत्', द्विपदीति रूपम् । ङीबभावे तु **द्विपादिति** । **टाबृचि** । **पादन्तादिति** । प्रातिपदिकादिति शेषः । 'पादोऽन्यतरस्याम्' इत्यतः अनुवृत्तेन पाच्छब्देन प्रातिपदिकादित्यधिकृतस्य विशेषणादिति भावः । 'पादोऽन्यतरस्याम्' इति ङीपोऽपवादोऽयम् । **द्विपदा ऋगिति** । द्वौ पादौ यस्या इति विग्रहः । **एकपदेति** । एकः पादो यस्या इति विग्रहः । उभयत्रापि टापि, 'पादः पत्' । 'ङ्याप्प्रातिपदिकात्' इति सूत्रभाष्ये तु पादशब्दसमानार्थकं पदशब्दमवष्टभ्य प्रत्याख्यातमेतत् । न च ऋचि वाच्यायां द्विपदी द्विपादिति प्रयोगव्यावृत्तये एतत्सूत्रमिति वाच्यम्, एतद्भाष्यप्रामाण्येन तथाविधप्रयोगस्यापीष्टत्वादित्यलम् ।

**न षट्स्वस्रादिभ्य इति** । इदमजन्ताधिकारे ऋकारान्तनिरूपणे व्याख्यातम् । **पञ्चेति** । इहान्तरङ्गत्वाद् नान्तलक्षणङीपि प्राप्ते, षट्त्वान्निषिद्धे 'षड्भ्यो लुक्' इति जश्शसोर्लुकि नलोप इति भावः । **चतस्र इति** । चतस्रभावे सति ऋदन्तलक्षणङीब् न, स्वस्रादित्वात् । ननु 'न षट्स्वस्रादिभ्यः' इति ङीबेव प्रतिषिध्यताम्, किं टाबनुवृत्त्या, नान्तत्वात् टापः प्रसक्तेरभावेन तन्निषेधवैयर्थ्यादित्यत आह—**पञ्चेत्यत्रेति** । पञ्चेत्यत्र 'न षट्स्वस्रादिभ्यः' इति न टाबित्यन्वयः । अदन्तलक्षणष्टाबिति शेषः । नान्तलक्षणङीपि प्रतिषिद्धे सति जश्शसोर्लुकि नलोपे कृते अदन्तत्वात् प्राप्तस्य टापः प्रतिषेधार्थमिह टाबनुवृत्तिरावश्यकीति यावत् । न च नलोपस्यासिद्धत्वात् टापः

---

**व्रीहौ वेति** । 'अन्यतरस्याम्' इति योगविभागादिदं लभ्यते, नत्वपूर्वं वचनमिति वक्ष्यते । **बहुधीवरीति** । बहवो धीवानो यस्यां नगर्यामिति विग्रहः । **पक्षे डाबिति** । 'डाबुभाभ्याम्-' इति सूत्रेण । तथा च द्विवचने बहुधीवर्यौ बहुधीवानौ बहुधीवे इति रूपत्रयं भवतीति भावः । **द्विपादिति** । द्वौ पादौ यस्या इति बहुव्रीहौ 'संख्यासुपूर्वस्य' इति पादशब्दस्यान्तलोपः, ङीपि भत्वात् 'पादः पत्' । **टाबृचि** । पूर्वेण प्राप्तस्य ङीपोऽपवादः । यद्यपि 'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु' इति कोशात्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

३५३) इति नलोपस्यासिद्धत्वाद् 'न षट्स्वस्त्रादिभ्यः' (सू ३०८) इति न टाप्। ४५९ **मनः।** (४-१-११) मन्नन्तान्न ङीप्। सीमा, सीमानौ। ४६० **अनो बहुव्रीहेः।** (४-१-१२) अन्नन्ताद्बहुव्रीहेर्न ङीप्। बहुयज्वा, बहुयज्वानौ।

---

प्रसक्तिरेव नेति वाच्यम्, सुप्स्वरसंज्ञातुग्विधिषु टाब्विधेरनन्तर्भावेन तस्मिन् कर्तव्ये नलोपस्यासिद्धत्वाभावात्। ननु 'न षट्स्वस्त्रादिभ्यः' इत्यत्र सत्यामपि टावनुवृत्तौ कथमिह षट्संज्ञानिबन्धनस्तन्निषेधः, नलोपे कृते षट्संज्ञाविरहात्। न च टाब्निषेधे कर्तव्ये नलोपस्यासिद्धत्वं शङ्क्यम्, टाब्निषेधस्य सुप्स्वरसंज्ञातुग्विधिषु अनन्तर्भावादित्यत आह—**नलोपे कृतेऽपीत्यादि असिद्धत्वादित्यन्तम्।** टाब्निषेधविधिरयं षट्संज्ञामपि विधत्ते, कार्यकालपक्षाश्रयणात्। ततश्च तस्मिन् कर्तव्ये नलोपस्यासिद्धत्वेन षट्संज्ञाया निर्बाधतया षट्संज्ञानिबन्धनष्टाप्प्रतिषेधोऽत्र निर्बाध इति भावः। वस्तुतस्तु नलोपस्यासिद्धत्वेऽपि भूतपूर्वषट्संज्ञामाश्रित्य टाब्निषेध उपपद्यते। अत एव 'षट्संज्ञायां नलोपासिद्धत्वस्य न फलम्' इति 'नलोपः सुप्स्वर—' इति सूत्रभाष्ये उक्तमित्याहुः।

**मनः।** 'न षट्स्वस्त्रादिभ्यः' इत्यतः नेति 'ऋन्नेभ्यः—' इत्यतो ङीबिति चानुवर्तते। मन इति प्रत्ययग्रहणपरिभाषया तदन्तं गृह्यते। तदाह—**मन्नन्तान्न ङीबिति। सीमेति।** 'षिञ् बन्धने' औणादिको मनिन्, प्रकृतेर्दीर्घश्च। सीमन्शब्दाद् ङीपि निषिद्धे राजवद्रूपम्। ङीपि सति तु अल्लोपे सीम्नीति स्यादिति भावः। ननु वक्ष्यमाणडापि सीमेति सौ रूपसिद्धेः किं ङीब्निषेधेनेत्यत आह—**सीमानाविति।** डापि तु सति सीमे इत्येव स्यादिति भावः। **अनो बहुव्रीहेः।** अन इति बहुव्रीहेरित्यस्य विशेषणम्, तदन्तविधिः। नेति ङीबिति च पूर्ववदनुवर्तते। तदाह—**अन्नन्तादिति। बहुयज्वा, बहुयज्वानाविति।** बहवो यज्वानो यस्या इति विग्रहः। नान्तलक्षण-

---

पादसमानार्थकः पदशब्दोऽस्तीति तेनैव द्विपदा एकपदेति रूपं सिध्यति, तथापि ऋचि वाच्यायां द्विपदी द्विपादिति प्रयोगनिवृत्तये सूत्रारम्भोऽयमावश्यकः। **असिद्धत्वादिति।** एतच्चासिद्धत्वोपवर्णनं कार्यकालपक्ष एवोपयुज्यते, न तु यथोद्देशपक्षे, सकृत्कृतायाः संज्ञायाः सर्वार्थत्वेन तस्याः पुनरपेक्षाभावात्। न च पञ्चन्निति नान्तस्य कृतायामपि संज्ञायां पञ्चेत्यदन्तस्य न कृतेति शङ्क्यम्, एकदेशविकृतस्यानन्यत्वादित्याहुः। तदसत्, एकदेशविकृतस्योपसंख्यानं हि 'स्थानिवदादेशोऽनल्विधौ' इत्यत्र पठ्यते तच्चाल्विधौ न प्रवर्तत एवेति यथोद्देशपक्षेऽप्यसिद्धत्ववर्णनस्य युक्तत्वात्। **न ङीबिति।** पूर्वसूत्रान्नेत्यनुवर्तत इति भावः। **अनो बहुव्रीहेः।** ननु राजयुध्वेत्यादिसिद्धये अवश्यं वक्तव्येन 'वनो न हशः' इत्यनेनैवेष्टसिद्धेः किमनेन सूत्रेण। मैवम्, अन्नन्ताद्बहुव्रीहेः 'डाबुभाभ्याम्—' इति डाब्विधानार्थमेतत्सूत्रस्यावश्यारब्धव्यत्वात्। तथा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

**४६१ डाबुभाभ्यामन्यतरस्याम्।** (४-१-१३) सूत्रद्वयोपात्ताभ्यां डाब्वा स्यात्। सीमा, सीमे, सीमानौ। दामा, दामे, दामानौ। 'न पुंसि दाम' इत्यमरः। बहुयज्वा, बहुयज्वे, बहुयज्वानौ। **४६२ अन उपधालोपिनोऽन्यतर-**

---

ङीपः प्रतिषेधे राजवद्रूपाणि। 'न संयोगात्—' इति निषेधान्नायमुपधालोपी। अतोऽत्र 'अन उपधालोपिनः' इति विकल्पो न प्रवर्तितुमर्हति। **डाबुभाभ्याम्।** उभाभ्यामित्ये-तद्व्याचष्टे—**सूत्रद्वयोपात्ताभ्यामिति।** 'मन' इति 'अनो बहुव्रीहेः' इति च सूत्र-द्वयोपात्ताद् मन्नन्तादन्नन्तबहुव्रीहेश्च इत्यर्थः। नन्विहान्यतरस्यांग्रहणं व्यर्थम्। न च तदभावे डाब्नित्यः स्यादिति वाच्यम्, डापो नित्यत्वे तेनैव ङीपो निवृत्तिसंभवेन ङीब्निषेधवैयर्थ्यात्। एवं च ङीब्निषेधडापोर्वचनसामर्थ्यादेव विकल्पसिद्धेः अन्यतरस्यां-ग्रहणं व्यर्थमिति चेत्, स्पष्टार्थमिति केचित्। भाष्ये तु 'अन्यतरस्याम्' इति योग-विभागमाश्रित्य 'बहुव्रीहौ वा' इति वार्तिकं प्रत्याख्यातम्। **सीमेति।** सीमन्शब्दाद् डापि, टिलोपे सीमाशब्दात् सोर्हल्ङ्यादिलोपः। डाबभावपक्षेऽपि 'मनः' इति ङीब्नि-षेधे सौ सीमेत्येव राजवद्रूपम्। तर्हि डाब्विधेः किं फलमित्यत आह—**सीमे, सीमा-नाविति।** मन्नन्तविषये उदाहरणान्तरमाह—**दामेति।** दाधातोरौणादिको मनिन्। 'हिरण्मयं दाम दक्षिणा—' इत्यादौ दामशब्दस्य नपुंसकत्वदर्शनादाह—**न पुंसीति।** दामन्शब्दः पुंसि न, किन्तु स्त्रीनपुंसकयोरित्यर्थः, 'निषिद्धलिङ्गं शेषार्थम्' इति परि-भाषितत्वात्। अन्नन्तबहुव्रीहेरुदाहरति—**बहुयज्वेति।** बहवो यज्वानो यस्या इति विग्रहः। डापि टिलोपे बहुयज्वाशब्दात् सोर्हल्ङ्यादिलोपः। ङीब्निषेधे सौ एतदेव राजवद्रूपम्। डापः फलमाह—**बहुयज्वे, बहुयज्वानाविति।** शसि बहुयज्वनः। अत्र अल्लोपस्तु न भवति, 'न संयोगाद्वमन्तात्' इति निषेधात्। अत एव 'अन उपधा-लोपिनः' इत्यस्य नायं विषयः। अथ बहवो राजानो यस्या इति बहुव्रीहौ बहुराजन्-शब्दाद् 'अनो बहुव्रीहेः' इति ङीब्निषेधे 'डाबुभाभ्याम्' इति डापि च नान्तत्वमाका-रान्तत्वं च प्राप्तम्, ङीबन्तत्वमपीष्यते, तदर्थमिदमारभ्यते—**अन उपधा।** इदं

---

चानेन ङीपि निषिद्धे तत्संनियोगेन प्राप्तो 'वनो र च' इति यो रेफः सोऽपि दुर्लभ एवेति 'वनो न हशः' इति वार्तिकमबहुव्रीह्यर्थमिति फलितम्। **बहुयज्वानाविति।** 'न संयोगात्—' इति निषेधान्नायमुपधालोपी। तेनात्र 'अन उपधालोपिनः—' इति वक्ष्यमाणविकल्पो न प्रवर्तते। **डाबुभाभ्याम्।** उभाभ्यांग्रहणं व्यर्थम्, मन्नन्तान्नन्त-योरनुवृत्त्यैव तत्फलसिद्धेरित्येके। उभयोरप्यनुवृत्तिसूचनाय तद्ग्रहणमावश्यकम्, अन्यथा सन्निहितस्यान्नन्तस्यैवानुवृत्तिरिति शङ्का स्यादित्यन्ये। ननु निषेधडापोर्वचनसामर्थ्या-त्पर्यायः सिध्यति तत् किमन्यतरस्यांग्रहणेन। सत्यम्, अन्यतरस्यामिति योगो

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्याम्। (४-१-२८) अन्नन्ताद्बहुव्रीहेरुपधालोपिनो वा ङीप्स्यात्। पक्षे डाब्ङी-न्निषेधौ। बहुराज्ञी, बहुराजा। बहुराज्ञ्यौ, बहुराजे, बहुराजानौ। ४६३ प्रत्यय-स्थात्कात्पूर्वस्यात इदाप्यसुपः। (७-३-४४) प्रत्ययस्थात्ककारात्पूर्वस्याकार-

---

सूत्रं नात्र प्रकरणे पठितम्, किं तु 'दामहायनान्ताच्च' इत्युत्तरं पठितं प्रसङ्गादत्रोपन्य-स्तम्। 'बहुव्रीहेरूधसो ङीष्' इत्यतो बहुव्रीहेरित्यनुवर्तते, 'संख्याव्ययादेर्ङीप्' इत्यतो ङीबिति च। प्रातिपदिकादित्यधिकृतम् अन इत्यनेन विशेष्यते, तदन्तविधिः। तदाह— अन्नन्तादित्यादिना। पक्षे डाब्ङीब्निषेधाविति। कदाचिद् ङीब्निषेधः, कदाचिद् डाप् चेत्यर्थः। अन्यतरस्यांग्रहणस्य प्रयोजनमिदम्। अकृते त्वन्यतरस्यां-ग्रहणे बहुयज्वादिशब्दे अनुपधालोपिनि सावकाशस्य 'अनो बहुव्रीहेः' इति ङीप्प्रति-षेधस्य, 'डाबुभाभ्याम्–' इति डापश्च, बहुराजन्शब्दादावुपधालोपिनि अनवकाशेन ङीपा बाधः स्यात्। बहुराज्ञीति। ङीपि अल्लोपे सोर्हल्ङ्यादिलोप इति भावः। बहुराजेति। डापि ङीब्निषेधे च सौ रूपम्। बहुराज्ञ्याविति। ङीप्पक्षे औङि यण्। बहुराजे इति। डाप्पक्षे औङि रूपम्। बहुराजानाविति। ङीब्निषेधे औङि रूपम्। प्रत्ययस्थात्। ककारादिति। क् इति वर्णादित्यर्थः। अकार

---

विभज्यते तत्र 'मनः' इति निवृत्तम्। अनो बहुव्रीहेर्डाब्वा स्यात्। पूर्वे-णैव डापि सिद्धे पुनर्विधानमिदम् 'ऋन्नेभ्यः–' इति ङीपा सह विकल्पार्थम्। 'अन उपधालोपिनः–' इति सूत्रं तु नियमार्थम्। अनो योऽसौ विकल्पः स उपधालोपिनि एवेति। एवं च बहुधीवर्यौ बहुधीवानौ बहुधीवेत्युक्तरूपत्रयं सिद्धमिति 'बहुव्रीहौ वा' इत्येतन्नापूर्वं वचनमिति बोध्यम्। उपधालोपिन एवेति नियमात्तु सुपर्वा चारुपर्वा इत्या-दावनुपधालोपिनि ङीप् न भवति, किंतु डाप्निषेधावेव भवतः। अयं च योगविभागो-ऽवश्यमभ्युपेयः। अन्यथा बहुधीवरीत्यत्र प्रकरणान्तरस्थेन 'अन उपधालोपिनः–' इति वक्ष्यमाणेन पाक्षिके ङीपि कृतेऽपि 'ऋन्नेभ्यः–' इति प्राप्तं ङीपमनूद्य तत्सन्नि-योगेन हि विधीयमानो यो 'वनो र च' इति रेफः, स न सिध्येत्। ननु 'वनो र च' इति सूत्रमेव ङीब्रौ विधत्तामिति चेन्न, उभयविधौ गौरवात्। किं च उभयविधाय-कत्वेऽपि 'अनो बहुव्रीहेः' इत्यनेन ङीपि निषिद्धे रोऽपि दुर्लभः सन्नियोगशिष्टत्वात्। भाष्ये तु 'अनो बहुव्रीहेः' इत्यस्यानन्तरम् 'उपधालोपिनो वा' इति सूत्रमस्तु, 'अन उपधा–' इत्यादि प्रदेशान्तरस्थं सूत्रं डाप्सूत्रेऽन्यतरस्यांग्रहणं च मास्त्वित्युक्तम्। अन उपधा। 'बहुव्रीहेरूधसो ङीष्' इत्यतो बहुव्रीहिग्रहणं 'संख्याव्ययादेर्ङीप्' इत्यतो ङीप् चानुवर्तत इत्याशयेनाह—अन्नन्तादित्यादि। नियमार्थमिदमित्युक्तम्। न चैवं पूर्वसूत्रेणैव विकल्पसिद्धाविहान्यतरस्यांग्रहणं व्यर्थमिति वाच्यम्। असति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

**स्येकारः स्यादापि परे, स आप् सुपः परो न चेत्। सर्विका। कारिका। अतः**

उच्चारणार्थः, 'वर्णात्कारः' इत्युक्तेः। एवं च सूत्रे कादित्यत्र अकार उच्चारणार्थ इति सूचितम्। **स आबिति**। इत्त्वविधौ यः परनिमित्तत्वेनोपात्तः, स आबित्यर्थः। **सुपः परो न चेदिति**। सूत्रे असुपः इति पञ्चम्यन्तम्, असमर्थसमासः। आपि सुपः परस्मिन् सति इत्वं न भवतीत्यर्थो विवक्षित इति भावः। **सर्विकेति**। सर्वशब्दाट्टापि सवर्णदीर्घे सर्वाशब्दः, एकादेशस्य पूर्वान्तत्वेन ग्रहणात् सर्वनामकार्यम्। ततश्च 'अव्ययसर्वनाम्नाम्—' इति टेः प्रागकच्, तत्र ककारादकार उच्चारणार्थः, चकार इत्। अक् इति ककारान्तः प्रत्ययः टेः प्राग्भवति, सर्वकाशब्देऽस्मिन् ककारात्पूर्वस्य अत इत्वे सर्विकेति रूपम्। ननु ककारात्पूर्वस्य अकारस्य कथमित्वम्, ककारेण व्यवहिततया आप्परकत्वाभावादिति चेत्, न—'येन नाव्यवधानम्—' इति न्यायेन तद्व्यवधानस्य अबाधकत्वात्। **कारिकेति**। कृञो ण्वुल्, अकादेशः, 'अचो ञ्णिति' इति आकार-

ह्यन्यतरस्यांग्रहणे नित्यार्थो विधिरेवायं स्यान्न तु नियम इति। **प्रत्ययस्थात्कात्पूर्वस्य**। कादित्यकार उच्चारणार्थः। व्यञ्जनमात्रं विवक्षितम्। अन्यथा एतिकाश्चरन्तीत्यादावकचि इत्वं न स्यात्। तत्र हि अकारविशिष्टककारस्य प्रत्ययस्थत्वाभावात्। न चाकच्यप्यकारान्तककार एव प्रत्ययस्थो भवतु 'अतो गुणे' इति पररूपे सत्येतिका इत्यादिरूपसिद्धेरिति वाच्यम्। पचतकीत्यादिवक्ष्यमाणरूपासिद्धिप्रसङ्गादित्याशयेनाह— **ककारादिति**। वर्णनिर्देशे हि कारप्रत्ययो विहितः। क्वचित्समुदायात्प्रयोगस्तु 'उच्चैस्तरां वा वषट्कारः' इत्यादिनिर्देशरूपयत्नसाध्य इति भावः। **आप पर इति**। एतच्चाकारविशेषणम्। तत्सामर्थ्यात्ककाराकाराभ्यां व्यवायेऽपि भवति, न तु पुत्रकाम्या रथकव्येत्यादौ त्रिचतुरादिव्यवाये। अत एव सर्विकेत्यादावाद्याकारस्य न भवति, तदेतदुक्तम्—**अकारस्येकारः स्यादापि पर इति**। यदि त्वापीति ककारविशेषणं स्यात्तर्हि रथकव्येत्यादावतिप्रसङ्गः, व्यवहितस्यापि परत्वानपायात्। न च निर्दिष्टपरिभाषया निस्तारः, अनुवादे परिभाषाणामनुपस्थितेः। न चापीत्यस्याकारविशेषणत्वेऽपि तद्दोषतादवस्थ्यमिति वाच्यम्। अनुवादे परिभाषाणामित्यत्रानुवाद इत्यस्यानूद्यमानविशेषणेष्वित्यर्थाभ्युपगमात्। कात्पूर्वस्यात इदित्यत्र हि अत इत्यनूद्येत्वविधानादनुवाद्यत्वमेवात इत्यस्य। न त्वनूद्यमानविशेषणत्वम्। कादित्यस्य त्वनूद्यमानविशेषणत्वं स्पष्टमेवेति न तत्र निर्दिष्टपरिभाषोपतिष्ठत इति वैषम्यात्। अनूद्यमानविशेषणे परिभाषा नोपतिष्ठत इत्येतद् 'उदीचामातः—' इति सूत्रस्थस्थानेग्रहणेन ज्ञापयिष्यते। यदि 'असुपः' इति पर्युदासः स्यात् तर्हि बहुपरिव्राजका नगरीत्यत्रापि स्यादेव, उत्तरपदस्य सुबन्तत्वेऽपि समुदायस्यासुबन्तत्वात् ततः परष्टाबिति। तेनात्र

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

किम्--नौका। प्रत्ययस्थात् किम्--शक्नोतीतिं शका। असुपः किम्--बहुपरिव्राजका नगरी। कात् किम्--नन्दना। पूर्वस्य किम्--परस्य मा भूत्। कटुका।

स्य वृद्धिः, रपरत्वम्, कारकशब्दात् टाप्, सवर्णदीर्घः, कात्पूर्वस्य रेफादकारस्य इत्वम्। कादिति संघातग्रहणे तु एतिका इति न सिध्यति, एतच्छब्दे टेः प्रागकचि एतकद्शब्दाद् जसि, त्यदाद्यत्वे, पररूपे, अदन्तत्वाच्चापि, कात्पूर्वस्य इत्वे एतिका इति रूपम्। अत्राकचि अकारस्य उच्चारणार्थतया प्रत्ययस्थकशब्दाभावाद् इत्वं न स्यात्, ककारादुत्तरावर्णस्याकजनवयवत्वात्। न चाकचि अकारस्य नोच्चारणार्थत्वमिति शङ्क्यम्, एवं सति निरित्यव्यये अकचि नकिर् इति न स्यात्। अतः कादित्यनेन ककारादित्येव विवक्षितम्। यका सकेत्यत्र 'न यासयोः' इति इत्त्वनिषेधाल्लिङ्गाच्च। अन्यथा तत्र प्रत्ययस्थककाराभावेन इत्त्वस्याप्राप्तेः किं तन्निषेधेनेत्यलम्। **नौकेति**। नौशब्दात् स्वार्थिकः कः, टाप्। अत्र ककारात् पूर्वस्य औकारस्य इत्त्वनिवृत्त्यर्थमत इति वचनम्। **शकेति**। 'शक्लृ शक्तौ' पचाद्यच्, टाप्। अत्र ककारस्य धात्ववयवस्य प्रत्ययस्थत्वाभावान्न ततः पूर्वस्य इत्वम्। **बहुपरिव्राजकेति**। परिपूर्वाद् व्रजेः ण्वुल्। बहवः परिव्राजकाः यस्यामिति बहुव्रीहिः। सुपो लुकि बहुपरिव्राजकशब्दात् टाप्। अत्राकारस्य कात्पूर्वस्य इत्वं न, प्रत्ययलक्षणेन आपः सुबपेक्षया परत्वात्। 'न लुमता--' इति निषेधस्तु न, तस्य लुमता लुप्ते प्रत्यये यदङ्गं तस्य कार्ये एव प्रवृत्तेः। इत्वं तु टाप्यनाङ्गकार्यमिति नात्र तन्निषेधः। यदि तु 'असुपः' इति पर्युदास आश्रीयेत, तर्हि बहुपरिव्राजक इति समुदायस्य सुब्भिन्नत्वादापः ततः परत्वादित्वं दुर्वारं स्यादिति भावः। **पूर्वस्य किमिति**। एकादेशे कृते परस्य ह्रस्वस्याभावात् पूर्वस्येत्यर्थसिद्धमिति प्रश्नः। **कटुकेति**। कटुशब्दात् स्वार्थे कः, टाप्, सवर्णदीर्घः। पूर्वस्येत्यनुक्तौ अत्र सवर्णदीर्घात् पूर्वं वर्णादाङ्गस्य बलीयस्त्वादपवादत्वाच्च द्वितीयककारादुत्तरस्य अका-

प्रसज्यप्रतिषेध इत्याह---**स आप् सुपः परो न चेदिति**। सुबन्तात् परो न चेदित्यर्थः। **सर्विकेति**। 'अव्ययसर्वनाम्नाम्--' इत्यज्ञातार्थेऽकच्। **कारिकेति**। करोतेर्ण्वुल्। णित्त्वाद् वृद्धिः। **नौकेति**। नौशब्दात् स्वार्थे कः, ततष्टाप्। **शकेति**। शक्नोतीति विग्रहः। पचाद्यच्। ततष्टाप्। **बहुपरिव्राजकेति**। परिपूर्वाद् व्रजेर्ण्वुल्। बहवः परिव्राजका यस्यामिति बहुव्रीहौ तदवयवस्य सुपो लुकि कृतेऽपि प्रत्ययलक्षणेनोत्तरपदस्य सुबन्तत्वाट्टापः सुबन्तात् परत्वमस्तीतीत्वमत्र न भवति। **नन्देति**। 'नन्दिग्रहि--' इति ल्युः। वस्तुतस्तु सूत्रे 'प्रत्ययस्थे किं' इति सप्तमीनिर्देशमेव कृत्वा पूर्वस्येति ग्रहणं सुत्यजमित्याहुः। **पूर्वस्य किमिति**। अर्थादेवेदं लभ्यते। टाबेकादेशे कृते परत्र ह्रस्वाकाराभावादिति प्रश्नः। इतरो निर्दिष्टपरिभाषया कात्

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अत इति तपरः किम्—राका । आपि किम्—कारकः । 'मामकनरकयोरुपसंख्यानम्' (वा ४१२४) । मामिका । नरान्कायतीति नरिका । 'त्यक्त्यपोश्च' (वा ४१२५) । दाक्षिणात्यिका । इहत्यिका । ४६४ न यासयोः । (७-३-४५) यत्तदोरस्येत्

रस्य आपि परे इत्वं स्यादिति भावः । **अत इति तपरः किम्—राका इति ।** 'कृदाधारार्चिकलिभ्यः कः' इति राधातोः औणादिकः कप्रत्ययः । 'उणादयो बहुलम्' इति बहुलग्रहणात् 'केऽणः' इति ह्रस्वो न, ककारस्य च नेत्वम् । टाप्, स्त्रीत्वं लोकात् । 'कलाहीने सानुमतिः पूर्णे राका निशाकरे' इत्यमरः । अत्र ककारात् पूर्वस्य दीर्घाकारत्वान्नेत्त्वमिति भावः । **मामकेति ।** मामकनरकशब्दयोः कात्पूर्वस्य इत्वं वक्तव्यमित्यर्थः । **मामिकेति ।** ममेयमिति विग्रहे 'युष्मदस्मदोरन्यतरस्यां खञ् च' इत्यणि, 'तवकममकावेकवचने' इति ममकादेशे, आदिवृद्धिः, टाप्, 'टिड्ढाणञ्—' इत्यादिना ङीप्तु न, 'केवलमामक—' इत्यादिना संज्ञाच्छन्दसोरेव मामकशब्दाद् ङीब्नियमात् । ततश्चात्र ककारस्य प्रत्ययस्थत्वाभावात् 'प्रत्ययस्थात्—' इत्यप्राप्तौ वचनमिदम् । **नरानिति ।** कैशब्दे 'आदेश उपदेशे—' इत्यात्त्वे, 'आतोऽनुपसर्गे कः' इति कप्रत्यये 'आतो लोप इटि च' इति आलोपः, उपपदसमासः, सुपो लुक्, टाप् । अत्रापि ककारस्य प्रत्ययस्थत्वाभावात् 'प्रत्ययस्थात्' इत्यप्राप्तौ वचनम् । **त्यक्त्यपोश्चेति ।** त्यगन्ते त्यबन्ते च प्रत्ययस्थात्कात्पूर्वस्याकारस्य इत्वं वक्तव्यमित्यर्थः । 'उदीचामातः स्थाने' इति विकल्पस्यापवादः । **दाक्षिणात्यिकेति ।** दक्षिणस्यां दिशि अदूरे इति विग्रहे 'दक्षिणादाच्' इत्याच्, 'तद्धितश्चासर्वविभक्तिः' इत्यव्ययत्वम् । दक्षिणाशब्दाद् भवार्थे 'दक्षिणापश्चात्पुरसस्त्यक्' इति त्यक्, 'किति च' इत्यादिवृद्धिः, दाक्षिणात्यशब्दात् टाप् । ततः स्वार्थिकः कः, 'केऽणः' इति टापो ह्रस्वः, पुनष्टाप्, इत्वमिति भावः । 'दक्षिणस्यां दिशि भवेति विग्रहे दक्षिणाशब्दात् टाबन्तादेव त्यकन्' इति मतं तु प्रौढमनोरमायां दूषितम् । **इहत्यिकेति ।** 'अव्ययात्त्यप्' इति त्यप्, टाप्, स्वार्थिकः कः 'केऽणः' इति ह्रस्वः, पुनः टाप् । **न यासयोः ।** नात्र कृतटापोः प्रथमान्त-

पूर्वस्येति न लभ्येत, किं तु टाबेकादेशं बाधित्वा कात् परस्यैवाकारस्य स्यादित्याशयेनाह—**परस्येत्यादि ।** **कटुकेति ।** कटुरत्र कटुरसवति । अज्ञातादौ कः । **राकेति ।** 'कृदाधारार्चिकलिभ्यः कः' । बाहुलकादित्संज्ञाभावः । संज्ञापूर्वकविधेरनित्यत्वात् 'केऽणः' इति ह्रस्वो न । **मामकनरकयोरिति ।** ककारस्य प्रत्ययस्थत्वाभावादप्राप्ते वचनम् । **मामिकेति ।** ममेयं मामिका । 'युष्मदस्मदोरन्यतरस्यां खञ्च' इत्यण्, 'तवकममकावेकवचने', इति ममकादेशः, आदिवृद्धिः । 'केवलमामक—' इत्यादिना

१ पदमिदं नास्ति—क।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्यात् । यका । सका । यकाम् । तकाम् । 'त्यकनश्च निषेधः' (वा ४५२६) उपत्यका । अधित्यका । 'आशिषि वुनश्च न' (वा ४५२८) । जीवका । भवका ।

---

योर्निर्देशः, यत्तदोरित्येव विवक्षितमिति भाष्ये स्पष्टम् । प्रत्ययस्थात्–' इत्यतः अत इति इदिति चानुवर्तते । तदाह—**यत्तदोरिति । यका । सका इति ।** 'अव्ययसर्वनाम्नाम्–' इति यत्तच्छब्दयोष्टेः प्रागकचि सौ त्यदाद्यत्वम्, पररूपम्, टाप्, हल्ङ्यादिना सुलोपः । तच्छब्दे 'तदोः सः सौ–' इति तकारस्य सकारः । उभयत्रापि 'प्रत्ययस्थात्–' इति प्राप्तमित्वमत्र सूत्रे निषिध्यते । अथ 'न यासयोः' इत्यस्य प्रथमान्तानुकरणत्वे किं बाधकमित्यत आह—**यकाम् । तकामिति । त्यकनश्च निषेध इति ।** त्यकन्प्रत्ययान्तस्यापि 'प्रत्ययस्थात्–' इति इत्वप्रतिषेधो वक्तव्य इत्यर्थः । **उपत्यका, अधित्यकेति ।** 'उपाधिभ्यां त्यकन्नासन्नारूढयोः' इति त्यकन्, टाप्, सोर्हल्ङ्यादिलोपः । 'उपत्यकाद्रेरासन्ना भूमिरूर्ध्वमधित्यका' इत्यमरः । ननु त्यकन्विधौ अकारस्य उच्चारणसामर्थ्यादेव इत्वं न भवति, अन्यथा त्यिकनमेव विदध्यात्, अतः किं तन्निषेधेनेति चेत्, मैवम्-पञ्चोपत्यको ग्राम इत्यत्र अकारश्रवणार्थत्वादित्यलम् । **आशिषीति ।** आशिषि यो वुन्, तस्य योऽयमकादेशः तदकारस्य 'प्रत्ययस्थात्–' इति इत्वं नेति वक्तव्यमित्यर्थः । **जीवका । भवकेति ।** जीवतात्, भवतादित्यर्थः । जीवधातोः

---

संज्ञाछन्दसोरेवेति नियमान्न ङीप् । **नरिकेति ।** 'कै शब्दे' 'आदेच उपदेशे–' इत्यात्वम्, 'आतोऽनुपसर्गे कः', 'आतो लोप इटि च' इत्यालोपः, टाप्, ईत्वम् । **त्यक्त्यपोश्च ।** उपसंख्यानमित्यनुषज्यते । 'उदीचामातः–' इति विकल्पापवादः । **दाक्षिणात्यिकेति ।** दक्षिणस्यामदूरे दक्षिणा 'दक्षिणादाच्' दक्षिणाभवेति विग्रहे 'दक्षिणापश्चात्पुरसस्त्यक्', 'किति च' इत्यादिना वृद्धिः, टाप् । ततोऽज्ञातार्थे कः 'केऽणः' इति ह्रस्वः, टाप् । प्राचा तु दक्षिणस्यां दिशि भवेति विगृहीतं तच्च मनोरमायां दूषितम् । त्यग्विधावव्ययसाहचर्यादाजन्तस्यैव दक्षिणाशब्दस्य ग्रहणात् । अन्यथा सर्वनाम्नो वृत्तिमात्रे पुंवद्भावापत्तेश्चेति । **इहत्यिकेति ।** 'अव्ययात्त्यप्' । **न यासयोः ।** 'प्रत्ययस्थात्–' इति प्राप्ते निषेधोऽयम् । यासेति यत्तदोरुपलक्षणमित्याशयेनाह—**यत्तदोरिति । यका, सकेति ।** यत्तदोरकच् । त्यदाद्यत्वे टाप् । स्वरूपस्याविवक्षायां फलमाह—**यकां तकामिति ।** यद्यपि 'न यत्तदोः' इत्येव सूत्रयितुमुचितं, तथापि सन्निपातपरिभाषाया अनित्यत्वज्ञापनार्थं 'न यासयोः' इत्युक्तमित्याहुः । वस्तुतस्तु 'न यत्तदोः' इत्युक्तेऽप्यनित्यत्वं सिध्यत्येव, अन्यथा अनयोरकारस्याप्परत्वं दुर्लभमिति किमनेन निषेधेनेति । **त्यकनश्च निषेध इति ।** ननु 'मृदस्तिकन्' इतिवत् प्रक्रियालाघवाय त्यिकन्निति वक्तव्ये त्यकन्नित्याकारनिर्देशसामर्थ्या-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

'उत्तरपदलोपे न' (वा ४५२९)। देवदत्तिका, देवका। 'क्षिपकादीनां च न' (वा ४५३०)। क्षिपका। ध्रुवका। कन्यका। चटका। 'तारका ज्योतिषि' (वा ४५३१)

---

भूधातोश्च 'आशिषि च' इति वुन्, 'युवोरनाकौ' इति तस्य अकादेशः, 'सार्वधातुकार्धधातुकयोः' इति भूधातोरूकारस्य गुणः, अवादेशश्च। **उत्तरपदेति**। उत्तरपदलोपेऽपि इत्वं नेति वक्तव्यमित्यर्थः। **देवकेति**। देवदत्तशब्दात् स्वार्थे कः। 'ठाजादावूर्ध्वं द्वितीयादचः' 'अनजादौ च विभाषा लोपो वक्तव्यः' इति दत्तशब्दलोपः। देवकशब्दात् टाप्। देवदत्तिकेति तु दत्तपदस्य लोपाभिव्यक्तये उपन्यस्तम्। **क्षिपकादीनां चेति**। क्षिपकादिशब्दानामित्वं नेति वक्तव्यमित्यर्थः। क्षिपकादिगणं पठति— **क्षिपकेति**। क्षिप प्रेरणे। 'इगुपधज्ञाप्रीकिरः कः'। कित्त्वान्न लघूपधगुणः, क्षिपाशब्दात् स्वार्थे कः, 'केऽणः' इति ह्रस्वः, पुनष्टाप्। **ध्रुवकेति**। 'ध्रुव स्थैर्ये' कुटादिः, क्षिपकेतिवद्रूपम्। यद्वा 'ध्रु स्थैर्ये' पचाद्यच्, 'गाङ्कुटादिभ्यः—' इति ङित्त्वान्न गुणः, उवङ्, ध्रुवशब्दात् टाप्, ततः स्वार्थिकः कः, 'केऽणः' इति ह्रस्वः, पुनष्टाप्। **कन्यकेति**। कन्याशब्दात् कः, 'केऽणः' इति ह्रस्वः, पुनष्टाप्। **चटकेति**। 'चट भेदने'। पचाद्यच्, टाप् स्वार्थे कः, 'केऽणः' इति ह्रस्वः, पुनष्टाप्। क्षिपकादिराकृतिगणः। तेन अलका, इष्टका इत्यादि। **तारका ज्योतिषीति**। वार्तिकमिदम्। ज्योतिषि वाच्ये

---

दित्त्वाभावे सिद्धे किमनेन निषेधवचनेन। मैवम्। पञ्चभिरुपत्यकाभिः क्रीतः पञ्चोपत्यक इत्यादौ तद्धितलुकि स्त्रीप्रत्ययस्यापि लुक्यकारस्य श्रवणार्थत्वात्तस्य त्यिकन्नित्युक्ते हि पञ्चोपत्यिक इति स्यात्, इष्यते तु पञ्चोपत्यक इति। तस्मादावश्यकमेव निषेधवचनम्। 'मृदस्तिकन्' इत्यत्रापीकारोच्चारणं तद्धितलुकि श्रवणार्थम्, न तु प्रक्रियालाघवार्थम्। अन्यथा पञ्चभिर्मृत्तिकाभिः क्रीत इति 'आर्हात्—' इति ठकः 'अध्यर्धपूर्व—' इति लुकि कृते 'लुक् तद्धितलुकि' इति टापो लुकि निमित्ताभावात् 'प्रत्ययस्थात्—' इतीत्त्वं न स्यात् पञ्चमृत्तिक इत्यत्र। न च लुकः प्रागेवान्तरङ्गत्वात् 'प्रत्ययस्थात्—' इतीत्त्वं सिध्यत्येवेति वाच्यम्। 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते' इत्यभ्युपगमात्। अत एव सनीस्रंसत इत्यादौ नलोपाभावः सिध्यति। पञ्चभिः खट्वाभिः क्रीतः पञ्चखट्व इत्यादौ टापा सहैकादेशोऽपि न भवति। अन्यथा एकादेशस्यादिवद्भावाट्टाब्ग्रहणेन ग्रहणात् 'लुक् तद्धितलुकि' इत्यनुपसर्जनस्त्रीप्रत्ययस्य लुकि कृते अकारस्य श्रवणं न स्यात्। एतच्च भाष्यकैयटयोः स्पष्टम्। **उपत्यकेति**। 'उपाधिभ्यां त्यकन्नासन्नारूढयोः'। **आशिषीति**। आशीरर्थे विहितस्य वुन्प्रत्ययस्यात इत्त्वं न भवतीति वक्तव्यमित्यर्थः। **जीवका**। **भवकेति**। जीवताद्भवतादित्यर्थे 'जीवतिभवतिभ्यामाशिषि च' इति वुन्, तस्याकादेशे कृते टाप्। **देवकेति**।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अन्यत्र तारिका। 'वर्णका तान्तवे' (वा ४५३२)। अन्यत्र वर्णिका। 'वर्तका शकुनौ प्राचाम्' (वा ४५३३)। उदीचां तु वर्तिका। 'अष्टका पितृदेवत्ये' (वा

---

तारकेति भवति, इत्वं न भवतीति यावत्। 'तॄ प्लवनतरणयोः' ण्वुल्, अकादेशः, ऋकारस्य वृद्धिः, रपरत्वम्, टाप्। ज्योतिरित्यनेन नक्षत्रम् अक्ष्णः कनीनिका च विवक्षिते। 'नक्षत्रमृक्षं भं तारं तारकापि' इति 'तारकाक्ष्णः कनीनिका' इति चामरः। **अन्यत्रेति**। ज्योतिषोऽन्यत्र वाच्ये तारिकेत्येव भवतीत्यर्थः। **वर्णका तान्तव इति**। इदमपि वार्तिकम्। तान्तवे गम्ये वर्णकेति भवति, इत्वं नेत्यर्थः। तन्तूनां विकारस्तान्तवम्। 'ओरञ्'। वर्णकेति प्रावरणविशेषः। वर्ण वर्णक्रियाविस्तारगुणवचनेषु' चुरादिः। णयन्तात् ण्वुल्, अकादेशः, णिलोपः, टाप्। **अन्यत्रेति**। तान्तवादन्यत्र वर्णकेति इत्वमित्यर्थः। वर्णिका स्तोत्रीत्यर्थः। वर्णिकेति ग्रन्थविशेषस्य संज्ञा वा। **वर्तका शकुनौ प्राचामिति**। इदमपि वार्तिकम्। शकुनिः पक्षी, तत्र गम्ये प्राचां मते वर्तकेति भवति, इत्वं न भवतीत्यर्थः। प्राचांग्रहणस्य प्रयोजनमाह—**उदीचां त्विति**। उदीचां मते तु शकुनौ गम्ये वार्तिकेति इत्वं भवतीत्यर्थः। वर्तयतेर्ण्वुल्, अकादेशः, णिलोपः, स्वार्थे कः, टाप्। 'कोयष्टिकष्टिट्टिभको वर्तको वर्तिकादयः' इत्यमरः। शकुनेरन्यत्र तु नित्यमेवेत्वम्। **अष्टका पितृदेवत्ये इति**। इदमपि वार्तिकम्। पितरश्च ता देवताश्च पितृदेवताः, तदर्थं पितृदेवत्यम्। 'देवतान्तात् तादर्थ्ये यत्' इति यत्। पित्रर्थे कर्मणि वाच्ये अष्टकेति भवति 'प्रत्ययस्थात्—' इति इत्वं नेत्यर्थः। अश्नन्ति पित्रर्थे ब्राह्मणाः यस्यामिति विग्रहे 'अश भोजने' इत्यस्मात् 'इष्यशिभ्यां

---

देवदत्तशब्दात्स्वार्थिकः कः 'अनजादौ विभाषा लोपो वक्तव्यः' इति प्रागिवीयेषु वक्ष्यमाणत्वाद् द्वितीयादच ऊर्ध्वस्य दत्तशब्दस्य लोपः। देवदत्तिकाशब्दस्योपन्यासस्तु दत्तलोपमभिव्यक्तुं तदभावे इत्त्वनिषेधाभावं च दर्शयितुम्। **क्षिपकादीनां चेति**। नेत्यनुषज्यते। **क्षिपकेत्यादि**। क्षिपेरिगुपधलक्षणः कः। एवं 'ध्रुव स्थैर्ये' इत्यस्मादपि कः। यद्वा 'ध्रु गतिस्थैर्ययोः' पचाद्यच्। कुटादित्वान्ङित्वेन गुणाभावे उवङ्। 'चट भेदने' पचाद्यच्। ततष्टाप्। अज्ञातादौ कः। 'केऽणः' इति ह्रस्वः। पुनष्टाप्। **तारकेति**। तरतेर्ण्वुल्। अकादेशः। नक्षत्रं नेत्रकनीनिका च ज्योतिः। **वर्णकेति**। प्रावारविशेषः। 'वर्ण वर्णक्रियाविस्तारगुणवचनेषु' इति चौरादिकात् ण्वुल्। तन्तूनां विकारस्तान्तवम्। **अन्यत्र वर्णिकेति**। ग्रन्थविशेषस्य व्याख्या स्तोत्रकर्त्री च। **वर्तकेति**। वर्तयतीति वर्तका। शकुनावेव वाच्येऽयं विकल्पः, अन्यत्र तु नित्यमेवेत्त्वमिति बोध्यम्। **अष्टकेति**। पितरश्च ताः देवताश्च पितृदेवताः, तदर्थं कर्म पितृदैवत्यम्। देवतान्तात्तादर्थ्ये यत्। अश्नन्ति ब्राह्मणा यस्यां सा अष्टका। 'इष्य-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

४२३४)। अष्टिकान्या। 'सूतकापुत्रिकावृन्दारकाणां वेति वक्तव्यम्' (वा ४२३५) इह वा अ इति छेदः। कात्पूर्वस्याकारादेशो वेत्यर्थः। तेन पुत्रिकाशब्दे ङीनः इ-वर्णस्य पक्षेऽकारः। अन्यत्रेत्त्वबाधनार्थमकारस्यैव पक्षेऽकारः। सूतिका, सूतका

---

तकन्' इति तकन् प्रत्ययः, 'व्रश्च–' आदिना शस्य षः, तकारस्य ष्टुत्वेन टः, अष्टक-शब्दात् टाप्। अष्टिकान्येति। अष्टौ अध्यायाः परिमाणमस्या अष्टिका पाणिनी-याष्टाध्यायी, 'संख्यायाः अतिशदन्तायाः कन्' इति सूत्रेण अष्टौ इति सुबन्तात् कन् प्रत्ययः, सुबन्तात्तद्धितोत्पत्तेः सिद्धान्तयिष्यमाणत्वात्। ततस्तद्धितान्तत्वेन प्रातिपदि-कत्वात् 'सुपो धातुप्रातिपदिकयोः' इति जसो लुकि निमित्तापायाद् अष्टन आत्वनिवृत्तौ, अन्तर्वर्तिनीं विभक्तिमाश्रित्य पदत्वान्नकारलोपे, अष्टकशब्दात् टापि 'प्रत्ययस्थात्–' इति इत्वं भवत्येव। न चान्तर्वर्तिसुपः परत्वं टापः शङ्क्यम्, ककारेण व्यवधानात्। असुपः इत्यस्य बहुपरिव्राजका नगरी इत्यत्र अव्यवहिते सुपः परे टापि चरितार्थत्वात्। अत एव 'क्षिपकादीनां न' इति निषेधोऽर्थवान्, अन्यथा क्षिपाशब्दात् सुबन्तात् स्वार्थिके कप्रत्यये सुपो लुकि अन्तर्वर्तिनीं विभक्तिमाश्रित्य टापः सुबपेक्षया परत्वादसुपः इति निषेधसिद्धेः किं तेनेत्यलम्। 'वा सूतकापुत्रिकावृन्दारकाणाम्' इति वार्तिकमर्थतः पठति—सूतकेति। अत्र पुत्रिकाशब्दः इकारमध्यः नत्वकारमध्यः, स्त्रियां पुत्र-शब्दस्य शार्ङ्गरवादित्वेन ङीनन्तत्वादिति कैयटः। अत्रेत्वविकल्पभ्रमं वारयति—इह वा अ इति। सवर्णदीर्घे सति वा इति निर्देश इति भावः। अत्र अ इति लुप्त-प्रथमाकम्, कात्पूर्वस्येत्यनुवर्तते, अत इति निवृत्तम्, पुत्रिकाशब्दे अतोऽभावात्। तदाह—कात्पूर्वस्येति। नन्वत्र इत्वविकल्प एव कुतो न विधीयत इत्यत आह—तेनेति। अत्वविधानेनेत्यर्थः। पुत्रशब्दात् शार्ङ्गरवादित्वाद् ङीनि, स्वार्थिके कप्रत्यये, 'केऽणः' इति ह्रस्वे, टापि, पुत्रिकाशब्दः। अत्र इकारस्य इत्वविकल्पविधौ पुत्रिका पुत्री-केति इन्मध्यः ईन्मध्यश्च स्यात्, अत्वविधौ तु पुत्रका पुत्रिकेति अकारमध्यः इकार-मध्यश्च भवतीति भावः। ननु सूतकाशब्दे वृन्दारकाशब्दे च कात्पूर्वस्याकारस्य अकारविधिः किमर्थमित्यत आह—अन्यत्रेति। सूतकाशब्दे वृन्दारकाशब्दे च 'प्रत्य-यस्थात्–' इति नित्यमित्वे प्राप्ते तद्विकल्पार्थमित्यर्थः। 'षूङ् प्राणिगर्भविमोचने' धात्वर्थे-नोपसंग्रहादकर्मकः। 'गत्यर्थाकर्मक–' इत्यादिना कर्तरि क्तः, टाप्, स्वार्थिकः, 'केऽणः'

---

शिभ्यां तकन्' अष्टिकान्येति। अष्टौ परिमाणमस्याः 'संख्याया अतिशदन्तायाः कन्'। सूतकेति। सूतशब्दात् स्वार्थे कन्। वृन्दमस्यास्तीति मत्वर्थे 'शृङ्गवृन्दा-भ्याम्–' इत्यारकन्। देवतावाचिवृन्दारकशब्दस्य पुँल्लिङ्गत्वेऽपि रूपिमुख्यवाचिनोः स्त्रीलिङ्गत्वं सम्भवत्येव। अत एव 'त्रिषूत्तरे' इत्युपक्रम्य 'वृन्दारकौ रूपिमुख्यौ' इत्यम-

---

१ फलतीति क।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इत्यादि। ४६५ उदीचामातः स्थाने यकपूर्वायाः।(७-३-४६) यकपूर्वस्य स्त्रीप्रत्ययाकारस्य स्थाने योऽकारस्तस्य कात्पूर्वस्येद्वा स्यादापि परे। 'केऽणः' (सू ८३४) इति ह्रस्वः। आर्यका, आर्यिका। चटकका, चटकिका। आतः किम्-

---

इति ह्रस्वः, पुनष्टाप्। अत्राकारस्य अत्त्वाभावपक्षे 'प्रत्ययस्थात्–' इति इत्वम्। वृन्द-मस्यास्तीति मत्वर्थे 'शृङ्गवृन्दाभ्यामारकन्' इति आरकन्प्रत्ययः। अमरेण तावद् देवतावाची वृन्दारकशब्दः 'अमरा निर्जरा देवाः' इत्यादिना पुँल्लिङ्गेष्वनुक्रान्तः। रूपि-वाची मुख्यवाची च त्रिलिङ्गः। 'त्रिषूत्तरे' इत्युपक्रम्य 'वृन्दारकौ रूपिमुख्यौ' इत्य-मरः। स्त्रियां टाप्। अत्राप्यकारस्य अत्त्वाभावपक्षे इत्वम्। **उदीचामातः**। 'प्रत्य-यस्थात्–' इति सूत्रमनुवर्तते। यश्च कश्च यकौ, तौ पूर्वौ यस्या इति विग्रहः। यकेति वर्णग्रहणम्, अकारावुच्चारणार्थौ। यकपूर्वाया इत्येतद् आत इत्यस्य विशेषणम्। तेन अर्थगतं स्त्रीत्वमाकारे आरोप्य यकपूर्वाया इति स्त्रीलिङ्गनिर्देशः। तेन आकारस्य स्त्रीवाच-कत्वं लभ्यते। तदाह—**यकपूर्वस्येत्यादिना**। उदीचांग्रहणं विकल्पार्थमेव, न तु देशतो व्यवस्थार्थम्—इति 'न वेति विभाषा' इति सूत्रे भाष्ये स्पष्टम्। न च 'षष्ठी स्थाने-योगा' इत्येव सिद्धेरिह स्थानेग्रहणं व्यर्थमिति वाच्यम्, अनुवादे परिभाषाणामनुपस्थितेः। तत्र च इदमेव स्थानेग्रहणं ज्ञापकम्। अत एव 'वृद्धिर्यस्याचामादिस्तद्वृद्धम्' इत्यत्र यस्यादिः वृद्धिरित्यनुवादे इक्परिभाषा न प्रवर्तते। तत्प्रवृत्तौ तु शालाशब्दस्य वृद्धसंज्ञा न स्यात्, शकारादाकारस्य इक्स्थानिकत्वाभावात्। ततश्च शालीय इति 'वृद्धाच्छः' इति छः न स्यात्, औपगवीय इत्यादावेव स्यादित्यलम्। **केऽण इति ह्रस्व इति**। आर्याशब्दात् स्वार्थिके कप्रत्यये यकाराकारस्य 'केऽणः' इति ह्रस्व इत्यर्थः। पुनष्टापि आर्यकाशब्दः। तत्र यकारादकारस्य आकारस्थानिकत्वाद्इत्वविकल्पः। 'प्रत्ययस्थात्–' इति नित्यस्य इत्वस्यापवादः। तदाह—**आर्यका, आर्यिकेति**। यकार-पूर्वस्य उदाहरणमिदम्। अथ ककारपूर्वस्य उदाहरति—**चटकका, चटकिकेति**। चटकाशब्दात् स्वार्थे कः, 'केऽणः' इति ह्रस्वः, पुनष्टाप्, इत्वविकल्प इति भावः।

---

रेणोक्तम्। **उदीचाम्**। यकौ पूर्वौ यस्याः सा। अर्थगतं स्त्रीत्वमाकारे आरोप्य यकपूर्वाया इति स्त्रीलिङ्गनिर्देशस्तेन स्त्रीप्रत्ययो लभ्यत इत्याह—**स्त्रीप्रत्ययाकार-स्येति**। अत्र 'न यासयोः' इत्यतो नेति वर्तते। यकपूर्वस्य स्त्रीप्रत्ययाकारस्य स्थाने योऽकार-स्तस्य कात्पूर्वस्योदीचां मते इत्त्वं नेत्यक्षरार्थः। एवं स्थिते फलितमाह—**इद्वा स्या-दिति**। एवमग्रेऽप्यूह्यम्। 'षष्ठी स्थानेयोगा' इत्यनेनैव लब्धे सूत्रे स्थानग्रहणमनूद्य-मानविशेषणेषु परिभाषा नोपतिष्ठत इति ज्ञापनार्थम्, फलं तु वृद्धसंज्ञायामिक्परि-

---

१ फलतीति क। २ पंक्तिरियं नास्ति क।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

साङ्काश्ये भवा साङ्काशियका। यक इति किम्-अश्विका। स्त्रीप्रत्यय इति किम्-शुभं यातीति शुभंयाः। अज्ञाता शुभंयाः शुभंयिका। 'धात्वन्तयकोस्तु नित्यम्'

---

**साङ्काशियकेति**। सङ्काशेन निर्वृत्तं नगरं साङ्काश्यम्। 'वुञ्छण्कठच्–' इत्यादिना सङ्काशादिभ्यो ण्यः, आदिवृद्धिः, 'यस्येति च' इत्यकारलोपः। साङ्काश्यशब्दाद् भवार्थे 'धन्वयोपधाद् वुञ्' अकादेशः, 'यस्येति च' इत्यकारलोपः, टाप्, 'प्रत्ययस्थात्–' इति नित्यमित्वम्। इह यकारादकारस्य आकारस्थानिकत्वाभावादित्वविकल्पो न भवतीति भावः। ननु स्त्रीबोधकस्य अत इद्वा स्यादित्येवास्तु, आत इति मास्तु, साङ्काश्यकाशब्दे यकारादकारस्य वुञादेशावयवत्वेन स्त्रीबोधकत्वाभावादिति चेत्, तर्ह्यात इति स्पष्टार्थमित्याहुः। **अश्विकेति**। अश्वाशब्दात् कः, 'केऽणः' इति ह्रस्वः, पुनष्टाप्, अश्वकाशब्दः। अत्र अकारस्य आकारस्थानिकत्वेऽपि यकपूर्वकत्वाभावादित्वविकल्पो न, किन्तु 'प्रत्ययस्थात्–' इति नित्यमित्वमिति भावः। **स्त्रीप्रत्यय इति किमिति**। यकपूर्वाया इति स्त्रीलिङ्गनिर्देशलब्धं स्त्रीप्रत्ययस्येति किमर्थमिति प्रश्नः। **शुभंयिकेति**। शुभमिति मान्तमव्ययम्। तस्मिन्नुपपदे 'या प्रापणे' इति धातोः 'अन्येभ्योऽपि दृश्यते' इति विच्। शुभंयाशब्दात् स्वार्थे कः, 'केऽणः' इति ह्रस्वः, टाप्, शुभंयकाशब्दः। अत्र यकारस्य धात्ववयवस्य स्त्रीवाचकत्वाभावादित्वविकल्पो न, किन्तु 'प्रत्ययस्थात्–' इति नित्यमेवेत्वमिति भावः। 'यकपूर्वे धात्वन्तप्रतिषेधः' इति वार्तिकमर्थतः संगृह्णाति— **धात्वन्तयकोस्तु नित्यमिति**। यश्च कश्चेति विग्रहः। धात्वन्तयकारककारयोरुपरि

---

भाषानुपस्थानाच्छालीयादिसिद्धिः। यदि तु तत्रेक्परिभाषोपतिष्ठेत, तदा औपगवीय इत्यादावेव 'वृद्धाच्छः' स्यात्, न तु शालीयो मालीय इत्यादौ। तत्र ह्याकारवृद्धेरिक्स्थानिकत्वाभावात्। तथा 'अतो गुणे' इत्यत्रेक्परिभाषोपस्थितौ एधे पचे यजे इत्यादावेव पररूपं स्यात्। 'टित आत्मनेपदानाम्–' इति इट एत्वे कृते इक्स्थानिकत्वादेकारगुणस्य। भवन्ती पचन्तीत्यादौ तु न स्यात् तत्रेक्स्थानिकत्वाभावादकारगुणस्येत्यपि बोध्यम्। नव्यास्तु वृद्धाच्छं बाधित्वा 'अणृगयनादिभ्यः' इत्यण्प्रत्ययो यथा स्यादित्येतदर्थमृगयनादिगणे व्याकरणशब्दः पठ्यते। यद्यनूद्यमानविशेषणेषु परिभाषा उपतिष्ठेरन् तर्हि तत्पठनं व्यर्थं स्यात्। आकारवृद्धेरिक्स्थानिकत्वाभावेन वृद्धसंज्ञाया अभावाच्छस्याप्रवृत्तेः। तथा च तस्मादेव पाठादुक्तार्थज्ञापनसम्भवे स्थानिग्रहणमिह स्पष्टार्थमित्याहुः। **सांकाशियकेति**। संकाशेन निर्वृत्तं नगरं सांकाश्यम्, 'वुञ्छण्–' आदिसूत्रेण 'संकाशादिभ्यो ण्यः'। ततो भवार्थे 'धन्वयोपधाद् वुञ्' अकादेशः। स च सांकाश्यभवां स्त्रियमाहेति तदकारस्यापि वैकल्पिकमित्त्वं स्यात् तस्मादात इत्युक्तम्। अत्र वदन्ति—यथायमकारो नाकारस्थानिकः, एवं स्त्रीप्रत्ययस्थानिकोऽपि नेति ह्यङ्गवि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

(वा ४१३६)। सुनयिका।। सुपाकिका। ४६६ **भस्त्रैषाजाज्ञाद्वास्वा नञ्पूर्वाणामपि।** (७-३-४७) स्वेत्यन्तं लुप्तषष्ठीकं पदम्। एषामत इद्वा स्यात्। तदन्तविधिनैव सिद्धे नञ्पूर्वाणामपीति स्पष्टार्थम्। भस्त्राग्रहणमुपसर्जनार्थम्,

---

विद्यमानस्य अकारस्य नित्यमित्वम्, न तु विकल्प इत्यर्थः। **सुनयिकेति।** णीञ्-धातोः पचाद्यच्। 'सार्वधातुकार्धधातुकयोः' इति गुणे अयादेशे नयशब्दः। सु शोभनः नयः यस्याः सा सुनया, ततः स्वार्थे कः, 'केऽणः' इति ह्रस्वः, पुनष्टाप्, सुनयका-शब्दः। अत्र यकारस्य धात्वन्तत्वान्न ततः परस्याकारस्येत्वविकल्पः, किं तु 'प्रत्यय-स्थात्–' इति नित्यमित्वमिति भावः। सुपाकिकेति। पचधातोर्घञि 'चजोः कु घिण्ण्यतोः' इति चकारस्य कुत्वे उपधावृद्धौ पाकशब्दः। सु–शोभनः पाको यस्याः सा सुपाका, स्वार्थे कः, 'केणः' इति ह्रस्वः, पुनष्टाप्, सुपाककाशब्दः। अत्र ककारस्य धात्वन्तत्वात् ततः परस्याकारस्य नेत्वविकल्पः, किन्तु 'प्रत्ययस्थात्–' इति नित्यमित्वमिति भावः। **भस्त्रैषा।** यकपूर्वत्वाभावाद् 'उदीचाम्–' इत्यप्राप्तौ वचनमिदम्। **स्वेत्यन्तमिति।** भस्त्रा, एषा, अजा, ज्ञा, द्वा, स्वा एषां षण्णां द्वन्द्वः। ततः षष्ठ्या आर्षो लुक्। भस्त्रैषाजाज्ञाद्वास्वानामिति विवक्षितमिति भावः। **एषामिति।** भस्त्रादीनामित्यर्थः। **अत इद्वेति।** पूर्वसूत्रादुदीचांग्रहणस्य 'प्रत्ययस्थात्–' इति सूत्राद् इदित्यस्य चानुवृत्ते-रिति भावः। नन्वाङ्गत्वात्तदन्तविधौ भस्त्रादिशब्दान्तानामिति लभ्यते, व्यपदेशिवत्त्वेन केवलानामपि लभ्यते। एवं च नञ्पूर्वाणां तद्भिन्नपूर्वाणां केवलानां च सिद्धे नञ्-पूर्वाणामपीति व्यर्थमित्यत आह—**तदन्तविधिनैवेति।** ननु तदन्तविधिना भस्त्रादि-शब्दानां नञ्पूर्वाणामनञ्पूर्वाणां च प्राप्तौ, नञ्पूर्वाणामेवेति नियमार्थं नञ्पूर्वग्रहणम्, तथा सति केवलानां भस्त्रादिशब्दानां ग्रहणव्यावृत्तिः स्यादित्यपिशब्द इति व्याख्या-तुमुचितमिति चेत्, न—एवं सति निर्भस्त्रिकेत्याद्यसिद्धेः। तस्माद् नञ्पूर्वाणामिति स्पष्टार्थमेवेति भाष्ये स्पष्टम्। ननु भस्त्राशब्दस्य नित्यस्त्रीलिङ्गतया 'अभाषितपुंस्काच्च' इत्युत्तरसूत्रेणैव इत्वविकल्पसिद्धेरिह भस्त्राग्रहणं व्यर्थमित्यत आह—**भस्त्राग्रहण-मुपसर्जनार्थमिति।** निर्भस्त्रिका इत्युपसर्जनत्वे त्रिलिङ्गतया भाषितपुंस्कत्वेन तत्र

---

कलमेतत्। अकेति समुदायस्य स्त्रीवाचकवुन्स्थानिकत्वेऽप्यकारमात्रस्यातथात्वात्। तस्मादात इति स्पष्टार्थमेवेति **शुभंया इति।** 'अन्येभ्योऽपि दृश्यते' इति विच्। शुभमिति मान्तो निपातः। **सुनयिकेति।** सुष्ठु नयो यस्याः सा सुनया। ततः कः। 'केऽणः' इति ह्रस्वः। एवं सुष्ठु पाको यस्याः सा सुपाक्का। **भस्त्रैषा। लुप्त-षष्ठीकमिति।** केचिदिह स्वा इतिच्छित्वा षष्ठ्याः स्थाने सौत्रत्वाद्व्यत्ययेन जसिति व्याचक्षते। 'प्रत्ययस्थात्–' इत्यतोऽनुवर्तनादाह—**अत इद्वा स्यादिति।** ननु

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अन्यस्य तूत्तरसूत्रेण सिद्धम्। एषा द्वा एतयोस्तु सपूर्वयोर्नेत्त्वम्। अन्तर्वर्तिनीं

'अभाषितपुंस्काच्च' इत्यस्य अप्रवृत्तेरिति भावः। अन्यस्य त्विति। उपसर्जनादन्यस्य भस्त्राशब्दस्य तु भस्त्रिका परमभस्त्रिकेत्यत्र नित्यस्त्रीलिङ्गतया 'अभाषितपुंस्काच्च' इत्युत्तरसूत्रेणैव पाक्षिकमित्वं सिद्धम्। अतः 'भस्त्रैषा' इत्यत्र भस्त्राग्रहणं तदर्थं न भवतीत्यर्थः। ननु अनेषका, परमैषका, अद्वके,परमद्वके—इत्यत्रापि पाक्षिकमेतदित्वं स्यादित्यत आह—एषा द्वेति। एषा द्वा एतयोस्तु पूर्वपदसहितयोरिदं पाक्षिकमित्वं नेत्यर्थः। कुत इत्यत आह—अन्तर्वर्तिनीमिति। 'इदाप्यसुपः' इत्यनुवर्तते। इह तु टाप् सुपः पर इति भावः। ननु टाबत्र सुपः परो न भवति, तथाहि—एतच्छब्दस्य टेः प्राक् 'अव्ययसर्वनाम्नाम्–' इत्यकचि, एतकद्शब्दात् सौ 'तदोः सः सौ–' इति तकारस्य सत्वे, 'आदेशप्रत्यययोः' इति षत्वे, त्यदाद्यत्वे, पररूपे, स्त्रियामादन्तत्वात् टापि, सवर्णदीर्घे, हल्ङ्याब्भ्यो दीर्घात्–' इत्यादिलोपे, एषकेति रूपम्। ततः न एषकेति विग्रहे नञ्तत्पुरुषे कृते, 'नलोपो नञः' इति नञो नकारस्य लोपे, 'तस्मान्नुडचि' इति नुटि, अनेषकेति रूपम्। तथा परमा एषकेति कर्मधारये, परमैषकेति रूपम्। अत्र सौ परे प्रवृत्तत्यदाद्यत्वसिद्धमदन्तत्वमाश्रित्य प्रवृत्तष्टाप् कथं सुपः परः स्यात्। न च नञ्तत्पुरुषे सोः सामासिके लुकि सति, सत्वत्यदाद्यत्वटाब्निवृत्तौ, समासात् पुनः सौ, सत्वत्यदाद्यत्वटाप्सु कृतेषु, हल्ङ्यादिलोपे, अनेषकेत्यत्र समासात् प्राक् प्रवृत्तात् सुपः पर एव टाबिति वाच्यम्, सामासिकलुगपेक्षया हल्ङ्यादिलोपस्यैवान्तरङ्गत्वात् प्रवृत्तेः। ततश्च लुप्तेऽपि सौ प्रत्ययलक्षणसत्वेन निमित्तानपायात् पूर्वप्रवृत्तसत्वत्यदाद्यत्वटापां निवृत्तिर्नास्ति, स च टाप् न सुपः पर इति चेत्, अत्र ब्रूमः—'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते' इति परिभाषया 'सुपो धातुप्रातिपदिकयोः' इति सुब्लुग्विषये अन्तरङ्गोऽपि हल्ङ्यादिलोपो न प्रवर्तते, अतः राजकुमारीत्यादौ श्रूयमाणे एव सुपि समासः प्रवर्तते। एवं च

नञ्पूर्वाणामपीत्यपिशब्देन केवलानां संग्रहः क्रियते, न तु नञ्भिन्नपूर्वाणामपि। तथा च निर्भस्त्रिकेत्यादि न सिध्येदतस्तदन्तविधिरावश्यक इत्याशयेनाह—तदन्तविधिनैवेत्यादि। आङ्गत्वादिति भावः। एवं च नञ्पूर्वाणामित्यस्य नियमार्थत्वशङ्का निरस्ता, निर्भस्त्रिकेत्यादावव्याप्तिप्रसङ्गात्। अन्यस्य त्विति। अनुपसर्जनस्य तु 'अभाषितपुंस्काच्च' इत्यनेन सिद्धमित्यर्थः। एतयोस्त्विति। भस्त्राजाज्ञास्वानां तु सपूर्वाणामपीत्वं भवत्येव। तत्र टापः कप्रत्ययात्परत्वेन सुपः परत्वाभावात् 'असुपः' इति निषेधाप्रवृत्तेरिति भावः। सपूर्वयोरिति। पूर्वावयवसहितयोर्विद्यमानपूर्वपदयोरिति यावत्। अन्तर्वर्तिनीमित्यादि। न सु एतद् सु इति स्थितेऽकचि कृतेऽ-

१ परमभस्त्रिका—इति क।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विभक्तिमाश्रित्य 'असुपः' इति प्रतिषेधात्। अनेषका। परमैषका। अद्बके। परमद्बके। स्वशब्दग्रहणं संज्ञोपसर्जनार्थम्। इह हि 'आतः स्थाने' इत्यनुवृत्तं स्वशब्दस्यातो

---

गोमान् प्रियो यस्य स गोमत्प्रियः—इत्यत्र गोमच्छब्दात् सोर्लुका लुप्तत्वात् 'उगिदचाम्—' इति नुमुपधादीर्घादिकं न इति 'प्रत्ययोत्तरपदयोश्च' इति सूत्रभाष्ये स्थितम्। 'कृत्तद्धित—' इति सूत्रे प्रौढमनोरमायां परिष्कृतमेतत्। एवं च नञ् सु एतकद् सु इति स्थिते, नञ्तत्पुरुषे कृते, 'अन्तरङ्गानपि—' इति न्यायेन त्यदाद्यत्वप्रवृत्तेः प्रागेव सामासिकलुकि अनतकद्—शब्दात् समासात्पुनः सौ, सत्वे, त्यदाद्यत्वे पररूपे, टापि, सवर्णदीर्घे, सोर्हल्ङ्यादिलोपे, अनेषकेति भवति। अत्र सवर्णदीर्घप्रवृत्तेः प्राक्समासात्पूर्वोत्पन्नसुपः पर एव टाप् भवतीत्यास्तां तावत्। **अद्बके इति।** न सु द्बकि औ इति स्थिते, नञ्तत्पुरुषे अन्तरङ्गानपि' इति न्यायेन त्यदाद्यत्वप्रवृत्तेः प्रागेव समासे औङो लुकि कृते, अद्बकिशब्दात् समासात्पुनरौङि, त्यदाद्यत्वे पररूपे, टापि, औङश्शीभावे, आद् गुणे, अद्बके इति भवति। अत्रापि समासात्पूर्वोत्पन्नादौङः सुपः पर एव टाबिति भावः। एवं परमद्बके इत्यत्रापि। स्यादेतत्—आत्मात्मीयज्ञातिधनवाची स्वशब्दः। तत्र ज्ञातावात्मनि च पुँल्लिङ्ग एव, आत्मीये तु विशेष्यनिघ्नः स्त्रीलिङ्गः। धने तु पुंनपुंसकलिङ्गः, 'स्वो ज्ञातावात्मनि स्वं त्रिष्वात्मीये स्वोऽस्त्रियां धने' इति कोशात्। यदा तु स्त्रीव्यक्तिविशेषस्य स्वशब्दः संज्ञा, तदापि स्त्रीलिङ्गः। तत्र 'स्वमज्ञातिधनाख्यायाम्' इत्युक्तेः ज्ञातिधनवाचित्वे सर्वनामत्वं नास्ति, आत्मात्मीयवाचिन एव सर्वनामता, साप्यनुपसर्जनस्यैव भवति, 'संज्ञोपसर्जनीभूतास्तु न सर्वादयः' इत्युक्तेरिति स्थितिः। तत्रात्मीयायां वाच्यायां सर्वनामत्वाद् अकचि, टापि, 'प्रत्ययस्थात्—' इति नित्यमित्वे, स्विकेत्येवेष्यते, तत्तु न युज्यते, 'भस्त्रैषा' इत्यादिना इत्वविकल्पस्य दुर्वारत्वात्। न चात्र अकजकारस्य आत्स्थानिकत्वाभावान्नायमित्वविकल्प इति वाच्यम्, एषामत इद्वा स्यादिति विवरणवाक्ये आतः स्थाने इत्यनुवृत्तेरदर्शनादित्यत आह—**स्वशब्दग्रहणं संज्ञोपसर्जनार्थमिति।** स्वशब्दस्य सर्वनामत्वाभावादकजभावे, स्त्रियां टापि, सौ कृते, स्वार्थिककप्रत्यये, उक्तरीत्या 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते' इति परिभाषया हल्ङ्यादिलोपं बाधित्वा प्रातिपदिकावयवत्वात् सोर्लुकि, 'केऽणः' इति ह्रस्वे, कप्रत्ययान्तात् पुनष्टापि, स्वकाशब्दः। निर्गता स्वस्या इति विग्रहे 'निरादयः क्रान्ताद्यर्थे पञ्चम्या' इति समासे सुब्लुकि, 'गोस्त्रियोः—' इति ह्रस्वे, टापि, सुपि, स्वार्थिके कप्रत्यये, 'केऽणः' इति ह्रस्वे, पुनष्टापि, निस्स्वकाशब्दः। एतद्द्वयमेव 'भस्त्रैषा—' इति स्वशब्दस्य उदाहरणम्। आत्मीयायां तु स्वशब्दो न संज्ञाभूतः, नाप्युपसर्जनीभूत इति नोदाहरणमित्यर्थः। कुत इत्यत आह—**इह हीति।**

---

कचः प्रागेव वा नञ्तत्पुरुषे कृते 'अन्तरङ्गानपि—' इति न्यायेन त्यदाद्यत्वप्रवृत्तेः प्रागेव

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

विशेषणम्। न तु द्वैषयोरसम्भवात्। नाप्यन्येषाम्, अव्यभिचारात्। स्वशब्द-स्त्वनुपसर्जनमात्मीयवाची अकजर्हः। अर्थान्तरे तु न स्त्री। संज्ञोपसर्जनीभूतस्तु

---

इह 'भस्त्रैषा–' इति सूत्रे 'उदीचाम्–' इति पूर्वसूत्राद् आतः स्थाने इत्यनुवृत्तम्, तच्च स्वशब्दस्यैव अतो विशेषणम्। एवं च स्वशब्दस्य आत्स्थानिकस्य अत इद्वा स्यादिति लभ्यते। एतद्विशेषविवक्षयैव एषामत इद्वा स्यादिति विवरणवाक्ये आतः स्थाने इत्यस्यानुवृत्तिर्न प्रदर्शितेति भावः। **न तु द्वैषयोरिति**। द्वा एषा इत्येतयोस्तु विषये आतः स्थान इति न संबध्यते इत्यर्थः। कुत इत्यत आह—**असंभवादिति**। एषा द्वेति सर्वाद्यन्तर्गणत्यदादित्वप्रयुक्तसत्वात्वनिर्देशेन सर्वनामत्वावश्यकत्वादकच्। तदकारस्य आत्स्थानिकत्वस्याप्रसक्तेरित्यर्थः। **नाप्यन्येषामिति**। भस्त्राजाज्ञाशब्दानामपि आतः स्थान इति विशेषणं नेत्यर्थः। कुत इत्यत आह—**अव्यभिचारादिति**। भस्त्राजाज्ञाशब्दानां सर्वनामत्वाभावेनाकजनर्हतया कप्रत्ययान्ततया तेषु 'केऽणः' इति ह्रस्वसंपन्नस्य अतः आत्स्थानिकत्वनियमेन तद्विशेषणवैयर्थ्यादित्यर्थः। ननु आतः स्थाने इत्यनुवृत्तम् स्वशब्दस्य अतो विशेषणमस्तु, तावता आत्मीयायां स्विका इत्यत्र इत्वविकल्पशङ्कायाः किमायातमित्यत आह—**स्वशब्दस्त्विति**। अनुपसर्जनात्मीय-वाची स्वशब्दस्तु सर्वनामत्वादकजर्हः। अतस्तदकारस्य आत्स्थानिकत्वाभावान्न प्रकृत-सूत्रेणेत्वविकल्पशङ्का, किं तु 'प्रत्ययस्थात्–' इति नित्यमेव इत्वमित्यर्थः। ननु स्वशब्द-स्य आत्मात्मीयज्ञातिधनवाचिनः आत्मीयायामुदाहरणत्वाभावेऽपि आत्मज्ञातिधनवाचि-नस्तस्य उदाहरणत्वसंभवात् स्वशब्दग्रहणं संज्ञोपसर्जनार्थमित्यनुपपन्नमित्यत आह—**अर्थान्तरे तु न स्त्री इति**। आत्मज्ञातिधनेषु स्वशब्दो न स्त्रीलिङ्गः। उदाहृत-कोशरीत्या आत्मज्ञातिवाचिनः स्वशब्दस्य नित्यपुँल्लिङ्गत्वात्, धनवाचिनस्तस्य पुंनपुंसक-लिङ्गत्वाच्चेत्यर्थः। तथा च टापि परे इत्वस्याभावान्नोदाहरणत्वप्रसक्तिः। 'प्रत्ययस्थात्–' इत्यत आपीत्यनुवृत्तेरिति भावः। इदमुपलक्षणम्। आत्मनि वाच्ये स्वशब्दस्य सर्व-नामत्वेन अकजर्हतया तदकारस्य आत्स्थानिकत्वाभावाच्चेत्यपि द्रष्टव्यम्। ननु संज्ञोप-सर्जनीभूतस्यापि स्वशब्दस्य कथमुदाहरणत्वम्? तस्याप्यकचि तदकारस्य आत्स्थानि-कत्वाभावादित्यत आह—**संज्ञोपसर्जनीभूतस्त्विति**। संज्ञोपसर्जनीभूतस्य स्व-

---

सामासिके लुकि विशिष्टात्पुनः सुपि त्यदाद्यत्वे पररूपे च कृते ततष्टाप्, स च आद्य-सुपः पर इति भावः। **अनेषकेति**। अज्ञाता एषा एषका न एषका अनेषका, अज्ञाता अनेषा अनेषकेति वा लौकिकविग्रहोऽत्र बोध्यः। एवमग्रेऽप्यूह्यम्। **स्वशब्दस्यातो विशेषणमिति**। यद्यपि हरदत्तग्रन्थे अत्रातःस्थान इत्येतत् स्वशब्दस्य विशेषण-मित्युक्तम्, तथापि तत्र स्वशब्दस्येत्यनन्तरमत इति शेषो बोध्य इति भावः। **अर्था-**

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कप्रत्ययान्तत्वाद्भवत्युदाहरणम्। एवं चात्मीयायां स्विका। परमस्विकेति नित्यमेवेत्वम्, निर्भस्त्रका, निर्भस्त्रिका। एषका, एषिका। कृतषत्वनिर्देशान्नेह विकल्पः,

शब्दस्य असर्वनामतया अकजनर्हत्वेन स्वशब्दात् सुबन्तात् स्वार्थिके कप्रत्यये, सुब्लुकि पुनष्टापि, 'केऽणः' इति ह्रस्वापन्नस्य अतः आत्स्थानिकतया भवत्युदाहरणत्वमित्यर्थः। न चान्तर्वर्तिसुपः परष्टाबिति शङ्क्यम्, केन व्यवधानादिति भावः। तदेवम् 'भस्त्रैषा-' इत्यत्र आतः स्थाने इत्यनुवृत्तस्य स्वशब्देऽन्वयलाभात् स्वशब्दावयवस्य आत्स्थानिकस्य अत इद्वा स्यादिति लब्धम्, तस्य प्रयोजनमाह—**एवं चेति**। उक्तरीत्या स्वशब्दे आत्स्थानिकस्यैवातः इत्वविकल्पलाभाद् आत्मीयायां स्वशब्दस्य सर्वनामत्वादकचि तदाकारस्य आत्स्थानिकत्वाभावादित्वविकल्पाप्रवृत्तौ 'प्रत्ययस्थात्-' इति नित्यमेवेत्वमित्यर्थः। तदेवं प्रत्युदाहरणान्युक्त्वा उदाहरणान्याह—**निर्भस्त्रकेत्यादि**। भस्त्राया निष्क्रान्तेति विग्रहे 'निरादयः क्रान्ताद्यर्थे-' इति समासे, 'गोस्त्रियोः-' इति ह्रस्वत्वे, पुनष्टापि, समासात् सौ, कप्रत्यये, 'केऽणः' इति ह्रस्वे, निर्भस्त्रकशब्दात् पुनष्टापि, सवर्णदीर्घे, निर्भस्त्रकाशब्दः। तत्र 'प्रत्ययस्थात्' इति नित्यमित्वे प्राप्ते अनेन इत्वविकल्पे निर्भस्त्रिका निर्भस्त्रकेति रूपद्वयम्। केन व्यवधानान्न सुपः परष्टाबिति भावः। **एषका, एषिकेति**। अकचि एतकद् शब्दात् सुः। 'तदोः सः सौ-' इति सत्वम्, षत्वम्, त्यदाद्यत्वम्, पररूपम्, टाप्, 'प्रत्ययस्थात्-' इति नित्यमित्वं बाधित्वा इत्वविकल्प इति भावः। ननु अकचि एतकद्-शब्दात् स्त्रियामौजसादिषु एतिके, एतिकाः-इत्यादौ नित्यमित्वमिष्यते, तद्बाधित्वा अनेन इत्वविकल्पः स्यादित्यत आह—**कृतषत्वेति**। 'भस्त्रैतज्ज्ञास्वा-' इति वक्तव्ये एषेति कृतषत्वनिर्देशाद् औजसादिषु

**न्तरे त्विति**। आत्मज्ञातिधनेष्वित्यर्थः। **नित्यमेवेति**। स्विकेत्यादावकचि कृते आतःस्थानिकोऽकारोऽत्र दुर्लभ इति प्रकृतसूत्रस्याविषयत्वात् 'प्रत्ययस्थात्-' इति नित्यमेवेत्त्वप्रवृत्तेः। एवं च 'हंसं तनौ संनिहितं चरन्तं मुनेर्मनोवृत्तिमिव स्विकायाम्' इति श्रीहर्षश्लोके 'भस्त्रैषा-' इति वैकल्पिकमित्त्वम् इति केषांचिद्व्याख्यानं नादर्तव्यमिति भावः। वस्तुतो 'हंसं तनौ-' इति श्लोके स्विकायामिति प्रयोगोऽसाधुरेव। आत्मीयायां स्वशब्दस्य सर्वनामत्वात् स्याडागमप्रवृत्तेरिति नव्याः। प्रत्युदाहरणान्युक्त्वोदाहरणान्याह—**निर्भस्त्रिकेत्यादि**। निष्क्रान्ता भस्त्रायाः निर्भस्त्रा, 'निरादयः क्रान्ताद्यर्थे पञ्चम्या' इति समासः। उपसर्जनह्रस्वष्टाप्। ततोऽज्ञातादौ कः। 'केऽणः' इति ह्रस्वः। पुनष्टाप्। सूत्रे एषेति विकृतनिर्देशो विवक्षितविषयः, न तु 'यासयोः' इतिवदुपलक्षणमित्यभिप्रेत्याह—**कृतषत्वनिर्देशादिति**। इहाजाङ्गेति स्त्रीलिङ्गनिर्देशादजादयः स्त्रीलिङ्गा एव गृह्यन्ते, तेनेह विकल्पो न-शुभ्रोऽजो यस्याः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

एतिके, एतिकाः। अजका, अजिका। ज्ञका, ज्ञिका। द्वके, द्विके। निःस्वका, निःस्विका। **४६७ अभाषितपुंस्काच्च। (७-३-४८)** एतस्माद्विहितस्य आतः स्थाने अत इद्वा स्यात्। गङ्गका, गङ्गिका। बहुव्रीहेर्भाषितपुंस्कत्वात्ततो विहितस्य

---

षत्वाभावान्नेत्वविकल्प इत्यर्थः। **अजका, अजिकेति**। अजाशब्दात् कः, ह्रस्वः, पुनष्टाप्, सवर्णदीर्घः, इत्वविकल्पः। **ज्ञका, ज्ञिकेति**। ज्ञाधातोः 'इगुपधज्ञाप्रीकिरः कः' इति कः, 'आतो लोप इटि च' इत्याल्लोपः। स्त्रियामदन्तत्वाट्टाप्, सवर्णदीर्घः। ज्ञाशब्दात् सुबन्तात् कः, सुब्लुक्, 'केऽणः' इति ह्रस्वः, पुनष्टाप्, सवर्णदीर्घः, इत्वविकल्प इति भावः। **द्वके, द्विके इति**। अकचि द्वकिशब्दात् स्त्रियामौङि, त्यदाद्यत्वम्, पररूपम्, टाप्, इत्वविकल्पः, औङश्शी, 'आद् गुणः'। **निःस्वका, निःस्विकेति**। स्वस्याः निष्क्रान्तेति विग्रहः। 'निरादयः—' इति समासः। उपसर्जनह्रस्वः, टाप् सुपि कः, सुब्लुक्, कप्रत्ययान्तात् पुनष्टापि सवर्णदीर्घः, इत्वविकल्प इति भावः। **अभाषितपुंस्काच्च**। 'उदीचामातः स्थाने' इत्यनुवर्तते, अत इदिति च। अभाषितः पुमान् येनेति विग्रहः। विहितस्येत्यध्याहार्यम्। तदाह—**एतस्मादिति**। अभाषितपुंस्कादित्यर्थः। अयकपूर्वार्थं वचनम्। **गङ्गका, गङ्गिकेति**। गङ्गाशब्दात् कः। 'केऽणः' इति ह्रस्वः, इत्वविकल्पः। विहितविशेषणस्य फलमाह—**बहुव्रीहेरिति**। अविद्यमाना खट्वा यस्या इति विग्रहे 'नञोऽस्त्यर्थानां वाच्यो वा चोत्तरपदलोपः' इति बहुव्रीहौ कृते, विद्यमानपदलोपे नञो नलोपे 'शेषाद्विभाषा' इति कबभावपक्षे, 'गोस्त्रियोः—' इति ह्रस्वे अखट्वशब्दात् टापि, सुपि, अज्ञातादौ के, सुब्लुकि, 'केऽणः' इति ह्रस्वे, पुनष्टापि अभाषितपुंस्काद्विहितस्य आतः स्थाने अतः अभावान्नेत्वविकल्पः। किं तु 'प्रत्ययस्थात्—' इति नित्यमित्वमित्यर्थः। अभाषितपुंस्कात् परस्येति व्याख्याने तु तादृश-

---

सा शुभ्राजिका। जानातीति ज्ञः 'इगुपध—' इति कः। प्रियो ज्ञो यस्याः सा प्रियज्ञिकेति। **निःस्वकेति**। स्वस्या निष्क्रान्तेति विग्रहः, न त्विह स्विकस्या निष्क्रान्तेति, तथात्वे ह्युपसर्जनेऽपि निःस्विकेत्येकमेव रूपं स्यात्, आतःस्थानिकाकारस्य दुर्लभत्वेन प्रकृतसूत्राविषयत्वात्। **अभाषित**। **एतस्मादिति**। नित्यस्त्रीलिङ्गादित्यर्थः। विहितविशेषणतया व्याख्यानस्य फलमाह—**बहुव्रीहेरिति। ततो विहितस्य नित्यमिति**। अविद्यमाना खट्वा यस्याः सा अखट्वेत्यत्र 'शेषाद्विभाषा' इति समासान्तस्य कपो वैकल्पिकत्वात् कबभावपक्षे 'गोस्त्रियोः—' इत्यनुपसर्जनह्रस्वे कृते पुनरखट्वशब्दाद्भाषितपुंस्काट्टापि सत्यज्ञातादौ कप्रत्यये 'केऽणः' इति ह्रस्वेऽस्य विकल्पस्याप्रवृत्तेः 'प्रत्ययस्थात्—' इत्युत्सर्ग एव प्रवर्तते। परविशेषणत्वे त्वयं विकल्पः स्यादेवेति भावः। बहुव्रीहेरित्युपसर्जनोपलक्षणम्, तेनातिखट्विकेत्यादावपि नित्यमेव।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नित्यम्। अज्ञाता अखट्वा अखट्विका। शैषिके कपि तु विकल्प एव। ४६८ आदाचार्याणाम्। ( ७-३-४९ ) पूर्वसूत्रविषये आद्वा स्यात्। गङ्गाका। उक्तपुंस्कात्तु शुभ्रिका। ४६९ अनुपसर्जनात्। ( ४-१-१४ ) अधिकारोऽयम् 'यूनस्तिः' ( सू ५३१ ) इत्यभिव्याप्य। अयमेव स्त्रीप्रत्ययेषु तदन्तविधिं ज्ञापयति।

---

खट्वशब्दात् परस्य आतः स्थाने अतः सत्त्वादित्वविकल्पः स्यादिति भावः। **शैषिके कपि त्विति**। न स् खट्वा स् इत्यवस्थायां कपि सुब्लुक्। प्रत्ययलक्षणेन भागद्वयस्य सुबन्तत्वात् 'नञोऽस्त्यर्थानाम्–' इति बहुव्रीहिसमासः। समासान्त इत्यन्वर्थसंज्ञाबलात् कबन्तस्यैव समासत्वम्। ततश्च अखट्वाकशब्दे अखट्वा इत्यंशस्य उपसर्जनस्त्रीप्रत्ययान्तसमासरूपप्रातिपदिकत्वाभावाद् 'गोस्त्रियोः–' इति ह्रस्वो न भवति। नापि 'केऽणः' इति ह्रस्वः, 'न कपि' इति निषेधात्। किं तु 'आपोऽन्यतरस्याम्' इति ह्रस्वविकल्पः। तत्र खट्वाशब्दाद् विहितस्य कपः प्राग्वर्तिनः टापः अभाषितपुंस्काद्विहितत्वेन तत्स्थानिकह्रस्वाकारस्य अयम् इत्वविकल्पो भवत्येवेत्यर्थः। 'आपोऽन्यतरस्याम्' इति ह्रस्वाभावपक्षे तु अखट्वाकेत्येव बोध्यम्। **आदाचार्याणाम्। पूर्वसूत्रविषय इति**। अभाषितपुंस्काद्विहितस्यातः स्थाने अत इत्यर्थः। **शुभ्रिकेति**। शुभ्रशब्दो विशेष्यनिघ्नः अनियतलिङ्गः। ततः स्त्रियां टापि शुभ्राशब्दात् कः। 'केऽणः' इति ह्रस्वः, पुनष्टाप्। अत्र कात्पूर्ववर्तिनष्टापः अभाषितपुंस्काद्विहितत्वाभावात् तत्स्थानिकस्यातो नेत्वविकल्पः। किं तु 'प्रत्ययस्थात्–' इति नित्यमित्वमित्यर्थः। अनुपसर्जनादित्यधिकारस्य उत्तरावधिमाह—**यूनस्तिरित्यभिव्याप्येति**। 'यूनस्तिः' इत्यत्राप्ययमधिकारः, न तु ततः प्रागित्यर्थः। अत्र च व्याख्यानमेव शरणम्। अत्र यद्वक्तव्यम्, तत् 'यूनस्तिः' इत्यत्र वक्ष्यते। ननु बहवः कुरुचराः यस्यां सा बहुकुरुचरा, नदमतिक्रान्ता अतिनदा, इत्यादिषु उपसर्जनेषु कुरुचरनदादिशब्देभ्यः 'टिड्ढाणञ्–' इत्यादिना विधीयमानानां ङीबादिप्रत्ययानां प्रसक्तिरेव नास्ति, समासप्रत्ययविधौ तदन्तविधिप्रतिषेधात्। तस्मादनुपसर्जनाधिकारो व्यर्थ इत्यत आह—**अयमेवेति**। 'अनुपसर्जनाद्' इत्यधिकार एवायं स्त्रीप्रत्ययेषु तदन्तविधिं ज्ञापयतीत्यर्थः।

---

**विकल्प एवेति**। अखट्वेति बहुव्रीहौ न सु खट्वा सु इति स्थिते 'सुपो धातु–' इति सोर्लुक्युपसर्जनह्रस्वत्वं बाधित्वा 'शेषाद्विभाषा' इति समासान्ते कपि परत्वात् कृते स्त्रीप्रत्ययान्तत्वाभावादुपसर्जनह्रस्वो न प्रवर्तते, किं तु 'केऽणः' इति ह्रस्वस्य 'न कपि' 'आपोऽन्यतरस्याम्' इति वैकल्पिकनिषेधात्पाक्षिकह्रस्वे सति 'अभाषितपुंस्काच्च' इति विकल्पः प्रवर्तते, तत्र हि खट्वशब्दात्परस्य टापोऽभाषितपुंस्काद्विहितत्वादिति भावः। ह्रस्वाभावपक्षे त्वखट्वाकेत्येतद्रूपान्तरम्। **अधिकारोऽयमिति**। स्वरितत्वप्रति-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

**४७० टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः । ( ४-१-१५ )**

**अनुपसर्जनं यट्टिदादि तदन्तं यददन्तं प्रातिपदिकं ततः स्त्रियां ङीप् स्यात् ।** कुरु-

---

एतच्च भाष्ये स्पष्टम् । तत्फलं तु 'वनो र च' इत्यत्र वन्नन्तान्तलाभ इत्यादि ज्ञेयम् । ननु स्त्रीप्रत्ययेषु तदन्तविध्यभावेऽपि नद इवाचरति नदा स्त्री—इत्यादिषु आचारक्विबन्त-प्रकृतिककर्तृक्विबन्तेषु ङीबादिनिवृत्तये अनुपसर्जनाधिकारस्यावश्यकत्वात् कथं तस्य स्त्री-प्रत्ययविधिषु तदन्तविधिज्ञापकतेति चेत्, न—अनुपसर्जनाधिकारस्य स्त्रीप्रत्ययविधिषु तदन्तविधिज्ञापनार्थत्वपरभाष्यप्रामाण्येन स्त्रियामाचारक्विबन्तप्रकृतिककर्तृक्विबन्तानाम-नभिधानोन्नयनादित्यलम् ।

**टिड्ढाणञ्** । टित्, ढ, अण् , अञ् , द्वयसच् , दघ्नच् , मात्रच् , तयप् , ठक् , ठञ् , कञ् , क्वरप् , एषां द्वादशानां समाहारद्वन्द्वात् पञ्चम्येकवचनम् । ढादयः एकादश प्रत्ययाः । प्रत्ययग्रहणपरिभाषया तदन्तग्रहणम् । टित्तु प्रत्ययः, अप्रत्ययश्च । टिदादि-भिश्च प्रातिपदिकादित्यधिकृतं विशेष्यते, विशेषणत्वात् तदन्तविधिः । ततश्च टिदन्तात् ढाणादिप्रत्ययान्तान्ताच्च प्रातिपदिकादिति लभ्यते । 'अजाद्यतष्टाप्' इत्यस्मादतः इत्यनु-वृत्तम् , तेनापि प्रातिपदिकं विशेष्यते । तदन्तविधिः । 'अनुपसर्जनात्' इत्येतत् श्रुतेषु टिदादिष्वेवान्वेति, न तु तदन्तेषु । स्त्रियामित्यधिकृतम् । तदाह—**अनुपसर्जनं यट्टिदादीत्यादिना** । **तदन्तमिति** । टिदन्तं ढादिप्रत्ययान्तं चेत्यर्थः । टित्

---

ज्ञानादिति भावः । **अभिव्याप्येति** । अत एव बहुयुवा शालेत्यत्र 'यूनस्तिः' इति न प्रवर्तत इति प्राञ्चः । न चात्र नलोपस्यासिद्धत्वान्नान्तलक्षणो ङीप् स्यात् इति शङ्क्यं 'नलोपः सुप्स्वर—' इति नियमेन ङीपं प्रत्यसिद्धत्वाभावादित्येके । अन्ये तु 'उत्तरपदत्वे चापदादिविधौ प्रतिषेधः' इति प्रत्ययलक्षणनिषेधेनान्तर्वर्तिनीं विभक्ति-माश्रित्य पदत्वाभावान्नलोपस्याप्रसक्त्या ङीप् स्यादेव । परं तु 'अनो बहुव्रीहेः' इति निषेधान्ङीबभावे डाब्निषेधाविह भवत इत्याहुः । **अयमेवेति** । अनुपसर्जनाधिकार एवेत्यर्थः । **टिड्ढाणञ्** । टिड्ढादयः प्रत्ययास्तैस्तदन्ता गृह्यन्ते, तच्चानुवर्तमानस्य प्रातिपदिकस्य विशेषणम् 'अजाद्यतः—' इति सूत्रादनुवर्तमानमप्यत इत्येतत् प्रातिपदि-कविशेषणवत्ता च तदन्तविधिरतो व्याचष्टे—**यट्टिदादि तदन्तं यददन्तं प्राति-पदिकमिति** । नदट् देवट् इत्यादौ प्रत्ययस्यैव टित्त्वमिति टिदन्तं प्रातिपदिकमिति व्याख्यानं संगच्छत एव । स्तनंधयीत्यत्र तु प्रत्ययस्य टित्त्वाभावेऽपि धातोष्टित्त्वस्या-चरितार्थत्वात्समुदायात्स्यादेव ङीबिति वक्ष्यति । अन्ये तु—ढादय एव प्रत्ययाः । टिदिति तु प्रत्ययाप्रत्ययसाधारणम्, तेन टित् प्रातिपदिकं ढाद्यन्तं च यत् प्रातिपदिकमित्यर्थः । टित्त्वं तु प्रातिपदिकस्य क्वचित्प्रत्ययकृतं क्वचित् स्वतः क्वचित् प्रकृतिकृतं भवत्यवयव-

---

१ प्रत्ययान्ताच्च—क ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चरी। नदट्-नदी। उपसर्जनत्वान्नेह। बहुकुरुचरा। वक्ष्यमाणेत्यत्र टित्त्वादुगि-

त्रिविधः। प्रत्ययः, प्रातिपदिकम्, धातुश्च। तत्राद्यमुदाहरति—कुरुचरीति। कुरुषु चरतीति अधिकरणे उपपदे 'चरेष्टः' इति कर्तरि टः। टकार इत्। उपपदसमासः। न च प्रत्ययस्यैवात्र टित्त्वात् प्रत्ययग्रहणपरिभाषया चरेत्येव टिदन्तम्, न तु कुरुचर-शब्दः, तदादिनियमादिति वाच्यम्, नदट् देवट् इत्यादेरप्रत्ययस्यापि टितः सत्त्वेन तत्र प्रत्ययग्रहणपरिभाषाया अप्रवृत्तौ 'येन विधिः—' इति टिदन्तत्वस्य कुरुचरशब्दे सत्त्वात्। अथ द्वितीयं टितमुदाहरति—नदडिति। पचादिगणे पठितं प्रातिपदिकमेतत्। तृतीयं तु कृदन्ते स्तनन्धयीत्युदाहरिष्यते। अनुपसर्जनत्वविशेषणस्य प्रयोजनमाह—उपसर्जनत्वान्नेहेति। बहुकुरुचरेति। बहवः कुरुचराः यस्यामिति विग्रहः। बहुव्रीहिरयमन्यपदार्थप्रधानः। ततश्च टितः टप्रत्ययस्य उपसर्जनत्वान्न ङीप्। अनुपसर्जनत्वस्य प्रातिपदिकविशेषणत्वे तु ङीबत्र दुर्वारः। अत एव च आपिशलिना प्रोक्तमधीते आपिशला ब्राह्मणीत्यत्रापि न ङीप्। तत्र हि आपिशलिना प्रोक्तमित्यर्थे 'तेन प्रोक्तम्' इत्यणि आपिशलशब्दः। आपिशलमधीते इत्यर्थे 'तदधीते तद्वेद' इत्यणि 'प्रोक्ताल्लुक्' इति लुप्ते स्त्रियामदन्तत्वाट्टापि आपिशलेति रूपम्। अनुपसर्जनादित्यस्य प्रातिपदिक-विशेषणत्वे प्रोक्ताणन्तस्यानुपसर्जनत्वात् स्त्रियां वर्तमानत्वाच्च अणन्तत्वनिबन्धनो ङीब दुर्वारः स्यात्। तस्य च श्रुतटिदाद्यन्वये तु प्रोक्ताणः उपसर्जनत्वान्न दोषः। अध्येत्रण् तु लुप्तः, अणो योऽकार इति व्याख्यानेन वर्णाश्रयतया प्रत्ययलक्षणाभावात्। न च 'स्त्रियाम्' इत्यस्य श्रुतटिदादिविशेषणत्वात् प्रोक्ताणश्च स्त्रियामवर्तनादेव न ङीपः प्रसक्तिरिति वाच्यम्, ज्ञापिते तदन्तविधौ प्राधान्यात् 'स्त्रियाम्' इत्यस्य ङीप्प्रकृतिविशेषणताया एव उचितत्वात्, अन्यथा अनुपसर्जनाधिकारवैयर्थ्याच्च। अत एव धीवानमतिक्रान्ता अतिधीवरीत्यादि सिद्धमित्यलम्। स्यादेतत्—'वच परिभाषणे', अस्मात् कर्मणि लृट्, 'लृटः सद्वा' इति तस्य शानजादेशः, 'स्यतासी लृलुटोः' इति स्यः, कुत्वषत्वे, 'आने मुक्', णत्वम्, टाप्, वक्ष्यमाणेति रूपम्। अत्र लृडादेशस्य स्थानिवत्त्वेन

धर्मस्य समुदाये उपचारात्। तत्र आद्यस्योदाहरणम्—कुरुचरीति। द्वितीयस्योदाहरणम्—नदडिति। पचादिषु टितोऽस्य पाठात् स्वत एव टित्त्वम्। तृतीयं तु धेटष्टित्त्वात् स्तनं धयतीति कृदन्ते उदाहरिष्यतीत्याहुः। कुरुचरीति। कुरुषु चरतीत्यधिकरणोपपदे 'चरेष्टः' इति कर्तरि टः। उपसर्जनत्वान्नेहेति। बहवः कुरुचरा यस्यां सा बहुकुरुचरेति बहुव्रीहिरन्यपदार्थप्रधानस्तथा च टिदन्तस्योपसर्जनत्वात् ङीन्नेत्यर्थः। वक्ष्यमाणेति। ब्रूञो लृटि 'लृटः सद्वा' इति शानच्। 'ब्रुवो वचिः'

१ प्रोक्ताणणान्तेति साधु प्रयोक्तुमुचितम्, लुटो नित्यत्वात्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

**स्वाच्च ङीप्प्रसः । यासुटो ङित्त्वेन 'लाश्रयमनुबन्धकार्यं नादेशानाम्' ( प ७० ) इति ज्ञापनान्न भवति । श्नः शानचः शित्त्वेन क्वचिदनुबन्धकार्येऽप्यनल्विधाविति**

---

टित्त्वादुगित्त्वाच्च 'टिड्ढाणञ्–' इति 'उगितश्च' इति च ङीप् प्राप्नोति । न च स्थानिनो लृटष्टकारस्य ऋकारस्य च इत्वाश्रयणात् ङीब्विधेरल्विधित्वादनल्विधाविति निषेधः शङ्क्यः, 'घुमास्थागापाजहातिसां हलि' इति क्ङिति विहितस्य ईत्वस्य 'न ल्यपि' इति निषेधेन लिङ्गेन अनुबन्धकार्ये अनल्विधाविति निषेधाभावज्ञापनात् । अनुबन्धकार्येऽप्यनल्विधाविति निषेधप्रवृत्तौ हि क्त्वादेशस्य ल्यपः कित्त्वाप्रसक्तेस्तस्मिन् परत ईत्वस्याप्रसक्त्या तन्निषेधवैयर्थ्यं स्पष्टमेव । अतो वक्ष्यमाणेत्यत्र स्थानिवत्त्वेन शानचष्टित्वादुगित्त्वाच्च ङीब् दुर्वार इत्याशङ्क्य परिहरति—**वक्ष्यमाणेत्यादिना** । वक्ष्यमाणेत्यत्र टित्त्वादुगित्त्वाच्च ङीप् प्राप्तो न भवतीत्यन्वयः । कुतो नेत्यत आह—**यासुट इत्यादि ज्ञापनादित्यन्तम्** । 'यासुट् परस्मैपदेषूदात्तो ङिच्च' इति लिङादेशानां तिप्, तस्, झि इत्यादिपरस्मैपदानां यासुडागमस्य ङित्त्वं विहितम् । 'यदागमाः–' इति न्यायेन यासुडागमो लिङादेशावयवः । ततश्च स्थानिवत्त्वेनैव ङित्त्वसिद्धेर्यासुटस्तद्विधिवैयर्थ्यं स्यात् । अतः 'लाश्रयमनुबन्धकार्यमादेशानां न' इति विज्ञायते । ततश्च वक्ष्यमाणेत्यत्र लृडादेशस्य शानचः टिदुगित्कार्ये ङीपि कर्तव्ये स्थानिवत्त्वाभावान्न ङीबित्यर्थः । ननु 'लाश्रयमनुबन्धकार्यमादेशानां न' इति ज्ञापनेऽपि ब्रूतादित्यत्र 'ब्रुव ईट्' इति पितो विधीयमान ईडागमो दुर्वारः, तस्य तिबाश्रयत्वेऽपि लाश्रयत्वाभावेन तस्मिन् कर्तव्ये तातङः स्थानिवत्त्वेन पित्त्वस्य निर्बाधत्वादित्यस्वरसादाह—**श्नः शानच इति** । श्ना इत्यस्मात् षष्ठ्येकवचने आल्लोपे श्न इति रूपम्, 'आतो धातोः' इत्यत्र 'आतः' इति योगविभागमाश्रित्य अधातोरपि क्वचिदाल्लोपाभ्युपगमात् । 'हलः श्नः शानज्झौ' इति श्नाप्रत्ययस्य शानजादेशो विधीयते । तत्र स्थानिवत्त्वेनैव सिद्धत्वात् शानचः

---

इति वच्यादेशः 'वच परिभाषणे' इत्यस्मात् कर्मणि वा लृटः शानच् । 'स्यतासी–' इति स्यः । कुत्वषत्वे । 'आने मुक्' इति मुक् । **टित्त्वादुगित्त्वाच्चेति** । स्थानिवद्भावेनेत्यर्थः । न चाल्विधित्वात्कथमिह स्थानिवद्भाव इति शङ्क्यम्, 'न ल्यपि' इति ज्ञापकादनुबन्धकार्येषु 'अनल्विधौ' इति निषेधस्याप्रवृत्तेः । अत एव रमायामित्यादौ परत्वात् ङेरामि कृते स्थानिद्भावेनामो ङित्त्वात् 'याडापः' इति याडागमः सिध्यति । **ज्ञापनान्न भवतीति** । लिङादेशपरस्मैपदानां स्थानिवद्भावेनैव ङित्त्वलाभात्तदागमस्य यासुटो ङित्त्वं व्यर्थं सत् 'लाश्रयानुबन्धकार्यमादेशानां न' इति सामान्यतो ज्ञापयतीति भावः । 'पिच्च ङिन्न' इत्यदादिगणे वक्ष्यमाणत्वात्तिबादिष्वौपदेशिकेन पित्त्वेनातिदेशिकं ङित्त्वं बाध्यत इति यासुटो ङित्त्वस्य वैयर्थ्याभावान्न तज्ज्ञापयतीति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

निषेधज्ञापनाद्वा। सौपर्णेयी। ऐन्द्री। औत्सी। ऊरुद्वयसी, ऊरुदघ्नी, ऊरुमात्री।

---

शित्वं व्यर्थम्। न चानल्विधाविति निषेधः शङ्क्यः, 'न ल्यपि' इति लिङ्गेन अनुबन्धकार्ये अनल्विधाविति निषेधाभावस्यानुपदमेवोक्तत्वात्। एवं च क्वचिदनुबन्धकार्येऽपि अनल्विधाविति निषेधप्रवृत्तिर्विज्ञायते। तथा च वक्ष्यमाणेत्यत्र टिदुगित्कार्ये ङीपि अनल्विधाविति निषेधप्रवृत्त्या स्थानिवत्त्वाभावेन टित्त्वोगित्त्वयोरभावाद् न ङीबित्यर्थः। वस्तुतस्तु 'नाश्रयमनुबन्धकार्यं नादेशानाम्' इत्यत्र यासुटो ङित्त्वं न ज्ञापकम्, तस्य तिप्सिब्मिबर्थत्वात्। न हि लिङादेशत्वेऽपि तिप्सिब्मिपां ङित्त्वं स्थानिवत्त्वलभ्यम्, 'हलः श्नः शानज्झौ' इति सूत्रे भाष्ये 'ङिच्च पिन्न, पिच्च ङिन्न' इति प्रपञ्चितत्वात्। तथा श्नश्शानचः शित्त्वमपि न लिङ्गम्, तत्र शित्त्वस्य भाष्ये प्रत्याख्याततत्वात्। प्रत्युत शित्त्वस्य ज्ञापकत्वे 'सेर्ह्यपिच्च' इति हेरपित्त्वस्य, तातङो ङित्त्वस्य च वैयर्थ्यमिति भाष्ये दूषणाभिधानाच्च। तस्माद् वक्ष्यमाणेत्यत्र ङीबेव युक्तः, टाप् त्वसाधुरेव। अजादित्वाट्टाबिति वा कथञ्चित् समाधेयमित्यास्तां तावत्। **सौपर्णेयीति**। सुपर्ण्याः अपत्यं स्त्री इत्यर्थे 'स्त्रीभ्यो ढक्' इति ढकि 'आयनेय्—' इत्येयादेशः। 'यस्येति च' इतीकारलोपः, 'किति च' इत्यादिवृद्धिः। सौपर्णेयशब्दाद् ङीप्, 'यस्येति च' इत्यकारलोपः, सौपर्णेयीति रूपम्। न च 'निरनुबन्धकग्रहणे न सानुबन्धकस्य' इति परिभाषया 'शिलाया ढः', 'ढश्छन्दसि' इत्यनयोरेव ग्रहणमिति वाच्यम्, तयोः स्त्रियामप्रवृत्तेरगत्या सानुबन्धकस्य ढस्य ग्रहणादिति भाष्ये स्पष्टम्। **ऐन्द्रीति**। इन्द्रो देवता अस्या आमिक्षाया इति विग्रहः, 'सास्य देवता' इत्यणि, 'यस्येति च' इत्यकारलोपः, आदिवृद्धिः, ऐन्द्रशब्दाद् ङीप्, 'यस्येति च' इत्यकारलोपः। इन्द्रस्येयमिति वा विग्रहः, 'तस्येदम्' इत्यण्। **औत्सीति**। 'उत्सः प्रस्रवणं वारि' इत्यमरः। ऋषिविशेषो वा उत्सः। उत्सस्येयमिति विग्रहः 'उत्सादिभ्योऽञ्' 'यस्येति च' ङीप्। उत्सस्यापत्यं स्त्री औत्सी इति तु नोदाहरणम्। जातेरित्यनुवृत्तौ 'शार्ङ्गरवाद्यञो ङीन्' इत्येव सिद्धेः, 'गोत्रं च चरणैः सह' इत्यपत्यप्रत्ययान्तस्य जातित्वादित्यलम्। **ऊरुद्वयसी, ऊरुदघ्नी, ऊरुमात्रीति**। ऊरू प्रमाणमस्या इति विग्रहः। 'प्रमाणे द्वयसज्दघ्नञ्मात्रचः'।

---

शङ्कमानं प्रत्याह—श्नः शानचः शित्त्वेनेत्यादि। **सौपर्णेयीति**। कद्रूश्च वै सुपर्णी' इति श्रुतिः। सुपर्णीशब्दादपत्येऽर्थे 'स्त्रीभ्यो ढक्' 'आयनेयी—' इत्येयादेशः। नन्वत्र निरनुबन्धपरिभाषया 'शिलाया ढः' यश्च 'तत्र साधुः' इत्यधिकारे 'सभाया यः' 'ढश्छन्दसि' इति विहितस्तयोरेव ढयोर्ग्रहणेन भवितव्यं न तु ढकः। सत्यम्, शिलाया ढस्य स्वभावान्नपुंसक एव प्रवृत्तेः स्त्रियामसम्भवात्। सभाया ढस्य च सभेयीति स्त्रियां छन्दसि प्रयोगदर्शनादन्यस्य हि निरनुबन्धस्यासम्भवादगत्या सानुबन्धको गृह्यते।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पञ्चतयी । आक्षिकी । लावणिकी । यादृशी । इत्वरी । 'ताच्छीलिके णेऽपि' (प

---

ङीप् । **पञ्चतयीति** । पञ्च अवयवा यस्या इति विग्रहः । 'संख्याया अवयवे तयप् ।' ङीप् । **आक्षिकीति** । अक्षैर्दीव्यतीति विग्रहः । 'तेन दीव्यति खनति जयति जितम्' इति ठक्, आदिवृद्धिः, ठस्येकः, 'यस्येति च' इत्यकारलोपः । आक्षिकशब्दाद् ङीप्, 'यस्येति च' । **लावणिकीति** । लवणं पण्यमस्या इति विग्रहः, 'लवणाद् ठञ्', 'ठस्येकः', आदिवृद्धिः, 'यस्येति च', लावणिकशब्दाद् ङीप्, 'यस्येति च' ठेत्येव सिद्धे ठक्ठञोः पृथग्ग्रहणं तु ठनो ञिठस्य च व्यावृत्त्यर्थम् । दण्डोऽस्त्यस्याः दण्डिका 'अत इनिठनौ', काश्यां भवा काशिका 'काश्यादिभ्यष्ठञ्ञिठौ' इति ञिठः । **यादृशीति** । 'त्यदादिषु दृशः' इति यच्छब्दे उपपदे कञ्, 'आसर्वनाम्नः' इति यच्छब्दस्याकारः, ङीप्, 'यस्येति च' । **इत्वरीति** । 'इण् गतौ' 'इण्नशजिसर्तिभ्यः क्वरप्' 'ह्रस्व-

---

**ऐन्द्रीति** । इन्द्रो देवता' अस्याः । 'साऽस्य देवता' इत्यण् । इन्द्रस्येयमिति वा विग्रहः । 'तस्येदम्' इत्यण् । अत्र व्याचक्षते—'कृद्ग्रहणे गतिकारकपूर्वस्य-' इत्यस्य प्रवृत्त्य-भावेऽपि अणन्तस्य प्रातिपदिकविशेषणात्तदन्तमपि गृह्यत इति कुम्भकारशब्दाद् ङीप् स्यादेव । अस्तु वा कारशब्दादेव ङीप्, तथापि कुम्भकारीति रूपं सिध्यत्येव । न च कारशब्दान्ङीपि तदन्तात् 'स्त्रीभ्यो ढक्' इति ढक्प्रत्यये कौम्भकारेयो न सिध्येदिति वाच्यम् । अनुपसर्जनस्त्रीप्रत्यये तदादिनियमाभावात्तत्सिद्धेः । नापि नियमा-भावे कारीशब्दात्कदाचिड् ढकि कुम्भकारेय इति रूपं स्यादिति शङ्क्यम्, 'समर्थः पदविधिः' इति वक्ष्यमाणत्वेनासमर्थात्तद्धितानुत्पत्तेरिति । मनोरमायां तु इह सूत्रे अनेकं वाक्यं तत्रानुपसर्जनमण् तस्य योऽकारस्तदन्तादिति व्याख्यानान्नेह । आपि-शलमधीते आपिशला ब्राह्मणीति । अत्र हि प्रोक्तार्थे योऽण् श्रूयमाणः स उपसर्जनम् । यस्तु प्रधानोऽध्येत्रण् 'प्रोक्ताल्लुक्' इति स लुप्तः वर्णप्राधान्यान्न प्रत्ययलक्षणमत-ष्टाबेव भवतीति स्थितम् । नन्वेवमापिशलेति रूपसिद्ध्यर्थमनुपसर्जनग्रहणस्यावश्य-कत्वेन सामर्थ्योपक्षयात् कथमेतस्य तदन्तविधिज्ञापकतेति चेत् । अत्राहुः—स्वरि-तत्वप्रतिज्ञाया 'अधिकारोऽयम्' इत्यधिकारत्वाश्रयणादनुपसर्जनग्रहणस्य ज्ञापकत्वं सम्भवत्येवेति । **औत्सीति** । उत्से भवा 'उत्सादिभ्योऽञ्' । नन्वनेनैव सिद्धे 'शार्ङ्गर-वाद्यञः-' इत्यत्राञ्ग्रहणं व्यर्थम् । अञन्तस्याद्युदात्तत्वेन ङीप्ङीनोः स्वरे विशेषा-भावात् । मैवम्, उत्सस्यापत्यं स्त्री औत्सीत्यत्राञन्तलक्षणं ङीपं बाधित्वा परत्वाज्जा-तिलक्षणे ङीषि प्राप्ते तद्बाधनार्थं तस्यावश्यकत्वात् । न चैवं 'शार्ङ्गरवाद्यञः-' इति ङीना सिद्धमिदं रूपमित्यञ्ग्रहणमिह न कर्तव्यमिति वाच्यम् । तत्र 'जातेः' इत्यनु-वृत्तेः । अन्यथा शार्ङ्गरवस्य स्त्री शार्ङ्गरवी औत्सस्य स्त्री औत्सीत्यादौ पुंयोगेऽपि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्य पिति कृति' इति तुक्, इत्वरशब्दाद् ङीप्, 'यस्येति च' 'स्थेशभास—' इति वरचो व्यावृत्तये ककारानुबन्धग्रहणम्। 'विन्यस्तमङ्गलमहौषधिरीश्वरायाः' इति भारविः। 'सैनमीश्वराप्रदह' इति वेदे। क्वरपि अन्यतरानुबन्धेनैव वरचो व्यावृत्तिसिद्धेः अनुबन्धद्वयोपादानं स्पष्टार्थम्। ईश्वरी तु ईश्वरशब्दाद् ईश्वरस्य स्त्रीति पुंयोगे ङीष्। अथवा 'अश्नोतेराशुकर्मणि वरट् च' इति वरडन्तात् टित्त्वाद् ङीप्। यद्वा 'आतो मनिन्क्वनिब्वनिपश्च' 'अन्येभ्योऽपि दृश्यते' इति क्वनिपि वनिपि च 'वनो र च' इति ङीन्रौ। ताच्छीलिके णेऽपीति। तच्छीले भवस्ताच्छीलिकः, तच्छीलार्थक इति यावत्। तस्मिन् णप्रत्यये सति तदन्तादपि ङीप् भवतीत्यर्थः। ज्ञापकसिद्धमेतत्। तथा हि—शीलमित्यनुवृत्तौ 'छत्रादिभ्यो णः' इति विहिते णप्रत्यये अण्कार्यं भवति, 'कार्मस्ताच्छील्ये' इति ज्ञापकात्। कर्म शीलमस्येति विग्रहे छत्रादित्वाद् णप्रत्यये, 'नस्तद्धिते' इति टिलोपे, कार्म इति भवति। न तु 'अन्' इति सूत्रेण अण्यन् प्रकृत्या स्यादित्यर्थकेन प्रकृतिभाव इति तदर्थः। अत्र अणि विहितस्य प्रकृतिभावस्य णप्रत्यये परतः प्रतिषेधात् ताच्छीलिके णप्रत्यये अणकार्यं विज्ञायते। अतस्ताच्छीलिकणप्रत्य-

---

परत्वान्ङीन् स्यान्न तु ङीष्। इष्यते तु पुंयोगे ङीषेव। तस्माद् भवाद्यर्थस्य जातित्वेनापरिभाषणाद्भवाद्यर्थे ङीबर्थमिहाप्यण्ग्रहणमावश्यकमेवेति दिक्। ऊरुद्वयसीत्यादि। ऊरू प्रमाणमस्याः सा। 'प्रमाणे द्वयसज्दघ्नञ्मात्रचः'। यद्यत्र 'नलोका—' इति सूत्रे तृन्नितिवद् द्वयसजिति मात्रचश्चकारेण प्रत्याहारो गृह्यते, तदा दघ्नञ्मात्रज्ग्रहणमिहाकर्तुं शक्यम्। पञ्चतयीति। पञ्च अवयवा अस्याः, 'संख्याया अवयवे तयप्'। आक्षिकीति। 'तेन दीव्यति—' इति ठक्। लावणिकीति। लवणं पण्यमस्याः। 'लवणाट्ठञ्'। ठक्ठञोर्भेदेनोपादानं ठन्निवृत्त्यर्थम्, तेनेह न, दण्डोऽस्त्यस्याः सा दण्डिका। 'अत इनि—' इति ठन्। अत एव निठन्तेऽपि न ङीप्। काशिषु भवा काशिका। 'काश्यादिभ्यष्ठञ्ञिठौ'। यादृशीति। 'त्यदादिषु दृशः—' इति कञ्। 'आ सर्वनाम्नः' इत्याकारः। इत्वरीति। एति तच्छीला। 'इण्नशजिसर्तिभ्यः क्वरप्'। 'ह्रस्वस्य पिति कृति तुक्'। क्वरपोऽन्यतरानुबन्धोपादानं स्पष्टार्थम्। एकेनैव वरचो व्यावृत्तिसिद्धेः। 'विन्यस्तमङ्गलमहौषधिरीश्वरायाः' इति भारविः। तत्र 'स्थेशभास—' इति वरच्। ईश्वरीति तु त्रेधा—पुंयोगलक्षणे ङीष्यन्तोदात्तमेकम्, इच्चोपधायाः' इत्यनुवृत्तौ 'अश्नोतेराशुकर्मणि वरट्' इत्यौणादिके वरटि टित्वान्ङीपि मध्योदात्तमपरम्, ईशेः क्वनिपि वनिपि वा ङीन्रयोराद्युदात्तमन्यत्। ताच्छीलिक इति। अयं भावः—'शीलम्' 'छत्रादिभ्यो णः' इति विहितो यो णस्तस्मिन्नणकार्यं भवति 'कार्मस्ताच्छील्ये' इति ज्ञापकात्। तत्र हि 'अन्' इत्यणि विहितं प्रकृतिभावं बाधितुं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

४८)। चौरी। 'नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसंख्यानम्' (वा २४२५)। स्त्रैणी। पौंस्नी। शाक्तीकी। आढ्यङ्करणी। तरुणी, तलुनी। ४७१ यञश्च। (४-१-१६) यञन्तात्स्त्रियां ङीप्स्यात्। अकारलोपे कृते। ४७२ हलस्तद्धितस्य।

यान्तादणकार्यं ङीब् भवतीति भावः। **चौरीति**। चुरा शीलमस्या इति विग्रहः। छत्रादित्वाद् णः, आदिवृद्धिः 'यस्येति च' चौरशब्दाद् ङीपि, 'यस्येति च'। **नञ्स्नञ्**। नञ्, स्नञ्, ईकक्, ख्युन्, तरुण, तलुन–एतेषामपि ङीब्विधौ वचनं कर्तव्यमित्यर्थः। नञादयश्चत्वारः प्रत्ययाः, अतस्तदन्तविधिः। **स्त्रैणी पौंस्नीति**। 'स्त्रीपुंसाभ्याम्–' इति नञ्स्नञौ। तत्र स्त्रीशब्दान्नञि, आदिवृद्धिः, णत्वम्, ङीप्, 'यस्येति च'। पुंस्शब्दात् स्नञि, आदिवृद्धिः, ङीप्, 'यस्येति च'। **शाक्तीकीति**। शक्तिः आयुधविशेषः प्रहरणम् अस्या इति विग्रहः। 'शक्तियष्ट्योरीकक्', आदिवृद्धिः, ङीप्, 'यस्येति च'। **आढ्यंकरणीति**। अनाढ्यः आढ्यः क्रियते अनयेति विग्रहः। 'आढ्यसुभग–' इत्यादिना ख्युन्। 'युवोः–' इत्यनादेशः। 'अरुर्द्विषत्–' इति मुम्, णत्वम्, ङीप्, 'यस्येति च'। **तरुणी, तलुनीति**। यद्यप्यनयोः 'वयसि प्रथमे' इत्येव ङीप् सिद्धः, तथापि गौरादिषु पाठाद् ङीपि प्राप्ते इदं वचनम्। गौरादिपाठाद् ङीषि स्वरे विशेष इति भावः। **यञश्च**। यञ इति प्रत्ययत्वात्तदन्तग्रहणम्। 'ऋन्नेभ्यः–' इत्यतो ङीबित्यनुवर्तते। स्त्रियामित्यधिकृतम्। तदाह—**यञन्तादिति**। यद्यपि 'टिड्ढाणञ्–' इति पूर्वसूत्र एव यञ्ग्रहणं कर्तुमुचितम्। तथापि 'प्राचां ष्फ तद्धितः' इत्युत्तरसूत्रे यञ एवानुवृत्तये पृथक् सूत्रमिति भावः। **अकारलोपे कृत इति**। गार्गीत्युदाहरणं वक्ष्यति। गर्गस्यापत्यं स्त्री इत्यर्थे 'गर्गादिभ्यो यञ्' इति यञ्, आदिवृद्धिः, 'यस्येति च' इति गकारादकारस्य लोपः। गार्ग्यशब्दाद् ङीपि 'हलस्तद्धितस्य' इति यकारलोपात् परत्वाद् 'यस्येति च' इति यकारादकारस्य लोपे कृते सति प्रक्रिया वक्ष्यत इत्यर्थः। **हलस्तद्धितस्य**। हल इति दिग्योगे पञ्चमी। परस्येत्यध्याहार्यम्। 'यस्येति

टिलोपो निपात्यते, यदि तु णप्रत्यये अणकार्यं न स्यात् तर्हि किं तेन। ताच्छीलिके एव अणकार्यज्ञापनान्नेह। दण्डः प्रहरणमस्यां क्रीडायां दाण्डा। 'तदस्यां प्रहरणम्–' इति णः। 'छत्रादिभ्योऽण्' इत्येव सूत्रमस्तु किमनया कुसृष्ट्येति तु बहवः। **चौरीति**। चुरा शीलमस्याः। **नञ्स्नञ्**। वृत्तिकृता त्वत्रत्यख्युन्ग्रहणं सूत्रे प्रक्षिप्य 'करणख्युनाम्' इति पठितम्, तच्च भाष्यविरुद्धमित्युत्तरत्र स्फुटीभविष्यति। **स्त्रैणी**। **पौंस्नीति**। 'स्त्रीपुंसाभ्याम्–' इति नञ्स्नञौ। **शाक्तीकीति**। शक्तिः प्रहरणमस्याः, 'शक्तियष्ट्योरीकक्'। **आढ्यङ्करणीति**। अनाढ्यः आढ्यः क्रियते अनयेत्यर्थे 'आढ्यसुभग–' इत्यादिना करणे ख्युन्। 'युवोः–' इत्यनादेशः। 'अरुर्द्विषत्–' इति मुम्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

(६-४-१५०) हलः परस्य तद्धितयकारस्योपधाभूतस्य लोपः स्यादीति परे। गार्गी। 'अनपत्याधिकारस्थान्न ङीप्' (वा २४२६) द्वीपे भवा द्वैप्या। अधिकारग्रहणाद् नेह-

---

च' इति सूत्रात् ईतीत्यनुवर्तते, 'सूर्यतिष्यागस्त्य-' इत्यतः 'उपधाया' इति, 'य' इति षष्ठ्यन्तं च, 'ढे लोपोऽकद्र्वाः' इत्यतः 'लोप' इति च। तदाह—**हलः परस्येत्यादिना**। अकारलोपात् प्रागेव यकारलोपो न सम्भवति, अकारे सति यकारस्य ईकारपरकत्वाभावात्। ननु कृतें अकारलोपे कथं यकारस्य उपधात्वम्। न च अल्लोपस्य स्थानिवत्त्वं शङ्क्यम्, यलोपविधौ तन्निषेधादिति चेत्, न—यलोपे कर्तव्ये अल्लोपस्याभीयत्वेनासिद्धतया यकारस्य उपधात्वसम्भवात्। उपधाग्रहणाननुवृत्तौ तु अल्लोपस्यासिद्धत्वाद्यकारस्य ईकारपरकत्वाभावाद् लोपो न स्यात्। यदा तु सूत्रारम्भसामर्थ्यादेवाकारव्यवधानेऽपि यकारस्य लोपः सम्भवतीत्युच्यते, तदा उपधाग्रहणानुवृत्तिर्मास्तु। **गार्गीति**। इह 'गोत्रं च चरणैः सह' इति जातित्वेऽपि 'जातेरस्त्रीविषयात्-' इति न ङीष्, योपधत्वात्। **अनपत्याधिकारेति**। 'तस्यापत्यम्' इत्यपत्याधिकारविहितभिन्नयञन्तान्न ङीबिति वक्तव्यमित्यर्थः। **द्वैप्येति**। द्वीपे भवेति विग्रहे 'द्वीपादनुसमुद्रं यञ्' इति यञ्, आदिवृद्धिः। 'यस्येति च', टापि सवर्णदीर्घः। अस्य यञः अपत्याधिकारविहितत्वाभावान्न ङीबिति भावः। नन्वनपत्यान्न ङीबित्येतावतैव द्वैप्येत्यत्रातिप्रसङ्गनिरासाद् अधिकारग्रहणं किमर्थमित्यत आह—**अधिकारग्रहणादिति**। इह नेति शेषः। देवस्यापत्यमिति विग्रहे 'देवाद्यञञौ' इति यञ्,

---

**तरुणी। तलुनीति**। तरुणतलुनयोर्गौरादिषु पाठाद् ङीब्ङीषोः पर्यायो बोध्यः। स्वरे विशेषः। 'कृवृदारिभ्य उनन्'। 'त्रोरश्च लो वा' इति तरुणतलुनयोरुनन्प्रत्ययान्तत्वेन नित्त्वादाद्युदात्तता। सैव ङीपि। ङीषि त्वन्तोदात्ततेति। **यञश्च**। योगविभाग उत्तरार्थः। 'प्राचां ष्फ तद्धितः' इत्यत्र यञ एवानुवृत्तिर्यथा स्यात्। **हलस्तद्धितस्य**। हल इति पञ्चमी। 'यस्येति च' इति सूत्रादीतीत्यनुवर्तते। 'नस्तद्धिते' इत्यतस्तद्धित इति नानुवर्तते, 'आपत्यस्य च-' इत्युत्तरसूत्रे पुनस्तद्धितग्रहणात्तदाह—**हल उत्तरस्येत्यादि**। 'तद्धिते' इत्यनुवृत्तौ त्विहापि स्यात्। सांकाश्यकः। काम्पिल्यकः। 'संकाशादिभ्यो ण्यः' ततो 'धन्वयोपधात्-' इति वुञ्। **उपधाभूतस्येति**। 'सूर्यतिष्या-' इत्यत उपधाया इत्यनुवर्तत इति भावः। ननु 'यस्येति च' इति यञोऽकारलोपे कृते यकारस्य ईकारपरत्वमस्त्येव किमुपधाग्रहणानुवृत्त्या। न चाल्लोपस्य स्थानिवद्भावः, यलोपे तन्निषेधात्। अत्राहुः—यलोपे कर्तव्येऽल्लोपस्याभीयत्वेनासिद्धत्वादुपधाग्रहणानुवृत्तिरभ्युपगन्तव्येति। अन्ये त्वाहुः—सूत्रारम्भसामर्थ्यादल्लोपस्यासिद्धत्वं न भवति। तथा चोपधाग्रहणं विनापि नात्र क्षतिः। एवं च 'सूर्यतिष्या-'

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

देवस्यापत्यं दैव्या । 'देवाद्यञञौ' इति हि यञ् प्राग्दीव्यतीयः, न त्वपत्याधिकारपठितः ।

**४७३ प्राचां ष्फ तद्धितः ।** ( ४-१-१७ ) यञन्तात्ष्फो वा स्यात्स्त्रियाम्, स च तद्धितः । **४७४ षः प्रत्ययस्य ।** ( १-३-६ ) प्रत्ययस्यादिः ष इत्स्यात् ।

---

आदिवृद्धिः, 'यस्येति च', दैव्यशब्दात् टाप्, सवर्णदीर्घः, दैव्येति रूपम् । अनपत्याञ्ञ ङीबित्युक्ते अस्य यञः आपत्यत्वाद् ङीब्निषेधो न स्यात् । अधिकारग्रहणे तु अत्रापि निषेधः स्यादेव, अस्य यञः आपत्यत्वेऽपि 'तस्यापत्यम्' इत्यधिकारबहिर्भूतत्वात् । तदेतदुपपादयति—**देवादिति** । 'देवाद्यञञौ' इति तु 'तस्यापत्यम्' इत्यधिकारात् प्रागेव 'प्राग्दीव्यतोऽण्' इत्यधिकारपठितः । स चापत्यादिविकारान्तार्थेषु साधारणत्वाद् अपत्यार्थकोऽपि भवति, न त्वपत्याधिकारपठित इत्यर्थः । यद्यपि 'यञश्च' इति सूत्रे 'आपत्यग्रहणं कर्तव्यम्' इत्येव भाष्ये दृश्यते, तथापि तत्र आपत्यपदम् अपत्याधिकारविहितपरमिति मनोरमायां शब्दरत्ने च प्रपञ्चितम् । **प्राचां ष्फ तद्धितः ।** यञ इत्यनुवर्तते, स्त्रियामित्यधिकृतम् । ष्फेति लुप्तप्रथमाकम् । तदाह—**यञन्तादिति । षः प्रत्ययस्य ।** 'आदिर्ञिटुडवः' इत्यत आदिरित्यनुवर्तते, 'उपदेशेऽजनुनासिक इत्' इत्यत इदिति च । तदाह—**प्रत्ययस्यादिरिति** । षकारस्य इत्संज्ञायां

---

इति सूत्रेऽप्युपधाग्रहणं त्यक्तुं शक्यमुक्तयुक्तेरिति । **गार्गीति** । गोत्रप्रत्ययान्तस्य जातित्वेऽपि योपधात्वादत्र 'जातेः—' इति ङीष् न भवति । तथा चाद्युदात्तमेवेदं पदम् । **अनपत्याधिकारेति** । यद्यपि 'आपत्यग्रहणं कर्तव्यम्' इत्येव वार्तिकम् , तथाप्यपत्याधिकारविहितपरं तत् । तादृशश्च गर्गादियञेव न तु देवाद्यञ् । तस्यापत्याधिकारात्प्रागेव पाठात् । अत एव भाष्यकृता 'यञश्च' इत्यत्र 'कन्क्करपोऽयञश्च' इति- 'गर्गादिभ्यो यञ्' इत्यत्र 'अयञ्' इति चाकारः प्रश्लिष्टः । एवं च 'यञञोश्च' इति सूत्रेऽपि 'यस्कादिभ्यो गोत्रे अयञञोश्च' इत्यकारः प्रश्लिष्टः । एतच्च मनोरमाग्रन्थानुरोधेनोक्तम् । नव्यास्तु—अधिकारग्रहणमिहनार्थकं यथाश्रुतवार्तिकेनैव द्वीपे भवा द्वैप्येति रूपसिद्धेः । न च देवस्यापत्यं स्त्री दैव्येति रूपासिद्धिः शङ्क्या । 'अयञश्च' इति भाष्यकारीयनिष्कर्षात्तत्सिद्धेः । नहि 'देवाद्यञञौ' इत्यत्रायमित्यकारः प्रश्लेष्टुं शक्यते । किञ्चाधिकारग्रहणे अभिजितोऽपत्यं स्त्रीत्यणन्तात्स्वार्थे 'अभिजिद्विदभृत—' इत्यादिना यञि आभिजितीति रूपं न सिध्येत् । 'श्रुमदणो यञ्' इत्यकारप्रश्लेषेण भाष्यकाररीत्यापीह ङीपः सम्भवादित्याहुः । स्यादेतत्—अकारं प्रश्लिष्य गर्गादिभ्यो यञि कृते गार्ग्य इति रूपं न सिध्येत् । मैवम् , वार्तिकप्रत्याख्यानाय भाष्यकृता अकारप्रश्लेषे कृतेऽपि तस्येत्संज्ञकत्वेन लुप्तत्वादिष्टसिद्धेः । एवं च 'करप्ख्युनाम्' इति पाठः करपोऽयञश्च' इति भाष्यविरुद्ध इति स्पष्टमेव । **प्राचां ष्फ तद्धितः ।** तद्धितग्रहणं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

**४७५ आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्।** ( ७-१-२ ) प्रत्ययादिभूतानां फादीनां क्रमादायन्नादय आदेशाः स्युः। तद्धितान्तत्वात्प्रातिपदिकत्वम्। षित्त्वसामर्थ्यात्ष्फेणोक्तेऽपि स्त्रीत्वे 'षिद्गौरा–' ( सू ४९८ ) इति वक्ष्य-

---

तस्य लोपः। **आयनेयीनीयियः।** आयन्, एय्, ईन्, ईय्, इय्, एषां द्वन्द्वात् प्रथमाबहुवचनम्। फ, ढ, ख, छ, घ्, एषां द्वन्द्वात् षष्ठीबहुवचनम्। फादिष्वकार उच्चारणार्थः। यथासंख्यपरिभाषया क्रमेणान्वयः। तदाह—**प्रत्ययादिभूतानामित्यादिना।** आयनो नस्य णत्वे नित्स्वरोपयोगेऽपि नेत्त्वम्, फिनो नित्करणाद् ज्ञापकात्। तत्साहचर्यादीनोऽपि नस्य नेत्त्वम्। एयादिषु च यस्य नेत्त्वम्, प्रयोजनाभावात्। ननु ष्फस्य तद्धितसंज्ञा किमर्थेत्यत आह—**तद्धितान्तत्वादिति।** ष्फान्तस्य प्रातिपदिकत्वे प्रयोजनमाह—**षिद्गौरेति वक्ष्यमाणो ङीषिति।** 'षिद्गौरादिभ्यश्च' इत्यत्र प्रातिपदिकादित्यनुवृत्तम्, ततश्च ष्फान्तस्य प्रातिपदिकत्वाभावे ङीष् न स्यादिति भावः। ननु ष्फप्रत्ययेनैव स्त्रीत्वस्य द्योतितत्वाद् 'उक्तार्थानामप्रयोगः' इति न्यायादत्र कथं ङीषित्यत आह—**षित्त्वसामर्थ्यादिति।** ष्फेण द्योतितेऽपि स्त्रीत्वे षित्करण-

---

ष्फप्रत्ययान्तस्य प्रातिपदिकसंज्ञार्थम्। 'तेन षिद्गौरा–' इति ङीष् सिध्यति। ननु प्रातिपदिकसंज्ञां विनापि षित्कारणसामर्थ्यादेव ङीष् भविष्यति किमनेन तद्धितग्रहणेन। न च यन्नन्ते 'यस्येति च' इति लोपार्थं तदिति वाच्यम्। सवर्णदीर्घेणापि रूपसिद्धेर्लोपस्यानावश्यकत्वात्। एवं तर्हि तद्धितग्रहणमित्नन्तादपि क्वचित् ष्फो भवतीति ज्ञापनार्थम्। तेन 'आसुरेरुपसंख्यानम्' इति वक्ष्यमाणं सिध्यति। **षः प्रत्ययस्य।** 'आदिर्ञिटुडवः' इत्यत आदिरित्यनुवर्तत इत्यभिप्रेत्याह—**प्रत्ययस्यादिरिति।** प्रत्ययस्य किम्, षोडश। 'षष उत्वम्–' इत्यत्र उपदेशस्थोऽयं षकारः। एतच्च कौस्तुभे स्थितम्। आदिः किम्, अविषः। महिषः। 'अविमह्योष्टिषच्'। नन्वत्र प्रयोजनाभावादेव षकारस्येत्संज्ञा न भविष्यति टित्त्वादेवाविषी महिषीति रूपसिद्धेः। न च पक्षे ङीष्यन्तोदात्तः प्रयोजनमिति वाच्यम्। 'अनुदात्तस्य च यत्रोदात्तलोपः' इत्युदात्तनिवृत्तिस्वरेण टितः परस्य ङीपोऽप्युदात्तत्वात्। अत्राहुः—विनिगमनाभावेन पक्षे टकारस्यापि श्रवणं स्यात्। तथा च षित्वान्ङीषि अविषीत्यादिरूपसिद्धिः स्यात्। अतः षकारस्यैव श्रवणं भवतु मा कदाचिट्टकारस्य श्रवणं भूदित्येतदर्थमादिग्रहणानुवृत्तिरिति। **आयने।** आयनीनोर्नकारस्य नेत्त्वम्। फिनो नित्करणसामर्थ्यात्। फकारादिष्वकार उच्चारणार्थः। तेन ढ्क्फिञादीनामादेशः सिध्यति। आदिग्रहणं किम्, उरुदघ्नमित्यादौ मा भूत्। प्रत्ययेति किम्, धातोरादीनां मा भूत्। फक्कति। ढौकते खनति। छादयति। घूर्णते। घन्नादिषु तु 'चजोः कु घिण्ण्यतोः' इत्यादिनिर्देशेन-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

माथो ङीष् । गार्ग्यायणी । ४७६ सर्वत्र लोहितादिकतन्तेभ्यः । (४-१-१८) लोहितादिभ्यः कतशब्दान्तेभ्यो यञन्तेभ्यो नित्यं ष्फः स्यात् । लौहित्यायनी । कात्यायनी । ४७७ कौरव्यमाण्डूकाभ्यां च । (४-१-१९) आभ्यां ष्फः स्यात् । क्रमेण टाब्ङीषोरपवादः । 'कुर्वादिभ्यो ण्यः' (सू ११७२) । कौरव्या-

---

सामर्थ्याद् ङीषित्यर्थः । **गार्ग्यायणीति** । गर्गस्यापत्यं स्त्री इति विग्रहः । गर्गादियञन्ताद् गार्ग्यशब्दात् ष्फः, षकार इत्, फकारस्य आयन्नादेशः, 'यस्येति च' इति यकारादकारस्य लोपः, 'हलस्तद्धितस्य' इति तु न भवति, ईतीत्यनुवृत्तेः । 'आपत्यस्य च–' इत्यपि न, अनातीति निषेधात् । षित्त्वाद् ङीष्, णत्वमिति भावः । **सर्वत्र** । लोहितादिः गर्गाद्यन्तर्गणः । लोहितः आदिः येषामिति, कतः अन्तो येषामिति च विग्रहः । कतन्तेत्यत्र शकन्ध्वादित्वात् पररूपम् । यञ इत्यनुवृत्तं बहुवचनान्ततया विपरिणम्यते । 'प्राचां ष्फ तद्धितः' इति सूत्रं प्राचांवर्जमनुवर्तते । सर्वत्रेति सर्वेषु मतेष्वित्यर्थः, नित्यमिति यावत् । तदाह—**लोहितादिभ्य इत्यादिना** । **लौहित्यायनीति** । लोहितस्यापत्यं स्त्री इति विग्रहः । लोहितशब्दाद् गर्गादियञन्तात् ष्फः, ष इत्, फकारस्यायन्, 'यस्येति च' इति यकारादकारस्य लोपः, तद्धित इत्यप्यनुवृत्तेः षित्त्वाद् ङीषिति भावः । **कात्यायनीति** । पूर्ववत् प्रक्रिया बोध्या । **कौरव्यमाण्डूकाभ्यां च** । **आभ्यामिति** । कौरव्यमाण्डूकाभ्यामित्यर्थः । **क्रमेणेति** । कौरव्यशब्दात् टापः माण्डूकशब्दाद् ङीषश्चापवाद इत्यर्थः । कौरव्यशब्दस्य यञन्तत्वात्, माण्डूकशब्दस्य अणन्तत्वाच्च । ङीपोऽपवाद इत्युचितमिति भ्रमं वारयितुमाह—**कुर्वादिभ्य इत्यादिना** । **कौरव्यायणीति** । कुरोरपत्यं स्त्री इति विग्रहः । 'कुर्वादिभ्यो ण्यः'

---

त्संज्ञया भाव्यमित्यादेशाभावः । शमेर्ढः शण्ढ इत्येवमादीनामेते आदेशा न भवन्ति । 'उणादयो बहुलम्' इति बहुलवचनादिति दिक् । **क्रमादिति** । फ—आयन् । ढ—एय् । ख—ईन् । छ—ईय् । घ—इय् इत्यर्थः । स्त्रियामेव ष्फप्रत्ययविधानादत्र ङीष् न स्यादित्याशङ्क्याह—**षित्त्वसामर्थ्यादिति** । एकमेव स्त्रीत्वमुभाभ्यामुच्यत इति भावः । सर्वत्रग्रहणमुत्तरसूत्रादिहापकृष्यते बाधकबाधनार्थम् । तेन 'आवट्याच्च' इति वक्ष्यमाणं परमपि चापं बाधित्वा प्राचां मते आवट्यशब्दादपि ष्फ एव भवति । चाब्विधेस्तूदीचां मते सावकाशत्वात् । आवट्यायनी । एवं षाद्यञश्चाब्विषयेऽपि प्राचां ष्फ एव, शार्कराक्ष्यायणीति यथा । **सर्वत्र** । सर्वेषां मत इत्यर्थः । तदेतत्फलितमाह—**नित्यं ष्फः स्यादिति** । नन्वारम्भसामर्थ्यान्नित्यत्वे सर्वत्रग्रहणं व्यर्थमिति चेत् । अत्राहुः—पूर्वसूत्रे बाधकबाधनोपयुक्तस्य तस्येह स्पष्टार्थमभ्युपगमान्न वैयर्थ्यमिति । यञ इत्यनुवर्तनादाह—**यञन्तेभ्य इति** लोहितादिर्गर्गाद्यन्तर्गण इति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यणी । 'ढक्च मण्डूकाद्' ( सू ११२२ ) इत्यण् । माण्डूकायनी । 'आसुरेरुप-संख्यानम्' ( वा २४३३ ) आसुरायणी । ४७८ वयसि प्रथमे । (४-१-२०)

---

इति ण्यः । णकार इत्, 'ओर्गुणः', आदिवृद्धिः, 'गोत्रं च चरणैस्सह' इति जातित्वेऽपि योपधत्वाद् 'जातेरस्त्रीविषयात्—' इति ङीषभावे टाप् प्राप्तः । तं बाधित्वा ष्फः, ष इत्, आयन्, 'यस्येति च' इत्यकारलोपः, षित्त्वाद् ङीष् । 'यस्येति च' इति भावः । **माण्डूकायनीति** । मण्डूको नाम ऋषिः, तस्यापत्यं स्त्री इति विग्रहः । 'ढक् च मण्डूकात्' इत्यण्, आदिवृद्धिः, 'यस्येति च' 'गोत्रं च चरणैस्सह' इति जातित्वाद् ङीष् प्राप्तः, तं बाधित्वा ष्फः, ष इत्, आयन्, 'यस्येति च', षित्त्वाद् ङीष्, 'यस्येति च' इति भावः । टाब्ङीपोरपवाद इति पाठस्तु प्रामादिकः । **आसुरेरुपसङ्ख्यानमिति** । ष्फस्येति शेषः । **आसुरायणीति** । असुरस्यापत्यं स्त्री इति विग्रहः, 'अत इञ्', आदिवृद्धिः, ष्फः, ष इत्, आयन्, 'यस्येति च' षित्त्वाद् ङीष्, 'यस्येति च' णत्वमिति भावः । **वयसि प्रथमे** । प्राणिनां कालकृतावस्थाविशेषो वयः । तच्च कौमारं यौवनं वार्धकं चेति त्रिधा ।

---

भावः । **लौहित्यायनीति** । सांशित्यायनी बाभ्रव्यायणीत्यादयोऽपि ज्ञेयाः । ननु गर्गादौ कतकण्वशकलेति पठ्यते, तथा च शाकल्यायनीति रूपं न सिध्येत् । यदि तु लोहितादिकार्यार्थं कतशब्दात्प्रागेव शकलशब्दः पठ्येत तर्हि शाकल्यस्य छात्राः शाकला इत्यत्र 'कण्वादिभ्यो गोत्रे' इति कण्वादिकार्यमण् न सिध्येत् । उच्यते—कतकण्वशकलेति गणपाठे कण्वशब्दात् पूर्वं शकलशब्दः पठितव्यः । कतन्तेभ्य इत्यत्र कतस्यान्तः कतन्तः, कतोऽन्तो येषां ते कतन्ताः । शकन्ध्वादित्वात्पररूपम् । कतन्तश्च कतन्ताश्चेति बहुव्रीहितत्पुरुषयोरकशेषोऽभ्युपेयः । तथा कण्वादिभ्य इत्यत्रापि कण्वस्यादिः कण्वादिः, कण्व आदिर्येषामिति बहुव्रीहितत्पुरुषयोरेकशेषस्तथा च सर्वेष्टसिद्धिरिति । **कौरव्य । टाप्ङीषोरिति** । योपधत्वेन 'जातेः—' इति ङीषः प्राप्त्यभावात्कौरव्यशब्दाट्टाप्, माण्डूकात्तु ङीषिति भावः । यद्यपीह टाप्ङीपोरिति पाठः प्रायेण दृश्यते तथापि तत्र ङीबिति लेखकप्रमाद एव । पारिभाषिकस्य पौत्रप्रभृतिगोत्रस्यैव जातित्वान्ङीषः प्राप्तिर्नेति मतान्तराभिप्रायेण वा तथोक्तमिति बोध्यम् । कौरव्यसाहचर्यान्माण्डूकशब्दोऽप्यपत्यप्रत्ययान्त एवेह गृह्यते न तु 'तस्येदम्' इत्यणन्तस्तेन 'यद्यसौ कूपमाण्डूकि तव' इति भट्टिप्रयोगः सिद्धः । तत्र हि मण्डूकस्येयं भार्येति विवक्षया 'तस्येदम्' इत्यण् । **वयसि** । कालकृता शरीरावस्था वयः । यस्त्वर्थप्रकरणादिकमनपेक्ष्य श्रवणमात्रेण वयः प्रतिपादयति स वयोवाचीत्युच्यते अन्तरङ्गत्वात् ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रथमवयोवाचिनोऽदन्तात्स्त्रियां ङीप्स्यात्। कुमारी। 'वयस्यचरम इति वाच्यम्' (वा २४३२)। वधूटी। चिरण्टी। वधूटचिरण्टशब्दौ यौवनवाचिनौ। अतः किम्—शिशुः। कन्याया न, 'कन्यायाः कनीन च' (सू १११६) इति निर्देशात्।

**४७६ द्विगोः। (४-१-२१)** अदन्ताद् द्विगोर्ङीप्स्यात्। त्रिलोकी। अजादित्वात्

---

'पिता रक्षति कौमारे भर्ता रक्षति यौवने।
पुत्रस्तु स्थाविरे भावे न स्त्री स्वातन्त्र्यमर्हति॥'

इति दर्शनात्। चतुर्विधं वय इत्यन्ये—

'आद्ये वयसि नाधीतं द्वितीये नार्जितं धनम्।
तृतीये न तपस्तप्तं चतुर्थे किं करिष्यति॥'

इति दर्शनात्। प्रथमे वयसीत्यनन्तरं विद्यमानादिति शेषः। 'अजाद्यतष्टाप्' इत्यतः अत इत्यनुवृत्तेन प्रातिपदिकादित्यधिकृतं विशेष्यते। तदन्तविधिः। स्त्रियामित्यधिकृतम्। 'ऋन्नेभ्यः–' इत्यतो ङीबित्यनुवर्तते। तदाह—**प्रथमवयोवाचिन इत्यादिना। कुमारीति।** अप्रादुर्भूतयौवनेत्यर्थः। वृद्धकुमारीति तु वृद्धायामेव कुमारीत्वारोपाद् बोध्यः। **वयस्यचरम इति।** चरमम् अन्त्यं वयः, तद्भिन्नम् अचरमम्, प्रथमे इत्यपनीय अचरमे इति वक्तव्यमित्यर्थः। किमर्थमित्यत आह—**वधूटी चिरण्टीति।** अनयोर्द्वितीयवयोवाचित्वादप्राप्तिरिति भावः। अनयोर्द्वितीयवयसि अप्रसिद्धत्वादाह—**वधूटचिरण्टशब्दौ यौवनवाचिनाविति।** भाष्यप्रामाण्यादिति भावः। **शिशुरिति।** शिशुशब्दस्य प्रथमवयोवाचित्वेऽपि अदन्तत्वाभावाद् न ङीबिति भावः। **कन्याया नेति।** ङीबिति शेषः। कुत इत्यत आह—**कन्यायाः कनीन चेति।** न च द्विवर्षा स्त्री इत्यादावपि ङीप् शङ्क्यः, शालादावपि प्रयोगसत्त्वेन द्विवर्षेत्यादेः प्रथमवयोवाचित्वाभावात्, पदान्तरसमभिव्याहारप्रकरणादि अनपेक्ष्य यः वयोवाची तस्यैव विवक्षितत्वात्। **द्विगोः।** स्त्रियामिति अत इति ङीबिति चानुवर्तते। तदाह—**अदन्तादिति। त्रिलोकीति।** त्रयाणां लोकानां

---

तेनेह न। उत्तानशया। लोहितपादा। इह प्रकरणादिना वयसः प्रतीतावपि शब्दादप्रतीतेः। अबालापि हि व्याध्यादिवशादुत्ताना शेते, अलक्तकेन च रक्तचरणा भवति। प्रथमेति किम्, वृद्धा। **कुमारीति।** प्रथमवयोवचन एवायं शब्दो न त्वनूढत्वप्रयुक्तः। पुंस्यपि कुमार इति प्रयोगात्। वृद्धकुमारीति तु गौणप्रयोगः। **वयस्यचरम इति।** यौवनं न प्रथमवयः किं तु द्वितीयमिति वार्तिकारम्भः। उपचयापचयलक्षणे द्वे एव वयसी इति पक्षे यौवनस्यापि प्राथम्यात् सूत्रेणैव सिध्यतीति बोध्यम्। वयांसि चत्वारीत्येके। यदाहुः—'आद्ये वयसि नाधीतं द्वितीये नार्जितं धनम्। तृतीये न तप-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

त्रिफला। त्र्यनीका (सेना)। ४८० अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि। (४-१-१२) अपरिमाणान्ताद्बिस्ताद्यन्ताच्च द्विगोर्ङीन्न स्यात्तद्धितलुकि सति। पञ्चभिरश्वैः क्रीता पञ्चाश्वा। आर्हीयष्ठक्। तस्य 'अध्यर्ध-' (सु

---

समाहार इति विग्रहः। 'तद्धितार्थोत्तरपदसमाहारे च' इति द्विगुसमासः, 'अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः' इति स्त्रीत्वम्, त्रिलोकशब्दात् टाबपवादो ङीप, 'यस्येति च', इति भावः। ननु त्रिफला त्र्यनीका इत्यत्रापि ङीप् प्राप्नोतीत्यत आह—**अजादित्वात् त्रिफला त्र्यनीकेति**। भवतीति शेषः। त्रयाणां फलानां समाहार इति, त्रयाणामनीकानामिति च विग्रहे 'तद्धितार्थ-' इति द्विगुः। 'अकारान्तोत्तरपदः-' इति स्त्रीत्वम्, 'द्विगोः' इति ङीपं बाधित्वा अजादित्वाट्टाबिति भावः। अनीकशब्दः ऐन्द्रवायवाग्रत्वे शुक्राग्रत्वे आग्रयणाग्रत्वे च वर्तते इति त्र्यनीकाधिकरणे मीमांसकाः।

**अपरिमाण**। 'द्विगोः' इति ङीबिति चानुवर्तते। प्रातिपदिकादित्यधिकृतमपरिमाणादिभिर्विशेष्यते। तदन्तविधिः। तदाह—**अपरिमाणान्तादित्यादिना**। अपरिमाणान्तमुदाहरति—**पञ्चभिरिति**। तद्धितलुकं दर्शयति—**आर्हीयष्ठक्**। **अध्यर्धेति लुगिति**। पञ्चभिरश्वैः क्रीतेति विग्रहे 'तद्धितार्थ-' इति द्विगुः। 'आर्हादगोपुच्छसङ्ख्यापरिमाणाट्ठक्' इत्यधिकारे 'तेन क्रीतम्' इति ठक्, 'अध्यर्धपूर्वाद् द्विगोर्लुगसंज्ञायाम्' इति तस्य लुक्। अत्र 'द्विगोः' इति ङीप् न भवति, अपरिमाणान्तद्विगुत्वात्। नन्वत्र 'द्विगोः' इति प्राप्तङीन्निषेधेऽपि 'टिड्ढाणञ्-' इति ठन्निमित्तको ङीब दुर्वारः, द्वाभ्यां शताभ्यां क्रीता द्विशतेत्यत्र 'सङ्ख्याया अतिशदन्तायाः-' इति कनः 'अध्यर्ध-' इति लुकि 'अपरिमाण-' इति निषेधस्य चरितार्थत्वाद् इति चेत्, सत्यम्, 'टिड्ढाणञ्-' इत्यत्र प्रत्यासत्त्या टिड्ढाणञादीनां यः अकारः तदन्तमिति विवक्षितम्।

---

स्तप्तं चतुर्थे किं करिष्यसि' इति। त्रीणीत्यन्ये। यदाहुः—'पिता रक्षति कौमारे भर्ता रक्षति यौवने। पुत्रस्तु स्थाविरे भावे न स्त्री स्वातन्त्र्यमर्हति' इति। **त्रिलोकीति**। त्रयाणां लोकानां समाहारे 'तद्धितार्थ-' इति द्विगुः। 'अकारान्तोत्तरपदो द्विगुः-' इति स्त्रीत्वम्। **त्रिफलेति**। अत्र 'द्विगोः' इति ङीप् प्राप्नोति न तु 'पाककर्ण-' इति ङीष्। तत्र 'जातेः' इत्यनुवृत्तेः। **त्र्यनीकेति**। अनीकमग्रता। त्रयाणामनीकानां समाहारः। अजादेराकृतिगणत्वाट्टाबिति त्र्यनीकाधिकरणे मीमांसकाः। **पञ्चाश्वेति**। नन्वत्र 'द्विगोः' इति ङीब् मा भूत्। ठगन्तत्वात्तु स्यादेव। न च 'अपरिमाण-' इति निषेधस्य निरवकाशतेति वाच्यम्। पञ्चानामजानां निमित्तं धन-

---

१ बन्धनी नास्ति क। अन्यत्रापि कौमुदीपुस्तकेषु 'सेना' इति पाठो दृश्यते। बालमनोरमाकारस्तु न स्वीकरोतीति टीकास्वरसः प्रतीयते।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

१६१२ ) इति लुक्। द्वौ बिस्तौ पचति द्विबिस्ता । द्व्याचिता । द्विकम्बल्या । परिमाणान्तात्तु द्व्याढकी । तद्धितलुकि किम्-समाहारे पञ्चाश्वी । ४८१

---

पञ्चाश्वशब्दश्चायं ठगवयवाकारान्तो न भवतीति न दोषः[1]। न च प्रत्ययलक्षणेन ठगवयवाकारान्तत्वं शङ्क्यम्, वर्णाश्रये प्रत्ययलक्षणाभावात्। बिस्तादिशब्दानां तु परिमाणविशेषवाचित्वाद् 'अपरिमाण–' इत्यनेन अप्राप्तेः पृथगुपादानम्। **द्वौ बिस्ताविति**। 'सुवर्णबिस्तौ हेम्नोऽक्षे' इत्यमरः। 'गुञ्जाः पञ्चाद्यमाषकः। ते षोडशाक्षः' इति च। गुञ्जापञ्चकं माषपरिमाणम्। माषषोडशकम् अक्षपरिमाणम्, तच्च अशीतिगुञ्जात्मकम्। तस्मिन् हेमविषये अक्षपरिमाणे सुवर्णबिस्तशब्दावित्यर्थः। द्वौ बिस्तौ पचतीति विग्रहे 'तद्धितार्थे–' इति द्विगुः। 'सम्भवत्यवहरति पचति–' इति ठक्, तस्य 'अध्यर्ध–' इति लुक्। 'द्विगोः' इति ङीपि प्रतिषिद्धे सति टापि द्विबिस्ता मूषा। द्विबिस्तपरिमाणकहिरण्यं द्रावयतीत्यर्थः। पचिरिह द्रावणे द्रष्टव्यः। **द्व्याचितेति**। 'आचितो दश भाराः' इति इत्यमरः। 'तुला स्त्रियां पलशतं भारः स्याद्विंशतिः पुमान्' इति च। द्वावाचितौ वहतीत्यर्थे 'आढकाचितपात्रात् खोऽन्यतरस्याम्' 'द्विगोष्ठंश्च' इति खठनोरभावे प्राग्वतीयष्ठञ्। 'अध्यर्ध–' इति तस्य लुक्। अनेन द्विगोः' इति ङीपि निषिद्धे टापि द्व्याचिता शकटी। **द्विकम्बल्येति**। कम्बलस्य प्रकृतिभूतं द्रव्यं कम्बल्यम् ऊर्णापलशतम्। 'तदर्थं विकृतेः प्रकृतौ' इत्यर्थे 'कम्बलाच्च संज्ञायाम्' इति यत्। द्वाभ्यां कम्बल्याभ्यां क्रीतेति विग्रहः, 'तेन क्रीतम्' इति ठञः 'अध्यर्ध–' इति लुक्, 'द्विगोः' इति ङीपि अनेन प्रतिषिद्धे टाप्। नन्वत्र 'न तद्धितलुकि' इत्येवास्तु, तावतैव पञ्चभिरश्वैः क्रीता पञ्चाश्वेति सिद्धेः 'अपरिमाण–' इति मास्तु। एवं च द्विबिस्ता द्व्याचिता द्विकम्बल्येत्यपि सिद्धेर्बिस्तादिग्रहणमपि मास्त्वित्यत आह—**परिमाणान्तात्त्विति**।

---

पतिसंयुक्तिः पञ्चाजा पञ्चोष्ट्रीत्यादौ सावकाशत्वात्। तत्र हि 'गोद्व्यचोऽसंख्या–' इति यत्प्रत्ययस्य 'अध्यर्धपूर्व–' इत्यादिना लुगिति चेत्। अत्राहुः—ठको योऽकार इति व्याख्यानाद् ठगन्तलक्षणो ङीन्नेति। **द्विबिस्तेति**। 'सुवर्णबिस्तौ हेम्नोऽक्षे' इत्यमरः। 'आचितो दश भाराः स्युः'। **द्विकम्बल्येति**। द्वाभ्यां कम्बलाभ्यां क्रीता। कम्बल्यमूर्णापलशतम्, 'कम्बलाच्च संज्ञायाम्' इति यत्। ततः क्रीतार्थस्य ठञो लुक्। **द्व्याढकीति**। द्वावाढकौ पचतीति विग्रहे 'आढकाचितपात्रात्खोऽन्यतरस्याम्', 'द्विगोष्ठंश्च' इति खठनौ विहितौ ताभ्यां मुक्ते प्राग्वतीयष्ठञ्। तस्य 'अध्यर्ध–' इति लुक्। एतेन द्व्याचिता व्याख्याता। स्यादेतत्—'काण्डान्तात्–' इत्युत्तरसूत्रे 'परितः सर्वतो येन मीयते तत्

---

१ 'अनेन प्रतिषिद्धे' क।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

**काण्डान्तात् क्षेत्रे।** ( ४-१-२३ ) **क्षेत्रे यः काण्डान्तो द्विगुस्ततो न ङीप् तद्धितलुकि। द्वे काण्डे प्रमाणमस्या द्विकाण्डा क्षेत्रभक्तिः। 'प्रमाणे द्वयसच्–'**

---

'गुञ्जाः पञ्च तु माषः स्यात्ते सुवर्णस्तु षोडश।
पलं सुवर्णाश्चत्वारः पञ्च वापि प्रकीर्तितम्॥
पलद्वयं तु प्रसृतं द्विगुणं कुडवं मतम्।
चतुर्भिः कुडवैः प्रस्थः प्रस्थाश्चत्वार आढकः॥' इति स्मृतिः।

द्वावाढकौ पचतीति विग्रहे 'आढकाचितपात्रात् खोऽन्यतरस्याम्' 'द्विगोष्ठंश्च' इति खठनोरभावे प्राग्वतीयष्ठन्। 'अध्यर्ध–' इति लुक्, 'द्विगोः' इति ङीप्, द्व्याढकीति रूपम्। 'न तद्धितलुकि' इत्येतावत्येवोक्ते अत्रापि ङीपो निषेधः स्यात्। अतः अपरिमाणान्न तद्धितलुकीति वक्तव्यम्। तावत्युक्ते द्विबिस्तेत्यादौ परिमाणत्वाद् ङीन्निषेधो न स्यात्, अतो बिस्तादिग्रहणमपीति भावः।

**काण्डान्तात् क्षेत्रे।** 'द्विगोः' इति, न तद्धितलुकीति चानुवर्तते। तदाह—**क्षेत्रे य इत्यादि। द्वे काण्डे इति।** षोडशारत्न्यायामो दण्डः काण्डमिति स्मृतिः। द्वे काण्डे प्रमाणमस्या इति विग्रहे 'तद्धितार्थ–' इति द्विगुसमासे द्विकाण्डशब्दस्य क्षेत्रवर्तित्वे नपुंसकत्वशङ्काव्युदासाय क्षेत्रभक्तिरिति विशेष्योपादानम्। तद्धितलुकं दर्शयितुमाह—**प्रमाणे द्वयसजिति।** न च काण्डादित्यस्य प्रातिपदिकविशेषणतया तदन्तलाभादन्तग्रहणं व्यर्थमिति शङ्क्यम्, असति ह्यन्तग्रहणे क्षेत्र इत्येतत् काण्डस्यैव विशेषणं स्यात्, श्रुतत्वात्, क्षेत्रे यः काण्डशब्दः तदन्तादिति लभ्येत, एवं च द्विकाण्डा क्षेत्रभक्तिरित्यत्र द्विकाण्डशब्दस्यैव क्षेत्रवर्तित्वात् काण्डशब्दस्य प्रमाणवाचित्वाद् ङीन्निषेधो न स्यात्। द्वाभ्यां काण्डाभ्याम्–काण्डप्रमितक्षेत्राभ्यां क्रीता द्वि-

---

परिमाणमाढककुडवादि न तु परिच्छेदकमात्रम्' इति मनोरमायां स्थितम्। तथा चापरिमाणत्वादेव सिद्धे बिस्तादिग्रहणमिह व्यर्थं स्यात्। अत्राहुः—उन्मानस्य निषेधे बिस्तादीनामेवेति नियमार्थं तद्ग्रहणम्, तेन द्विकार्षापणी द्व्यक्षीत्यादि सिध्यतीति। **काण्डान्तात्।** षोडशहस्तप्रमाणो दण्डः काण्डम्। यद्यपि विशेषणेन तदन्तविधिः सिद्धः, तथाप्यसत्यन्तग्रहणे 'क्षेत्रे' इत्येतत् श्रुतत्वात् काण्डस्यैव विशेषणं स्यान्न तु काण्डान्तस्य। ततश्च द्वाभ्यां काण्डाभ्यां काण्डप्रमिताभ्यां क्षेत्राभ्यां क्रीता द्विकाण्डी वडवेत्यत्र निषेधः स्यात्। इह तु निषेधो न स्यात्। **द्विकाण्डा क्षेत्रभक्तिरिति।** अत्र हि काण्डं प्रमाणे वर्तते, काण्डान्तस्तु क्षेत्रे। अतोऽन्तग्रहणं कृतम्। इह 'द्विगोः', इत्यनुवर्तते 'न तद्धितलुकि' इति च तदाह—**द्विगुस्ततो न ङीबित्यादि।**

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

(सू १८३८) इति विहितस्य मात्रचः 'प्रमाणे लः, द्विगोर्नित्यम्' (वा ३१२९-३०) इति लुक। क्षेत्रे किम्—द्विकाण्डी रज्जुः। **४८२ पुरुषात्प्रमाणेऽन्यतरस्याम्** (४-१-२४) प्रमाणे यः पुरुषस्तदन्ताद् द्विगोर्ङीब्वा स्यात्तद्धितलुकि। द्वौ पुरुषौ

---

काण्डी वडवेत्यत्रैव ङीन्निषेधः स्यात्, अतः अन्तग्रहणम्। **द्विकाण्डी रज्जुरिति।** पूर्ववद् मात्रचो लुकि 'द्विगोः' इति ङीप्। क्षेत्रवृत्तित्वाभावाद् न तन्निषेध इति भावः। ननु 'अपरिमाण—' इति पूर्वसूत्रे परिमाणशब्देन किं परिच्छेदकमात्रं विवक्षितम्, उत 'ऊर्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः। आयामस्तु प्रमाणं स्यात्' इति वार्तिकानुसारेण परितः सर्वत आरोहतः परिणाहतश्च येन मीयते, तत् परिमाणमित्याढककुडवाद्येव आयामव्यावृत्तं विवक्षितम्? नाद्यः, तथा सति द्वौ हस्तौ प्रमाणमस्या इति विग्रहे द्विहस्ता भित्तिरित्यत्र पूर्ववन्मात्रचो लुकि ङीन्निषेधो न स्यात्। न द्वितीयः, तथा सति काण्डशब्दस्यायामप्रमाणपरतया उक्तपरिमाणपरत्वाभावेन 'अपरिमाण—' इत्यनेनैव द्विकाण्डा क्षेत्रभक्तिः इत्यत्रापि ङीन्निषेधसंभवेन 'काण्डान्तात् क्षेत्रे' इति सूत्रारम्भवैयर्थ्यादित्युभयतःपाशा रज्जुरिति चेत्, सत्यम्—'अपरिमाण—' इति पूर्वसूत्रे पारिभाषिकमेव परिमाणं विवक्षितम्, न त्वायामोऽपि ततश्च द्विहस्ता भित्तिरित्यत्र 'अपरिमाण—' इति ङीब्निषेधो निर्बाधः। 'काण्डान्तान्—' इति सूत्रं तु काण्डान्तात् क्षेत्र एव ङीब्निषेधः, नान्यत्र द्विकाण्डी रज्जुरित्यादाविति नियमार्थमित्यन्यत्र विस्तरः।

**पुरुषात्।** 'द्विगोः' इति तद्धितलुकीति ङीबिति चानुवर्तते। तदाह—**प्रमाणे य इत्यादिना।** प्रमाणमायामः, 'आयामस्तु प्रमाणं स्यात्' इति वचनात्। **द्वौ पुरुषाविति।** पञ्चहस्तायामः पुरुष इत्युच्यते, 'पञ्चारत्निः पुरुषः' इति शुल्बसूत्रात्। द्वौ पुरुषौ प्रमाणमस्या इति विग्रहे 'तद्धितार्थ—' इति द्विगुसमासः। 'प्रमाणे द्वयसज्दघ्नञ्मात्रचः' इति विहितस्य मात्रचः 'प्रमाणे लः द्विगोर्नित्यम्' इति लुक्। अत्र उक्तरीत्या पुरुषप्रमाणस्य आयामात्मकस्य 'अपरिमाण—' इति नित्यं ङीन्निषेधे प्राप्ते

---

**मात्रच इति।** द्वयसचो लुगिति प्राचोक्तं नादर्तव्यम्। 'प्रथमश्च द्वितीयश्च ऊर्ध्वमाने मतौ मम' इति सिद्धान्तादिति भावः। **द्विकाण्डी रज्जुरिति।** द्वे काण्डे प्रमाणमस्याः। पूर्ववत्तद्धितलुक् 'द्विगोः' इति ङीप्। नन्विहापरिमाणान्तादिति पूर्वेण निषेधः स्यात्, काण्डशब्दस्यायामपरतया अपरिमाणार्थत्वात्, परितः सर्वत आरोहतः परिणाहतश्च येन मीयते तद्धि परिमाणम् आढककुडवादि न तु यथाकथंचित्परिच्छेदकमात्रम्। यदाहुः—'ऊर्ध्वमानं किलोन्मानं परिमाणं तु सर्वतः। आयामस्तु प्रमाणं स्यात्संख्या बाह्या तु सर्वतः' इति। अत एव द्विहस्ता भित्तिरित्यत्र ङीब् न भवतीति चेत्। अत्राहुः—नियमार्थमिदं क्षेत्र एव निषेधो यथा स्यादिति। तथा च द्विकाण्डी रज्जुरित्यत्र ङीबेव सूत्रारम्भस्य फलमिति। **पुरुषात्प्रमाणे।** अपरि-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रमाणमस्याः सा द्विपुरुषी, द्विपुरुषा वा परिखा। ४८३ ऊधसोऽनङ्। (५-४-१३१) ऊधोऽन्तस्य बहुव्रीहेरनङादेशः स्यात् स्त्रियाम्। इत्यनङि कृते डाब्ङी-

---

विकल्पार्थमिदं वचनम्। अन्ये तु 'तदस्य परिमाणम्' इति ठकः ठञो वा 'अध्यर्ध-' इति लुक्। तत्र हि उत्तरसूत्रानुरोधात् परिमाणशब्देन परिच्छेदकमात्रं गृह्यते इत्याहुरित्यास्तां तावत्। **द्विपुरुषी द्विपुरुषा वा परिखेति**। तिर्यग् द्विपुरुषायतेत्यर्थः। दुर्गं परितः तत्संरक्षणार्थो जलाशयः परिखा।

अथ कुण्डमिव ऊधो यस्या इति बहुव्रीहौ कुण्डोधस्शब्दः—तत्र विशेषमाह—**ऊधसोऽनङ्**। 'बहुव्रीहौ सक्थ्यक्ष्णोः' इत्यतो बहुव्रीहावित्यनुवृत्तं षष्ठ्या विपरिणम्यते, ऊधसः इत्यनेन विशेष्यते, तदन्तविधिः। तदाह—**ऊधोऽन्तस्येति**। समासान्तप्रकरणस्थत्वेऽपि ङित्त्वादस्यादेशत्वं बोध्यम्। **इत्यनङि कृते इति**। अनङि ङकार इत्, अकार उच्चारणार्थः, 'ङिच्च' इत्यन्त्यस्य सकारस्य अन्, पररूपम्, कुण्डोधन् इति स्थिते सतीत्यर्थः। **डाब्ङीब्निषेधेष्विति**। 'डाबुभाभ्याम्—' इति

---

माणान्तत्वान्निषेधे प्राप्ते विकल्पार्थं वचनम्। पुरुषशब्दो यद्यपि लोके जातिवचनस्तथापि द्वौ पुरुषौ प्रमाणमस्या इति वाक्ये प्रमाणशब्दसामानाधिकरण्यात् प्रमाणे वर्तत एव। वृत्तौ तु शब्दशक्तिस्वाभाव्यादेव। तथा च शुल्वसूत्रम्—'पञ्चारत्निः पुरुषः' इति। **द्विपुरुषीति**। अत्र 'प्रमाणे लो द्विगोर्नित्यम्' इति द्वयसचो लुगिति न्यासकारः। नन्विह तद्धितलुग्दुर्लभः। पुरुषशब्दस्य प्रमाणवाचित्वाभावेन 'प्रमाणे लः—' इति श्लोकवार्तिकस्याप्रवृत्तेः। ये हि रामादिवत् प्रमाणत्वेन प्रसिद्धास्तत्रैव तत् प्रवर्तते, न तु पुरुषशब्देऽपि। अन्यथा पुरुषद्वयसमित्यत्रापि लुक् स्यात्। न चैवं द्वयसज्दघ्नचावपि नास्मात्स्यातामिति वाच्यम्, 'ऊर्ध्वमाने मतौ मम' इति वचनात्। एवं 'पुरुषात्प्रमाणे—' इति वैकल्पिकस्यापि ङीपः सामर्थ्यादेव प्रवृत्तिः। किं तु तद्धितलुगेव दुर्लभ इति चेत्। अत्राहुः—अस्त्विह 'प्रमाणे लः' इत्यस्याप्रवृत्तिस्तथापि सुलभ एव लुक्। 'पुरुषात्प्रमाणे—' इति सूत्रे हि 'द्विगोस्तद्धितलुकि' इत्यनुवर्तते तत्सामर्थ्याल्लुगप्याक्षिप्यत इति सुवचत्वादिति। प्रमाणे किम्। द्वाभ्यां पुरुषाभ्यां क्रीता द्विपुरुषा गौः। तद्धितलुकीत्येव। समाहारे पञ्चपुरुषी। नन्विह पुरुषशब्दः प्रमाणे न वर्तते इति व्यङ्गविकलमेतदिति चेत्। अत्राहुः—प्रमाणार्थवृत्तीनामेव पुरुषाणामत्र समाहारान्न व्यङ्गविकलता।। ततश्च तद्धितलुकीत्यनुक्तौ पञ्चपुरुषशब्दाद्विकल्पः स्यात्, इष्यते तु 'द्विगोः' इति नित्यं ङीबिति। **ऊधसोऽनङ्**। नादेशेनैव सिद्धेऽनङ्करणं 'धनुषश्च' इत्युत्तरार्थमन्यथा शार्ङ्गधन्वेति न सिध्येदित्याहुः। वस्तुतस्तु इहार्थमप्यावश्यकमेव, अन्यथा अनो लाक्षणिकत्वेनाल्लोपाप्रसङ्गादित्यन्ये। इह 'बहुव्रीहौ सक्थ्यक्ष्णोः—'

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न्निषेधेषु प्राप्तेषु। ४८४ बहुव्रीहेरूधसो ङीष्। (४-१-२५) ऊधोऽन्ताद्बहुव्रीहेर्ङीष् स्यात्स्त्रियाम्। कुण्डोध्नी। स्त्रियाम् किम्—कुण्डोधो धैनुकम्। इहानङपि न। तद्विधौ 'स्त्रियाम्' (वा ३३६७) इत्युपसंख्यानात्। ४८५ सङ्ख्याव्ययादेर्ङीप्। (४-१-२६) ङीषोऽपवादः। द्व्यूध्नी। अत्यूध्नी। बहुव्री-

---

वैकल्पिके डापि, 'अन् उपधालोपिनः' इति वैकल्पिके ङीपि, तदुभयाभावे 'ऋन्नेभ्यः—' इति प्राप्तस्य ङीपः 'अनो बहुव्रीहेः' इति निषेधे च प्राप्ते इत्यर्थः। बहुव्रीहेः। ऊधस इति बहुव्रीहेर्विशेषणम्, तदन्तविधिः, स्त्रियामित्यधिकृतम्। तदाह—ऊधोऽन्तादिति। कुण्डोध्नीति। अनङि कृते ङीषि 'अल्लोपोऽनः' इति भावः। 'ऊधस्तु क्लीबमापीनम्' इत्यमरः। ङीष्विधेस्तु स्वरे विशेषः फलम्। स्त्रियां किमिति। ङीष्विधौ स्त्रियामित्यनुवृत्तिः किमर्थेति प्रश्नः। कुण्डोधो धैनुकमिति। कुण्डमिव ऊधो यस्येति विग्रहः। नपुंसकत्वस्फोरणाय धैनुकमिति विशेष्यम्, धेनूनां समूह इत्यर्थः। 'अचित्तहस्तिधेनोष्ठक्' 'इसुसुक्तान्तात्कः' आदिवृद्धिः' क्लीबत्वं लोकात्। अत्र स्त्रीत्वाभावान्न ङीषित्यर्थः। ननु मास्तु ङीष्, अनङ् तु कुतो न स्यात्, समासान्तप्रकरणस्थे ऊधसोऽनङ्विधौ 'स्त्रियाम्' इत्यभावादित्यत आह—तद्विधाविति। ऊधसोऽनङ्विधौ 'स्त्रियाम्' इत्युपसंख्यानादित्यर्थः। बहुव्रीहेः किम्—ऊधः प्राप्तेति विग्रहे 'प्राप्तापन्ने च द्वितीयया' इति समासे प्राप्तोधाः।

संख्याव्ययादेर्ङीप्। संख्याव्ययादेरूधोऽन्तात् स्त्रियां ङीप् स्यादित्यर्थः। ङीषोऽपवाद इति। 'बहुव्रीहेरूधसो ङीष्' इत्यस्यापवाद इत्यर्थः। स्वरे विशेषः। संख्यादेरुदाहरति—द्व्यूध्नीति। द्वे ऊधसी यस्या इति विग्रहः। अनङि ङीपि अल्लोप इति भावः। अव्ययादेरुदाहरति—अत्यूध्नीति। अतिशयितमूधो यस्या

---

इत्यतो बहुव्रीहावित्यनुवर्तते इत्याह—ऊधोन्तस्य बहुव्रीहेरिति। समासान्तप्रकरणस्थत्वेऽप्यनङो न प्रत्ययत्वम्। अन्यथा ङित्ववैयर्थ्यापत्तेरिति प्राञ्चः। वस्तुतस्तु ष्यङ इव प्रत्ययत्वेऽप्यादेशत्वमविरुद्धं कुण्डोध्नीत्यत्र ङीषि कृते स्वरेऽपि विशेषाभावादिति बोध्यम्। स्त्रियामिति। उपसंख्यानाल्लब्धमेतत्। डाप्ङीन्निषेधेष्विति। 'डाबुभाभ्याम्—' इति वैकल्पिको डाप्। 'अन उपधालोपिनोऽन्यतरस्याम्' इति विकल्पेन ङीप्। 'अनो बहुव्रीहेः' इत्यनेन 'ऋन्नेभ्यः—' इति प्राप्तस्य ङीपो निषेध इति विवेकः। ङीष् स्यादिति। प्रकृतो ङीबेव तु न विहितः स्वरे विशेषात्। कुण्डोध्नीति। कुण्डमिव ऊधो यस्याः सा। बहुव्रीहेः किम्, प्राप्ता ऊधः प्राप्तोधाः। 'प्राप्तापन्ने च—' इति समासः। धैनुकमिति। 'अचित्तहस्ति—' इति समूहार्थे ठक्। 'इसुसुक्तान्तात्कः'। स्त्रियामित्युपसंख्यानादिति। नन्विहैव लाघवार्थं 'बहुव्रीहे-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

हेरित्येव। ऊधोऽतिक्रान्ता अत्यूधाः। **४८६ दामहायनान्ताच्च**। (४-१-२७) संख्यादेर्बहुव्रीहेर्दामान्ताद्धायनान्ताच्च ङीप्स्यात्। दामान्ते डाप्प्रतिषेधयोः प्राप्तयोर्हायनान्ते टापि प्राप्ते वचनम्। द्विदाम्नी। अव्ययग्रहणाननुवृत्तेरुद्दामा वडवेत्यत्र डाब्निषेधावपि पक्षे स्तः। द्विहायनी बाला। 'त्रिचतुर्भ्यां हायनस्य णत्वं वाच्यम्' (वा १०३८)। 'वयोवाचकस्यैव हायनस्य ङीब्णत्वं चेष्यते' (वा २४४१) त्रिहायणी। चतुर्हायणी। वयसोऽन्यत्र द्विहायना, त्रिहायना, चतुर्हायना शाला। **४८७ नित्यं संज्ञाछन्दसोः**। (४-१-२९) अन्नन्ताद्बहुव्रीहेरुपधालोपिनो ङीप्स्यात्संज्ञाछन्दसोः। सुराज्ञी नाम नगरी। अन्यत्र पूर्वेण विकल्प एव।

---

इति विग्रहः। **बहुव्रीहेरित्येवेति**। बहुव्रीहेरित्यनुवर्तते एवेत्यर्थः। **ऊधोऽतिक्रान्तेति**। 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति समासस्य अबहुव्रीहित्वान्न ङीप्। अत एव नानङ्, नापि ङीष्। **दामहायनान्ताच्च**। संख्यादेः ङीप् इति चानुवर्तते, तदाह—**संख्यादेरिति**। अव्ययग्रहणं तु नानुवर्तते, अस्वरितत्वादिति भावः। बहुव्रीहिविशेषणत्वादेव सिद्धे अन्तग्रहणं स्पष्टार्थम्। **दामान्ते इति**। द्विदामन्शब्दे दामान्ते 'डाबुभाभ्याम्–' इति डापि 'अन उपधालोपिनः' इति ङीपि, 'अनो बहुव्रीहेः' इति ङीप्प्रतिषेधे च प्राप्ते, द्विहायनीत्यत्रापि हायनान्ते अदन्तत्वाट्टापि प्राप्ते 'दामहायनान्ताच्च' इति वचनमित्यर्थः। **द्विदाम्नीति**। द्वे दामनी यस्या इति विग्रहः। ङीपि 'अल्लोपोऽनः' इति भावः। ननु अव्ययग्रहणानुवृत्तौ किं बाधकमित्यत आह—**अव्ययग्रहणेति**। **उद्दामेति**। उत्क्रान्तं दाम यस्या इति विग्रहः। **डाब्निषेधावपीति**। अपिना 'अन उपधा–' इति ङीब् गृह्यते, अन्ग्रहणे अनर्थकस्यापि ग्रहणात्। अथ हायनान्तस्य उदाहरति—**द्विहायनी बालेति**। द्वौ हायनौ यस्या इति विग्रहः। अथ त्रिहायणीत्यत्र भिन्नपदत्वाद् णत्वप्राप्तावाह—**त्रिचतुर्भ्यामिति**। नन्वेवमपि द्विहायना शाला इत्यत्रापि ङीप् स्यात्, त्रिहायना शालेत्यत्र तु ङीब् णत्वं च स्यातामित्यत आह—**वयोवाचकस्येति**। **इष्यते इति**। भाष्यकृतेति शेषः।

---

रूधसो ङीष्' 'नश्च' इति सूत्र्यताम् 'अनङ् च' इति वा। समासान्तेषु 'ऊधसो नङ्' इति च त्यक्त्वा 'धनुषो नङ्' इत्येव पठ्यताम्। मैवम्। कब्भावे सावकाशस्यास्य पक्षे कपा बाधापत्तेः। सिद्धान्ते तु अनङः समासान्ततया शेषत्वमेवेह नास्तीति न कप्। **संख्याऽव्यया**। आदिग्रहणात्पदान्तरव्यवधानेऽपि स्यादेव। द्विविधोध्नी। **दाम**। बहुव्रीहिविशेषणत्वादेव सिद्धे अन्तग्रहणं स्पष्टप्रतिपत्त्यर्थम्। **संख्यादेरिति**। समासनिर्देशेऽपि स्वरितत्वबलादेकदेश एवानुवर्तते इति भावः। **अननुवृत्तेरिति**। भाष्यकृताऽननुवर्तितत्वादिति भावः। एवं चोद्दामेत्यत्र 'दामहायनान्ताच्च' इत्यस्या-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वेदे तु शतमूर्ध्नी। ४८८ केवलमामकभागधेयपापापरसमानार्यकृतसुमङ्गलभेषजाच्च। (४-१-३०) एभ्यो नवभ्यो नित्यं ङीप्स्यात्संज्ञाछन्दसोः। 'अथो त इन्द्रः केवलीर्विशः' 'मामकी तनू'। भागधेयी। पापी। अपरी। समानी। आर्यकृती। सुमङ्गली। भेषजी। अन्यत्र केवला इत्यादि। मामकग्रहणं निय-

---

केवलमामक। 'नित्यं संज्ञाच्छन्दसोः' इति पूर्वसूत्रमनुवर्तते। एवं च 'अन उपधालोपिनोऽन्यतरस्याम्' इति अन्यतरस्यांग्रहणं निवृत्तम्, 'संख्याव्ययादेर्ङीप्' इत्यतो ङीबित्यनुवर्तते। तदाह—एभ्य इति। केवल, मामक, भागधेय, पाप, अपर, समान, आर्यकृत, सुमङ्गल, भेषज इत्येतेभ्यो नवभ्य इत्यर्थः। छन्दस्युदाहरति—अथोत इन्द्रः केवलीरिति। मामकी तनू इति। मदीयायामित्यर्थः। 'युष्मदस्मदोरन्यतरस्यां खञ् च' इत्यणि 'तवकममकावेकवचने' इति प्रकृतेर्ममकादेशः, ङीप्, 'सुपां सुलुक्—' इति सप्तम्या लुक्। 'मित्रावरुणयोर्भागधेयी स्थ', 'भागरूपनामभ्यो धेयः' इति स्वार्थिको धेयप्रत्ययः। भागशब्दस्य पुंल्लिङ्गत्वेऽपि 'स्वार्थिकाः प्रकृतेः क्वचिल्लिङ्गवचनान्यतिवर्तन्ते' इति स्त्रीत्वम्, ङीप्। 'तन्वः सन्तु पापीः।' पापमस्यास्तीत्यर्थे अर्शआद्यजन्तात् स्त्रीत्वे ङीप्। 'उत वापरीभ्यो मघवा विजिग्ये'। अपरशब्दः पवर्गमध्यः। 'समानीव आकूतिः।' आर्यकृतीति क्वचिद् वेदे अन्वेषणीयम्। एवं सुमङ्गलीरियं वधूः' इत्यत्र 'छन्दसीवनिपौ च' इति मत्वर्थे ईप्रत्ययः। 'शिवा रुद्रस्य भेषजी।' भेषजशब्दः रोगनिवर्तके औषधे प्रसिद्धः। अत एव सूत्रात् स्त्रीत्वमपि। यद्वा भिषजः इयमित्यर्थे अणि इकारस्य एकारः, अत एव निपातनात्। संज्ञायामप्येवमेव सर्वत्र ङीबुदाहार्यः। संज्ञाच्छन्दोभ्यामन्यत्र तु केवला मामिका इत्यादि। नन्वणन्तत्वादेव 'टिड्ढाणञ्—' इति ङीपि सिद्धे मामकग्रहणं व्यर्थमित्यत आह—मामकग्रहणमिति।

---

प्रवृत्त्या पूर्वोक्तेषु डाप्ङीब्निषेधेषु प्राप्तेषु बहुराजीवद्रूपत्रयं भवत्यतो व्याचष्टे—डान्निषेधावपीति। नित्यं संज्ञाछन्दसोः। 'अन उपधालोपिनः—' इति विकल्पस्यापवादः। आरम्भसामर्थ्यात्सिद्धेऽपि नित्यत्वे नित्यग्रहणमुत्तरत्र विकल्पानुवृत्तिसूचनाय कृतमित्याहुः। शतमूर्ध्नीति। इह पञ्चदाम्नीति क्वचित् पाठः, स चायुक्तः 'दामहायनान्ताच्च' इत्यनेनैव सिद्धत्वात्। केवल। छन्दसि 'मामकी तनू'। 'मित्रावरुणयोर्भागधेयी'। तन्वः सन्तु पापीः'। 'उतापरीभ्यः'। 'समानी व आकूतिः'। आर्यकृती। सुमङ्गली। 'सुमङ्गलीरियं वधूः' इत्यत्र तु 'छन्दसीवनिपौ—' इति मत्वर्थे ईप्रत्ययो बोध्यः। 'शिवा रुद्रस्य भेषजी'। अन्यत्र केवलेत्यादीति। मामकनरकयोरुपसंख्यानादित्वम्। मामिका। भागशब्दात्पुंल्लिङ्गात्स्वार्थे धेयप्रत्ययः 'स्वार्थिकाः क्वचित् प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते' इति स्त्रीत्वम्। भागधेयी। अभेदोपचारा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मार्थम्, अरणन्तत्वादेव सिद्धेः। तेन लोकेऽसंज्ञायां मामिका । ४८९ अन्तर्वत्पतिवतोर्नुक्। ( ४-१-३२ ) एतयोः स्त्रियां नुक्स्यात्। 'ऋन्नेभ्यो ङीप्' (सू ३०६)। गर्भिण्यां जीवद्भर्तृकायां च प्रकृतिभागौ निपात्येते। तत्रान्तरस्त्यस्यां गर्भं इति विग्रहे अन्तश्शब्दस्याधिकरणशक्तिप्रधानतयास्तिसामानाधिकरण्याभावादप्राप्तो मतुन्निपात्यते। 'पतिवत्नी' इत्यत्र तु वत्वं निपात्यते । अन्तर्वत्नी। पतिवत्नी। प्रत्युदाहरणं तु अन्तरस्त्यस्यां शालायां घटः। पतिमती पृथिवी। ४९० पत्युर्नो यज्ञसंयोगे। (४-१-३३) पतिशब्दस्य नकारादेशः स्याद्यज्ञेन सम्बन्धे।

---

लोके असंज्ञायां च ङीन्निवृत्त्यर्थमिति भावः। एवं भेषजशब्दस्य अरणन्तत्वेऽपि ज्ञेयम्। एतदर्थमेव वैदिकप्रक्रियायाम् इदं नोपन्यस्तम्।

**अन्तर्वत्पतिवतोर्नुक्। एतयोः स्त्रियां नुगिति** । कित्त्वसामर्थ्याद् अयमागमः, न तु प्रत्यय इति भावः कित्त्वादन्तावयवः, अन्तर्वत् न, पतिवत् न इति स्थिते आह—**ऋन्नेभ्यो ङीबिति। गर्भिण्यामिति** । गर्भिण्यां जीवद्भर्तृकायां च स्त्रियाम् अन्तर्वत् पतिवत् इति प्रकृतिभागौ नुक्सन्नियोगेन निपात्येते इत्यर्थः। वार्तिकमेतत्। कतरस्मिन् किं निपात्यत इत्यत आह—**तत्रेति** । तयोर्मध्य इत्यर्थः। अन्तरस्त्यस्यां गर्भ इति विग्रहे अप्राप्तो मतुब् निपात्यत इत्यन्वयः। कथमप्राप्तिर्मतुप इत्यत आह—**अन्तश्शब्दस्येत्यादि अभावादित्यन्तम्**। 'तदस्यास्त्यस्मिन्निति मतुप्' इति सूत्रेण अस्तिसमानाधिकरणात् कर्तृकारकप्रधानप्रथमान्ताद् मतुप्प्रत्ययो विहितः, यथा गौरस्यास्तीति गोमानित्यादौ । प्रकृते तु प्रथमान्तः कर्तृकारकप्रधानो गर्भशब्द एवास्तिसमानाधिकरणः, न तु अन्तश्शब्दः, तस्याधिकरणकारकप्रधानतया अस्तिसामानाधिकरण्यासम्भवात्। अतोऽत्र अप्राप्तौ मतुब्निपात्यत इत्यर्थः । ततश्च 'मादुपधायाश्च मतोर्वः—' इति मकारस्य वत्वे अन्तर्वत् इति प्रकृतिभावः संपद्यत इति भावः। **वत्वमिति** । पतिरस्या अस्तीति विग्रहे 'तदस्यास्त्यस्मिन्—' इति मतुपो मकारस्य मादुपधात् परत्वाभावेन 'मादुपधायाः—' इति वत्वमप्राप्तं निपात्यत इत्यर्थः। **प्रत्युदाहरणं त्विति**। गर्भिण्यामेव मतुब्निपातनादन्तरस्त्यस्यां शालायां घट इति विग्रहवाक्यमेव, न तु मतुबित्यर्थः । **पतिमती पृथिवीति** । जीवद्भर्तृकायामेव वत्वनिपातनादिह वत्वाभाव इति भावः । **पत्युर्नो**। पत्युरिति षष्ठी, न इत्यकार उच्चारणार्थः, स्त्रियामित्यधिकृतम्। तदाह—**पतिशब्दस्येति। यज्ञेनेति** । यज्ञ-

---

त्त्वद्वति वर्तमानः पापशब्दो विशेष्यनिघ्नः। पापा। अपरा। समाना। आर्येण कृतेति प्राक् सुबुत्पत्तेः कृदन्तेन समासः, टाप्, आर्यकृता। भिषज इयमित्यणि आदिवृद्धेरपवादोऽस्मादेव निपातनादेकारः। संज्ञाछन्दसोरिति नियमादन्यत्र भेषजा। प्रत्युदा-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वसिष्ठस्य पत्नी। तत्कर्तृकस्य यज्ञस्य फलभोक्त्रीत्यर्थः। दम्पत्योः सहाधिकारात्।
**४९१ विभाषा सपूर्वस्य।** (४-१-३४) पतिशब्दान्तस्य सपूर्वस्य प्रातिपदिकस्य नो वा स्यात्। गृहस्य पतिः गृहपतिः, गृहपत्नी। 'अनुपसर्जनस्य' इतीहोत्तरार्थमनुवृत्तमपि न पत्युर्विशेषणम्, किन्तु तदन्तस्य। तेन बहुव्रीहावपि। दृढपत्नी,

---

संबन्धः—यज्ञेन सह स्वामितया संबन्धः, यज्ञफलभोक्तृत्वमिति यावत्। तदाह—**तत्कर्तृकस्येति**। वसिष्ठकर्तृकस्येत्यर्थः। ननु वसिष्ठकर्तृकयज्ञस्य वसिष्ठ एव फलभोक्तेत्युचितम् न तु तत्स्त्र्यपि, 'स्वर्गकामः' इत्यादिपुँल्लिङ्गशब्दैः पुंस एवाधिकारावगमात्—इत्यत आह—**दम्पत्योः सहाधिकारादिति**। एतच्च प्रकृतसूत्रे भाष्ये स्पष्टम्। अत एव पूर्वमीमांसायां षष्ठस्य प्रथमपादे 'लिङ्गविशेषनिर्देशात् पुंयुक्तमैतिशायनः' इत्यधिकरणे 'स्ववतोस्तु वचनादैककर्म्यं स्यात्' इत्यधिकरणे च दम्पत्योः सहाधिकारः सिद्धान्तितः। प्रपञ्चितं चैतदस्माभिरध्वरमीमांसाकुतूहलवृत्तौ।

**विभाषा सपूर्वस्य**। पत्युर्न इत्यनुवर्तते, प्रातिपदिकादित्यनुवृत्तं षष्ठ्या विपरिणतं पत्युरित्यनेन विशेष्यते, तदन्तविधिः। सपूर्वस्येत्येतत् पतिशब्दान्तप्रातिपदिके अन्वेति, पूर्वावयवसहितस्येत्यर्थः। तदाह—**पतिशब्दान्तस्येत्यादिना**। यज्ञसंयोगाभावेऽपि अप्राप्तविभाषेयम्। **गृहपतिः, गृहपत्नीति**। नत्वपक्षे 'ऋन्नेभ्यः—' इति ङीप्। अत्र गृहपतिशब्दः पतिशब्दान्तः गृहशब्दात्मकपूर्वावयवसहितश्चेति भावः। न च 'ग्रहणवता प्रातिपदिकेन' इति निषेधः शङ्क्यः, 'शूद्रा चामहत्पूर्वा' इति लिङ्गेन तस्य स्त्रियामित्यधिकारे अप्रवृत्तेरुक्तत्वात्। ननु दृढः पतिः यस्याः इति बहुव्रीहौ दृढपतिः, दृढपत्नीति नत्वविकल्प इष्यते, स तु न संभवति, 'अनुपसर्जनाद्' इत्यधिकारात्, पतिशब्दस्यात्रोपसर्जनत्वात्। न च 'अनुपसर्जनात्' इति नात्र संबध्यते इति वाच्यम्, उत्तरत्रानुवृत्तये इहापि तदनुवृत्तेरावश्यकत्वादित्यत आह—**अनुपसर्जनस्येत्यादि**। **किन्तु तदन्तस्येति**। सपूर्वस्येति पत्यन्तस्य श्रुतत्वेन तद्विशेषणताया एव न्याय्यत्वात्। अवान्तरवाक्यार्थबोधोत्तरमेव अनुपसर्जनत्वविशेषणप्रवृत्त्या तत्काले सपूर्वस्य श्रुतत्वेन तेनैव संबन्धे जाते सति पश्चात् पतिशब्देऽपि पुनर्व्यापारे मानाभावादिति भावः। **तेनेति**। अनुपसर्जनत्वस्य पत्यन्तविशेषणत्वेनेत्यर्थः। यज्ञ-

---

**हरणं त्विति**। अन्तर्वत्नी पतिवत्नीति प्राचोक्तं प्रत्युदाहरणमयुक्तमिति भावः। आद्ये अस्तिसामानाधिकरण्याभावान्मतुपोऽसंभवात्। द्वितीये तु वत्वासंभवादिति भावः। **विभाषा सपूर्वस्य**। अप्राप्तविभाषेयम्, अयज्ञसंयोगत्वात्। पूर्वेण सहितः सपूर्वस्तस्य। यस्य समुदायस्य पूर्वावयवो विद्यते तस्येत्यर्थः। स च समुदायः पतिशब्दो न भवतीति पतिशब्देन तदन्तविधिरित्याह—**पतिशब्दान्तस्येति**। ननु पत्युरिति प्रातिपदिक-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दृढपतिः। वृषलपत्नी, वृषलपतिः। अथ 'वृषलस्य पत्नी' इति व्यस्ते कथमिति चेन्न। पत्नीव पत्नीत्युपचारात्। यद्वा, आचारक्विबन्तात्कर्तरि क्विप्। अस्मिंश्च पक्षे, पत्नियौ, पत्नियः, इतीयङ्विषये विशेषः। सपूर्वस्य किम्-गवां पतिः स्त्री।

---

संयोगग्रहणमनुवर्त्य प्राप्तविभाषा कुतो न स्यादित्यत आह—**वृषलपत्नीति**। पाति रक्षतीति पतिः, वृषलस्य पतिः स्त्री इति विग्रहः। अपशूद्राधिकरणे शूद्राणां यज्ञाधिकारनिराकरणादिह यज्ञसंयोगाभावादप्राप्तमेव नत्वं विभाष्यत इति भावः। आक्षिपति—**अथेति**। आक्षेपारम्भद्योतकोऽथशब्दः, प्रश्नद्योतको वा। 'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ।' इत्यमरः। **व्यस्ते इति**। विग्रहवाक्ये इत्यर्थः। ततश्च सपूर्वत्वाभावाद् न प्रकृतसूत्रेण नत्वविकल्पः, यज्ञसंयोगाभावाच्च न पूर्वसूत्रेण। अतो वृषलस्य पत्नीत्यनुपपन्नमित्याक्षेपः। **इति चेन्नेति**। इत्याक्षिपसि चेत्, नैतद्युक्तमित्यर्थः। **पत्नीवेति**। यज्ञसंयुक्तायां द्विजभार्यायां यः पत्नीशब्दो व्युत्पादितः, तस्यैव शूद्रस्त्रियामपि अयज्ञसंयुक्तायां पाणिग्रहणादिधर्मपुरस्कारेण गौण्या वृत्त्या प्रयोगः, यथा गङ्गायामिति स्त्रीलिङ्गस्य तीरे प्रयोगः। उक्तं च भाष्ये—'तुषजकस्य पत्नीत्युपमानात्सिद्धम्' इति। **यद्वेति**। प्रौढिवादमात्रमिदम्, स्त्रियामाचारक्विबन्तप्रकृतिकक्विबन्तशब्दाः न सन्तीति 'अनुपसर्जनात्' इत्यत्रोक्तत्वात्। **सपूर्वस्येति किमिति**। प्रातिपदिकविशेषणतया पतिशब्दस्य तदन्तलाभे सति पतिशब्दान्तस्य सपूर्वत्वाव्यभिचारात् सपूर्वस्येति किमर्थमिति प्रश्नः। **गवां पतिः स्त्रीति**। स्वामिनी रक्षित्री वेत्यर्थः। असमस्तत्वाद् गवामित्यस्य न पूर्वावयवत्वमिति भावः। यद्यपि 'यत्र सङ्घाते पूर्वो भागः पदं तत्र चेत् प्रातिपदिकसंज्ञा भवति तर्हि समासस्यैव' इति नियमेन 'गवां पतिः' इति समुदायस्य पत्यन्तत्वेऽपि प्रातिपदिकत्वाभावादेवात्र नत्वविकल्पो न भवति, तथापि गवां पतिरित्यत्र पतिशब्दस्यैव व्यपदेशिवत्त्वेन तदन्ततया नत्वविकल्पप्राप्तौ तन्निवृत्त्यर्थं सपूर्वस्येति वचनमिति भावः। वस्तुतस्तु 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' इति निषेधादिह केवलपतिशब्दस्य पतिशब्दान्तत्वाभावादेव नत्वविकल्पनिवृत्तिसिद्धेः सपूर्वस्येति स्पष्टार्थमित्याहुः।

---

विशेषणेन तदन्तलाभात्पत्यन्तस्येत्येवास्तु किमनेन सपूर्वग्रहणेन। अत्राहुः—केवलपतिशब्दस्यापि व्यपदेशिवद्भावेन पत्यन्तत्वादतिप्रसङ्गः स्यात्, तद्वारणाय सपूर्वग्रहणमिति। अत्र पूर्वशब्दः पूर्वावयवपर इति ध्वनयन् प्रत्युदाहरति—**गवां पतिः स्त्रीति**। पातीति पतिरिति क्रियाशब्दस्य त्रिलिङ्गत्वादिह स्त्रीत्वम्। तथा च तैत्तिरीयैर्नपुंसकेऽपि प्रयुज्यते—'अन्नं साम्राज्यानामधिपति तन्मावतु' इति। व्यस्ते

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

४९२ नित्यं सपत्न्यादिषु। ( ४-१-३५ ) पूर्वविकल्पापवादः । समानस्य सभावोऽपि निपात्यते। समानः पतिर्यस्याः सा सपत्नी । एकपत्नी । वीरपत्नी। ४९३ पूतक्रतोरै च। (४-१-३६) अस्य स्त्रियामै आदेशो ङीप् च। 'इयं त्रिसूत्री पुंयोग एवेष्यते' ( वा २४४१ ) पूतक्रतोः स्त्री पूतक्रतायी । 'यया तु क्रतवः पूताः स्यात्पूतक्रतुरेव सा' । ४९४ वृषाकप्यग्निकुसितकुसिदानामुदात्तः । ( ४-१-३७ ) एषामुदात्त ऐ आदेशः स्यान्ङीप् च। वृषाकपेः स्त्री वृषाकपायी।

---

**नित्यं सपत्न्यादिषु**। विषयसप्तम्येषा। सपत्न्यादिविषये तत्सिद्ध्यर्थं नित्यं नत्वमित्यर्थः। **पूर्वविकल्पेति**। 'विभाषा सपूर्वस्य' इति विकल्पस्यापवाद इत्यर्थः। आरम्भसामर्थ्यादेव नित्यत्वे सिद्धे नित्यग्रहणं स्पष्टार्थम्। ननु समानः पतिर्यस्याः सा सपत्नीति वक्ष्यति, तत्र समानशब्दस्य सभावोऽनुपपन्नः' अतः सदृशपर्यायेण सह-शब्देनैव बहुव्रीहिराश्रयणीयः। एवं च 'वोपसर्जनस्य' इति वैकल्पिकः सभाव इत्यत आह—**समानस्येति**। इह गणे समान, एक, वीर, भ्रातृ, पुत्र इति समानादयः पठिताः। अतः समानशब्देनैव बहुव्रीहिरुचितः। तस्य च निपातनादेव नित्यं सभाव इति भावः। **समानः पतिरिति**। अत्र समानशब्द एकपर्यायः, पतिशब्दस्तु विवाहनिबन्धनभर्तृशब्दपर्यायः। **वीरपत्नीति**। वीरः पतिर्यस्याः इति विग्रहः, सपत्न्यादित्वान्नत्वम्।

**पूतक्रतोरै च**। ऐ इति लुप्तप्रथमाकम्। पूतक्रतुशब्दात् स्त्रियां ङीप्स्यात्, प्रकृतेरैकारोऽन्तादेशश्चेत्यर्थः। **इयं त्रिसूत्रीति**। वार्तिकमिदम्। पूतक्रतोरित्यादि-सूत्रत्रयं पुंयोगात् स्त्रियां वृत्तावेवेत्यर्थः। **पूतक्रतायीति**। पूतः क्रतुः येन स पूत-क्रतुः, तस्य स्त्रीत्यर्थे ङीप्, तकारादुकारस्य ऐकारः, तस्य आयादेश इति भावः। पुंयोग इत्यस्य प्रयोजनमाह—**ययेति**। **वृषाकप्यग्नि**। ऐ चेत्यनुवर्तते। तदाह—**एषामिति**। **वृषाकपायीति**। ङीप्, प्रकृतेरुदात्तः, ऐकारोऽन्तादेशः, तस्य आया-

---

**कथमिति**। प्राचा तु समस्तेऽप्युपचार इत्युक्तं तद्वृथैवेति भावः। **नित्यं सपत्न्यादिषु**। आरम्भसामर्थ्यादेव नित्यत्वे सिद्धे नित्यग्रहणं स्पष्टार्थम्। **निपात्यत इति**। इह गणे समान, एक, वीर, भ्रातृ, पुत्रेति समानादय एव पठ्यन्ते, ततश्च 'समानादिषु' इति वक्तव्ये सपत्न्यादिष्वित्युक्तिः सभावनिपातनार्थेति भावः। सपत्न्यादिषु बहुव्रीहिराश्रीयत इत्याशयेनाह—**समानः पतिर्यस्याः सेति**। **पूतक्रतोरै च**। ऐकार आदेशो न तु प्रत्ययः। उत्तरसूत्रे उदात्तग्रहणात्। **न त्विति**। अन्यथा 'लघा-वन्ते–' इति मध्योदात्तो वृषाकपिशब्द उदात्तत्वं प्रयोजयति, अग्न्यादिषु त्रिषु 'स्थाने-ऽन्तरतमः' इत्येव सिद्धमिति वृत्त्यादिग्रन्था विरुध्येरन्निति भावः। **उदात्त ऐकार**

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

'हरविष्णू वृषाकपी' इत्यमरः । 'वृषाकपायी श्रीगौर्योः' इति च । अग्नायी। कुसितायी, कुसिदायी । कुसिदशब्दो ह्रस्वमध्यो न तु दीर्घमध्यः । ४६५ **मनोरौ वा। (४-१-३८)** मनुशब्दस्यौकारादेशः स्यादुदात्तैकारश्च वा, ताभ्यां

---

देशः, तस्य ऐकारस्थानिकत्वात् तदाकारोऽप्युदात्तः, 'अनुदात्तं पदमेकवर्जम्' इति अवशिष्टानामचामनुदात्तत्वम् । उदात्त इति किम्–'लघावन्ते द्वयोश्च बह्वषो गुरुः' इति वृषाकपिशब्दो मध्योदात्तः–'नाहमिन्द्राणि रारण सख्युर्वृषाकपेः' इति यथा । अन्ते एकस्मिन् लघौ सति द्वयोर्वा लघ्वोः सतोः पूर्वः बह्वच्कस्य गुरुः उदात्तः स्यादिति तदर्थः । ततश्च षकारादाकारस्य उदात्तत्वं 'अनुदात्तं पदमेकवर्जम्' इत्यवशिष्टानामचामनुदात्तत्वमिति स्थितिः । तथा च पकारादिकारस्यानुदात्तत्वात् तत्स्थाने ऐकारः अनुदात्तः स्यात् । ततश्च तदादेशभूतायादेशाकारस्याप्यनुदात्तत्वं स्यात् । अतोऽत्र उदात्तत्वविधिः । **अग्नायीति** । 'अग्निर्मूर्धा' इत्यादौ अग्निशब्दः अन्तोदात्तः, ततो ङीप्, प्रकृतेरैकारोऽन्तादेशः, स च भवन्नान्तर्यादुदात्त एव भवति । अतस्तदादेशायादेशाकारस्य उदात्तत्वसिद्धेरुदात्त इत्येतदग्निशब्दे अन्वयं न लभते, प्रयोजनाभावात्। **कुसितायी, कुसिदायीति** । कुसितकुसिदे अव्युत्पन्नप्रातिपदिके देवताविशेषस्य नामधेये, फिट्स्वरेणान्तोदात्ते । ततो ङीप्, ऐकारश्चान्तादेशः, स च भवन्नान्तर्यादुदात्त एवेति कुसितकुसिदशब्दयोरपि उदात्त इत्यस्य नान्वय इति वृत्त्यादिग्रन्थेषु स्थितम्। अत एवाह—**कुसिदशब्दो ह्रस्वमध्यो न तु दीर्घमध्य इति** । दीर्घमध्यत्वे हि 'लघावन्ते–' इति मध्योदात्ततया शिष्टस्वरेण दकारादकारस्यानुदात्ततया तत्स्थाने ऐकारस्यानुदात्ततया तत्स्थाने आयाकारस्यानुदात्तत्वापत्त्या तन्निवृत्त्यर्थं तत्राप्युदात्तग्रहणस्यावश्यकत्वादुदाहृतवृत्त्यादि ग्रन्थविरोधः स्पष्ट एवेति भावः । **मनोरौ वा** । ऐ चेति, उदात्त इति, ङीबिति चानुवर्तते । तदाह—**मनुशब्दस्येति** । **उदात्तैकारश्च वेति** । औकारः, उदात्त ऐकारश्च वा स्यादित्यर्थः । उदात्तैकार इति समासनिर्देशादुदात्त इत्यौकारेण न संबध्यत इति सूचितम्, एतच्च वृत्तिपदमञ्जर्योः स्पष्टम्। चकाराद् ङीप् ऐकारौकाराभ्यां समुच्चीयते । तदाह—**ताभ्यामिति**। ऐकारौकाराभ्यां समुच्चयेनैव विहित इत्यर्थः । ततश्च तदुभयाभावपक्षे ङीबपि नेति लभ्यते, 'सन्नियोगशिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः' इति परिभाषावशादिति भावः । इयं तु

---

इति । 'श्रृस्वृस्निहि–' इत्यादिना मनेरुप्रत्ययविधौ 'धान्ये नित्–' इत्यधिकारान्मनुशब्द आद्युदात्तः । समासनिर्देशेनैतद्दर्शयति उदात्त इत्यनुवर्तमानं संबन्धानुवृत्तेरैकारेणैव संबध्यते न त्वौकारेणापीति । ततश्चैकारौकारावुदात्तौ स्त इति प्राचोक्तं वृत्तिपद-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सन्नियोगशिष्टो ङीप्च । मनोः स्त्री मनायी, मनावी, मनुः । ४६६ वर्णादनुदात्तात्तोपधात्तो नः । ( ४-१-३६ ) वर्णवाची योऽनुदात्तान्तस्तोपधस्तदन्तादनुपसर्जनात्प्रातिपदिकाद्वा ङीप्स्यात् तकारस्य नकारादेशश्च । एनी, एता । रोहिणी, रोहिता । 'वर्णानां तणतिनितान्तानाम्' ( फि ३३ ) इति फिट्सूत्रेणाद्युदात्तः । 'त्र्येण्या शलल्या' इति गृह्यम् । त्रीण्येतान्यस्या इति बहुव्रीहिः ।

---

परिभाषा 'पूतक्रतोरै च' इति सूत्रभाष्ये स्थिता । **मनायीति** । 'यद्वै किञ्च मनुरवदत्' इत्यादौ मनुशब्दः 'ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तः, 'धान्ये नित्' इत्यतो निदित्यनुवृत्तौ 'शॄस्वृस्निह-' इत्यादिना मनेरुप्रत्ययविधेः, ततश्च शिष्टस्वरेण नकारादुकारः अनुदात्तः । तस्य स्थाने उदात्त ऐकारः, तस्यायादेशः ङीप् चेति भावः । **मनावीति** । अत्रौकारोऽनुदात्त एव । **मनुरिति** । ऐकारस्य औकारस्य चाभावे तत्सन्नियोगशिष्टो ङीबपि नेत्युक्तमेव ।

**वर्णादनु** । वेति ङीविति चानुवर्तते । अनुदात्तादिति वर्णादित्यस्य विशेषणम्, तदन्तविधिः । तोपधादित्यपि वर्णादित्यत्रान्वेति, तकार उपधा यस्येति विग्रहः । तकारादकार उच्चारणार्थः । वर्णादित्यस्य 'स्वं रूपं शब्दस्य-' इति वर्णशब्दादिति नार्थः, तोपधत्वासंभवात् । किन्तु वर्णवाचिनः शब्दादित्यर्थो विवक्षितः । वर्णादित्येतत्प्रातिपदिकादित्यस्य विशेषणम्, तदन्तविधिः । त इति षष्ठी, तकारस्येत्यर्थः । न इत्यत्र नकारादकार उच्चारणार्थः, नकार इत्यर्थः । तदाह—**वर्णवाचीत्यादिना** । **तदन्तादनुपसर्जनादिति** । अनुपसर्जनादित्यनुवृत्तं वर्णान्ते अन्वेति, न तु वर्णादित्यत्रेति भावः । **एनी, एतेति** । श्वेतेत्यर्थः । एतशब्दाद् ङीप्, तकारस्य नकारश्च । ङीबभावे टाबेव । नत्वं तु न भवति, ङीपा सन्नियोगशिष्टत्वात् । एतशब्दः श्वेतपर्याय इति कल्पसूत्रव्याख्यातारो धूर्तस्वामिभवस्वामिरुद्रदत्तप्रभृतयो याज्ञिकाः । **रोहिणी, रोहितेति** । रोहितशब्दो रक्तवर्णपर्यायः । ङीपि णत्वे रोहिणीति । तदभावे टाप् । अनुदात्तान्तत्वं गमयितुमाह—**वर्णानामिति** । तान्तेत्यत्र तकारादकार उच्चारणार्थः । त, ण, ति, नि, त् इत्यन्तानां आदिरुदात्त इत्यर्थः । एतः, शोणः, शितिः, पृश्निः, पृषत्—इति क्रमेणोदाहरणानि । प्रकृते एतशब्दे एकारस्य, रोहितशब्दे ओकारस्य चोदात्तत्वे 'अनुदात्तं पदमेकवर्जम्' इति शिष्टस्वरेण अवशिष्टानामनुदात्तत्वादन्तानुदात्तत्वमित्यर्थः । ननु 'अनुपसर्जनात्' इत्यनुवृत्तस्य श्रुतवर्णविशेषणत्वमेव युक्तम्, न तु तदन्तविधिलभ्यवर्णान्तविशेषणत्वमित्यत आह—**त्र्येण्येति** ।

---

मञ्जर्यादिविरोधादुपेक्ष्यमिति भावः । **मनायीति** । मध्योदात्तमिदम् । इतरत्पदद्वयमाद्युदात्तम् । एता । कर्बुरा । **वर्णानामिति** । एतः । शोणः । शितिः । पृश्निः । पृषदिति क्रमेणोदाहरणानि । **आद्युदात्त इति** । 'अनुदात्तं पदमेकवर्जम्'

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अनुदात्तात् किम्–श्वेता। 'घृतादीनां च' (फिं २१) इत्यन्तोदात्तोऽयम्। अत इत्येव। शितिः स्त्री।। 'पिशङ्गादुपसंख्यानम्' (वा २४९९)। पिशङ्गी, पिशङ्गा। 'असितपलितयोर्न' (वा २४९३)। असिता। पलिता। 'छन्दसि क्नमेके' (वा

---

त्रीणि एतानि श्वेतानि अवयवसंस्थानानि यस्या इति बहुव्रीहौ त्र्येतशब्दः। तत्र एतशब्दस्य वर्णवाचिन उपसर्जनत्वाद् ङीन्नत्वे न स्याताम्। अनुपसर्जनादित्यस्य वर्णान्तविशेषणत्वे तु त्र्येतशब्दस्यानुपसर्जनत्वान्न दोष इति भावः। **शलल्येति**। शल्यकाख्यमृगविशेषस्य अङ्गरुहा सूची शललीति याज्ञिकप्रसिद्धः। **गृह्यमिति**। गृह्यन्तेसंगृह्यन्ते औपासनाग्निसाध्यकर्माण्यत्रेति व्युत्पत्त्या आपस्तम्बाश्वलायनादिप्रणीतकल्पसूत्रविशेष उच्यते। त्र्येण्येति णत्वमार्षम्। यजुर्वेदे तु 'त्रि एण्या शलल्या निवर्तयेत' इति पठितम्। तत्र त्रीणि एतानि श्वेतानि यस्या इति विग्रहः। यणाभावो णत्वं च आर्षमिति वेदभाष्ये भट्टभास्करः। ननु 'वर्णानां तणति–' इति श्वेतशब्दस्याद्युदात्तत्वात् शिष्टस्वरेणानुदात्तान्तत्वमेवेत्यत आह—**घृतादीनामिति**। **अत इत्येवेति**। 'अजाद्यतष्टाप्' इत्यस्मादत इत्यनुवर्तते एवेत्यर्थः। **शितिः स्त्रीति**। 'शिती धवलमेचकौ' इत्यमरः। **पिशङ्गीति**। 'लघावन्ते–' इति पिशङ्गशब्दस्य मध्योदात्ततया शिष्टस्वरेणानुदात्तान्तत्वेऽपि तोपधत्वाभावाद् अप्राप्तो ङीबुपसंख्यायते। 'अन्यतो ङीष्' इति वक्ष्यमाणङीषोऽपवादः स्वरे विशेषः। **असितेति**। वार्तिकमेतत्। असितशब्दस्य कृष्णवाचकतया पलितशब्दस्य श्वेतवाचकतया च 'वर्णादनुदात्तात्–' इति प्राप्ते ङीन्नत्वे निषिध्येते। **छन्दसि क्नमेक इति**। इदमपि वार्तिकम्। असितपलि-

---

इति शेषनिघातेनानुदात्तान्त एतशब्द इति भावः। **त्र्येण्येति**। अत्र एतशब्दस्योपसर्जनत्वेऽपि तदन्तसमासस्यानुपसर्जनत्वमिति भावः। 'पूर्वपदात्संज्ञायाम्–' इति णत्वम्। **गृह्यमिति**। 'गृह ग्रहणे' 'ऋदुपधाचाक्लृपिचृतेः' इति क्यप्। **त्रीण्येतान्यस्या इति**। ननु 'चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे' इति चित्रपर्याय एतशब्दः। तथा च शलल्यां चित्रत्रयाभावादर्थासंगतिरित्याशङ्क्य केचिदिह व्याचक्षते—एतशब्दोऽत्र एतावयवपर इति नास्त्यत्रार्थासंगतिः। न चैवमपि गुणविषये नपुंसकप्रयोगो न संगच्छते 'गुणे शुक्लादयः पुंसि' इत्युक्तेरिति वाच्यम्। एतानि एतावयवाधिकरणानीति व्याख्यया गुणिलिङ्गपरत्वादेतशब्दस्य नपुंसकत्वमप्युपपद्यत एवेति। **पिशङ्गादिति**। 'लघावन्ते–' इति पिशङ्गशब्दस्य मध्योदात्तत्वाद् 'अन्यतो ङीष्' इति ङीषि प्राप्ते ङीबुपसंख्यायते। स्वरे विशेषः। **क्नमेक इति**। असितपलितयोस्तकारस्य 'वर्णादनुदात्तात्–' इति नकारे प्राप्ते तं बाधित्वा तकारस्थाने क्नमादेशं तत्सन्निधोगेन ङीपं चेच्छन्त्येके आचार्या इत्यर्थः। अत्र 'छन्दस्येके' इत्यन्वयाद्भाषायां क्नो

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

२४५४ ) असिक्री। पलिक्री। अवदातशब्दस्तु न वर्णवाची, किन्तु विशुद्धवाची। तेन अवदाता इत्येव। ४६७ अन्यतो ङीष्। ( ४-१-४० ) तोपधभिन्नाद्वर्णवाचिनोऽनुदात्तान्तात्प्रातिपदिकात्स्त्रियां ङीष् स्यात्। कल्माषी। सारङ्गी। 'लघावन्ते द्वयोश्च बह्वषो गुरुः' ( फि ४२ ) इति मध्योदात्तावेतौ। अनुदात्तान्तात् किम्-कृष्णा, कपिला। ४६८ षिद्गौरादिभ्यश्च। ( ४-१-४१ ) षिद्भ्यो गौरादिभ्यश्च ङीष् स्यात्। नर्तकी। गौरी। 'अनडुहः स्त्रियाम् आम् वा' ( वा

---

तयोस्तकारस्य ङीप्सन्नियोगेन क्रादेशम् अन्ये आचार्या इच्छन्तीत्यर्थः। असिक्रीति। असितशब्दाद् ङीप्, तकारस्य क्रादेशे पररूपे 'यस्येति च' इत्यकारलोपः। क्न् इति नकारान्त एवादेश इत्यन्ये। एवं पलिक्नीत्यपि। 'पलितं जरसा शौक्ल्यम्' इत्यमरः। ननु 'अवदातः सितो गौरः' इति कोशादवदातशब्दस्य वर्णवाचित्वाद् 'लघावन्ते-' इति मध्योदात्ततया अनुदात्तान्तत्वात्तोपधत्वाच्च 'वर्णादनुदात्तात्-' इति ङीन्नत्वे स्यातामित्यत आह—अवदातशब्दस्त्विचति। 'अवदातः सिते पीते शुद्धे' इति कोशात्, 'दैप् शोधने' इत्यस्मात् तप्रत्यये अवदातशब्दस्य व्युत्पत्तेश्चेति भावः। एतच्च 'पुंयोगादाख्यायाम्'इति सूत्रे भाष्ये स्पष्टम्। 'अवदातः सितो गौरः'इति कोशस्तु शुद्धत्वसाधर्म्याद् बोध्यः। अन्यतो ङीष्। पञ्चम्यास्तसिः। वर्णादिति, अनुदात्तादिति, तोपधादिति चानुवर्तते। तत्र कस्मादन्यत इत्यपेक्षायां तोपधादिति प्रतियोगित्वेनान्वेति—तोपधापेक्षया अन्यत इति, तदाह—तोपधभिन्नादिति। कल्माषीति। चित्रवर्णेत्यर्थः। 'चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे' इत्यमरः। सारङ्गीति। 'सारङ्गः शबले त्रिषु' इत्यमरः। 'फिषोऽन्त उदात्तः' इत्यन्तोदात्तत्वशङ्कां व्युदस्यति—लघाविति। एतत्सूत्रं वृषाकपीति सूत्रव्याख्यावसरे व्याख्यातम्। कृष्णा, कपिलेति। फिट्स्वरेणान्तोदात्ताविमाविति भावः। षिद्गौरादिभ्यश्च। ष् इत् येषां ते षितः, गौरः आदिः येषां ते गौरादयः, षितश्च गौरादयश्चेति द्वन्द्वः। नर्तकीति। 'नृती गात्रविक्षेपे' 'शिल्पिनि ष्वुन्' 'षः प्रत्ययस्य' इति षकार इत्, 'हलन्त्यम्' इति नकारश्च इत्, 'युवोरनाकौ' इति अकादेशः, लघूपधगुणः, रपरत्वम्। नर्तकशब्दाद् ङीष्, टापोऽपवादः, 'यस्येति च' इत्यकारलोप इति भावः। गौरीति। श्वेतेत्यर्थः।

---

भवत्येव। छन्दस्येवैके इच्छन्त्यन्ये तु भाषायामपीत्यर्थपर्यवसानात्। अन्यथा एकग्रहणं भाष्यकारो न कुर्यात्। न हि छन्दसि 'पलिक्नीरिद्युवतयः' इत्यादिप्रयोगेषु कश्चिद्विप्रतिपद्यते। एवं च 'गतो गणस्तूर्णमसिक्निकानाम्' इति प्रयोगो नानुपपन्नः। विशुद्धवाचीति। 'दैप् शोधने' इत्युक्तेः। अमरेण तु विशुद्धत्वसाधर्म्याद् 'अवदातः सितो

---

१ इदं वार्तिकं बहुत्र मूले नास्ति।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

४३७८ )। अनड्वाही, अनडुही। 'पिप्पल्यादयश्च' ( ग ४७ )। आकृतिगणो-

फिट्स्वरेण अन्तोदात्तत्वाद् 'अन्यतो ङीष्' इत्यप्राप्तेरिह विधिरिति भावः। संज्ञाशब्दो वायम्। 'उमा कात्यायनी गौरी' इत्यमरः। 'दशवर्षा भवेद् गौरी' इति स्मृतिः। **अनड्वाही, अनडुहीति**। अनडुहः स्त्रीत्यर्थः, अनो वहतीति यौगिको वा। गौरादिगणे निपातनादेव ङीषि आम् विकल्पः। एवं च 'अनडुहः स्त्रियाम् आम् वेति वक्तव्यम्' इति वार्तिकं न कर्तव्यमिति भावः। **पिप्पल्यादयश्चेति**। अत्र गौर, मत्स्य, मनुष्य, शृङ्ग, गवय, हय, मुकय, गौतम, अनड्वाही अनडुही, तरुण, तलुन, श्वन्-इति पठित्वा 'पिप्पल्यादयश्च' इत्युक्त्वा पिप्पली, हरीतकी, कोशातकी, पृथिवी, मातामही इत्यादि पठितम्। तत्र पिप्पलीशब्दस्य जातिवाचित्वेऽपि नियतस्त्रीलिङ्गत्वाद् ङीषोऽप्राप्तेरिह पाठः। श्वन्शब्दस्य तु 'ऋन्नेभ्यः—' इति ङीपि प्राप्ते ङीषर्थे इह पाठः। स्वरे विशेषः। **आकृतिगणोऽयमिति**। गौरादिरित्यर्थः। 'पिप्पल्यादेरवान्तरगण-

गौरः' इत्युक्तमिति भावः। **लघावन्त इति**। अन्ते नाम एकस्मिन् लघौ द्वयोश्च लघ्वोः परतो बह्वषो बह्वच्कस्य गुरुरुदात्तः स्यात्। अषित्यचः प्राचां संज्ञा। **कृष्णेत्यादि**। 'कृषेश्च' इति नक्प्रत्यये 'कपेश्च' इति सौत्राद्धातोरौणादिके इलचि च कृष्णकपिलावन्तोदात्तौ। **षिद्गौरादि**। **नर्तकीति**। नृतुधातोः 'शिल्पिनि ष्वुन्'। ष्वुनः षित्त्वमवयवेऽचरितार्थत्वात्तदन्तस्य प्रातिपदिकस्य विशेषणम्, त्रपूषः षित्त्वस्याङ्विधौ चरितार्थत्वात्त्रपेत्यत्र तु न ङीष्, मृजेः षित्त्वमनार्षं भिदादौ मृजेति पाठादित्याहुः। मृजेः षित्त्वादेवाङ्, भिदादौ मृजेति पाठस्त्वनार्ष इत्यन्ये। **गौरीति**। गौरशब्दस्य वर्णवाचित्वेऽपि प्रातिपदिकस्वरेणान्तोदात्तत्वाद् 'अन्यतो ङीष्' इति ङीष् न प्राप्नोतीतीह गणे पाठः। **अनड्वाही, अनडुहीति**। अनकारान्तत्वाज्जातिलक्षणस्य पुंयोगलक्षणस्य वा ङीषोऽप्राप्ततया गणेऽस्मिन्पठ्यते। प्रत्ययसहितपाठस्तु ङीषि परे आम्विकल्पार्थः। गौर, मत्स्य, मनुष्य, शृङ्ग, गवय, हय, मुकय[1], गौतम[2], अनड्वाही, अनडुही, तरुण, तलुन, श्वन्। **पिप्पल्यादयश्च**। पिप्पली, हरीतकी, कोशातकी, पृथिवी, मातामही इत्यादि। यत्तु प्राचा 'ऋन्नेभ्यो ङीप्' इत्यत्र शुनीत्युदाहृतम्, तत्तु गौरादिगणे श्वन्शब्दपाठादर्शनप्रयुक्तमित्याहुः। अत्र केचित्-नित्यस्त्रीत्वाद् 'जातेरस्त्रीविषयात्—' इत्यप्राप्ते ङीषि पिप्पल्यादयो गौरादिषु पठ्यन्ते, ङीषन्तपाठस्तु चिन्त्यप्रयोजनः। न च पिप्पली भार्या यस्य स पिप्पलीभार्य इत्यादौ पुंवद्भावं बाधित्वा ङीषः श्रवणं यथा स्यादित्येतदर्थः स इति वाच्यम्, भाषितपुंस्कत्वाभावादेव पुंवद्भावनिषेधसिद्धेः। किं चावान्तरगणत्वाभ्युपगमोऽपि पिप्पल्यादेर्व्यर्थ एव। न चैवं जाताधिकारे 'चित्रारेवती-

१ 'मुकय इत्यादि।' इति क्वचित् पाठः। २ 'गौतम' इत्यारभ्य 'मातमही इत्यादि' इत्यन्तः पाठः क्वचिन्नास्ति।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ऽयम् । ४६६ सूर्यतिष्यागस्त्यमत्स्यानां य उपधायाः । ( ६-४-१४६ )
अङ्गस्योपधाया यस्य लोपः स्यात्स चेद्यः सूर्याद्यवयवः । 'मत्स्यस्य ङ्याम्' ( वा ४१६८ ) । 'सूर्यागस्त्ययोश्छे च ङ्यां च' (वा ४१६६) । 'तिष्यपुष्ययोर्नक्षत्राणि यलोप इति वाच्यम्' ( वा ४२०० ) । मत्सी । 'मातरि षिच्च' ( वा २७१० )

---

त्वे प्रयोजनं चिन्त्यम् । मत्स्यशब्दाद् गौरादित्वाद् ङीषि विशेषं दर्शयितुमाह— **सूर्यतिष्यागस्त्य** । 'ढे लोपोऽकद्र्वाः' इत्यतो लोप इत्यनुवर्तते । य इति षष्ठी, अङ्गस्येत्यधिकृतमवयवषष्ठ्यन्तम्, तच्च उपधायामन्वेति । अङ्गस्य उपधाभूतो यो यकारः, तस्य लोपः स्यादिति लभ्यते । सूर्यतिष्यागस्त्यमत्स्यान'मित्यप्यवयवषष्ठ्यन्तं यकारेऽन्वेति, न त्वङ्गविशेषणम् । तदाह—**अङ्गस्येत्यादिना** । **मत्स्यस्य ङ्यामिति** । तेनेह न, मत्स्यस्येदं मात्स्यम् । **सूर्यागस्त्ययोश्छे च ङ्यां चेति** । सूरीयः । सूरी । अगस्तीयः । अगस्ती । नेह, सौर्यम् । आगस्त्यम् । **तिष्येति** । 'नक्षत्रेण युक्तः कालः' 'संधिवेलाद्यृतुनक्षत्रेभ्योऽण्' इति च विहिते नक्षत्रसंबन्धिनि अणि परतः तिष्यपुष्ययोर्यलोप इत्यर्थः । तत्र तिष्यस्य यलोपो नियम्यते, पुष्यस्य त्वप्राप्तो विधीयते । तिष्येण युक्तः पूर्णमासः, तिष्ये भवो वा तैषः । एवं पौषः । नेह—तिष्यस्य पुष्यस्य वाऽयं तैष्यः, पौष्यः । **मत्सीति** । मत्स्यशब्दाद् गौरादिङीषि यलोपः, 'यस्येति च' इत्यकारलोपः । ननु 'पितृव्यमातुलमातामहपितामहाः' इति सूत्रे मातुः पिता, पितुः पितेति विग्रहे मातृपितृभ्यां डामहचि टिलोपे मातामहपितामहशब्दौ

---

रोहिणीभ्यः स्त्रियामुपसंख्यानम्' इत्यत्र पिप्पल्यादेराकृतिगणत्वात्पुनर्ङीषिति वक्ष्यमाणग्रन्थो विरुध्यत इति वाच्यम्, गौरादेराकृतिगणत्वादित्यपि वक्तुं शक्यत्वादित्याहुः । **सूर्यतिष्य** । अत्र भस्येत्यनुवर्तमानमपि न संबध्यते, विषयपरिगणनेनैवातिप्रसङ्गनिवारणात् । **मत्स्यस्य ङ्यामिति** । नेह मत्स्यस्येदं मात्स्यम् । **छे च ङ्यां चेति** । सूरीयः । सूरी । अगस्तीयः । अगस्ती । नेह—सौर्यं चरुम् । आगस्त्यम् । **नक्षत्राणीति** । नक्षत्रसंबन्धी योऽण् 'नक्षत्रेण युक्तः कालः' इति 'संधिवेलाद्यृतुनक्षत्रेभ्योऽण्' इति च विहितस्तस्मिन्नित्यर्थः । तत्र तिष्यस्य यलोपो निपात्यते । पुष्यस्य त्वप्राप्तो विधीयते । तिष्येण युक्तः कालस्तैषः । पुष्येण युक्तः पौषः । तथा तिष्ये भवस्तैषः । पुष्ये भवः पौषः । नेह—तिष्यस्यापत्यं तैष्यः । **मत्सीति** । योपधत्वाद् 'जातेरस्त्रीविषयात्—' इत्यप्राप्ते गौरादिपाठान्ङीष् । **मातरि षिच्चेति** । 'पितृव्यमातुलमातामह—' इति सूत्रस्थमिदं वचनम् । तच्च पितामहीति रूपसिद्ध्यर्थमवश्यं वक्तव्यमिति न वार्तिकस्य वैयर्थ्यम् । ये तु पितामहशब्दमपि गौरादिषु पठन्ति, तन्मते वचनमिदं स्वरसतो न संगच्छते । यदि त्वनित्यत्वज्ञापनमेव वचनस्य फलमिति ब्रूषे, तर्हि 'षिद्गौरा—' इति सूत्र एव 'अनित्यं षितः' इति वक्तव्यम्, किमनेन वक्रमार्गेणेति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

इति षित्त्वादेव सिद्धे गौरादिषु मातामहीशब्दपाठादनित्यः षितां ङीष् । दंष्ट्रा।

५०० जानपदकुण्डगोणस्थलभाजनागकालनीलकुशकामुककबराद् वृत्त्यमत्रावपनाकृत्रिमाश्राणास्थौल्यवर्णानाच्छादनायोविकारमैथुनेच्छाकेशवेशेषु। (४-१-४२) एभ्य एकादशभ्यः प्रातिपदिकेभ्यः क्रमाद् वृत्त्यादिष्वर्थेषु ङीष् स्यात्। जानपदी वृत्तिश्चेत्, अन्या तु जानपदी। उत्सादित्वादणन्तत्वेन 'टिड्ढ–' (सू ४७०) इति ङीप्याद्युदात्तः। कुण्डी अमत्रं चेत्, कुण्डान्या। 'कुडि दाहे'। 'गुरोश्च हलः' (सू ३२८०) इत्यप्रत्ययः। यस्तु 'अमृते जारजः

---

निपातितौ, तत्र मातुर्माता, पितुर्मातेति विग्रहे डामहचः षित्त्वं विहितम्—'मातरि षिच्च' इति। ततश्च षित्त्वविधानादेव ङीष्सिद्धेः गौरादिषु मातामहीशब्दपाठो न कर्तव्यः। न च 'मातरि षिच्च' इति न क्रियतामिति वाच्यम्, पितामहीत्यत्र ङीषर्थं तस्यावश्यकत्वादित्यत आह—**मातरीति**। **दंष्ट्रेति**। दंशेः 'दाम्नीशस–' इति करणे ष्ट्रन्। अत्र षित्त्वे सत्यपि न ङीषिति भावः। सूर्यादीनामङ्गानामुपधाभूतस्य यकारस्य लोप इति तु न व्याख्यातम्, तथा सति सौरी बलाकेति न सिध्येत्। सूर्येणैकदिग्–इत्यर्थे 'तेनैकदिक्' इत्यणि तदन्ताद् ङीपि अणन्तमङ्गम्, न तु सूर्यशब्द इति तदसिद्धिः। वचनं तु सूरी कुन्तीत्यत्र चरितार्थमित्यन्यत्र विस्तरः।

**जानपद**। जानपदेत्यादि कबरादित्यन्तमेकं पदम्। समाहारद्वन्द्वात् पंचमी। **जानपदीति**। जनपदे भवेत्यर्थः। **वृत्तिश्चेदिति**। जीविका गम्या चेदित्यर्थः। ननु उत्सादित्वादणि ङीपैव सिद्धे ङीष्विधिर्व्यर्थ इत्यत आह—**उत्सादित्वादिति**। 'अनुदात्तौ सुप्पितौ' इति ङीप्याद्युदात्तत्वम्, ङीषि तु प्रत्ययस्वरेणान्तोदात्तत्वमिति भेद इत्यर्थः। **कुण्डीति**। 'पिठरं स्थाल्युखा कुण्डम्' इत्यमरः। 'पात्रामत्रे च भाजनम्' इति च। कुण्डशब्दस्य स्त्रीत्वमपि ङीष्विधिसामर्थ्यात्। 'पिठरे तु न ना कुण्डम्' इति विश्वः। **कुण्डाऽन्येति**। दहनीयेत्यर्थः। तदेव विशदयति—**कुडि दाहे इति**। **गुरोश्चेति**। गुरुमतो हलन्ताद्धातोः अप्रत्ययः स्याद् भावकर्मणोः स्त्रियामिति तदर्थः। ननु 'अमृते जारजः कुण्डो मृते भर्तरि गोलकः' इति मनुष्यजातिविशेषवाची कुण्डशब्दोऽपि प्रत्युदाहरणं किं न स्यादित्यत आह—**यस्त्विति**।

---

दिक्। दश्यतेऽनयेति दंष्ट्रा। 'दाम्नीशस–' इत्यादिना करणे ष्ट्रन्। **जानपदीति**। जनपदे भवा **वृत्तिश्चेदिति**। वर्ततेऽनयेति। वृत्तिर्जीविका। **कुण्डीति**। 'अस्त्री कमण्डलुः कुण्डी' इत्यमरः। **कुण्डाऽन्येति**। क्रियाशब्दोऽयम्। अतएवाह—**कुडि दाह इत्यादि**। यस्तु घटपर्यायः कुण्डशब्दः स न प्रत्युदाहरणम्। 'पिठरः स्थाल्युखा कुण्डम्' इति तस्य नपुंसकत्वात्। अग्न्यालयादिपर्यायोऽपि कुण्डशब्दो

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

कुण्डः' इति मनुष्यजातिवचनस्ततो जातिलक्षणो ङीष् भवत्येव । अमत्रे हि स्त्रीविषयत्वादप्राप्तो ङीष् विधीयते, न तु नियम्यते । गोणी आवपनं चेत्, गोणाऽन्या । स्थली अकृत्रिमा चेत्, स्थलाऽन्या । भाजी श्राणा चेत्, भाजाऽन्या । नागी स्थूला चेत्, नागाऽन्या । गजवाची नागशब्दः स्थौल्यगुणयोगादन्यत्र प्रयुक्त उदाहरणम् । सर्पवाची तु दैर्घ्यगुणयोगादन्यत्र प्रयुक्तः प्रत्युदाहरणम् ।

---

**जातिलक्षण इति** । 'जातेरस्त्रीविषयात्–' इति जातिनिमित्तक इत्यर्थः । ननु अमत्रेऽपि वाच्ये कुण्डशब्दाद् जातिलक्षणङीषि सिद्धे तद्वचनं व्यर्थम् । न च अमत्र एव ङीषिति नियमार्थं तदिति वाच्यम्, एवं सति मनुष्यजातिविशेषवाचित्वे ङीषोऽनुत्पत्तेरित्यत आह—**अमत्रे हि स्त्रीविषयत्वादिति** । 'जातेरस्त्रीविषयात्–' इत्यनित्यस्त्रीलिङ्गाद् ङीष् विहितः, अमत्रे कुण्डशब्दो नित्यस्त्रीलिङ्गः, 'पदान्तरं विना स्त्रियां वर्तमानत्वं नित्यस्त्रीत्वम्' इति स्वीकारात्, 'कुण्डी कमण्डलौ जारात् पतिपत्नीसुते पुमान्' इति मेदिनीकोशाच्च । तथा च कुण्डशब्दाद् जातिलक्षणङीष् प्राप्त एव विधीयते, न तु नियम्यते, अतो मनुष्यजातिवाचित्वेऽपि ङीष् निर्बाध इति भावः । **आवपनं चेदिति** । ओप्यते–निक्षिप्यते अस्मिन्नित्यर्थे आङ्पूर्वाद्वपेर्ल्युट् । **गोणाऽन्येति** । कस्याश्चिदिदं नाम । **अकृत्रिमा चेदिति** । इदानींतनपुरुषपरिष्कृता भूमिः कृत्रिमा, तद्भिन्नेत्यर्थः । **स्थलाऽन्येति** । कृत्रिमेत्यर्थः । 'स्थलयोदकं परिगृह्णन्ति' इति यजुर्वेदे । **भाजीति** । भज्यते–सेव्यते इति कर्मणि घञ् । 'घञजबन्ताः पुंसि' इति तु प्रायिकम् । **श्राणा चेदिति** । 'यवागूरुष्णिका श्राणा' इत्यमरः । **भाजाऽन्येति** । अश्राणेत्यर्थः । 'श्रा पाके' क्तः । 'संयोगादेरातो धातोर्यण्वतः' इति निष्ठानत्वम्, णत्वं च, पक्वेत्यर्थः । नागशब्दस्य स्थौल्ये क्वाप्यप्रसिद्धेराह—**गजवाचीति** । **वर्णश्चेदिति** । वर्णः प्रवृत्तिनिमित्तं चेदित्यर्थः । वर्णविशिष्टा चेदिति यावत्, अन्यथा कालशब्दस्य 'गुणे शुक्लादयः पुंसि' इति पुंस्त्वापातात् । सूत्रे वर्णा इति च्छेदः, अर्शआद्यजन्ताट्टाप् । **कालाऽन्येति** । क्रौर्ययुक्तेत्यर्थः, संज्ञाशब्दो वा । **अनाच्छादनं चेदिति** । वस्त्रभिन्नं गवादिकमित्यर्थः । **नीलाऽन्येति** । नन्वत्राच्छादनस्य विशेष्यत्वे स्त्रीत्वानुपपत्तिः, पटीत्यस्य विशेष्यत्वेऽपि नीलवर्णवती पटीत्यर्थे ङीषः अप्रसक्तिरेव, 'नीलादोषधौ प्राणिनि च' इति नियमस्य वक्ष्यमाणत्वादित्यत आह—**नील्या रक्तेति** । नील्या

---

नपुंसकलिङ्गे नियतः । 'कुण्डमग्न्यालये मानभेदे देवजलाशये, इति मेदिनीकोशात् । **आवपनं चेदिति** । आङ्पूर्वाद्वपेरधिकरणे ल्युट् । ओप्यते–निक्षिप्यते धान्यं यस्मिन् । **गोणाऽन्येति** । यस्या यादृच्छिकं नाम । **अकृत्रिमेति** । यथा 'सैषा स्थली यत्र विचिन्वता त्वाम्' इति । **स्थलाऽन्येति** । कृत्रिमा–पुरुषेण संस्कृता । श्राणा

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

काली वर्णश्चेत्, कालान्या। नीली अनाच्छादनं चेत्, नीलाऽन्या, नील्या रक्ता शाटी-त्यर्थः। 'नील्या अन् वक्तव्यः' (वा २६८०) इत्यन्। अनाच्छादनेऽपि न सर्वत्र, किन्तु 'नीलादोषधौ' (वा २४५६)। नीली। 'प्राणिनि च' (वा २४५८)। नीली गौः। 'संज्ञायां वा' (वा २४५७)। नीली, नीला। कुशी अयोविकार-श्चेत्, कुशाऽन्या। कामुकी मैथुनेच्छा चेत्, कामुकाऽन्या। कबरी केशानां सन्नि-वेशश्चेत्, कबराऽन्या—चित्रेत्यर्थः। **५०१ शोणात्प्राचाम्।** (४-१-४३) शोणी, शोणा। **५०२ वोतो गुणवचनात्।** (४-१-४४) उदन्ताद्

---

ओषध्या रागविशेषं प्राप्तेत्यर्थः। ननु कथमयमर्थो लभ्यत इत्यत आह—**नील्या अनिति।** 'तेन रक्तं रागात्' इत्यत्र इदं वार्तिकम्। नीलीशब्दादन्प्रत्यये सति 'यस्येति च' इति लोपे नीलशब्दः, तस्य नीलीरक्तवाचकस्य विशेषणांशे ओषधिवाचकत्वसत्वात् 'नीलादोषधौ प्राणिनि च' इति नियमे सत्यपि ङीषः प्राप्तेस्तन्निवृत्त्यर्थमनाच्छादनग्रहण-मिति भावः। ननु नीला कुण्डीत्यत्रापि अनाच्छादनत्वाद् ङीष् स्यादित्याशङ्क्य आह—**अनाच्छादनेऽपीति।** 'नीलादोषधौ प्राणिनि च' इति वार्तिकमेतत्। नीलाद् अनाच्छादनेऽपि भवन् ङीष् ओषधौ प्राणिनि चैव स्यात्, न त्वन्यत्रेत्यर्थः। एवं च नीला कुण्डीत्यादौ न ङीषिति भावः। 'संज्ञायां वा' इत्यपि वार्तिकम्। संज्ञायामुक्त-विषये तदन्यत्रापि ङीष् वा स्यादित्यर्थः। **अयोविकारश्चेदिति।** फाला इति प्रसिद्धः। **कुशाऽन्येति।** छन्दोगसूत्रे 'प्रस्तोता तु कुशाः कारयेद्यज्ञियस्य वृक्षस्य खदिरस्य दीर्घ-सत्रेष्वेके प्रादेशमात्रीः कुशपृष्ठास्त्वक्तस्समामजते' इति प्रसिद्धा। **कामुकीति।** काम-यितुं शीलमस्या इति विग्रहे 'लषपत—' इत्यादिना कमेरुकञ्। मैथुनेच्छावती चेदित्यर्थः। अर्शआद्यजन्ताट्टाप् **कामुकाऽन्येति।** धनादीच्छावतीत्यर्थः। **शोणात् प्राचाम्।** 'रोहितो लोहितो रक्तः शोणः कोकनदच्छविः' इत्यमरः। 'वर्णानां तणतिनितान्ता-नाम्' इति शोणशब्द आद्युदात्तः, अनुदात्तान्तः। 'अन्यतो ङीष्' इति नित्यं ङीषि प्राप्ते विकल्पार्थमिदम्। **वोतो गुणवचनात्।** प्रातिपदिकादित्यनुवृत्तम्। वा उत

---

पक्का। **अयोविकार इति।** फाल इति प्रसिद्धा। **कुशाऽन्येति।** छन्दोगाः स्तोत्रीयागणनार्थानौदुम्बरान् शङ्कून् 'कुशा' इति व्यवहरन्ति। 'अतः कृकमि—' इति सूत्रे प्रसिद्ध एवायम्। **कामुकाऽन्येति।** मैथुनादन्यद्धनादिकं कामयितुं यस्याः शीलं सेत्यर्थः। 'लषपत—' इत्युकञ्। **शोणात्।** 'शोणः कोकनदच्छविः' इति कोशाच्छोण-शब्दस्य वर्णवाचित्वाद् 'वर्णानां तण—' इत्याद्युदात्ततया 'अन्यतो ङीष्' इति सिद्धेऽपि प्राचामेव ङीष् नान्येषामिति नियमार्थमिदम्। **वोतो गुणवचनात्।** गुणो नाम नेह—अदेङ्रूपः, 'उतः' इति विशेषणाद्वचनग्रहणाच्च। नापि विशेषणमात्रमिदम्,

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

गुणवाचिनो वा ङीप्[1] स्यात् । मृद्वी, मृदुः । उतः किम्—शुचिः । गुण इति किम्-

---

इति च्छेदः, उता गुणवचनस्य प्रातिपदिकस्य विशेषणात् तदन्तविधिः । तदाह—**उदन्तादिति । वा ङीबिति** । ङीषिति नात्रानुवर्तते । 'गुणवचनाद् ङीबाद्युदात्तार्थः' इति वार्तिकादिति भावः । **मृद्वीति** । मृदुशब्दाद् ङीपि यण् । अत्र—

'सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते ।
आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः ॥'

इति भाष्ये गुणलक्षणमुक्तम् । सत्त्वं द्रव्यं समवायिकारणं तत्रैव निविशते समवैति यः स गुण इत्यन्वयः । द्रव्यमात्रसमवेत इति यावत् । मात्रपदात् सत्ताजातिर्व्यवच्छिद्यते, तस्या द्रव्यगुणक्रियावृत्तित्वात् । अथ द्रव्यत्वे अतिव्याप्तिवारणाय आह—अपैतीति । कतिपयद्रव्येभ्योऽपगच्छतीत्यर्थः[2] । द्रव्यत्वस्य सर्वद्रव्यवृत्तित्वान्नातिव्याप्तिरिति भावः । एवमपि गोत्वे अतिव्याप्तिवारणाय आह—पृथग्जातिषु दृश्यत इति । पृथक्—भिन्ना जातयो येषां ते पृथग्जातयः । भिन्नजातीयद्रव्यवृत्तिरिति यावत् । गोत्वस्य गोजातीयेष्वेव सत्त्वात्, भिन्नजातीयेषु अश्वादिष्वसत्त्वान्नातिव्याप्तिरिति भावः । एवमपि क्रियायामतिव्याप्तिवारणाय आह—आधेयश्चाक्रियाजश्चेति । आधीयते—उत्पाद्यत इत्याधेय उत्पाद्यः, अक्रियाजः अनुत्पाद्यः । उत्पाद्यत्वानुत्पाद्यत्वाभ्यां द्विविध इति यावत् । गुणो नित्यानित्यभेदेन द्विविधो भवति । नित्यगतानां गुणानां नित्यत्वात्, अनित्यगतानामनित्यत्वात् । क्रियायास्तु सर्वस्या अप्युत्पाद्यत्वान्नातिव्याप्तिरिति भावः । एवमपि द्रव्ये अतिव्याप्तिः, तस्य अवयवद्रव्यसमवेतत्वात्, असमवायिकारणसंयोगनाशे[3] ततोऽपायात्, विजातीयपार्थिवाद्यवयवेषु सत्त्वात्, नित्यानित्यभेदसत्त्वाच्च । अत आह—

---

आहुर्द्रव्यमित्यादावतिप्रसङ्गादिति चेत्, अत्राहुः—'संज्ञाजातिक्रियाशब्दान् हित्वान्ये गुणवाचिनः' । चतुष्टयीशब्दानां प्रवृत्तिरित्याकरग्रन्थनिष्कर्षादेव निर्णय इति । भाष्ये तु 'सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते । आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः ॥' इति स्थितम् । सत्त्वं द्रव्यम् । सत्त्व एव निविशत इति सावधारणं व्याख्येयम् । एतेन सत्ता व्यावर्त्यते । सा हि न केवलं द्रव्ये वर्तते किन्तु द्रव्यगुणकर्मसु । ननु द्रव्य एव द्रव्यत्वं वर्तत इति तत्रातिव्याप्तिरत आह—अपैतीति । अपगच्छतीत्यर्थः । अर्थात्सत्त्वादेव । यथा पीततायां जातायां फलादेर्नीलतापैति, नैवं द्रव्यत्वं द्रव्यादपैति । एवमपि गोत्वं गोषु वर्तते अश्वादेश्चापैति तत्रातिव्याप्तिरत आह—पृथग्जातिषु दृश्यते

---

१ बालमनोरमाकृतात्र 'ङीप्' इति पाठो मन्यते । अन्यत्र तु सर्वत्र कौमुदीपुस्तकेषु 'ङीष्' इत्येव पाठः । न च व्याख्यानादेषु क्वापि ङीपोऽनुवृत्तिरत्रोक्ता ।

२ द्रव्यादपगच्छति क । ३ नास्ति क ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

आखुः। 'खरुसंयोगोपधान्न' (वा २४६०)। 'खरुः पतिंवरा कन्या'। पाण्डुः।

---

असत्त्वप्रकृतिरिति। अद्रव्यस्वभाव इत्यर्थः, द्रव्यभिन्न इति यावत्। अत्र मात्रपदेन सत्ताजातेः, अपैतीत्यनेन द्रव्यत्वस्य, पृथग्जातिषु दृश्यते इत्यनेन गोत्वादिजातेश्च निरासात् तद्भिन्नत्वमिति लब्धम्। 'आधेयश्चाक्रियाजश्च' इत्यनेन क्रियानिरासात् क्रियाभिन्नत्वं लब्धम्। असत्त्वप्रकृतिः इत्यनेन द्रव्यस्य निरासाद् द्रव्यभिन्नत्वं लब्धम्। तथा च जातिभिन्नत्वे सति क्रियाभिन्नत्वे सति द्रव्यभिन्नत्वे सति समवेतत्वं गुणलक्षणं निष्कृष्टं वेदितव्यम्। समवेतत्वाभावादभावनिरासः। अत्र 'नित्यद्रव्यवृत्तयो विशेषास्त्वनन्ता एव' इति तार्किकाभिमतविशेषपदार्थाङ्गीकारे तद्भिन्नत्वमपि निवेश्यम्। 'आकडारादेका संज्ञा' इति सूत्रभाष्ये तु 'समासकृदन्ततद्धितान्ताव्ययसर्वनामजातिसंख्यासंज्ञाशब्दव्यतिरिक्तमर्थवच्छब्दरूपं गुणवचनसंज्ञं भवति' इत्युक्तम्। तदिदं प्रकृतसूत्रभाष्यस्थलक्षणस्यास्योक्तस्य प्रपञ्चनपरं वेदितव्यम्। परन्तु आकडारसूत्रभाष्ये संख्याशब्दभिन्नत्वमप्युपात्तम्, तदप्युक्तलक्षणे निवेश्यम्। न चैवमपि मृदुपट्वादिशब्दानां गुणविशिष्टद्रव्यवाचित्वाद् गुणवचनत्वाभाव इति वाच्यम्, गुणवचनेत्यन्वर्थसंज्ञया गुणोपसर्जनद्रव्यवाचित्वस्यैव विवक्षितत्वात्। एवं च रूपशब्दस्य न गुणवचनता, तस्य प्राधान्येन रूपवाचितया रूपवति प्रयोगाभावात्। रूपादिशब्दस्यापि गुणवचनशब्देन ग्रहणे 'गुणवचनेभ्यो मतुपो लुगिष्टः' इत्यत्रापि रूपादिशब्दानां ग्रहणापत्तौ रूपो घटः इत्यादिप्रयोगापत्तेः। प्रपञ्चितं चैतदरुणाधिकरणेऽस्माभिरध्वरमीमांसाकुतूहलवृत्तौ। **शुचिरिति**। शुक्लेत्यर्थः। 'शुक्लशुभ्रशुचिश्वेतविशदश्येतपाण्डराः।'[1] इत्यमरः। न च शुचिधातोः 'इगुपधात् कित्' इत्यौणादिके इप्रत्यये उत्पन्नस्य शुचिशब्दस्य आकडारसूत्रे भाष्ये कृदन्तस्य गुणवचनवपर्युदासादेवात्र ङीष् न भविष्यतीति वाच्यम्, उणादीनाम् अव्युत्पत्तिपक्षाश्रयणात्। **आखुरिति**। मूषिकेत्यर्थः। आखोस्तु जातिविशिष्टद्रव्यवचनत्वादुक्तगुणवचनत्वाभावान्न ङीप्। 'खरुसंयोगोपधान्न' इति वार्तिकम्। खरुश्च संयोगोपधश्चेति समाहारद्वन्द्वः। खरुशब्दात् संयोगोपधाच्च 'वोतो गुणवचनात्' इति ङीप् नेत्यर्थः। खरुशब्दमप्रसिद्धत्वाद् व्याचष्टे—**पतिंवरा कन्येति**। पतिलाभोत्कण्ठा-

---

इति। गोत्वं हि द्रव्यत्वावान्तरनानाजातिषु न दृश्यते। गुणस्तु दृश्यते। यथा अभ्रे दृष्टा नीलता तृणादिष्वपि दृश्यते। एतेन पूर्वार्धेन सकलजातेर्व्यवच्छेदः। एवं तर्हि कर्म द्रव्ये वर्तते ततोऽपैति पृथग् जातिषु दृश्यते चेति तत्रातिव्याप्तिरत आह— आधेयश्चाक्रियाजश्चेति। उत्पाद्योनुत्पाद्य इत्यर्थः। उत्पाद्यो यथा—घटादेः पाकजो रूपादिः। अक्रियाजोऽनुत्पाद्यः। स यथा आकाशादेर्महत्त्वादिः। क्रिया तु सर्वाप्युत्पाद्यैव

---

1 'पाण्डराः' क।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

**५०३ बह्वादिभ्यश्च ।** ( ४-१-४५ ) एभ्यो वा ङीष्स्यात् । बह्वी, बहुः । 'कृदिकारादक्तिनः' (ग ५०) । रात्रिः, रात्री । 'सर्वतोऽक्तिन्नर्थादित्येके' (ग ५१) शकटिः, शकटी । अक्तिन्नर्थात् किम्—अजननिः । क्तिन्नन्तत्वादप्राप्ते विध्यर्थं पद्धति-

---

वतीत्यर्थः । औत्कण्ठ्यलक्षणगुणोपसर्जनद्रव्यवाचितया गुणवाचित्वात् प्राप्तिः । **पाण्डुरिति** । श्वेतेत्यर्थः । संयोगोपधत्वाद् न ङीप् । **बह्वादिभ्यश्च** । गुणवचनत्वादेव सिद्धे बहुग्रहणं व्यर्थमेवेति प्राञ्चः । वस्तुतस्तु अनुपदोदाहृताकडारसूत्रभाष्यरीत्या संख्याशब्दानां गुणवचनत्वाभावाद् अप्राप्तस्य ङीषो विधानार्थं बहुग्रहणमित्याहुः । **बह्वी, बहुरिति** । वैपुल्यवाची बहुशब्दोऽयम् । त्रित्वादिसमनियतसंख्याविशेषवाचित्वे तु एकवचनानुपपत्तेः । वैपुल्यवाचित्वेऽपि 'बहुगणवतुडति संख्या' इति संख्याशब्दत्वाद् न गुणवचनत्वमिति न वैयर्थ्यमिति भावः । **कृदिकारादक्तिनः** । इति बह्वाद्यन्तर्गणसूत्रम् । कृतो य इकारस्तदन्तात् प्रातिपदिकाद् ङीष् वा स्यात्, न तु क्तिन्नन्तादित्यर्थः । **रात्रिः, रात्रीति** । 'राशदिभ्यां त्रिप्' इति राधातोरौणादिकस्त्रिप् । गुणवचनत्वाभावाद् उदन्तत्वाभावाच्चाप्राप्ते वचनम् । **सर्वतोऽक्तिन्नर्थादित्येके** । इत्यपि बह्वाद्यन्तर्गणसूत्रमेव । कृदिकारान्तादकृदिकारान्तादपि ङीष् वा स्यात्, न तु क्तिन्नर्थकप्रत्ययान्तादित्यर्थः । **शकटिः, शकटीति** । शकटिशब्दस्य अव्युत्पन्नप्रातिपदिकत्वात् कृदन्तत्वाभावात् सर्वत इति वचनम् । अव्युत्पत्तिपक्षे रात्रिशब्दोऽप्युदाहरणं बोध्यम् । **अजननिरिति** । 'स्त्रियां क्तिन्' इत्यधिकारे 'आक्रोशे नञ्यनिः' इति नञि उपपदे जनेरनिप्रत्ययः, अक्तिन इत्युक्तौ अत्र निषेधो न स्यात्, अतः अक्तिन्नर्थादित्युक्तिरिति भावः । ननु हन्धातोः स्त्रियां कर्मणि क्तिनि 'अनुदात्तोपदेश—' इत्यादिना नलोपे हतिशब्दः, तस्य क्तिन्नन्तत्वात् कथं पद्धतिशब्दाद् ङीषित्यत आह—**क्तिन्नन्तत्वादिति** ।

---

न नित्येति तस्या द्वैविध्याभावाद् गुणत्वाभावः । एवमपि द्रव्यस्य गुणत्वं प्राप्नोति । अवयविद्रव्यं ह्यवयवद्रव्येषु निविशते । असमवायिकारणसंयोगनिवृत्तौ तु विनाशात्ततोऽपैति भिन्नजातीयेषु च हस्तपादादिषु दृश्यते । द्विविधं च भवति नित्यानित्यभेदेन । निरवयवस्याऽऽत्मपरमाण्वादेर्नित्यत्वादवयविद्रव्यस्य तु घटादेरनित्यत्वादत आह—असत्त्वप्रकृतिरिति । अद्रव्यस्वभाव इत्यर्थः । **पतिंवरेति** । एवं च पाणिग्रहणोत्कण्ठाभिधायित्वाद् गुणवचनोऽयमिति भावः । **बह्वादिभ्यश्च** । बहुशब्दस्य गुणवाचित्वात् पूर्वेण सिद्धेऽप्युत्तरार्थं ग्रहणम्, 'नित्यं छन्दसि' इत्युत्तरसूत्रेण बहुशब्दादपि छन्दसि नित्यं यथा स्यादिति । वस्तुतस्तु बहुशब्दो 'नित्यं छन्दसि' इति सूत्रं च व्यर्थमेव, सर्वविकल्पानां छन्दसि व्यवस्थितत्वात् । गणसूत्रमाह—**कृदिकारादिति** ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शब्दो गणे पठ्यते। 'हिमकाषिहतिषु च' (सू ९९२) इति पद्भावः। पद्धतिः, पद्धती। ५०५ **पुंयोगादाख्यायाम्**। (४-१-४८) या पुमाख्या पुंयोगात्स्त्रियां वर्तते, ततो ङीष् स्यात्। गोपस्य स्त्री गोपी। 'पालकान्तान्न' (वा २४६१) गोपा-

---

**गणे इति**। बह्वादिगण इत्यर्थः। ननु पादाभ्यां हतिरिति विग्रहे 'कर्तृकरणे कृता बहुलम्' इति तृतीयासमासे सुब्लुकि पाद हति इति स्थिते कथं पदादेशः, 'पादः पत्' इत्यत्र कृतसमासान्तलोपस्यैव पादशब्दस्य ग्रहणाद् भत्वाभावाच्च। 'पादस्य पदाज्यातिगोपहतेषु' इत्यपि न संभवति, तस्य आज्यादिष्वेव परेषु प्रवृत्तेरित्यत आह— **हिमकाषीति**। हिमादिषु परेषु पादशब्दस्य पदादेशः स्यादिति तदर्थः। **पुंयोगात्**। पुंयोगादिति हेतौ पञ्चमी। आख्यायामिति पञ्चम्याः सप्तम्यादेशः, 'सुपां स्थाने सुपो भवन्तीति वक्तव्यम्' इत्युक्तेः। आख्येत्यनेन वाचकः शब्दो विवक्षितः, कस्य वाचक इत्यपेक्षायां पुंयोगादित्युपस्थितत्वात् पुंस इति लभ्यते। तथा च आख्यायामित्यनेन पुंसि प्रसिद्धात् शब्दादिति लभ्यते। पुंयोगादिति स्त्रियामित्यत्रान्वेति, तथा च पुंयोगमाश्रित्य लक्षणया स्त्रियां वर्तमानादिति लभ्यते। तदाह—**या पुमाख्येत्यादिना**। **ङीषिति**। 'अन्यतो ङीष्' इत्यतस्तदनुवृत्तेरिति भावः। 'वोतो गुणवचनात्' इति पूर्वसूत्रे तु 'गुणवचनाद् ङीबाद्युदात्तार्थः' इति वार्तिकाद् ङीप् लब्ध इति न तत्रास्यानुवृत्तिः। **गोपस्य स्त्रीति**। गाः पातीति गोपः, 'आतोऽनुपसर्गे कः'। तज्जायायां तु गोरक्षणाभावेऽपि तद्भार्यात्वात् तद्व्यपदेशः। ततश्च पुंयोगमाश्रित्य लक्षणया स्त्रियां वर्तमानत्वाद् ङीषि 'यस्येति च' इत्यकारलोप इति भावः। हरेः स्त्री, शंभोः स्त्री इत्यादौ न ङीष्, स्त्रीप्रत्ययविधिप्रकरणे अत इत्यनुवृत्तेः। या तु स्वयमेव गाः पाति, न तु गोपस्य स्त्री, सा तु गोपा, तत्र गोपशब्दस्य स्वत एव

---

**'सर्वतोऽक्तिन्नर्थात्'** इत्यपि गणसूत्रमेव। व्यवस्थितविभाषात्वादिह न, सुगन्धिः। प्रियपतिर्वेश्या। **अजननिरिति**। 'आक्रोशे नञ्यनिः' इति जनेरनिप्रत्ययः। इहान्यान्यपि गणसूत्राणि सन्ति—'शक्तिः शस्त्रे'। शक्तिः, शक्ती। शस्त्रे किम्, शक्तिः सामर्थ्यम्। शक्तिः शस्त्रीति पाठे तु शब्दद्वयम्। शस्त्रिः। शस्त्री। 'इतः प्राण्यङ्गात्'। धमनिः, धमनी। 'चन्द्रभागान् नद्याम्'। चन्द्रभागी, चन्द्रभागा। अहन्शब्दोऽत्र पठ्यते, तत्सामर्थ्यात्तदन्तो बहुव्रीहिरुदाहार्यः, अनुपसर्जनाधिकारबाधश्च, दीर्घाह्नी प्रावृट्। पक्षे डाब्ङीन्निषेधाः। बहु पद्धति यष्टि विकट विशाल कल्याण पुराण चण्ड कृपाण अहन्—इत्यादि। **पुंयोगादाख्यायाम्**। इह पुमिति लुप्तषष्ठीकं पृथक् पदम्, तच्चावर्तते 'पुंयोगात्' इति हेतौ पञ्चमी 'आख्यायाम्' इति तु पञ्चम्यर्थे सप्तमीत्याशयेनाह— **या पुमाख्येत्यादि**। पुमाख्या पुंवाचकः शब्दः। **पुंयोगात् स्त्रियां वर्तते**

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लिका। अश्वपालिका। 'सूर्याद्देवतायां चाब्वाच्यः' (वा २४७१)। सूर्यस्य स्त्री

स्त्रियां वृत्त्या पुंयोगादवृत्तेः। न च गोपस्य माता श्वश्रूः मातुलानी वा गोपीति स्यादिति वाच्यम्, 'अकुर्वती पापं भर्तृकृतान् वधबन्धादीन् यथा लभते, एवं तच्छब्दमपि' इति भाष्यस्वारस्येन जायापत्यात्मकस्यैव पुंयोगस्य विवक्षितत्वात्। दुहितरि केकयी देवकी इत्यादयस्तु गौरादौ पाठ्या इति शब्देन्दुशेखरे स्थितम्। आख्याग्रहणं किम्—प्रसूता। अयं हि शब्दो जातप्रसवामाह, स च प्रसवः पुंयोगनिमित्तकः, तन्निमित्ता चास्य स्त्रियां वृत्तिः, न त्वयं पुंसि प्रसिद्धः, अतो न ङीष्। अत्र 'गोपालकादीनां प्रतिषेधः' इति वार्तिकम्। अत्र आदिपदेन अश्वपालकेत्यादयः पालकान्ता एव गृह्यन्ते, भाष्ये तेषामेवोदाहरणात्। तदाह—**पालकान्तान्नेति**। पुंयोगलक्षणङीषिति शेषः। **गोपालिकेति**। गोपालकस्य स्त्रीत्यर्थः। ननु पालयतीति पालकः, कर्तरि ण्वुल्, 'युवोरनाकौ' इत्यकादेशः, 'णेरनिटि' इति णिलोपः। गवां पालक इति विग्रहे षष्ठीसमासे सुपो लुकि गोपालकशब्दः। तत्र किं शेषे षष्ठी, उत 'कर्तृकर्मणोः कृति' इति कर्मणि षष्ठी। न तावदाद्यः, प्रत्ययलक्षणमाश्रित्य टापः समासावयवात् पालकशब्दाद् उत्पन्नसुपः परत्वेन असुप इति निषेधात् 'प्रत्ययस्थात्—' इति इत्वानुपपत्तेः। न चास्तु कर्मणि षष्ठीति द्वितीयः पक्षः, 'गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुबुत्पत्तेः' इति वचनेन सुबुत्पत्तेः प्रागेव पालकशब्देन प्रातिपदिकेन गवामिति षष्ठ्याः समासे सति समासाद् उत्पन्नस्य टापः सुपः परत्वाभावेन इत्वस्य निर्बाधत्वादिति वाच्यम्, 'तृजकाभ्यां कर्तरि' इति कारकषष्ठ्याः समासनिषेधादिति चेत्, मैवम्—गाः पालयतीति गोपालः, 'कर्मण्यण्'। उपपदसमासः। गोपाल एव गोपालकः, स्वार्थिकः कः। तद्धितावयवत्वात् सुब्लुक्। गोपालकस्य स्त्री गोपालिकेति व्युत्पत्त्याश्रयणात्। न ह्यत्र टाप् सुपः परः, केन व्यवधानात्। अस्तु वा शेषषष्ठ्या समासः। एवमपि न टाप् सुपः परः, शेषत्वविवक्षायामपि वस्तुतः कारकतया सुबुत्पत्तेः प्रागेव शेषषष्ठ्या समासप्रवृत्तेः। अत एव प्रकृतसूत्रे 'उपपदमतिङ्' इति सूत्रे च भाष्ये कुम्भकारपदे सुबुत्पत्तेः प्रागेव कुम्भस्येति शेषषष्ठ्या समास उपन्यस्तः संगच्छत इति शब्देन्दुशेखरे प्रपञ्चितम्। **सूर्याद्देवतायामिति**। देवताभूतायां स्त्रियां पुंयोगाद्वर्तमानात् सूर्यशब्दात् 'चाप्' वक्तव्य इत्यर्थः।

---

इत्यनेन गौणी वृत्तिरुक्ता। यदा तु मुख्यार्थात् 'तस्येदम्' इत्यण् तदा गोपीत्येव भवति। योगः—संबन्धः। स चेह दम्पतिभाव एवेति नाग्रहः, किन्तु जन्यजनकभावोऽपि गृह्यते, संकोचे मानाभावात्। तेन 'कौसल्ययाऽसावि सुखेन रामः प्राक्केकयीतो भरतस्ततोऽभूत्' इति भट्टिप्रयोगः संगच्छते। केकयस्य दुहिता केकयी। 'जनपदशब्दात्क्षत्रियादञ्' इत्यपत्यप्रत्यये तु कैकयीति स्यात्। न चेह 'अतश्च' इति तद्राजाकारस्य लुक

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

देवता सूर्या । देवतायां किम्—सूरी कुन्ती, मानुषीयम् । ५०५ इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक् । (४-१-४६) एषामानुगागमः स्यान्ङीष् च । इन्द्रादीनां षण्णां मातुलाचार्ययोश्च पुंयोग एवेष्यते, तत्र ङीषि सिद्धे आनुगागममात्रं विधीयते । इतरेषां चतुर्णामुभयम् । इन्द्राणी ।

'पुंयोगात्–' इति ङीषोऽपवादः । चपावितौ । **सूर्येति** । चापि सवर्णदीर्घः । **देवतायां किमिति** । सूर्यस्त्रियां देवतात्वाव्यभिचारात् प्रश्नः । **सूरी कुन्तीति** । ङीषि 'सूर्यतिष्य–' इति यकारलोपः, 'यस्येति च' इत्यकारलोपः । **मानुषीयमिति** । इयं कुन्ती मानुषी, न तु देवतेत्यर्थः । एतच्च[1] महाभारतादौ स्पष्टम् । न च 'सूर्याद्देवतायां न' इत्येवोच्यताम्, ङीषि निषिद्धे टापैव सूर्येति सिद्धेरिति वाच्यम्, टापि हि सति पित्त्वादनुदात्तत्वम् 'अनुदात्तौ सुप्पित्तौ' इत्युक्तेः । चापि तु 'चितः' इत्यन्तोदात्तत्वमिति भेदः । **इन्द्रवरुण । आनुगागम इति** । कित्त्वादागमलिङ्गादिति भावः । **ङीष् चेति** । 'अन्यतो ङीष्' इत्यतस्तदनुवृत्तेरिति भावः । **पुंयोग एवेष्यत इति** । पुंयोगादित्यनुवृत्तेः, तेषां स्त्रीत्वे पुंयोगं विना अप्रवृत्तेश्चेति भावः । नन्वेवं पुंयोगादित्येव सिद्धे ङीष्विधिर्व्यर्थ इत्यत आह—**तत्रेति** । तत्र इन्द्रादिषु षट्सु मातुलाचार्ययोश्च पुंयोगादित्येव ङीषि सिद्धे तत्संनियोगेन आनुगागममात्रं विधीयत इत्यर्थः । **इतरेषामिति** । हिमारण्ययवयवनानां तु आनुक्, ङीष् चेत्युभयं विधीयते, तत्र पुंयोगस्यासंभवादिति भावः । **इन्द्राणीति** । आनुकि ककार इत्, उकार उच्चारणार्थः, कित्त्वाशङ्क्यः, 'न प्राच्यभर्गादि–' इति प्रतिषेधात् । तथा च कालिदासः—'कैकेयि कामाः फलितास्तव' इति । एतेन देवकी व्याख्याता । पुंयोगात् किम्, देवदत्ता । अयं हि संज्ञाशब्दः स्वभावात् स्त्रियमाह, न तु पुंवाचकशब्दयोगात् । आख्यायां किम्, प्रसूता । अयं हि जातप्रसवामाह । स च प्रसवो गर्भधारणद्वारा पुंयोगनिमित्तक इत्यस्तीह पुंयोगः, किन्तु नायं पुंसो वाचक इति न ङीष् । **सूर्याद्देवतायामिति** । ङीषोऽपवादः । **सूरीति** । 'सूर्यतिष्य–' इति यलोपः । **आनुगिति** । ननु ह्रस्वादिरेव लाघवादनुग्वक्तव्यः किमनेन दीर्घोच्चारणेन, अत्राहुः—अनुकि कृते 'अतो गुणे' इति पररूपं स्यात् । न चाकारोच्चारणसामर्थ्याद्दीर्घो भविष्यति, अन्यथा हि नुकमेव कुर्यादिति वाच्यम्, 'अल्लोपोऽनः' इत्यस्य बाधेन चरितार्थत्वात् । 'पत्युर्नः' इतिवदादेशे कर्तव्ये आगमलिङ्गककारोच्चारणसामर्थ्यादेवाल्लोपो न भविष्यतीति चेन्न, शर्वशब्दे ककारस्य चारितार्थ्यात् । न हि तत्र लोपोऽस्ति 'न संयोगात्–' इति निषेधात् । तस्मात् ककाराकारयोः सामर्थ्यविरहे पररूपबाधनार्थं दीर्घोच्चारणमावश्यक-

१ 'तच्च' क ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

हिमारण्ययोर्महत्त्वे' (वा २४७२)। महद्धिमं हिमानी। महदरण्यम् अरण्यानी। 'यवाद्दोषे' (वा २४७३)। दुष्टो यवो यवानी। 'यवनाल्लिप्याम्'(वा२४७४)। यवनानां लिपिर्यवनानी। मातुलोपाध्याययोरानुग्वा। मातुलानी, मातुली। उपाध्यायानी,

---

दन्तावयवः, सवर्णदीर्घः, णत्वमिति भावः। वरुणानी, भवानी, शर्वाणी, रुद्राणी, मृडानी इत्युदाहरणानि सुगमत्वादुपेक्षितानि। दीर्घोच्चारणं विना अनुग्विधौ तु पररूपापत्तिः, अकारोच्चारणस्य अल्लोपनिवृत्त्या चरितार्थत्वात्। नुग्विधौ तु अल्लोपापत्तिरित्यन्यत्र विस्तरः। **हिमारण्ययोर्महत्त्वे**-इति वार्तिकम्। महत्त्वविशिष्टे हिमे अरण्ये च वर्तमानयोरानुङ् (ग्) ङीषावित्यर्थः। **महद्धिमं हिमानीति**। महत्त्वयोगे स्त्रीत्वमत एव ज्ञेयम्। **अरण्यानीति**। महदरण्यमित्यर्थः। **यवाद्दोषे**। इति वार्तिकम्। आनुङ्ङीषाविति शेषः। दुष्टयवे वृत्तौ स्त्रीत्वमत एव ज्ञेयम्। **यवनाल्लिप्याम्**। इत्यपि वार्तिकम्। लिपिरक्षरविन्यासः। तत्र लक्षणया वृत्तौ आनुङ्ङीषावित्यर्थः। **मातुलोपाध्याययोरानुग्वेति**। इदमपि वार्तिकम्। अत्र पुंयोगादिति सम्बध्यते, हिमादिष्विवात्र असम्भवाभावात्। अत्र आनुगेव तु विकल्प्यते, आनुगभावेऽपि पक्षे ङीष् भवत्येव। मातुलाण्णित्यं प्राप्ते उपाध्यायादप्राप्ते विभाषेयम्। **मातुलानी, मातु-**

---

मिति। केचित्तु नुकि कृते लाक्षणिकत्वाद् 'अल्लोपोऽनः' इत्यस्याप्रवृत्त्या सवर्णदीर्घ एव अनुकि कृते भविष्यत्यकारोच्चारणसामर्थ्यात्। एवं सत्यानुगिति दीर्घोच्चारणसामर्थ्याद् आ अनुगिति पदं विभज्यते। तत्रेन्द्रादीनामनुकैव सिद्धे आकारादेशविधानसामर्थ्यात्क्वचिदन्यतोऽपि विधानमनुमीयते, तेन ब्रह्मणः स्त्री ब्रह्माणीति सिध्यतीत्याहुः। अत्र नव्याः—अस्तूक्तरीत्या दीर्घोच्चारणमन्यतोऽपि विधानार्थमेव, परन्तु आ अनुगिति पदं विभज्य नकारस्याकारादेशे कृते दीर्घग्रहणसामर्थ्यादनजन्तस्याप्यनुकि कृते ब्रह्माणीति सिध्यतीति न व्याख्येयम्। उभयविधौ वाक्यभेदापत्तेः। किन्तु इन्द्रमाचक्षाण इन्द्रः 'तत्करोति तदाचष्टे' इति णयन्तात्क्विप्, तस्य स्त्री इन्द्राणीति सिध्यतीत्येवेति व्याख्येयम्। दीर्घोच्चारणसामर्थ्याद् 'अतः' इत्यधिकारोऽनुपसर्जनाधिकारश्च बाध्यत इति सुवचत्वात्। न चोभयबाधाभ्युपगमापेक्षयाऽत इत्यधिकारबाधमात्राभ्युपगमेन ब्रह्मणः स्त्री ब्रह्माणीति रूपसिद्धये आकारादेशोऽनुक् च भवतीत्येव व्याख्यायतामिति वाच्यम्, वाक्यभेदापत्त्यपेक्षया उभयबाधनगौरवस्य सुसहत्वात्। एवं च ब्रह्माणमानयति जीवयतीत्यादिवक्ष्यमाणग्रन्थोऽपि स्वरसतः संगच्छत इत्याहुः। **हिमानीति**। महत्त्वयोगे हिमारण्ययोः स्त्रीत्वम्। **दुष्टो यवो यवानीति**। जात्यन्तर-

---

१ नास्ति क। बालमनोरमास्वरसोऽप्येवम्। अन्यत्र पुस्तकेषु तु पाठोऽयमुपलभ्यत एव।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उपाध्यायी। 'या तु स्वयमेवाध्यापिका तत्र वा ङीष् वाच्यः'। उपाध्यायी, उपाध्याया। 'आचार्यादणत्वं च' (वा २४७७)। आचार्यस्य स्त्री आचार्यानी। पुंयोग इत्येव, आचार्या, स्वयं व्याख्यात्री। 'अर्यक्षत्रियाभ्यां वा स्वार्थे' (वा

---

लीति। मातुलस्य स्त्रीत्यर्थः। **उपाध्यायानी, उपाध्यायीति**। उपाध्यायस्य स्त्रीत्यर्थः। **या तु स्वयमेवेति**। इदं तु वार्तिकं तृतीयस्य तृतीये 'इङश्च' इति सूत्रे पठितम्। या स्वयमेवाध्यापयति, न तूपाध्यायस्य स्त्री, तत्र पुंयोगाभावेऽपि केवलङीष्विकल्पो वाच्य इत्यर्थः। 'युगान्तरे ब्रह्मवादिन्यः स्त्रियः सन्ति' तद्विषयमिदम्,

'पुरा युगेषु नारीणां मौञ्जीबन्धनमिष्यते।
अध्यापनं च वेदानां सावित्रीवचनं तथा॥'

इति स्मरणात्। **आचार्यादणत्वं च**। इत्यपि वार्तिकम्। चकार आनुक्ङीषोः समुच्चयार्थः। **आचार्यानीति**। आचार्यस्य स्त्रीत्यर्थः। 'अट्कुप्वाङ्—' इति णत्वं न भवति।

'उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः।
सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते॥'
'एकदेशमुपाध्यायः' इति स्मृतिः।

**पुंयोग इत्येवेति**। पुंयोगग्रहणमनुवर्तत एवेत्यर्थः। तत्प्रयोजनमाह—**आचार्येति**। अत्र पुंयोगाभावं विशदयति—**स्वयं व्याख्यात्रीति**। धर्मोपदेष्ट्रीत्यर्थः। 'यस्माद्धर्मानाचिनोति स आचार्यः' इति स्मरणादिति भावः। **अर्यक्षत्रियाभ्यां वा**। इति वार्तिकम्। आनुक्ङीषाविति शेषः। स्वार्थे इति व्याख्यानलभ्यम्, तेन पुंयोगनिरासः। अत एव भाष्ये 'अर्याणी, अर्या' इत्येवोक्तम्। पुंयोग एव प्रवृत्तौ तु उपाध्यायीतिवद् अर्यीति ङीषमेवोदाहरेत्। अर्यशब्दं व्याचष्टे—**स्वामिनी, वैश्या वेत्यर्थ इति**। 'अर्यः स्वामिवैश्ययोः' इति निपातनादिति भावः। **क्षत्रियाणी, क्षत्रियेति**। क्षत्रियात् क्षत्रियायां भार्यायामुत्पन्नेत्यर्थः। 'सवर्णेभ्यः सवर्णासु

---

मेवानेनाभिधीयते। अयमेव चास्य दोषो यस्माद्धि यवनजातेरभावेऽपि तदाकारानुकृतिः। **यवनानीति**। 'तस्येदम्' इत्यणो बाधको ङीष्। **वा ङीष्वाच्य इति**। इदं च 'इङश्च' इति घञ्विधायकसूत्रस्थं वार्तिकम्। वक्ष्यति च तत्र 'अपादाने स्त्रियामुपसंख्यानं तदन्ताच्च वा ङीष्' इति। **उपाध्यायी, उपाध्यायेति**। उपेत्य अस्या अधीयत इति विग्रहः। **स्वार्थ इति**। यदि तु पुंयोग एवायं विधिः स्यात् शूद्रापि क्षत्रियस्य भार्या क्षत्रियाणी स्यात्। ब्राह्मणभार्या च क्षत्रिया क्षत्रियाणी न स्यादिति भावः। **वैश्या वेत्यर्थ इति**। 'अर्यः स्वामिवैश्ययोः' इत्यर्थद्वये निपातनादिति भावः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यद्वा विद्यमानवचनस्य सहशब्दस्य ऊर्वतिशयप्रतिपादनाय प्रयोगः। ५२६ संज्ञायाम्। (४-१-७२) कद्रुकमण्डल्वोः संज्ञायां स्त्रियामूङ् स्यात्। कद्रूः। कमण्डलूः। संज्ञायां किम्—कद्रुः। कमण्डलुः। अच्छन्दोर्थं वचनम्। ५२७ शार्ङ्गरवाद्यञो ङीन्। (४-१-७३) शार्ङ्गरवादेरञो योऽकारस्तदन्ताच्च जातिवाचिनो ङीन्स्यात्। शार्ङ्गरवी। बैदी। 'जातेः' इत्यनुवृत्तेः पुंयोगे ङीषेव। नृनर-

---

लिकमर्दनमिति शेषः। विद्यमानवचनत्वेऽपि सहशब्दस्य न वैयर्थ्यमित्याह—यद्वेति। अतिशयेन विद्यमानत्वं विवक्षितमिति न वैयर्थ्यमिति भावः। **संज्ञायाम्**। 'कद्रुकमण्डल्वोः' इति, 'ऊङ्' इति चानुवर्तते, स्त्रियामित्यधिकृतम्। तदाह—**कद्रुकमण्डल्वोः संज्ञायां स्त्रियामूङ् स्यादिति**। **अच्छन्दोऽर्थमिति**। पूर्वसूत्रे छन्दसीत्युक्तत्वाद् लोके संज्ञायामप्राप्तौ अयमारम्भः। कद्रूरिति नागानां मातुः संज्ञा। एतच्च महाभारतादौ स्पष्टम्। कमण्डलूरिति कस्यचिन्मृगस्य संज्ञा, अत एव 'चतुष्पाद्भ्यो ढञ्' इत्यत्र कामण्डलेय इत्युदाहरिष्यते। पात्रपर्यायस्तु नोदाहरणम्, तस्य स्त्रीलिङ्गत्वाभावात्। **शार्ङ्गरवाद्यञो ङीन्**। शार्ङ्गरवादीति लुप्तपञ्चमीकम्। अञ इति षष्ठी। अत इत्यनुवृत्तं पञ्चम्यन्ते अन्वेति। जातेरित्यनुवृत्तमता विशेष्यते। तदन्तविधिः। तदाह—**शार्ङ्गरवादेरित्यादिना**। **शार्ङ्गरवीति**। शृङ्गरोरपत्यं स्त्रीत्यर्थे अण्, आदिवृद्धिः, रपरत्वम्, ओर्गुणः। 'गोत्रं च चरणैः सह' इति जातित्वाद् ङीषि प्राप्ते ङीन्। स्वरे विशेषः। **बैदीति**। विदस्यापत्यं स्त्रीत्यर्थः। 'अनृष्यानन्तर्ये

---

ग्रहणादेव तत्सिद्धेरिति भावः। **कमण्डलुरिति**। चतुष्पाज्जातिवाचकोऽयम्। अत एव 'चतुष्पाद्भ्यो ढञ्' इत्यत्र कामण्डलेय इत्युदाहरिष्यते। पात्रपर्यायस्तु न प्रत्युदाहरणम्, तस्य स्त्रीलिङ्गाभावात्। **अच्छन्दोर्थमिति**। वेदे तु 'कद्रुकमण्डल्वोश्छन्दसि' इत्यनेन संज्ञायामसंज्ञायां चोङ् सिध्यतीति भावः। **अञो योऽकार इति**। अञा अकारविशेषणं किम्, शूरसेनी। 'जनपदशब्दात्—' इत्यञः 'अतश्च' इति लुकि जातिलक्षणोत्र ङीष्। **शार्ङ्गरवीति**। शृङ्गरुशब्दादपत्येण्, आदिवृद्धिः, ओर्गुणः, 'टिड्ढाणञ्—' इति ङीपं बाधित्वा परत्वाद् 'जातेः—' इति ङीषि प्राप्ते ङीन् विधीयते। तेन नित्त्वादाद्युदात्तः। ङीषि तु प्रत्ययस्वरेणान्तोदात्तः स्यात्। **बैदीति**। विदस्यापत्यं स्त्री 'अनृष्यानन्तर्ये विदादिभ्योऽञ्'। पूर्ववज्जातिलक्षणे ङीषि प्राप्ते ङीन् विधीयते। शार्ङ्गरव कापटव ब्राह्मण गौग्गुलव गौतम इत्यादि। शृङ्गरु कपटु ब्रह्मन्—गुग्गुलुशब्देभ्यः प्राग्दीव्यतोऽण्। गौतमशब्द ऋष्यणन्तः। अयं गौरादिष्वपि पठित इति पक्षे अत्र ङीषपि भवति। **ङीषेवेति**। जातेरित्यननुवृत्तौ तु शार्ङ्गरवस्य स्त्री बिदस्य स्त्रीति पुंयोगविवक्षायामपि परत्वान्ङीनेव स्यादिति भावः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

योर्वृद्धिश्च' (ग २४) इति गणसूत्रम्। नारी। ५२८ यङश्चाप्। (४-१-७४)

---

बिदादिभ्योऽञ्'। गोत्रत्वेन जातित्वाद् ङीषि प्राप्ते ङीन्। अञा अकारस्य विशेषणा-न्नेह—शूरसेनी। 'जनपदशब्दात्–' इत्यपत्ये अञ्। 'अतश्च' इति तस्य लुक्। अत्र जातिलक्षणङीषेव, न तु ङीन्। अञो लुप्तत्वेन नकारादकारस्य अञोऽवयवत्वाभावात्। **नृनरयोर्वृद्धिश्चेति**। चकाराद् ङीन्। **नारीति**। नृनरशब्दयोरुदाहरणम्। तत्र नृशब्दाद् 'ऋन्नेभ्यः–' इति ङीपि प्राप्ते ङीन्, ऋकारस्य वृद्धिः, रपरत्वम्। जाति-लक्षणङीषस्तु नृशब्दान्न प्रसक्तिः, तत्र अत इत्यनुवृत्तेः। नरशब्दात्तु ङीनि नकारा-दकारस्य वृद्धिः। ननु परमपि 'यस्येति च' इति लोपं बाधित्वा अन्तरङ्गत्वादलोऽन्त्य-परिभाषया रेफादकारस्य वृद्धिः स्यात्। न च कृतायामपि वृद्धौ 'यस्येति च' इत्यकार-लोपः स्यादिति वाच्यम्, वृद्धिविधिसामर्थ्यादेव तस्य लोपाभावसिद्धेरिति चेदुच्यते–नृनरयोरित्यत्र नर् इति रेफान्तस्य लुप्ताकारस्यानुकरणम्। नरः अः नरः, ना च नरश्च नृनरौ, तयोरिति विग्रहः। नचैवमपि वानरीशब्दे अतिप्रसङ्ग इति वाच्यम्, अर्थवत एव ग्रहणात्। न च नृशब्दाद् ङीनि वृद्धौ नारीति सिद्धेर्नरग्रहणं व्यर्थमिति वाच्यम्, नरत्वजातिवाचिनो नरशब्दात् स्त्रियां जातिलक्षणङीषि नारीति व्यावृत्त्यर्थ-त्वात्। वस्तुतस्तु 'नृनरयोर्वृद्धिश्च' इति गणसूत्रं नारब्धव्यमेव, 'तदस्य धर्म्यम्' इत्यनुवृत्तौ 'ऋतोऽञ्' इति सूत्रेण 'नरस्य चेति वक्तव्यम्' इति वार्तिकेन च नुर्धर्म्या नरस्य धर्म्येत्यर्थे नृशब्दान्नरशब्दाच्च अञि, ततः 'टिड्ढाणञ्–' इति ङीपि नारीति सिद्धेः। 'ञ्नित्यादिर्नित्यम्' इति प्रकृतेराद्युदात्तत्वे ङीपः पित्त्वादनुदात्तत्वम्। ङीन्यपि नित्स्वरेण प्रकृतेरुदात्तत्वमिति स्वरे विशेषाभावात्। नचैवं सति मनुष्यधर्म्यत्वेनैव बोधः स्यात्, न तु नरत्वेनेति वाच्यम्, योग्यतया हि नरत्वजातिविशिष्टैव बुध्यते। अत एव वास्तुनि भवो वास्तव्य इति रूपस्य 'दिगादिभ्यो यत्' इति भवार्थकतया सिद्धत्वाद् 'वसेस्तव्यत्कर्तरि णिच्च' इति वचनं न कर्तव्यमिति भाष्यं संगच्छते। रूढानां यथाकथंचिदन्वाख्यानमिति कैयट इति शब्देन्दुशेखरे स्थितम्। **यङश्चाप्**।

---

**नृनरयोरिति**। नृशब्दाद् 'ऋन्नेभ्यः–' इति ङीपि नरशब्दाज्जातिलक्षणे ङीषि प्राप्ते वचनं वृद्धिविधानार्थम्। ननु नरशब्दे 'अलोऽन्त्यस्य' इति वृद्धिः स्यात्। अत्राहुः—'वार्णादाङ्गं बलीयः' इत्यकारस्य 'यस्येति च' इति लोपेनापहाराद् अनन्त्यस्याप्यकारस्य वृद्धिर्भवतीति। यद्वा नरस्य अः नरः। कतन्तवत् पररूपम्। ना च नरश्च तयोर्नृन-रयोः। परस्य च प्रथम एवाकारो गृह्यते न तु द्वितीयः, प्रश्लेषसामर्थ्यादिति। इह नरस्येत्यर्थवतो ग्रहणाद्वानरशब्दे नातिप्रसङ्ग इति बोध्यम्। यद्यप्यन्यतरोपादानेनापि नारीति रूपं सिध्यति, तथाप्यन्यतरस्यानिष्टरूपनिवृत्त्यर्थं द्वयोरुपादानम्। कथं तर्हि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

यङन्तात्स्त्रियां चाप्स्यात्। यङिति ष्यङ्ष्यङोः सामान्यग्रहणम्। आम्बष्ठ्या। कारीषगन्ध्या। 'षाद्यञश्चाब्वाच्यः' (वा २५०५)। शार्कराद्या। पौतिमाष्या।

---

पकारो 'हल्ङ्याब्भ्यः–' इत्यत्र ग्रहणार्थः। चकारः 'चितः' इत्यन्तोदात्तार्थः। **सामान्येति**। यङ्रूपस्य उभयत्रापि सत्त्वादिति भावः। ष्यङमुदाहरति—**आम्बष्ठ्येति**। अम्बष्ठस्यापत्यं स्त्रीत्यर्थः। 'वृद्धेत्कोसल–' इति ञ्यङ्। आम्बष्ठ्यशब्दाच्चाप्[1]। ष्यङमुदाहरति—**कारीषगन्ध्येति**। करीषं गवादिपशुपुरीषम्, तस्येव गन्धो यस्य स करीषगन्धिः। 'उपमानाच्च' इति गन्धस्य इकारोऽन्तादेशः। करीषगन्धेः गोत्रापत्यं स्त्री इत्यर्थे अण्प्रत्ययः, 'अणिञोरनार्षयोः–' इति तस्य ष्यङादेशः। **षाद्यञ इति**। षकारात् परो यो यञ् तदन्तादपि चावित्यर्थः। **शार्कराद्येति**। शर्करायास्यापत्यं स्त्रीत्यर्थः। **पौतिमाष्येति**। पूतिमाषस्यापत्यं स्त्रीत्यर्थः। 'गर्गादिभ्यो यञ्' इत्युभयत्र

---

'किंनरीणां नरीणाम्' इत्यादिप्रयोगः। अत्राहुः—नरस्य स्त्री नरी। पुंयोगलक्षणो ङीष्। एवं च किंनरीत्यपि सिद्धम्, किंचिन्नरीति विग्रहादिति। केचित्तु अनिर्दिष्टस्थानिकत्वादिकपरिभाषोपस्थितौ नृशब्दस्यैव वृद्धेर्नारीति भवति, नरशब्दस्य ग्रहणं तु ङीनर्थमेव, तत्रानिको वृद्ध्यभावान्नरीत्येव भवितव्यमित्याहुः। तदपरे न क्षमन्ते। यदि ङीनर्थमेव नरशब्दग्रहणं स्यात्तर्हि शार्ङ्गरवादिगणे पृथगेव पठेत्, वृद्धिविधायके तद्गणसूत्रे तत्पाठस्य वैयर्थ्यापत्तेरिति। पुत्रशब्दोऽत्र गणे पठ्यते, ततः स्त्रियां ङीन्, पुत्री। न च पुत्रशब्दः कन्यायां नास्तीति शङ्क्यम्, 'आत्मजस्तनयः सूनुः सुतः पुत्रः स्त्रियां त्वमी। आहुर्दुहितरं सर्वे' इत्यमरोक्तेः। तेन 'पुत्रीव हर्षं हृदये तनोति'। 'कुर्वे तदुर्वीपतिपुत्रि सर्वम्' इत्यादिप्रयोगा निर्बाधा एव। यत्त्वत्र हरदत्तेनोक्तम्—केवलः पुत्रशब्दः स्त्रियां नास्तीति। तदुपेक्ष्यम्, उदाहृतकोशविरोधात्। 'सूतकापुत्रिका–' इत्यत्र स्वग्रन्थविरोधाच्च। एवं च 'सूतोग्रराजभोजकुलमेरुभ्यो दुहितुः पुत्रड्वा' इति 'कारे सत्यागदस्य' इति सूत्रस्थवार्तिकं व्यर्थमिति मनोरमायां स्थितम्। **यङश्चाप्**। पकारोऽत्र 'हल्ङ्याप्–' इति सामान्यग्रहणार्थः। चकारस्तदविघातेन चरितार्थत्वेऽपि परत्वाच्चित्स्वरः पित्स्वरं बाधते। **आम्बष्ठ्येति**। आम्बष्ठस्यापत्यं स्त्री 'वृद्धेत्कोसला–' इति ञ्यङ्। **कारीषगन्ध्येति**। करीषस्येव गन्धोऽस्य करीषगन्धिः। 'उपमानाच्च–' इति गन्धस्येदन्तादेशः। तस्य गोत्रापत्यं स्त्री अण्। 'अणिञोरनार्षयोः–' इति ष्यङादेशः। स च यद्यपि स्त्रियामेव विहितस्तथापि ङित्करणसामर्थ्यात्तदन्तादप्ययं चाप्। **षाद्यञ इति**। एतच्च 'आवट्याच्च' इति

---

१ एतदनन्तरम् 'गोत्रत्वेन जातित्वाद् ङीषि प्राप्ते चाप्' इत्यधिकं क पुस्तके।

२ अत्रापि 'कारीषगन्ध्यशब्दाद् गोत्रत्वेन जातित्वाद् ङीषि प्राप्ते चाप्' इत्यधिकं क पुस्तके।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

**५२९ आवट्याच्च ।** ( ४-१-७५) अस्माच्चाप्स्यात् । 'यञश्च' (सू ४७१) इति ङीपोऽपवादः । अवटशब्दो गर्गादिः, आवट्या । **५३० तद्धिताः ।** (४-१-७६) आ पञ्चमसमाप्तेरधिकारोऽयम् । **५३१ यूनस्तिः ।** (४-१-७७) युवन्शब्दात्ति-प्रत्ययः स्यात्, स च तद्धितः । लिङ्गविशिष्टपरिभाषया सिद्धे तद्धिताधिकार उत्तरार्थः । युवतिः । अनुपसर्जनादित्येव । बहवो युवानो यस्यां सा बहुयुवा ।

---

यञ् । **आवट्याच्च** । ननु कथमवटशब्दस्यापत्यमित्यर्थे यञन्तत्वमित्यत आह— **अवटशब्द इति । आवट्येति** । अवटस्यापत्यं स्त्रीत्यर्थः । गर्गादियञि 'यस्येति च' इत्यकारलोपे आदिवृद्धौ आवट्यशब्दात् चाप् । **तद्धिताः** । वक्ष्यमाणाः प्रत्ययाः तद्धितसंज्ञकाः प्रत्येतव्या इत्यर्थः । अधिकारसूत्रमेतत् । उत्तरावधिमाह—**आपञ्च-मेति । यूनस्तिः** । 'तद्धिताः' इत्यनुवृत्तमेकवचनेन विपरिणम्यते, तदाह—**युव-न्शब्दात् तिप्रत्ययः स्यात् स च तद्धित इति** । स्त्रियामिति शेषः । 'समर्था-नाम्–' इत्यतः प्राक् तदधिकारस्योक्तत्वादिति भावः । नान्तलक्षणङीपोऽपवादः । नन्वत्र तद्धितग्रहणानुवृत्तिर्व्यर्था, न च 'कृत्तद्धित–' इति प्रातिपदिकार्थे तदनुवृत्तिरिति वाच्यम्, प्रातिपदिकत्वाभावेऽपि लिङ्गविशिष्टपरिभाषया तिप्रत्ययान्तात् सुबुत्पत्तिसिद्धेरित्यत आह—**लिङ्गविशिष्टस्येति । युवतिरिति** । स्वादिष्विति पदत्वाद् 'नलोप–' इति नकारलोपः । **अनुपसर्जनादित्येवेति** । अनुवर्तत एवेत्यर्थः । **बहुयुवेति** । उप-सर्जनत्वात्तिप्रत्ययाभावे नान्तलक्षणङीपः 'अनो बहुव्रीहेः' इति निषेधे 'डाबुभाभ्याम्–' इति डापि च रूपम् । ननु 'युवतीभिः परिवृतः' इत्यादौ कथं युवतीशब्द ईकारान्त

---

चकारस्यानुक्तसमुच्चयार्थत्वाल्लभ्यत इत्याहुः । **पौतिमाष्येति** । पूतिमाषशब्दो गर्गादिः । **तद्धिताः** । बहुवचनमनुक्तानामुपसंख्येयानां संग्रहार्थम् । महासंज्ञाकरणं तु तेभ्यः प्रयोगेभ्यो हितास्तद्धिता इत्यन्वर्थलाभाय । तेन यथाप्रयोगमेव स्युः । ननु टापः प्रागे-वायमधिकारोऽस्तु, ष्फविधौ तद्धितग्रहणं 'यस्येति–' लोपे ईद्ग्रहणं च मास्त्विति चेन्मैवम् । पट्वी मृद्वीत्यादावोर्गुणप्रसङ्गात् । यदि तु 'यस्येति च' इत्यत्र ईद्ग्रहणमेव ङीषि तद्धितकार्याभावं ज्ञापयतीति स्वीक्रियेत, तर्हि टापः प्राक् तद्धिताधिकारेऽपि न कश्चिद्दोष इति केचित् । तच्चिन्त्यम्, कुरूरित्यादौ ओर्गुणादिप्रसङ्गादिति नव्याः । **यूनस्तिः** । 'ऋन्नेभ्यः–' इति ङीपोऽपवादः । **युवतिरिति** । 'स्वादिषु–' इति पदत्वान्नलोपः । कथं तर्हि 'युवतीकरनिर्मथितम्' इति प्रयोगः । अत्र केचित्—'सर्व-तोऽक्तिन्नर्थात्' इति बह्वादिगणसूत्राद्वैकल्पिकोऽत्र ङीष् । न च तिप्रत्ययेनैव स्त्रीत्वस्यो-क्तत्वान्ङीष् न भविष्यतीति शङ्क्यम्, 'उक्तेऽपि भवन्त्येते' इति भाष्यात् । न चैवमपि युवतीनां समूहो यौवतमिति न सिध्येत् । किं तु 'तस्य समूहः' इत्यणि 'भस्याढे तद्धिते'

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

युवतीति तु यौतेः शत्रन्तान्ङीपि बोध्यम्।

॥ इति स्त्रीप्रत्ययप्रकरणम् ॥



---

इत्यत आह—**युवतीति त्विति**। 'यु मिश्रणे' इत्यस्माल्लटः शतरि, शपो लुकि, उवङि, उगित्त्वान्ङीपि युवतीशब्दो व्युत्पन्नो बोध्य इत्यर्थः। पतिं सुखेन मिश्रयन्ती योषिदुच्यते। अन्ये तु युधातोरौणादिके बाहुलकात् कतुप्रत्यये कित्त्वाद् गुणाभावे उवङि उगित्त्वाद् ङीपि युवतीशब्दः सिध्यतीत्याहुः।

इति श्रीमद्वासुदेवदीक्षितविदुषा विरचितायां सिद्धान्तकौमुदीव्याख्यायां-
बालमनोरमाख्यायां स्त्रीप्रत्ययनिरूपणं समाप्तम् ॥



---

इति पुंवद्भावेन यौवनमित्येव स्यादिति वाच्यम्। बाहुलकाद्यौतेरौणादिके कतिप्रत्यये सति युवतिशब्दस्तमादाय तत्सिद्धेरिति। इमं क्लेशं परिहरन्नाह—**शत्रन्तादिति**। यौति मिश्रीकरोति पत्येति विग्रहे 'लटः शतृशानचौ–' इति शतरि 'उगितश्च' इति ङीप्, एवं हि यौवतमिति प्रयोगोऽपि सुलभः। त्यन्तादणि तु पुंवद्भावाद्यौवनमित्येव। भिक्षादिपाठसामर्थ्यान्न पुंवदिति वृत्तिकारोक्तिरयुक्तेति 'भिक्षादिभ्योऽण्' इत्यत्रैवोपपादयिष्यामः।

॥ इति स्त्रीप्रत्ययप्रकरणम् ॥



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# अथ कारकप्रकरणम् ।१६।

**५५२ प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा। (२-३-४६)**

नियतोपस्थितिकः प्रातिपदिकार्थः । मात्रशब्दस्य प्रत्येकं योगः । प्रातिपदिकार्थमात्रे

---

**अथ कारकप्रकरणप्रारम्भः**। तदेवम् 'ङ्याप्प्रातिपदिकात्' इत्यधिकृत्य विहिताः स्वादिप्रत्ययाः सप्रपञ्चं निरूपिताः । तत्र प्रथमादिसप्तम्यन्तसप्तविभक्तीनामर्थविशेषव्यवस्थां दर्शयितुमुपक्रमते—**प्रातिपदिकार्थ** । ननु प्रवृत्तिनिमित्तं व्यक्तिश्चेति द्विकं प्रातिपदिकार्थः, प्रवृत्तिनिमित्तं व्यक्तिः लिङ्गं चेति त्रिकं प्रातिपदिकार्थः, प्रवृत्तिनिमित्तं व्यक्तिः लिङ्गं संख्या चेति चतुष्कं प्रातिपदिकार्थः, प्रवृत्तिनिमित्तं व्यक्तिः लिङ्गं संख्या कारकं चेति पञ्चकं प्रातिपदिकार्थः, इत्येते पक्षाः 'सरूपाणामेकशेष 'एकविभक्तौ' 'स्त्रियाम्' इत्यादिसूत्रेषु भाष्ये स्थिता मञ्जूषायां प्रपञ्चिताश्च । तत्र त्रिकादिपक्षेषु लिङ्गस्यापि प्रातिपदिकार्थत्वात् पृथग्ग्रहणं व्यर्थमित्यत आह— **नियतेति** । नियता उपस्थितिर्यस्येति विग्रहः । यस्मिन् प्रातिपदिके उच्चारिते यस्यार्थस्य नियमेनोपस्थितिः स तदर्थ इत्यर्थः । एवं च तटः तटी तटम् इत्याद्यनियतलिङ्गेषु नियमेन कस्यापि लिङ्गस्योपस्थित्यभावात् प्रातिपदिकार्थशब्देनाग्रहणात् पृथग् लिङ्गग्रहणमावश्यकमिति भावः। मात्रशब्दस्य वचनशब्देनैवान्वयभ्रमं वारयति—**मात्रशब्दस्येति**। प्रातिपदिकार्थश्च

---

'स्वौजसमौट्—' इत्यादिना तावत् स्वादयो ङ्याप्प्रातिपदिकाद्दर्शिताः, तेषामर्थविशेषे व्यवस्थां दर्शयितुमारभते—**प्रातिपदिकार्थेत्यादिना** । प्रथमादयः सप्तम्यन्ताः प्राचां संज्ञास्ताभिरिहापि व्यवहार इति 'स्वौजसमौट्—' इति सूत्रे मूलकृतोक्तम् । कौस्तुभे तु—इह प्रथमादयः शब्दाः सुपां त्रिकेषु वर्तन्ते 'समं स्यादश्रुतत्वात्' इति न्यायाद्—इत्युक्तम्। तथा च न्यायसिद्धत्वादस्मिन् शास्त्रे प्रथमादिसंज्ञानामकरणेऽपि न क्षतिरिति ज्ञेयम् । यदा हि 'पञ्चकं प्रातिपदिकार्थः' इति गृह्येत ततो लिङ्गवचनग्रहणमनर्थकम्, 'प्रातिपदिकार्थे' इत्येव सिद्धेः, मात्रग्रहणाच्च कर्मादिव्यवच्छेदो न स्यात्, प्रातिपदिकार्थादनतिरिक्तत्वात्, त्रिकपक्षेऽपि लिङ्गग्रहणमनर्थकमेवेत्याशङ्क्य विवक्षितं दर्शयति—**नियतोपस्थितिक इति** । यस्मिन्प्रातिपदिके उच्चारिते यस्यार्थस्य नियमेनोपस्थितिः स प्रातिपदिकार्थ इत्यर्थः, शक्य इति यावत् । नन्वेवं सिंहो माणवक इत्यादौ प्रथमा न स्यात् । अत्राहुः—शक्यार्थमादाय प्रथमाविभक्तेरुत्पत्तौ सत्यां पश्चात् पदान्तरसमभिव्याहारे लक्ष्यार्थबोधेऽपि क्षत्यभावादिति । **मात्रशब्दस्येति** । तस्य चात्रावधारणमर्थः । 'मात्रं कार्त्स्न्येऽवधारणे' इत्यमरः । प्रातिपदिकार्थलिङ्गपरिमाणवचनान्येव प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रमित्येवकारेणास्वपदविग्रहः।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

**लिङ्गमात्राद्याधिक्ये संख्यामात्रे च प्रथमा स्यात्। उच्चैः। नीचैः। कृष्णः। श्रीः। ज्ञानम्। अलिङ्गा नियतलिङ्गाश्च प्रातिपदिकार्थमात्र इत्यस्योदाहरणम्। अनियत-**

---

लिङ्गं च परिमाणं च वचनं चेति द्वन्द्वः। प्रातिपदिकार्थलिङ्गपरिमाणवचनान्येव प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रमित्यस्वपदविग्रहः। मात्रशब्दोऽवधारणे। 'मात्रं कार्त्स्न्येऽवधारणे' इत्यमरः। 'मयूरव्यंसकादयश्च' इति नित्यसमासः। मात्रशब्दस्य द्वन्द्वान्ते श्रूयमाणत्वात् प्रातिपदिकार्थे, लिङ्गे, परिमाणे, वचने च प्रत्येकमन्वय इत्यर्थः। वचनं संख्येति वक्ष्यति। ननु प्रातिपदिकार्थमात्रे लिङ्गमात्रे परिमाणमात्रे संख्यामात्रे च प्रथमेत्यनुपपन्नम्। लिङ्गादीनां केवलानां प्रातिपदिकार्थं विना क्वाप्यनुपस्थितेरित्याशङ्क्य अत एव बाधकाद् लिङ्गमात्रे अधिके इति विवक्षितमित्यभिप्रेत्य व्याचष्टे—**लिङ्गमात्राद्याधिक्य इति**। लिङ्गमात्राधिक्ये परिमाणमात्राधिक्ये चेत्यर्थः। प्रातिपदिकार्थमात्र इत्यस्योदाहरति—**उच्चैरित्यादि**। नन्वव्ययेषु 'सामान्ये नपुंसकम्' इति नपुंसकत्वस्य च कृष्णशब्दे पुंस्त्वस्य च श्रीशब्दे स्त्रीत्वस्य च ज्ञानशब्दे नपुंसकत्वस्य च भानात् कथं प्रातिपदिकार्थस्योदाहरणान्येतानीत्यत आह—**अलिङ्गा इत्यादि**। 'अव्ययादाप्सुपः' इति सूत्रे 'आब्ग्रहणं व्यर्थमलिङ्गत्वात्' इति भाष्योक्तरीत्या अव्यये कस्यापि लिङ्गस्यानुपस्थितिरिति प्रातिपदिकार्थमात्रे इत्यस्य भवत्यव्ययमुदाहरणम्। कृष्णशब्दे पुंस्त्वस्य श्रीशब्दे स्त्रीत्वस्य ज्ञानशब्दे नपुंसकत्वस्य च नियमेन भानमस्ति तेषां नियतलिङ्गत्वात्। अतस्तेषु लिङ्गानामपि प्रातिपदिकार्थान्तर्भावात् तेषामपि प्रातिपदिकार्थमात्रे इत्युदाहरणत्वं निर्बाधमिति भावः। यद्यपि कृष्णः पटः, कृष्णा पटी, कृष्णं वस्त्रम् इत्यादौ कृष्णशब्दस्त्रिलिङ्गः, तथापि भगवत्पर एवात्र कृष्णशब्दो विवक्षित इति भावः। न च प्रातिपदिकोक्तार्थे किं प्रथमयेति वाच्यम्, एकत्वादिसंख्याबोधार्थत्वात्। न चाव्ययात् प्रथमोत्पत्तेः फलाभावः 'अव्ययादाप्सुपः' इति लुकोऽवश्यं प्रवृत्तेरिति वाच्यम्, पदत्वार्थं सुबुत्पत्तेरावश्यकत्वात्। तेन उच्चैरित्यादौ रुत्वविसर्गौ 'उच्चैस्ते सम्यगुच्चारणम्' इत्यादौ तेमयादिसिद्धिश्च भवति। **अनियतेति**। अनियत-

---

समासस्तु मयूरव्यंसकादित्वाद्बोध्यः। **प्रत्येकमिति**। द्वन्द्वान्ते श्रूयमाणत्वादिति भावः। ननु वीरः पुरुष इत्यादावभेदसंसर्गस्याधिकस्य भानात्प्रथमा न स्यात्। न च 'पूर्वापर—' इत्यादिना वीरशब्दस्य समासविधानं प्रथमोत्पत्तौ लिङ्गमिति वाच्यम्, द्वितीयाद्यन्तानामपि वीरपुरुषमानयेत्यादौ तद्विधानस्य चरितार्थत्वादिति चेन्न। संसर्गस्य वाक्यार्थत्वे बहिरङ्गत्वात् प्रथमप्रवृत्तसंस्कारबाधानुपपत्तेः पदसंस्कारपक्षस्यैवेहाभ्युपगमात्। मात्रपदेन कर्माद्याधिक्ये प्रथमा न भवेत्तथापि लिङ्गपरिमाणग्रहणाल्लिङ्गाधिक्ये परिमाणाधिक्ये च भवेदेवेत्याह—**लिङ्गमात्राधिक्ये**

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

लिङ्गास्तु लिङ्गमात्राधिक्यस्य। तटः, तटी, तटम्। परिमाणमात्रे द्रोणो व्रीहिः। द्रोणरूपं यत्परिमाणं तत्परिच्छिन्नो व्रीहिरित्यर्थः। प्रत्ययार्थे परिमाणे प्रकृत्यर्थोऽभे-

---

लिङ्गास्तु तटादिशब्दा लिङ्गमात्राधिक्यस्योदाहरणम्। तत्र लिङ्गानामनियतोपस्थितिकतया प्रातिपदिकार्थानन्तर्भावादित्यर्थः। **तटः, तटी, तटमिति**। 'तटं त्रिषु' इत्यमरः। **परिमाणमात्र इति**। उदाहरणं वक्ष्यत इत्यर्थः। **द्रोणो व्रीहिरिति**। द्रोणः परिमाणविशेषः।

'जालसूर्यमरीचिस्थं त्रसरेणुरिति स्मृतम्।
तेऽष्टौ लिक्षा तु तास्तिस्रो राजसर्षप उच्यते॥
गौरस्तु ते त्रयष्षट् ते यवो मध्यस्तु ते त्रयः।
कृष्णलः पञ्च ते माषस्ते सुवर्णस्तु षोडश।
पलं सुवर्णाश्चत्वारः पञ्च वापि प्रकीर्तितम्।
पलद्वयं तु प्रसृतं द्विगुणं कुडवं मतम्।
चतुर्भिः कुडवैः प्रस्थः प्रस्थाश्चत्वार आढकः।
आढकस्तैश्चतुर्भिस्तु द्रोण इत्यभिधीयते॥
कुम्भो द्रोणद्वयं शूर्पः खारी द्रोणास्तु षोडश।' इति स्मरणात्॥

**व्रीहिरिति**। जातावेकवचनम्, 'जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्' इति वचनात्। व्रीहिराशिरिति यावत्। नह्येकस्या व्रीहिव्यक्तेः द्रोणपरिमाणं संभवति। ननु द्रोणाख्यपरिमाणविशेषस्य व्रीहिव्यक्तेश्च कथमभेदान्वयः, धर्मधर्मिणोर्भेदादित्यत आह—**द्रोणरूपमिति**। तथाचाभेदान्वयस्य बाधादेव द्रोणपरिमाणस्य व्रीहिव्यक्तेश्च परिच्छेद्यपरिच्छेदकभावेनान्वयाभ्युपगमान्नोक्तदोष इति भावः। ननु द्रोणशब्दस्य परिमाणविशेषवाचिनो नियतपुँल्लिङ्गत्वे प्रातिपदिकार्थमात्रे इत्येव सिद्धम्। यदि तु 'अस्त्रियामाढकद्रोणौ' इति द्विलिङ्गता, तर्हि लिङ्गमात्राधिक्ये इत्येव सिद्धम्। तत् किं परिमाणग्रहणेनेति चेत्तत्राह—**प्रत्ययार्थे परिमाण इति**। न हि द्रोणत्वेन रूपेण परिमाण-

---

**इति**। यद्यपि लिङ्गमात्रे परिमाणमात्र इत्येवाक्षरार्थस्तथापि प्रातिपदिकार्थं विना लिङ्गादिप्रतीतेरसंभवादिति तदाधिक्य इत्युक्तम्। **उच्चैरिति**। पदत्वादिह रुत्वविसर्गौ भवतः। किंच अस्य प्रथमान्तत्वाद् ग्राम उच्चैस्तव स्वम्, ग्राम उच्चैस्ते स्वमिति 'सपूर्वायाः—' इति सूत्रेण तेमयादेशयोर्विकल्पसिद्धिरपि फलम्। **कृष्ण इति**। यद्यपि नीलद्रव्येऽयमनियतलिङ्गः, तथापि वासुदेवे भगवति नियतपुंलिङ्ग इति भावः। **ज्ञानमिति**। भावे ल्युट्। **तटः, तटी, तटमिति**। द्विकपक्षे नियतलिङ्गं न प्रकृत्यर्थः, त्रिकपक्षे तु यद्यपि प्रकृत्यर्थः, तथापि तत्तल्लिङ्गस्य पाक्षिकोपस्थितिकत्वान्न प्रातिपदिका-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

देन संसर्गेण विशेषणम्, प्रत्ययार्थस्तु परिच्छेद्यपरिच्छेदकभावेन व्रीहौ विशेषणमिति विवेकः। वचनं संख्या। एकः। द्वौ। बहवः। इहोक्तार्थत्वाद्विभक्तेरप्राप्तौ वचनम्। **५३३ संबोधने च। ( २-३-४७ )** इह प्रथमा स्यात्। हे राम ॥

---

विशेषवाचिद्रोणशब्दात् स्वार्थे प्रथमा विभक्तिरिष्यते, येन प्रातिपदिकार्थमात्र इत्यनेन गतार्थता स्यात्। किं तु द्रोणत्वेन परिमाणवाचिनो द्रोणशब्दात् परिमाणत्वसामान्यरूपेण द्रोणपरिमाणे विवक्षिते प्रथमा विभक्तिर्विधीयते। ततश्च प्रत्ययार्थे परिमाणसामान्ये द्रोणशब्दार्थात्मकप्रकृत्यर्थः परिमाणविशेषः सामान्यविशेषात्मकाभेदसंसर्गेणान्वेति। परिमाणसामान्यात्मकप्रत्ययार्थस्तु परिच्छेद्यपरिच्छेदकभावेन व्रीहावन्वेति। तथा च द्रोणाख्यपरिमाणविशेषात्मकं यत् सामान्यपरिमाणं तत्परिच्छिन्नो व्रीहिरिति बोधः फलति। अन्यथा द्रोणाख्यपरिमाणविशेषपरिच्छिन्नो व्रीहिरिति बोधः स्यात्। परिमाणसामान्यं न प्रतीयेत। तदर्थमिह परिमाणग्रहणमित्यर्थः। **वचनं संख्येति।** पूर्वाचार्यैस्तथा संज्ञाकरणादिति भावः। तथा च संख्यामात्रे प्रथमेति लभ्यते। न च लिङ्गमात्राधिक्ये परिमाणमात्राधिक्ये इतिवत् संख्यामात्राधिक्ये इति कुतो न व्याख्यातमिति वाच्यम्, केवललिङ्गपरिमाणयोः क्वाप्युपस्थित्यभावेन तथा व्याख्यानेऽपि एकद्विबहुशब्देष्वेकत्वद्वित्वबहुत्वानां केवलानां नियतोपस्थितिसत्त्वेन संख्यामात्रे इत्येव व्याख्यातुमुचितत्वात्। अत एव भाष्ये वचनग्रहणांशे एको द्वौ बहव इत्युदाहृतम्। ननु एको द्वौ बहव इत्यत्र एकत्वद्वित्वबहुत्वानां नियमेनोपस्थित्या 'प्रातिपदिकार्थे' इत्येव सिद्धे वचनग्रहणं व्यर्थमित्यत आह—**इहेति।** प्रकृतिभिरेवैकत्वादीनामुक्तत्वाद् 'उक्तार्थानामप्रयोगः' इति न्यायेन प्रथमाविभक्तेरप्राप्तौ तदर्थं वचनग्रहणमित्यर्थः। तथा च विभक्तिरिहानुवादिका शब्दसाधुत्वार्थं प्रयोज्या, 'न केवला प्रकृतिः प्रयोक्तव्या, नापि प्रत्ययः' इति अनभिहितसूत्रभाष्यसिद्धन्यायादिति भावः। इदमेवाभिप्रेत्योक्तं भाष्ये— 'उक्तेष्वप्येकत्वादिषु प्रथमा' इति। मात्रग्रहणात् कारकाद्याधिक्ये प्रथमा न भवति। अत्र 'अर्थे प्रथमा' इत्येव सूत्रयितुमुचितमिति प्रौढमनोरमादौ प्रपञ्चितम्। **संबोधने च। इहेति।** संबोधने अधिके गम्येऽपि प्रथमा स्यादित्यर्थः। संबोधनमभिमुखीकृत्य ज्ञापनम्। **हे रामेति।** मां पाहीति शेषः। इह रामं प्रति मद्रक्षणं ज्ञाप्यम्। न च

---

र्थेत्यनेन गतार्थता। **द्रोण इति।** न चेह प्रातिपदिकार्थमात्र इत्येव प्रथमास्त्विति वाच्यम्, तथा सति परिच्छेद्य परिच्छेदकभावस्य संसर्गविधया भानायोगात्। नामार्थयोरभेदसंसर्गस्य व्युत्पन्नत्वात्। **व्रीहिरिति।** जातावेकवचनम्। व्यक्तिविवक्षायां तु द्रोणो व्रीहय इति भवत्येव। **अभेदेनेति।** न च प्रकृतिप्रत्ययार्थयोरभेदान्वयो दुर्लभः, पचति, पाचकः, औपगव इत्यादौ सर्वत्र भेदान्वयस्यैव दृष्टत्वादिति वाच्यम्, देवतार्थकतद्धिता-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

'हे राजन् सार्वभौमो भव' इत्यत्र सार्वभौमशब्दादपि संबोधनप्रथमा स्यादिति वाच्यम्, सम्यग् बोधनमेव हि संबोधनम्, समित्युपसर्गबलात्। श्रोतरि विशिष्य राजत्वादिना ज्ञाते सत्येव तं प्रति कश्चिदर्थो ज्ञापयितुं शक्यः, नान्यथा। ततश्च संबोधनविभक्तिरियमनुवाद्यविषयैवेति लभ्यते, न तु विधेयविषया। तथा च सार्वभौमत्वस्य विधेयस्य इदानीमसिद्धत्वेन अनुवाद्यत्वाभावान्न सार्वभौमशब्दात् संबोधनविभक्तिरिति मञ्जूषायां विस्तरः। इति प्रथमा विभक्तिः।

---

दावभेदान्वयस्य दृष्टत्वात्। ऐन्द्रं हविरित्यत्र हि इन्द्रदेवताकं हविरिति बोधः सर्वैरेवाभ्युपगम्यत इति नास्ति शङ्कावसर इति भावः। **वचनं संख्येति**। वाच्यवाचकयोरभेदाध्यवसायेन तथैव पूर्वाचार्याणां व्यवहारादिति भावः। **अप्राप्तौ वचनमिति**। सूत्रे वचनग्रहणमित्यर्थः। वस्तुतस्तु सूत्रे मात्रग्रहणं व्यर्थम्। विशेषविहितैः 'कर्मणि द्वितीया' इत्यादिभिर्बाधितत्वेन कर्मादौ प्रथमाया अप्रवृत्तेः। 'कर्मणि द्वितीया' इत्यादिषु कर्मणि द्वितीयैव, कर्तृकरणयोस्तृतीयैव, नान्या विभक्तिरित्येवमर्थनियमाभ्युपगमात्। न च 'कर्मण्येव द्वितीया, कर्तृकरणयोरेव तृतीया, नान्यत्र' इति प्रत्ययनियमपक्षे प्रथमाया अपि कर्मादौ प्रवृत्तिसंभवान्मात्रग्रहणमावश्यकमेवेति वाच्यम्, प्रत्ययनियमपक्षे हि प्रातिपदिकार्थ एव प्रथमा नान्यत्रेत्यर्थपर्यवसानात्कर्मादौ प्रथमाया अप्रवृत्तेः। वचनग्रहणमपि व्यर्थम्, 'न केवला प्रकृतिः प्रयोक्तव्या' इति निषेधादेव प्रथमोत्पत्तिसिद्धेः। न चैवं 'द्विशब्दाद्बहुशब्दाच्चैकवचनम्, एकशब्दाद्द्विवचनम्' इत्येवमव्यवस्था स्यादिति वाच्यम्, अनन्वितार्थकविभक्तिप्रयोगापेक्षया अनुवादकविभक्तिप्रयोगस्य न्याय्यत्वात्। गौर्वाहीक इतिवद् द्रोणशब्दस्य तत्परिमिते उपचाराद् द्रोणो व्रीहिरित्यपि सिद्धमिति मनोरमायां परिमाणग्रहणमपि प्रत्याख्यातम्। नन्वस्मिन् पक्षे द्रोणपरिच्छिन्नाभिन्नो व्रीहिरित्यभेदान्वयः, नामार्थयोरभेदान्वयात्। 'परिमाणं प्रत्ययार्थः' इति पक्षे तु द्रोणरूपं यत्परिमाणं तत्परिच्छिन्नो व्रीहिरिति प्रत्ययार्थनामार्थयोरभेदान्वयस्तथा च फलभेदे कथं प्रत्याख्यानमिति चेत्। अत्राहुः—शाब्दबोधप्रयुक्तं वैलक्षण्यमिहानादृत्य परिमाणग्रहणं प्रत्याख्यातम्। अत एव औपगवादौ 'तस्येदम्' इत्यनेनैवाणप्रत्ययसिद्धेः 'तस्यापत्यम्' इति सूत्रं किमर्थमित्याक्षेपः, मत्वर्थीयेनिनैव सिद्धेः 'परिवृतो रथः' इत्यधिकारे 'पाण्डुकम्बलादिनिः' इतीनिप्रत्ययविधानं किमर्थमित्याक्षेपश्च वक्ष्यमाणः संगच्छते। यदि तु सर्वत्रैव शाब्दबोधप्रयुक्तं वैलक्षण्यं स्वीक्रियते तर्हि 'बाधनार्थं कृतं भवेत्' इति समाधानस्याणो बाधनार्थमिनिप्रत्ययविधानमिति समाधानस्य च वैयर्थ्यापत्तेरिति। ननु क्वचित् पञ्चकं प्रातिपदिकार्थः, क्वचित् त्रिकम्, क्वचिद् द्विकं प्रातिपदिकार्थ इत्यादि व्यवह्रियते। त एते पक्षाः केषामभिमताः कथं वामीषामुपपत्तिरिति चेत्। अत्र व्याचख्युः—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

**५३४ कारके। ( १-४-२३ ) इत्यधिकृत्य। ५६४ कर्तुरीप्सिततमं कर्म।**

---

**अथ द्वितीया विभक्तिः। कारके। इत्यधिकृत्येति।** संज्ञा वक्ष्यन्ते इति शेषः। क्रियाजनकं कारकम्, करोति क्रियां निर्वर्तयतीति भाष्ये व्युत्पत्तिदर्शनात्। ब्राह्मणस्य पुत्रं पश्यतीत्यत्र ब्राह्मणस्यान्यथासिद्धत्वान्न कारकत्वम्। **कर्तुरीप्सित।** कारके इत्यनुवृत्तं प्रथमया विपरिणम्यते। आप्तुमिष्यमाणमीप्सितम्। 'आप्लृ व्याप्तौ' अस्मात् सन्नन्ताद् 'मतिबुद्धिपूजार्थेभ्यश्च' इति वर्तमाने क्तः। मतिरिच्छा, बुद्धेः पृथग्ग्रहणात्। 'क्तस्य च वर्तमाने' इति कर्तरि षष्ठी। अतिशयेनेप्सितमीप्सिततमम्।

---

स्वार्थद्रव्यलिङ्गसंख्याकारकात्मकः पञ्चकं प्रातिपदिकार्थः, दधि मध्वित्यादौ विनापि विभक्तिं प्रातिपदिकादेव तावतामर्थानां प्रतीतेः। वृक्षौ वृक्षाः वृक्षं वृक्षेणेत्यादौ यद्यपि विभक्त्याऽन्वयेऽपि प्रतीयन्ते, न इयता प्रकृत्यर्थत्वहानिः द्योतकत्वेनैवोपयोगादिति भाष्यकारा मन्यन्ते। आदितश्चतुष्कमिति कैयटः। 'तत्रोपपदं सप्तमीस्थम्' इत्यत्र 'चतुष्कपक्षे पञ्चकपक्षे वा कारकं प्रातिपदिकार्थः' इत्यभिधानात्। आदितस्त्रिकमिति वृत्तिकारः। अन्वयव्यतिरेकाभ्यां संख्याकारकादेर्विभक्त्यर्थत्वनिश्चयात्। यद्यपि दधि मधु इत्यादौ विनापि विभक्तिं संख्या कारकं च प्रतीयते, नेयता वृक्षौ वृक्षा इत्यादावपि विभक्त्यर्थत्वं हीयते। न हि गर्गा इत्यादौ विनापि यञा अपत्यं गम्यत इति तदपि प्रकृत्यर्थः। न चाबिभरित्यादौ अन्तरेणापि प्रत्ययं कर्ता प्रतीयत इति भेत्तेत्यादावपि कर्ता प्रकृत्यर्थ एवेति युज्यते वक्तुम्। अतस्त्रिकमेव प्रातिपदिकार्थः, संख्याकर्मादयस्तु विभक्त्यर्था इति। लिङ्गं टाबादिवाच्यमिति पक्षे आदितो द्विकमेवेत्यन्ये। तत्र स्वार्थो विशेषणम्। द्रव्यं विशेष्यम्। लिङ्गं स्त्रीत्वादि। संख्या एकत्वादिः। कारकं कर्मादि। **संबोधने च।** मात्रग्रहणात्तत्प्रत्याख्यानपक्षेऽपि प्रातिपदिकार्थ एव प्रथमेति नियमाद्वा संबोधनाधिक्येऽप्राप्तावस्यारम्भः। इह संबोधनं प्रकृत्यर्थं प्रति विशेष्यं क्रियां प्रति विशेषणम्। तथा च 'व्रजानि देवदत्त' इत्यादौ 'एकतिङ्वाक्यम्' इति वाक्यत्वे सिद्धे 'आमन्त्रितस्य च' इति निघातो भवति। क्रियां प्रत्यविशेषणत्वे तु भिन्नवाक्यत्वान्नैतत्सिध्येत्, 'समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः' इति वार्तिकात्। तथा चोक्तम्—'संबोधनपदं यच्च तत् क्रियायां विशेषणम्। व्रजानि देवदत्तेति निघातोऽत्र तथा सति' इति। एवं च राम मां पाहीति वाक्यस्य रामसंबन्धिसंबोधनविषयो मत्कर्मकं रक्षणमर्थः। व्रजानि देवदत्तेत्यत्र तु देवदत्तसंबन्धिसंबोधनविषयो मत्कर्तृकं गमनमर्थः। इति प्रथमा। **कर्तुरीप्सिततमं कर्म।** कर्तुरिति 'क्तस्य च वर्तमाने' इति कर्तरि षष्ठी। आप्नोतेः सन्, द्वित्वम्, 'आप्ज्ञप्यृधामीत्', 'अत्र लोपोऽभ्यासस्य' इत्यभ्यासलोपः, 'मतिबुद्धिपूजार्थेभ्यश्च' इति वर्तमाने क्तः। मतिरिहेच्छा, न तु बुद्धिः, पुनर्बुद्धिग्रहणात्। ततः

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

( १-४-४९ ) कर्तुः क्रियया आप्तुमिष्टतमं कारकं कर्मसंज्ञं स्यात् । कर्तुः किम्—माषेष्वश्वं बध्नाति । कर्मण ईप्सिता माषाः, न तु कर्तुः । तमब्ग्रहणं किम्—

---

धातूपात्तव्यापाराश्रयः कर्ता । केनाप्तुमित्याकाङ्क्षायां कर्तृविशेषणीभूतव्यापारेणेत्यर्थो-लभ्यते, तत् फलितमाह—**कर्तुः क्रिययेत्यादिना** । क्तप्रत्ययोपात्तं वर्तमानत्वं तु न विवक्षितम् । तेन कटं करोति कृतवान् इत्यादौ नाव्याप्तिः । आप्तिः संबन्धः । एवं च कर्त्रा स्वनिष्ठव्यापारप्रयोज्यफलेन संबन्धुमिष्यमाणमित्यर्थः । यथा 'तण्डुलान् पचति' इत्यत्र विक्लित्त्यनुकूलव्यापारः पचेरर्थः । तप्तोदकप्रस्वेदनकृतप्रशिथिलावयवकत्वात्मकं मृदुविशदत्वं विक्लित्तिः, तदनुकूलव्यापारः अधिश्रयणोदकासेचनैधोपकर्षणप्रज्वलनादि-रूप इति 'कारके' इत्यादिसूत्रभाष्ये स्पष्टम् । अत एव 'फलव्यापारयोर्धातुः' इति सिद्धान्तः । तथा च तण्डुलानधिश्रयणादिव्यापारेण विक्लेदयतीत्यर्थः । अधिश्रयणादि-रूपकर्तृव्यापारप्रयोज्यविक्लित्तिरूपफलाश्रयत्वात् तण्डुलानां कर्मत्वम् । ननु कर्तृग्रहणं व्यर्थम् । न च व्यापारलाभाय तदिति वाच्यम्, केनाप्तुमित्याकाङ्क्षायां कारकाधि-कारादेव तल्लाभादिति पृच्छति—**कर्तुः किमिति । माषेष्वश्वं बध्नातीति** । माषेषु भक्षणाय प्रवृत्त्युन्मुखमुदरव्यथाभयात्तद्भक्षणान्निवर्तयितुमन्यत्र बध्नातीत्यर्थः । अत्र माषाणां कर्मत्वनिवृत्त्यर्थं कर्तृग्रहणमिति भावः । कर्तृग्रहणे कृते तु नोक्तदोष इत्याह—**कर्मण ईप्सिता माषाः, न तु कर्तुरिति** । बन्धनकर्मीभूतस्याश्व-स्यैवात्र माषा ईप्सिताः, न तु बन्धनकर्तुः, अश्वरक्षणस्यैव तदपेक्षितत्वादित्यर्थः । **तमब्ग्रहणं किमिति** । तमबन्तमीप्सिततममित्येतत् किमर्थं 'कर्तुरुद्देश्यं कर्म' इत्ये-

---

'अतिशायने तमबिष्ठनौ' इत्यतिशये तमप् । एवं कर्त्रा आप्तुमिष्यमाणतमं कर्मेत्यर्थः । कर्ता च धातूपात्तव्यापाराश्रयः । स च केनाप्तुमिच्छतीति करणाकाङ्क्षायां विशेषणी-भूतेन व्यापारेणेत्यर्थाल्लभ्यते, तदाह—**क्रिययेति** । क्तप्रत्ययेनोपस्थितं वर्तमानत्वं चेह न विवक्षितम् । तेन कटं कृतवान् करिष्यतीत्यादि सिद्धम् । **कारकमिति** । एतच्च 'कारके' इत्यधिकाराल्लभ्यते । तत्र हि व्यत्ययेन प्रथमार्थे सप्तमी । प्रतिसूत्रं वाक्यं भित्त्वा कारकसंज्ञाऽनेन विधीयते। तद्यथा—अपाये ध्रुवं कारकसंज्ञं स्यात् । ततोऽपादा-नम् । उक्तं कारकमपादानं स्यात् । पुनः कारकशब्दानुवृत्तिसामर्थ्याद्विशेषसंज्ञाभिः सह समावेशसिद्धिः । तेन स्तम्बेरम इत्यत्राधिकरणत्वात्सप्तमी, कारकत्वाद् 'गतिकारकोप-पदात् कृत्' इति कृदुत्तरपदप्रकृतिस्वरश्च सिध्यति। अन्यथा 'तत्पुरुषे तुल्यार्थ—' इत्या-दिना पूर्वपदप्रकृतिस्वरः स्यात् । नचात्रोपपदस्वरेणान्यथासिद्धिः शङ्क्या, 'स्तम्ब-कर्णयोः' इति निर्देशात् प्रातिपदिकस्योपपदत्वेऽपि सप्तम्यन्तस्यातथात्वात् । यद्यपीह थाथादिस्वरेणैवान्तोदात्तत्वं सिध्यति, तथाप्यप्प्रत्ययसाहचर्येण एरच एव तत्रोपादाना-

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पयसा ओदनं भुङ्क्ते। 'कर्म' इत्यनुवृत्तौ पुनः कर्मग्रहणमाधारनिवृत्त्यर्थम्। अन्यथा गेहं प्रविशतीत्यत्रैव स्यात्। ५३६ अनभिहिते। (२-३-१) इत्यधिकृत्य।

---

वास्त्विति प्रश्नः। **पयसा ओदनं भुङ्क्त इति।** पयसा मिश्रमित्यर्थः। यद्यप्यत्र भोक्तुरोदन एव पयसा मिश्र उद्देश्यः, न तु केवलं पयः, नापि केवल ओदनः। नह्यसौ केवलपयःपानेन तुष्यति, नापि केवलौदनेन। तथापि यदा भुक्तवानेव पयोलिप्सया पुनरोदनभोजने प्रवर्तते तदेदं प्रत्युदाहरणम्। तत्र यद्यपि पय एव उद्देश्यं भुजिक्रियां प्रति, तथापि भुजिक्रियाकर्मीभूतमोदनं प्रति मिश्रणसाधनतया गुणत्वेनैव तदुद्देश्यम्। न तु भोज्यत्वेन। अतस्तत्र पयसो गुणत्वेन ओदनस्य तत्संस्कार्यतया उद्देश्यत्वादोदनस्यैव ईप्सिततमत्वम्, न तु पयसोऽपि। तस्याप्योदन एव ईप्सिततमः, गुणेष्वस्य नानुरोध इति भावः। न च तमब्ग्रहणं किमर्थम्, 'कर्तुरीप्सितं कर्म' इत्येवास्त्विति वाच्यम्, 'अग्नेर्माणवकं वारयति' इत्यत्र माणवकस्य 'वारणार्थानामीप्सितः' इत्यपादानत्वनिवृत्त्यर्थत्वादिति प्रकृतसूत्रभाष्ये स्थितम्। तदेतद्वारणार्थानामिति सूत्रव्याख्यावसरे स्फुटीभविष्यति। प्राचीनैस्तु कैश्चित् 'तमब्ग्रहणं किम्, पयसा ओदनं भुङ्क्ते' इति ग्रन्थः केवलतमब्ग्रहणप्रयोजनपरतया व्याख्यातः। ते भाष्यविरुद्धत्वादुपेक्ष्याः। ननु 'अधिशीङ्स्थासां कर्म' इत्यतोऽनुवृत्तेरिह कर्मग्रहणं व्यर्थमित्यत आह—**कर्मग्रहणमाधारेति।** अधिशीङित्यत्र हि आधार इत्यनुवर्तते। इहापि तदनुवृत्तिर्माभूदिति कर्मग्रहणमित्यर्थः। ननु हरिं भजतीत्यादावसंभवादेव तदनुवृत्तिर्न भविष्यतीत्यत आह—**अन्यथा गेहं प्रविशतीत्यत्रैव स्यादिति।** हरिं भजतीत्यादौ न स्यादित्येवकारार्थः। **अनभिहिते। इत्यधिकृत्येति।** द्वितीयादि वक्ष्यत

---

नास्ति थाथादिस्वरेण तत्सिद्धिरित्याहुः। अन्वर्था चेयं संज्ञा करोतीति कारकमिति। तेन 'ब्राह्मणस्य पुत्रं पन्थानं पृच्छती'त्यत्र क्रियानन्वयिनो न भवति। ब्राह्मणो ह्यत्र पुत्रविशेषणं न तु क्रियान्वयीति। **पयसेति।** भुजिक्रियां प्रति पयसः प्रकृष्टोपकारकत्वेऽपि ओदन एवात्र ईप्सिततमः, पयस्तु संस्कारकत्वात्करणम्। नह्यसौ केवलपयसः पानेन संतुष्यति किं तु तत्संस्कृतेनौदनेन। यदा तु पय एव ईप्सिततममस्य भवति, तदा कर्मत्वं भवत्येव—पयः पिबतीति। **कर्मेत्यनुवृत्ताविति।** 'अधिशीङ्स्थासां कर्म' इति सूत्रात्। **अनभिहित इति।** ननु बहुपटुरित्यादौ बहुच्प्रत्ययेनोक्तार्थत्वात् कल्पबादयो यथा न प्रवर्तन्ते तथा क्रियते कट इत्यादावपि तिङादिभिरुक्तार्थत्वाद् द्वितीया न भविष्यति। किं च कटं करोतीत्यादौ सावकाशा द्वितीया कृतः कट इत्यादौ निरवकाशया प्रथमया बाधिष्यते। न च वृक्षः प्लक्ष इत्यादौ प्रथमाया अवकाशः। तत्रापि प्रतीयमानामस्तिक्रियां प्रति कर्तृत्वेन तृतीयाप्रसङ्गात्। अथोच्यते—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

५३७ **कर्मणि द्वितीया।** ( २-३-२ ) अनुक्ते कर्मणि द्वितीया स्यात् । हरिं भजति । अभिहिते तु कर्मणि 'प्रातिपदिकार्थमात्रे' इति प्रथमैव । अभिधानं च

---

इत्यर्थः । **कर्मणि द्वितीया** । 'अनभिहिते' इत्यनुवृत्तं व्याचष्टे—**अनुक्त इति** । **हरिं भजतीति** । तुष्ट्यनुकूलपरिचरणात्मकव्यापारो भजेरर्थः, पूजादिव्यापारेण हरिं तोषयतीत्यर्थः । कर्तृनिष्ठपूजनादिव्यापारप्रयोज्यतुष्टिरूपफलाश्रयत्वाद्धरिः कर्म । हरि-निष्ठतुष्ट्यनुकूल एकदेवदत्तनिष्ठो वर्तमानो व्यापार इति बोधः, 'भावप्रधानमाख्यातम्' इति निरुक्तकारयास्कवचनात् । क्रियाप्रधानं तिङन्तमिति तदर्थः । एवं च हरिनिष्ठः तुष्ट्यनुकूलव्यापाराश्रयो देवदत्त इति प्रथमान्तविशेष्यकबोधस्तार्किकसंमतो नादर्तव्य इति मञ्जूषादौ प्रपञ्चितम् । **अभिहिते त्विति** । हरिः सेव्यत इत्यादाविति शेषः । **प्रथमैवेति** । तद्विधावनभिहिताधिकाराभावाद् 'अभिहिते प्रथमा' इति वार्तिकाच्चेति भावः । अत्र भाष्ये कटं करोति भीष्ममुदारं दर्शनीयं शोभनमित्यत्र कटशब्दादुत्पाद्य-मानया द्वितीयया कर्मणोऽभिहितत्वाद् भीष्मादिभ्यो द्वितीया न प्राप्नोतीत्याशङ्क्य 'तिङ्-कृत्तद्धितसमासैरभिधानम्' इति परिगणितम् । तत्र प्रायेणेत्यध्याहृत्याह—**अभिधानं**

---

नीलमिदं न तु रक्तमित्यादौ विशेषणान्तरनिवृत्तितात्पर्यके अस्तिक्रियाया अनावश्यकत्वात् प्रथमाया अस्त्येवावकाश इति, तर्हि उभयोः सावकाशत्वे परत्वात् प्रथमैव स्यात् । तथा चान-भिहिताधिकारो वृथैवेति चेत् । अत्राहुः—'संख्या विभक्त्यर्थः' इति पक्षे सूत्रारम्भ आवश्यकः । तथाहि सूत्रारम्भे 'कर्मणि द्वितीया' इत्यस्यानभिहिते कर्मणि यदेकत्वं तत्र द्वितीयैकवचनमित्यर्थः । सूत्रानारम्भे च कर्मणि यदेकत्वं तत्र द्वितीयैकवचन-मिति हि वाक्यार्थः । तथा च सति कृतः कट इत्यादौ क्तेन कर्ममात्रोक्तावपि तदेकत्व-स्यानुक्ततया अम् दुर्वारः स्यात् , न च परत्वात् प्रथमैव स्यादिति वाच्यम् , कर्तव्यः कट इत्यादौ ततोऽपि परत्वेन कृद्योगलक्षणषष्ठीप्रसङ्गात् । 'कारकं विभक्त्यर्थः' इति पक्षे तु कारकस्य क्तप्रत्ययादिनैवोक्तत्वात् प्रातिपदिकार्थे प्रवृत्तायाः प्रथमाया एकत्वादिबोधन-संभवाच्चामादिविभक्तेरप्रवृत्तौ 'अनभिहिते' इति सूत्रं प्रत्याख्यातमाकर इति । कारकं प्राति-पदिकार्थ इति पक्षे तु 'अनभिहिते' इत्यस्य 'अद्योत्ये' इत्यर्थः । तथा च क्तप्रत्ययादिभिरद्योत्ये कर्मणि द्वितीयेत्यादिवाक्यार्थः । तत्राप्येकेन द्योतिते द्योतकान्तरं न प्रवर्तत इत्यभ्यु-पगमे त्वनभिहिताधिकारो नातीवोपयुज्यत इति दिक् । **हरिं भजतीति** । भजन-क्रियया हरौ प्रीतेरुत्पादात्प्रीतिविशिष्टतया क्रियाव्याप्यत्वेन हरिः कर्म तद्विशिष्टं भजनं वाक्यार्थः । हरिनिष्ठप्रीत्यनुकूल एकदेवदत्तादिनिष्ठो वर्तमानो व्यापार इति निष्कृष्टो-ऽर्थः । हरिः सेव्यत इत्यत्राप्येवमेव । 'क्रियाप्रधानमाख्यातम्' इति सिद्धान्तात् । धातूपस्थिता क्रिया तिङर्थं प्रति विशेष्या न तु कृदर्थं प्रतीव विशेषणमिति हि तस्यार्थः ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

प्रायेण तिङ्कृत्तद्धितसमासैः। तिङ्, हरिः सेव्यते। कृत्, लक्ष्म्या सेवितः। तद्धित, शतेन क्रीतः शत्यः। समास, प्राप्त आनन्दो यं स प्राप्तानन्दः। क्वचि-

---

चेति। समासैरित्यनन्तरं विवक्षितमिति शेषः। **तिङिति**। अविभक्तिकनिर्देशोऽयं तिङभिधानप्रदर्शनाय। **हरिः सेव्यत इति**। 'लः कर्मणि—' इति कर्मणि लकारः। 'भावकर्मणोः' इत्यात्मनेपदम्। तिङन्तेन अभिहितत्वाद्धरेः कर्मणो न द्वितीयेति भावः। हरिं भजतीति वाक्यार्थः। कर्तृकर्मलकारयोरेकरूप एव वाक्यार्थबोध इति वैयाकरण-समयः। **कृदिति**। तिङितिवदयमप्यविभक्तिकनिर्देशस्तदुदाहरणसूचनाय। **लक्ष्म्या सेवित इति**। हरिरिति शेषः। भूते कर्मणि क्तः, कर्तरि तृतीया। लक्ष्मीनिष्ठपरि-चरणजनिततुष्ट्याश्रयो हरिरिति बोधः। 'सत्त्वप्रधानानि नामानि' इति यास्कस्मृति-मनुरुध्य प्रातिपदिकेषु प्रथमान्तोपात्तविशेष्यकबोधस्यैव सर्वसंमतत्वात्। अत्र सेवितहरेः कर्मणः कृता अभिहितत्वान्न द्वितीया। **तद्धितेति**। अयमप्यविभक्तिकनिर्देशस्तदुदा-हरणसूचनाय। **शतेन क्रीतः शत्य इति**। पटादिरिति शेषः। 'शताच्च ठन्यता-वशते' इति यत्प्रत्ययस्तद्धितः। अत्र कर्मणस्तद्धितेनोक्तत्वान्न द्वितीया। **समासेति**। अयमप्यविभक्तिकनिर्देशस्तदुदाहरणसूचनाय। **प्राप्तानन्द इति**। देवदत्तादिरिति

---

अत एव पाचको व्रजतीतिवत् पचति व्रजतीति नैकं वाक्यम्। पाककर्तृकर्तृकं गमनं हि पाचको व्रजतीत्यस्यार्थः। एककर्तृका पचिक्रिया, एककर्तृका गमिक्रियेति पचतिव्रजत्योः पृथगेवार्थः। एवं च प्रथमान्तविशेष्यको बोध इति नैयायिकोद्घोषो भाष्याद्यनुसारि-भिर्नादर्तव्यः। तन्मते हि पाककर्ता व्रजनानुकूलकृतिमानिति पाचको व्रजतीत्यस्यार्थः। पचतिव्रजत्योस्तु पाकानुकूला कृतिर्व्रजत्यर्थ इत्येवंरूपेण वाक्यार्थपर्यवसानात्, तस्य च भाष्यादिग्रन्थविरोधात्। किं च हरिं भजति देवदत्तः, हरिः सेव्यते देवदत्तेनेत्यत्र चैकरूप एव शाब्दबोध इत्युक्तम्। नैयायिकानां मते तु भिद्यत एव, 'हरिनिष्ठप्रीत्यनु-कूलकृत्याश्रयो देवदत्तः' 'देवदत्तनिष्ठकृतिजन्यप्रीत्याश्रयो हरिः' इत्युभयत्र भेदेन वाक्यार्थपर्यवसानात्। तस्मात् प्रथमान्तविशेष्यकबोधो भाष्याद्यनुसारभिर्नादर्तव्य एव। यास्कोऽप्याह—'भावप्रधानमाख्यातं सत्त्वप्रधानानि नामानि' इति। पश्य मृगो धाव-तीत्यादौ तु मृगकर्तृकं गमनं दृशिक्रियायां कर्म; प्रधानं तु दृशिक्रियैव। उक्तं च— 'सुबन्तं हि यथाऽनेकं तिङन्तस्य विशेषणम्। तथा तिङन्तमप्याहुस्तिङन्तस्य विशेष-णम्, इति। न च लौकिकप्रयोगेषु तिङन्तस्य तिङन्तविशेषणत्वं दुर्लभमिति मन्त-व्यम्, 'पुरीमवस्कन्द लुनीहि नन्दनम्' इति माघश्लोकस्य पुर्यवस्कन्दननन्दनलवना-दिरूपाऽस्वास्थ्यक्रियेत्यर्थ इति 'समुच्चयेऽन्यतरस्याम्' सूत्रे मूले स्फुटीभविष्यमाण-त्वात्। एवं च पचति भवतीत्यस्य पचिक्रिया भवतीत्यर्थो भाष्यमते बोध्य इति दिक्।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न्निपातेनाभिधानम्, यथा—'विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम्।' साम्प्रतमित्यस्य हि युज्यत इत्यर्थः। ५३८ तथायुक्तं चानीप्सितम्। (१-४-५०)

शेषः। 'गत्यर्थाकर्मक—' इत्यादिना प्राप्तेति कर्तरि क्तः। अन्यपदार्थकर्मणो बहुव्रीहिसमासेनाभिहितत्वान्न द्वितीयेति भावः। आनन्दकर्तृकप्राप्तिकर्मीभूत इति बोधः। प्रायेणेत्यस्य फलं दर्शयति—क्वचिदिति। विषवृक्षोऽपीति असांप्रतमित्यत्रान्वेति, संवर्ध्येत्यत्र छेत्तुमित्यत्र चान्वये द्वितीयापत्तेः। तत्र त्वर्थाद्विषवृक्षमिति गम्यते। न सांप्रतमिति विग्रहे नञ्तत्पुरुषः। युज्यत इत्यर्थ इति। युजिर्योगे कर्मणि लकारः। औचित्या न युज्यते। औचित्ययुक्तो न भवतीति यावत्। 'युक्ते द्वे सांप्रतं स्थाने' इत्यमरः। अत्र वृक्षस्य कर्मणो निपातेनाभिहितत्वान्न द्वितीयेति भावः। वस्तुतस्तु छेत्तुमिति तुमुन्नत्र दुर्लभः। कृष्णं द्रष्टुं यातीत्यत्रेव क्रियार्थक्रियोपपदत्वाभावेन 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' इत्यस्यांप्रवृत्तेः। 'शकधृष—' इत्यादिनापि तुमुन्न, शकादियोगाभावात्। किं तु 'इच्छार्थेषु' इत्यनुवृत्तौ 'समानकर्तृकेषु तुमुन्' इति तुमुन्, अक्रियार्थोपपदत्वेऽपि तस्य प्रवृत्तेः। यथा इच्छति भोक्तुमित्यादि। एवं च तुमुनस्साधुत्वाय इष्यत इत्यध्याहार्यम्। विषवृक्षोऽपि संवर्ध्य छेत्तुमिष्यत इति यत् तदसांप्रतम्—अयुक्तमित्यर्थः। एवं चात्रापि तिङभिहितत्वादेव द्वितीयानिवारणात् तिङ्कृत्तद्धितसमासैरभिधानम् इति परिगणनवार्तिके प्रायेणेत्यध्याहारो विफल इति शब्देन्दुशेखरे स्थितम्। पक्वमोदनं भुङ्क्त इत्यत्र तु पचिभुजिक्रियानिरूपिते द्वे कर्मत्वशक्ती। तत्र गुणभूतपचिनिरूपितकर्मत्वशक्तेः क्तप्रत्ययाभिहितत्वेऽपि प्रधानभूतभुजिक्रियानिरूपितामनभिहितां कर्मत्वशक्तिमादाय द्वितीया निर्बाधेति भाष्ये स्पष्टम्। ननु यथा बहुपटुरित्यादौ तद्धितेन बहुच्प्रत्ययेन उक्तत्वात् कल्पबादयो न भवन्ति, तथा क्रियते कट इत्यादावपि तिङादिभिरुक्तत्वाद् द्वितीयादयो न भविष्यन्ति, 'उक्तार्थानामप्रयोगः' इति न्यायात्। किं च

अभिहिते त्विति। नन्वेवं 'पक्वमोदनं भुङ्क्ते' इत्यत्रापि द्वितीया न स्यादिति चेत्। मैवम्। इह हि पचिभुजिनिरूपिते द्वे कर्मत्वशक्ती, तत्र प्रधानीभूतभुजिक्रियानिरूपितामनभिहितां शक्तिमादाय द्वितीयोत्पत्तेः। अत एव 'आसने आस्ते' इत्यत्र सप्तमी संगच्छते, ल्युटाऽधिकरणत्वस्योक्तत्वेऽपि तिङन्तोपस्थाप्यक्रियानिरूपिताधिकरणत्वस्यानुक्तत्वात्। शत्य इति। 'शताच्च ठन्यतावशते' इति यत्। प्राप्तानन्द इति। इह 'गत्यर्थाकर्मक—' इति कर्तरि क्तः। आनन्दकर्तृकप्राप्तिकर्मीभूत इत्यर्थः। यदुक्तं प्रायेणेति तस्य फलमाह—क्वचिन्निपातेनेति। विषवृक्ष इति। संवर्ध्येत्यत्र छेत्तुमित्यत्र चार्थाद्विषवृक्षमिति गम्यत इति ध्येयम्। युज्यत इत्यर्थ इति। एतेन निपातानां द्योतकत्वमेवेति नियमो नास्तीति ध्वनितम्। तथायुक्तम्। तथेत्युक्ते कथं

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ईप्सिततमवत्क्रियया युक्तमनीप्सितमपि कारकं कर्मसंज्ञं स्यात् । ग्रामं गच्छंस्तृणं

---

कटं करोतीत्यादौ सावकाशा द्वितीया कृतः कट इत्यादौ न भवत्येव, अनवकाशया प्रथमया बाधात् । न च वृक्षः प्लक्ष इत्यादिः प्रथमाया अवकाश इति वाच्यम्, तत्र गम्यामस्तिक्रियां प्रति कर्तृत्वेन तृतीयाप्रसङ्गात् । अस्तु वा तत्र प्रथमाया अवकाशः । तथाप्युभयोः सावकाशत्वे परत्वात् प्रथमैव स्यात् । एवं चानभिहिताधिकारो व्यर्थ इति चेत्, मैवम्—'कर्मणि द्वितीया' इत्यादीनां 'द्व्येकयोर्द्विवचनैकवचने' 'बहुषु बहुवचनम्' इत्यनयोश्च एकवाक्यतया कर्मणि यदेकत्वं द्वित्वं बहुत्वं वा तत्र एकद्विबहुवचनानीति लभ्यते । तत्र 'अनभिहिते' इत्यारम्भे अनभिहिते कर्मणि यदेकत्वं तत्र द्वितीयेत्येवमर्थः स्यात् । 'अनभिहिते' इत्यभावे तु कर्मणि यदेकत्वं तत्र द्वितीयैकवचनमित्येव पर्यवस्येत् । तथा सति कृतः कट इत्यादौ क्तेन कर्ममात्रोक्तावपि तदेकत्वस्यानुक्ततया द्वितीयैकवचनं दुर्वारं स्यात् । न च प्रथमाया निरवकाशत्वं शङ्क्यम्, नीलमिदं न तु रक्तमित्यादौ विशेषणान्तरनिवृत्तितात्पर्यके अस्तिक्रियाया अनावश्यकत्वेन तत्र प्रथमायाः सावकाशत्वात् । नापि तत्र परत्वात् प्रथमैव भविष्यतीति वाच्यम्, कर्तव्यः कट इत्यादौ ततोऽपि परत्वेन कृद्योगलक्षणषष्ठीप्रसङ्गात् । एवं च संख्या विभक्त्यर्थ इति पक्षे 'अनभिहिते' इत्यारब्धव्यम् । यदि तु पञ्चकं प्रातिपदिकार्थ इत्यनाश्रित्य कारकं विभक्त्यर्थ इत्याश्रीयते, तदा कारकस्य क्तप्रत्ययादिनोक्तत्वान्न द्वितीयादिविभक्तिप्रसक्तिः । एकत्वादिसंख्याबोधश्च प्रातिपदिकार्थमात्रे प्रवृत्तया प्रथमयैव सम्भवति । अतः 'अनभिहिते' इति नारब्धव्यमिति भाष्यकैयटकौस्तुभादिषु स्पष्टम् । अतिविस्तरस्तु मञ्जूषायामनुसंधेयः । **तथायुक्तं चानीप्सितम्** । तथाशब्दस्य सादृश्यवाचकस्य प्रतियोगिसापेक्षत्वादाह—ईप्सिततमवदिति । पूर्वसूत्रे संनिहितत्वादीप्सिततममेव सादृश्यप्रतियोगीति भावः । **क्रिययेति** । क्रियाजन्यफलयुक्तमित्यर्थः । पूर्वसूत्रे ईप्सिततमस्य कर्मत्वमुक्तम् । द्वेष्योपेक्ष्यसंग्रहार्थमिदं वचनम् । तत्र उपेक्ष्यमुदाहरति—

---

युक्तमिति जिज्ञासायामाह—**ईप्सिततमवदिति** । सूत्रे चशब्दोऽपिशब्दार्थे वर्तत इति ध्वनयन्नाह—**अनीप्सितमपीति** । ईप्सितादन्यदनीप्सितमिति पर्युदासोऽयम्, तेन यदुपेक्ष्यं यच्च द्वेष्यं तद् द्वयमपीह गृह्यत इत्याशयेनाद्यमुदाहरति—**ग्रामं गच्छं स्तृणं स्पृशतीति** । यथा स्पृश्यमानस्य ग्रामादेरीप्सितस्य क्रियायोगस्तज्जन्यसंयोगादिफलाधारत्वात्, तथैवानीप्सितस्य तृणादेरपीति भावः । इह हि ग्रामं गच्छतस्तृणस्पर्शनं नान्तरीयकम्, तृणस्यानीप्सितत्वात् । यदा तु तृणमपीप्सिततमं भवति तदा पूर्वेणैव सिद्धम् । उपेक्ष्यं च नोपेक्षाबुद्धिविषयः, नदी कूलं कषतीत्यचेतने

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

स्पृशति। विषं भुङ्क्ते। ५३९ अकथितं च। (१-४-५१) अपादानादिविशेषैरविवक्षितं कारकं कर्मसंज्ञं स्यात्॥

---

ग्रामं गच्छंस्तृणं स्पृशतीति। संयोगानुकूलव्यापारः स्पृशेरर्थः। अत्र स्पृश्यमानस्य तृणस्य ईप्सिततमत्वाभावेऽपि गां स्पृशतीत्यादौ स्पृश्यमानस्येप्सिततमस्य गङ्गादेरिव क्रियाजन्यसंयोगात्मकफलाश्रयत्वात्कर्मत्वमिति भावः। द्वेष्यमुदाहरति—विषं भुङ्क्त इति। यदा कश्चिद्बलवता वैरिणा निगृह्यमाणो विषं भुङ्क्ते तदेदमुदाहरणम्। भुजेर्हि मुखे प्रक्षिप्तस्य गलविवरप्रवेशानुकूलो हनुचलनादिव्यापारोऽर्थः। विषस्य द्वेष्यतया ईप्सिततमत्वाभावेऽपि ओदनं भुङ्क्त इत्यादौ भुज्यमानस्य ईप्सिततमस्य ओदनादेरिव क्रियाजन्यगलविवरप्रवेशात्मकफलाश्रयत्वात् कर्मत्वमिति भावः। न च 'धातूपस्थाप्यफलशालि कर्म' इत्येवास्तु, किमीप्सितानीप्सितयोः पृथक् ग्रहणेनेति वाच्यम्, अग्नेर्माणवकं वारयतीत्यत्र हि 'वारणार्थानामीप्सितः' इति माणवकस्यापादानत्वं प्राप्तम्, तन्निवृत्त्यर्थं 'कर्तुरीप्सिततमम्—' इति वक्तव्यमेव। एवं च द्वेष्योदासीनसंग्रहार्थं 'तथायुक्तं च—' इति सूत्रमावश्यकमित्यास्तां तावत्। अकथितं च। अकथितशब्दं व्याचष्टे—अपादानादिविशेषैरिति। अपादानं संप्रदानम् अधिकरणं कर्म

---

तदसंभवात्। किं तु यत्रेप्साद्वेषयोरभावस्तदुपेक्ष्यमिति विवक्षितम्। विषमिति। अत्र विषं हेयमप्योदनवद् भुजिना संबन्धात्कर्म। ननु य एव पुरुषो व्याध्यादिना पीड्यमानो मरणमेव श्रेयो मन्यते तस्य विषमपीप्सितमेव। योऽपि भ्रान्त्या भुङ्क्ते तस्यापि गुडादिमद्बुद्ध्या व्यवसीयमानं विषमीप्सितमेव। कथमन्यथा प्रवर्तेत। तस्मादिदमुदाहरणमयुक्तमेवेति चेत्। अत्राहुः—यदा कश्चिन्मरणकातरोऽपि वैरिणा निगृह्यमाणो विषं भुङ्क्ते तदेदमुदाहरणमिति। अनीप्सितग्रहणं स्पष्टप्रतिपत्त्यर्थम्, तथायुक्तम्—' इत्यस्यारम्भादेवेष्टसिद्धेः। स्यादेतत्—'धातूपस्थाप्यफलाश्रयः कर्म' इत्येवास्तु, किमनेन 'कर्तुरीप्सिततमम्—' इत्यादिसूत्रद्वयकथनेनेति चेत्। अत्राहुः—अग्नेर्माणवकं वारयतीत्यत्र 'वारणार्थानामीप्सितः' इति सूत्रेण माणवकस्यापादानत्वं प्राप्तम्, तद्बाधनाय 'कर्तुरीप्सिततमम्' इति वक्तव्यमेव। एवं च द्वेष्योदासीनयोः संग्रहार्थं 'तथायुक्तम्—' इत्यप्यावश्यकमेवेति। अकथितं च। केनाकथितमित्याकाङ्क्षायामाह—अपादानादिविशेषैरिति। अपादानं संप्रदानम् अधिकरणं कर्म करणं कर्ता हेतुरित्येतैर्विशेषैरित्यर्थः। अविवक्षितमिति। अपादानादिविशेषविवक्षायां तु गोर्दोग्धि पयः, बलेर्याचते वसुधाम्, व्रजेऽवरुणद्धि गाम् इत्येवं पञ्चम्यादय एव भवन्तीति भावः। एतेन पाणिना कांस्यपात्र्यां दोग्धीत्यत्र करणाधिकरणयोरतिप्रसङ्गः। तयोस्तु

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम्।
कर्मयुक्स्यादकथितं तथा स्यान्नीहृकृष्वहाम्॥

'दुहादीनां द्वादशानां तथा नीप्रभृतीनां चतुर्णां कर्मणा यद्युज्यते तदेवाकथितं कर्म' इति परिगणनं कर्तव्यमित्यर्थः। गां दोग्धि पयः। बलिं याचते वसुधाम्।

---

करणं कर्ता हेतुरिति कारकसप्तकम्। तदेतद्यदा अपादानत्वादिविशेषात्मना न विवक्षितं किन्तु संबन्धसामान्यात्मनैव तदा तत्कर्मसंज्ञकमित्यर्थः। ननु नटस्य शृणोति इत्यत्र नटसंबन्धि श्रवणमित्यर्थके नटस्यापि कर्मत्वं स्यात्, तस्य क्रियान्वयित्वेन कारकत्वात्, वस्तुतः अपादानस्य संबन्धित्वेन विवक्षितत्वाच्चेत्याशङ्क्य परिगणयति—**दुह्याजिति**। वार्तिकार्थसंग्रहश्लोकोऽयम्। अतो व्याचष्टे—**दुहादीनामिति**। दुह प्रपूरणे। डु याचृ याच्ञायाम्। डुपचष् पाके। दण्ड दण्डनिपातने चुरादिः, निग्रह इत्यर्थः, इह ग्रहणार्थकः। रुधिर् आवरणे। प्रच्छ ज्ञीप्सायाम्। श्लोके प्रच्छीत्यत्रेकार उच्चारणार्थः। इका निर्देशे तु 'ग्रहिज्या—' इति संप्रसारणप्रसङ्गात्। चिञ् चयने, ब्रूञ् व्यक्तायां वाचि, शासु अनुशिष्टौ, जि अभिभवे, मन्थ विलोडने, मुष स्तेये इति द्वादशानामित्यर्थः। **चतुर्णामिति**। णीञ् प्रापणे, हृञ् हरणे, कृष विलेखने, वह प्रापणे इति चतुर्णामित्यर्थः। **कर्मणा यद्युज्यत इति**। कर्मयुगित्यस्य व्याख्यानमिदम्। करणे उपपदे कर्मणि वाच्ये 'सत्सूद्विष—' इत्यादिना क्विविति भावः। यद्यपि

'दुहियाचिरुधिप्रच्छिभिक्षिचिनामुपयोगनिमित्तमपूर्वविधौ।
ब्रुविशासिगुणेन च यत्सचते तदकीर्तितमाचरितं कविना।'

इति प्रकृतसूत्रस्थश्लोकवार्तिके पचिमथिमुष्यादयो न पठिताः, तथापि चकारेण तेऽपि संग्राह्या इति कैयटः। **गां दोग्धि पय इति**। क्षरणानुकूलव्यापारः क्षारण-

---

दण्डेन करोति, कटे तिष्ठतीत्यादिरवकाशो दुहादिपरिगणनादित्याक्षेपो निरस्तः, करणाधिकरणसंज्ञयोरिह विवक्षितत्वात्। यदि तु सूत्रेऽकथितशब्दोऽप्रधानपर्यायो न त्वनुक्तपर्याय इत्यभ्युपगम्येत, तदा स्यादेवायमाक्षेपो न त्वन्यथा। **कारकमिति**। ततश्च ब्राह्मणस्य पुत्रं पृच्छतीत्यत्र नातिप्रसङ्गः। **दुह्याजिति**। 'दण्ड दण्डनिपातने' चुरादिः। इह तु दण्डिर्ग्रहणार्थो न तु निग्रहार्थः। प्रच्छीत्यागन्तुकेनेकारेण निर्देशो न त्विका, 'ग्रहिज्या—' इति संप्रसारणप्रसङ्गात्। **कर्मयुगिति**। कर्मणा युज्यते कर्मयुक्। 'सत्सूद्विष—' इत्यादिना क्विप्। **कर्मणा यद्युज्यत इति**। मुख्यकर्मणा सह क्रियया संबध्यमानं कारकमेवापादानादिविशेषैरकथितं सत् कर्मसंज्ञकं भवतीत्यर्थः। एतेन दुहादीनां द्विकर्मकत्वं स्फोरितम्। अन्ये त्वाहुः—कर्मयुगित्यत्र कर्मशब्देन क्रियोच्यत इति। तेन क्रियान्वयीत्यर्थः। **परिगणनमिति**। तेन नटस्य शृणोति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पर्यायो दुहेरर्थः। क्षारणात्मकव्यापारप्रयोज्यक्षरणात्मकफलाश्रयत्वात्पयः कर्म। गौस्तु क्षरणे अपादानम्। तदपादानत्वमुपेक्ष्य संबन्धित्वात्मना गोर्विवक्षायां कर्मत्वमनेन भवति। ततश्च शेषषष्ठीनिरासे द्वितीया भवति। तदिदमुक्तं प्रौढमनोरमायाम्—गो-संबन्धि पयःकर्मकं दोहनमर्थ इति। तथा च न माषाणामश्नीयादित्यत्रेव शेषत्वविव-क्षायां प्राप्तां षष्ठीं बाधितुमिदं सूत्रम्। गोरपादानत्वविवक्षायां तु पञ्चम्येव—गोः पयो दोग्धीति। गोसकाशात् पयः क्षारयतीत्यर्थः। यदि तु गौः पयोविशेषणं तदा षष्ठ्येव। गोसंबन्धि यत्पयः तत् क्षारयतीत्यर्थः। एवमग्रेऽप्यूह्यमिति प्राचीनमतानुसारी पन्थाः। वस्तुतस्तु अपादानत्वादिविशेषरूपेणाविवक्षितं किं तु कर्मत्वेनैव विवक्षितम् अकथितम्। तादृशमपादानादि कर्मसंज्ञकं स्यादित्यर्थः। कारकत्वव्याप्यसंज्ञानां स्वबोध्ये कर्मत्वादि-शक्तिमत्त्वबोधकत्वाद् बोधोऽपि तथैव। एवं च गां दोग्धि पय इत्यत्र गोकर्मकं पयः-कर्मकं च दोहनमित्येव बोधः। अवधेः सकाशाद् द्रवद्रव्यविभागो हि क्षरणम्। तच्च गोपनिष्ठव्यापारप्रयोज्यम्। एवं च कर्तृव्यापारप्रयोज्यक्षरणात्मकविभागविशेषाश्रयत्वाद् गोः पयसश्च पूर्वसूत्राभ्यां कर्मत्वमस्त्येव। अत उभयकर्मकबोध एव युक्तः, न तु संबन्धित्वेन गोर्बोधः। अत एव प्रकृतसूत्रभाष्ये 'अकथितम्' इत्यनेनैव सिद्धत्वात् पूर्वसूत्रद्वयस्य वैयर्थ्यमाशङ्क्य ईप्सितमात्रस्याप्यनेन कर्मसंज्ञायां 'वारणार्थानाम्—'इत्यस्या-नवकाशतया अग्नेर्माणवकं वारयतीत्यत्र माणवकस्याप्यपादानसंज्ञायां प्राप्तायां 'कर्तु-रीप्सिततमं कर्म' इत्यारब्धव्यम्। ततश्च द्वेष्योपेक्ष्यसंग्रहाय 'तथायुक्तं चानीप्सितम्' इत्यारब्धव्यमिति समाहितम्—'एतेन कर्मसंज्ञा सर्वा सिद्धा भवत्यकथितेन। तत्रेप्सि-तस्य किं स्यात् प्रयोजनं कर्मसंज्ञायाः। यत्तु कथितं पुरस्तादीप्सितयुक्तं च तस्य सिद्ध्यर्थम्। ईप्सितमेव तु यत्स्यात्तस्य भविष्यत्यकथितेन'। इति श्लोकद्वयेनेति शब्दे-न्दुशखरे स्थितम्। 'एतेन कर्म' इत्यादिभाष्यार्थस्तु कैयटे भाष्यप्रदीपोद्द्योते च स्पष्ट

---

गाथामित्यादौ नातिप्रसङ्ग इति भावः। इह हि गाथाकर्मकं नटसंबन्धि श्रवणं वाक्यार्थः। तेन क्रियान्वयित्वान्नटस्य कारकत्वमस्त्येव। **गां दोग्धीति**। पयःकर्मकं गोसंबन्धि दोहनमर्थः। पयोऽत्र मुख्यं कर्म कर्तुरीप्सिततमत्वात्। गौस्तु पयसो निमित्ततामात्रे-णोपात्ता न तु वस्तुसताप्यवधिभावेनेत्यपादानसंज्ञाया अप्रवृत्तेरनेन कर्मसंज्ञिका भवति। तदुक्तं हरदत्तेन—'यद्यपि गोरवधिभावो विद्यते तथाप्यविवक्षिते तस्मिन्निमित्तमात्र-विवक्षायामुदाहरणोपपत्तिः'इति। एतेनावधित्वविवक्षायां गोरिति पञ्चम्येवेति स्पष्टम्। यदा तु गौरित्येतत्पयसा संबध्यते तदा गोशब्दात्षष्ठ्येव भवतीत्यपि बोध्यम्। यत्तु प्राञ्चा-'दुह्याच्यर्थरुधिप्रच्छिचिब्रूशासुजिकर्मयुक्। नीहृकृष्मन्थवहदण्डग्रहमुष्पचिकर्मभाक्' इति पठितं तत्र ग्रहेः पाठोऽप्रामाणिकः। इतरेषां तु द्विकर्मकत्वं यद्यपि प्रामाणिकं तथापि

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

**अविनीतं विनयं याचते। तण्डुलानोदनं पचति। गर्गाञ्छतं दण्डयति। व्रजमव-**

---

इत्यास्तां तावत्। **बलिं याचते वसुधामिति**। हरिरिति शेषः। बलिर्नामासुर-विशेषः। मह्यं देहीति प्रार्थना याचेरर्थः। दानानुकूलो मह्यं देहीति शब्दप्रयोगरूपव्यापार इति यावत्। बलिकर्तृकं वसुधाकर्मकं दानं प्रार्थयत इत्यर्थः। कर्तुः कर्मत्वविवक्षायां द्वितीयेति नव्याः, प्रार्थनारूपव्यापारजन्यदाने जनकतया आश्रयत्वात्। बलिसंबन्धि यद्वसुधा-कर्मकं दानं तत् प्रार्थयत इत्यर्थ इति तु प्राचीनाः। **अविनीतं विनयं याचत इति**। अभ्युपगमप्रार्थना याचेरर्थः। यदा कश्चिद्बलवान् अविनीतो दुर्बलं कंचिद्बाधते तदा दुर्बलमधिकृत्येदं वाक्यं प्रवृत्तम्। अविनीतकर्तृकं विनयकर्मकमभ्युपगमं प्रार्थयत इत्यर्थः। कर्तुः कर्मत्वविवक्षायां द्वितीयेति नवीनाः। अविनीतसंबन्धिनमभ्युपगममिति तु प्राचीनाः। **तण्डुलानोदनं पचतीति**। विक्लित्त्यनुकूलव्यापारः पचेरर्थः। तप्तोदक-प्रस्वेदनजनितप्रशिथिलावयवकत्वात्मकं मृदुविशदत्वं विक्लित्तिः। तया ओदनाख्यद्रव्या-न्तरं प्रकृतिभूतेषु तण्डुलेषु समवेतं निष्पद्यत इति स्थितिः। तत्र शिथिलावयवसंयोग-विशेषात्मिका विक्लित्तिः समवायसंबन्धेन तण्डुलेषु वर्तते। ओदने तु जन्यजनकभावेन वर्तते। तण्डुलैः प्रकृतिभूतैः ओदनं करोतीत्यर्थः। तण्डुलसमवायिकारणिकां तत्सम-वेतामोदनजनिकां विक्लित्तिं निर्वर्तयतीत्यर्थः। तत्र व्यापारफलं विक्लित्तिं प्रति जन्यतया आश्रयत्वाद् ओदनः प्रधानं कर्म। तादृशौदनजनिकां विक्लित्तिं प्रति समवायित्वेनाधार-त्वात् तण्डुलानां गुणकर्मत्वमिति तद्विवक्षायां द्वितीया। तण्डुलसम्बन्धिनीमोदनजनिकां विक्लित्तिं निर्वर्तयतीति तु प्राचीनाः। **गर्गान् शतं दण्डयतीति**। दण्डधातुः

---

संदर्भाशुद्धिः। तथाहि दुह्यादीन् न्यादींश्च द्वैराश्येन पठित्वा भावकर्मप्रक्रियाशेषे 'लक्-त्यक्कखलर्थाः किं द्विकर्मकेभ्यो मुख्ये कर्मणि स्युर्गौणे वा' इत्याशङ्कायां स्वयमेव पठितम्—'न्यादयो ण्यन्तनिष्कर्मगत्यर्था मुख्यकर्मणि। प्रत्ययं यान्ति दुह्यादिर्गौणे-ऽन्ये तु यथारुचि' इति। एवं च दण्डिमन्थिभ्यामपि मुख्ये स्यात्। न चेष्टापत्तिः, गर्गाः शतं दण्डयन्तामिति भाष्यविरोधात्। शतं ह्यत्र प्रधानं न तु गर्गाः, 'अर्थि-नश्च राजानो हिरण्येन भवन्ति' इति वाक्यशेषाद्। दण्डिरत्र ग्रहणार्थो न तु निग्रहार्थ इत्युक्तम्। अत एवात्र समुदाये वाक्यपरिसमाप्तिः, गुणानुरोधेन प्रधानावृत्तेरसंभवात्। तथा मन्थेरपि प्रधाने स्यादिष्यते तु गौणे, तथा च भारविः—'येनापविद्धसलिलस्फुट-नागसद्मा देवासुरैरमृतमम्बुनिधिर्ममन्थे' इति। अत्रामृतं मुख्यम् उद्देश्यत्वात्, अम्बु-निधिस्तु गौणः। **बलिं याचत इति**। अत्र प्रार्थनार्थस्य याचेर्वसुधा मुख्यं कर्म, तेन युक्तो बलिर्वस्तुतोऽवधिरपि तदविवक्षायामनेन कर्म भवति। **अविनीतमिति**। अनुनयार्थस्य याचेरविनीतो मुख्यं कर्म, अविनीतं विनयायानुनयतीत्यर्थः। विनयस्य

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

